# पराशरधर्मसंहिता

## सायणमाधवाचार्यकृतटीकासहिता ।

टिप्पणी पाठान्तराणि विषयानुक्रमणिका वर्णानुक्रमः
सूचिरित्यादिभिः सहिता ।

तृतीयं

## व्यवहारकाण्डम् ।

प्रथमोऽध्यायः ।

स च

इस्लामपुरग्रामजनुषा विद्वद्वरगोविंदशास्त्रिसूनुना
वामनशर्मणा संशोधितः ।




मुंबई ।

शालिवाहनशकाब्दाः १८३३ ।

ख्रिस्ताब्दाः १९११

मूल्यं रूपकचतुष्टयम् ।

# PREFATORY NOTE.

In presenting to the public the third volume, व्यवहाराध्याय or व्यवहारमाधव, of the Parâśara-Dharma-Saṃhitâ, Part I., I have to offer a few preliminary remarks on the printed copy and MSS. procured by me personally and those received from friends in different parts of the country, which were consulted in the preparation of this Part. In all I have eleven MSS. and one printed copy of Parâśara-Dharma-Saṃhitâ with me, and they may be divided into two classes : (*i*) The four which were used by me ; (*ii*) the seven which I had to reject, as they were very defective all through, very carelessly written, and were of the least value. Those in the first class may be particularized as follows :—

A. This is an excellent Devanâgarî MS., written on paper manufactured in Portugal, consisting of 268 pages (leaves), à 7 to 13 lines, à 21 to 25 aksharas, written Śaka 1727 (A. D. 1805) at Kavalé and corrected throughout in ochre (सोनकाव) and white lead (सफेता), coloured ink substitutes. The special praiseworthy feature of this MS. is that it gives various readings together with the corresponding meaning, either in the margin or in the body of the leaf itself, evidently derived from the number of the MSS. and authorities consulted by the original writer. The genuineness of these readings is luckily enough on a satisfactory and sound basis, which helps

to clear up the charge often and lightly laid against the old-time Indian Sanskritists, that they had not the genius or patience to trace variations in the readings of the texts they have laboriously preserved for posterity.

This valuable MS. was purchased for me by my friend and co-student, Ramkrishna Prabhakar Dhavalkar Shastri, the learned hereditary Purâṇika (पुराणिक) at the ancient Shrine of "Śrî-Śântâ Durgâ" of Kavalé or Kaivalyapūra (कैवल्यपूर) in Goa. The largest and predominating worshippers at this famous shrine come from the Sârasvata (Gauḍa) Brahman community of the Mahârâshṭra, who are to be found all over the Bhârata-varsha. This happy purchase, together with some more MSS., came from the valuable collection in the possession of Govare Bâwâ, a learned Pandit known for his vast knowledge and mastery over the Vedas and the Shastras. The colophon is as follows :—

इति श्रीमत् सायणमाधवाचार्यप्रणीतम् व्यवहारमाधवाख्यं प्रकरणं समाप्तम् । गोपाळ गाडगीळ इत्यनेन लिखित्वा । श्रीमत्कैवल्यरूप गोब्रेबोवा गुरुचरणराविंदयो समर्पितम् । शकै १७२७ श्रीः शुभंभवतु लेखकपाठकयोः ।

B. This MS. was most kindly and liberally placed at my disposal by my friend, M. R. Ry. Vyenkata Swami, who had also obtained for me the MSS. for the first two volumes of this Part. As might be expected from its southern origin, this MS. is in Telugu characters on palm leaves, consisting of 198 leaves, à 2′-3″ × 2″, à 8 lines, à

50 to 54 aksharas, and is written by stencil, with the red and the black colouring substances introduced in the headings to the various chapters and the text respectively. The writer of this MS. has made an effort to elucidate in Telugu the technical words, giving their popular substitutes. The colophon is as follows :—

लिखितमिदं शालिवाहनशके विरूपाक्ष क्षेत्रे अष्टसप्तत्यधिक षोडशशतमे वर्षे आषाढ कृष्ण दशम्यां श्रीमत व्यंकट रायरु ममयजमानस्य निदेशात् राज राजेश्वर शर्मणा धर्मवृद्धिर्भवतु शुभंभवतु श्रीः श्रीः श्रीः

C. This MS., which is written in the Jain style, has been purchased for me by Veda Shâstra Sampanna Narayaṇ Shastri Parvanikar, Court Pandit to H.H. the Maharaja of Jayapur. This is defective in many parts and more or less mutilated throughout, with several omissions in the text, though tolerably correct. It has no date at the end.

D. This MS. was kindly lent to me by the late lamented Raja Rajendralal Mitra, the eminent Oriental Scholar of Calcutta. It is written on country-made paper in the old Maithila ( मैथिल ) characters, consisting of 256 pages (leaves) à 16 lines, à 21 aksharas. This has some parts wanting, and a few mutilations, but is correct generally. It has no date at the end.

E. This is a copy of Parâśara Dharma Saṃhitâ (पराशरधर्मसंहिता) printed in the *Bibliotheca Indica* at Calcutta.

2. To begin with, this volume contains the Civil Law (व्यवहार) of Parâśara, condensed in four verses only. This concise treatment of this important portion of Hindu

Law is not due to the absence of its development at the time. The Civil Law of the Smṛitis was, it seems, considerably modified, and Parâśara, to avoid further conflict, has wisely invested the verdicts of the learned in the current usages of the country with great authority by stating that questions of Civil Law be referred, for determination, to a Parishad or an assembly of the learned.

This gap in a detailed treatise on Law by Parâśara has been filled up by Mâdhavâchârya's commentary or rather an enlargement and amplification of the view expressed or propounded in the text—the four verses of Parâśara, which is given *in extenso* in the present volume. Mâdhava has quoted largely from मनु, याज्ञवल्क्य, कात्यायन, बृहस्पति, प्रजापति, हारीत, वसिष्ठ, विष्णु, नारद, गौतम, &c.

Quotations from मनु, याज्ञवल्क्य and नारद are generally to be found in their known works. In rare instances quotations attributed to one of these three jurists cannot be traced in their works; but this may be probably due to occasional errors in citing the author's name. For instance, I refer to pp. 86 and 115. On the latter page there is an alleged quotation from मनु, but it is not to be found in his known works. It is, however, to be found in Nârada *in extenso*, and yet it is quoted *verbatim* by Vijñâneśvara in his Mitâksharâ, who attributes it to कात्यायन. It is a common experience that identical thoughts and expressions are often found in the works of two distinguished writers in different parts of the country, where either of them could not possibly have heard or seen any writings of the other, and such coincidences are not rare in literature in different parts of the civilized world. It is, therefore, not quite

proper to definitely deny the authorship of the above quotation to Nârada (नारद) and attribute it to कात्यायन alone.

Again, there are several quotations attributed to कात्यायन and बृहस्पति, whose works have been made frequent use of by माधवाचार्य in this work, which are not to be found in any of the works, printed or in manuscript, of the two authors named, which I have been enabled to secure and consult. The authors, in fact, have not, as far as I know, treated Civil Law (व्यवहार) in any of their known works.

As to गौतम, वसिष्ठ, विष्णु and हारीत, quotations from these can be ascertained well enough except in a few instances.

I have given Brihat-Parâśara-Samhitâ ('बृहत्पराशरसंहिता') as an Appendix to this Part. I reserve my remarks as to this work of Parâśara for some future occasion. The Table of Contents, the List of the Names of the Authors, Index to Quotations, &c., will be found in the second Part of this Volume.

VÂMAN ŚÂSTRI ISLÂMPURKAR.

*Girgaum, Bombay.*

ॐ नमः श्रीगणेशाय ।

# पराशरधर्मसंहिता।

## व्यवहारकाण्डम्।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥

सोऽहं प्राप्य विवेकतीर्थपदवीमाम्नायतीर्थे परं
मज्जन्सज्जनतीर्थसंगनिपुणः सद्वृत्ततीर्थं श्रयन् ।
लब्धामाकलयन् प्रभावलहरीं श्रीभारतीतीर्थतो
विद्यातीर्थमुपाश्रयन् हृदि भजे श्रीकण्ठमव्याहतम् ॥ २ ॥

सत्यैकव्रतपालको द्विगुणधीस्त्र्यर्थी चतुर्वेदिता
पञ्चस्कन्धकृती षडन्वयदृढः सप्ताङ्गसर्वंसहः ।
अष्टव्यक्तिकलाधरो नवनिधिः पुष्यद्दशप्रत्ययः
स्मार्त्तोच्छ्रायधुरन्धरो विजयते श्रीबुक्कणक्ष्मापतिः ॥ ३ ॥

इन्द्रस्याङ्गिरसो नलस्य सुमतिः शैब्यस्य मेधातिथिर्
धौम्यो धर्मसुतस्य वैन्यनृपतेः स्वौजा निमेर्गौतमिः ।
प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनो
यद्वत्तस्य विभोरभूत्कुलगुरुर्मन्त्री तथा माधवः ॥ ४ ॥

प्रज्ञामूलमही विवेकसलिलैः सिक्ता बलोपघ्निका
मन्त्रैः पल्लविता विशालविटपा सन्ध्यादिभिः षड्गुणैः ।

---

१. B. C. read अष्टव्यक्त° for अष्टव्यक्ति°. २. A. reads °पुरन्धरो for °धुरन्धरो.
३. A. B. C. read विजयतां for विजयते. ४. D. reads °पघ्निता for °पघ्निका.
५. A. has marginal reading °तला for °टपा.

शक्त्या कोरकिता यशःसुरभिता सिद्ध्या समुद्यत्फला
सम्प्राप्ता भुवि भाति नीतिलतिका सर्वोत्तरं माधवम्॥५॥
श्रीमती जननी यस्य सुकीर्त्तिर्मायणः पिता।
सायणो भोगनाथश्च मनोबुद्धी सहोदरौ॥ ६॥
यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी।
भारद्वाजं कुलं यस्य सर्वज्ञः स हि माधवः॥ ७॥

स माधवः सकलपुराणसंहिता-
प्रवर्त्तकः स्मृतिसुषमापराशरः।
परावरस्मृतजगदीहिताप्तये
पराशरस्मृतिविवृतौ प्रवर्त्तते॥ ८॥

व्याख्याते आचार-प्रायश्चित्ते। अथ व्यवहारः प्रस्तूयते। यद्यप्यृणादानादीनामष्टादशपदानां व्यवहाराणां मध्ये कमपि व्यवहारं पराशरो न व्युत्पादितवान् तथापि आचारकाण्डे चतुर्णां वर्णानां क्रमेण आचारान् ब्रुवन्

'क्षत्रियस्तु प्रजा रक्षन्,'

इत्यस्मिन्वचने क्षत्रियविशेषस्य राज्ञ आचारविशेषमेवमवोचत्—

'क्षितिं धर्मेण पालयेत्'।

इति। तत्र क्षितिपालनं नाम क्षित्यादिश्रितासु प्रजासु दुष्टानां

---

१. A. B. C. read सुकीर्तिः. २. C. reads लोकनाथ° for भोगनाथ° and D. reads °बुद्धिस° originally, but it is corrected by red ink °बुद्धी स°. ३. A. and B. read °बु यथा, but B. has in correction °सुषमा° instead of °बुं यथा; while C. स्मृतिसुखमा°. ४. A. B. D. read पराशरस्मृति° for परावरस्मृत°. ५. C. reads °पालनादित्यादि श्रुतासु प्रजासु दुष्टानांशिष्टो.°

शिक्षया शिष्टोपद्रवपरिहारः । एतदर्थ एव हि जगदीश्वरस्य राम-कृष्णादिक्षत्रियावतारः । तच्च गीतासु भगवता विस्पष्टमभिहितम्—

'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे' ॥
( भ. गी. ४. ६-७ )

इति । यथा महतां रावणादीनां शिक्षायै रामाद्यवतारस्तथा क्षुद्राणां चोरादीनां शिक्षायै राजावतार इति द्रष्टव्यम् । अत-एवं मनुः—

'अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात् ।
रक्षार्थमस्य लोकस्य[4] राजानमसृजत्प्रभुः ॥
चन्द्रा-ऽनिल-यमा-ऽर्काणामग्नेश्च वरुणस्य च ।
इन्द्र-वित्तेशयोश्चैव मात्रा [6]निर्हृत्य शाश्वतीः ॥
यस्मादेषां[7] सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा॥
तपत्यादित्यवच्चैव चक्षूंषि च मनांसि च ।
न चैनं[8] भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥
सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट् ।
स कुबेरः स वरुणः स महेन्द्रः प्रभावतः ॥

---

१. D. reads निग्रहः शिष्टोपद्रवपरिहारश्च. २. D. reads एतदर्थेनैव for एतदर्थ एव. ३. C. adds आह after एव. ४. C. and D. read सर्वस्य for लोकस्य. A. also in marginal reading and B. in correction read सर्वस्य for the same. ५. B. originally reads इन्द्रा° for चन्द्रा°. ६. D. reads आहृत्य for निर्हृत्य. ७. D. reads एव for एषां. ८. D. reads एवं for एनं.

बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
महती देवता ह्येषा नररूपेण[1] तिष्ठति ॥
एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम्[2]।
कुलं दहति राजाग्निः सपशु-द्रव्यसंचयम् ॥
कार्यं चावेक्ष्य[3] शक्तिं च देश-कालौ च तत्वतः।
कुरुते धर्मसिद्ध्यर्थं विश्वरूपं पुनः पुनः' ॥

( म. स्मृ. ७. ३–१० )

इति। एतच्च सर्वमाचारकाण्डेऽस्माभिः[4] राजधर्मान् व्याचक्षमाणैः प्रपञ्चितम्। बृहस्पतिस्तु विशेषतः ऋणादानादिव्यवहार-[5] विचारमेव राजोत्पत्तिप्रयोजनमभिप्रेत्य तद्विचारक्षमत्वमुपपाद-यितुमिन्द्राद्यात्मकत्वं राज्ञ उदाजहार—

'गुणधर्मानतो[6] राज्ञः कथयाम्यनुपूर्वशः।
धनिकार्णिकसन्दिग्धौ प्रतिभू-लेख्य-साक्षिणः ॥
विचारयति यः सम्यक् तस्योत्पत्तिं निबोधत।
सोमा-ऽग्न्यर्का-ऽनिलेन्द्राणां वित्ताप्पत्योर्यमस्य च ॥
तेजोमात्रां[7] समुद्धृत्य राज्ञो मूर्तिर्हि[8] निर्मिता।
तस्य सर्वाणि भूतानि चराणि स्थावराणि च ॥
भयाद्भोगाय[9] कल्पन्ते स्वधर्मान्न चलन्ति च।

१. B. reads ऽनन्त° for नर°. २. C. reads दुरव° for दुरुप°. ३. B. C. D. read सो° for चा.° ४. B. and D. add एव after °काण्डे. ५. C. reads °व्यवहारमेव instead of °व्यवहारविचारमेव. ६. B. and C. read गुणधर्ममतो; while D. reads गुणधर्मवतो for गणधर्मानतो. ७. C. and D. read °मात्रं for °मात्रां. ८. D. substitutes त्वि° for हि. ९. C. reads भोगस्य for भोगाय; while D. reads भूयो भोगाय for भयाद्भोगाय.

नाऽराजके कृषि-वणिक्-कुसीद[1]परिपालनम् ॥
तस्माद्वर्णाश्रमाणां तु नेताऽसौ निर्मितः पुरा[2] ।

इति । लोके हि राजा भूपो नृप इत्येते शब्दा एकार्थवाचित्वेन प्रयुज्यन्ते । तत्र राजशब्दो रूढः । भूप-नृपशब्दौ यौगिकौ । भुवं पातीति भूपः । नॄन् पातीति नृपः । तथा च राज्ञो भूपालकत्वं मनुष्यपालकत्वं च गुणः । तत्प्रयुक्तो धर्मो व्यवहारविचारः । स च पूर्वमेवाभिहितः । किं तु वर्णाश्रमधर्मान्व्याचक्षाणेन बृहस्पतिना राजन्यपि क्षत्रियत्वरू[3]पवर्णप्रयुक्तो गृहस्थाश्रमप्रयुक्तश्च धर्मोऽभिहितः । अतः परं भूपत्वगुणप्रयुक्तो व्यवहारविचारात्मको राजधर्मोऽभिधीयते । धनिको धनप्रदाता । ऋणिकस्तदीयस्य ध[4]नस्य गृहीता । तयोः सन्दिग्धि[5]र्विवादः । प्रतिभूस्तस्य प्रत्यर्पणं कारयिष्यामीति प्रतिश्रुत्य तदीयस्य भारस्य वोढा । लेख्यं धनसंख्यावृद्धिविशेषादियुक्तं पत्रम् । साक्षिण उत्तमा-ऽधमर्णयोः सम्प्रतिपन्ना मध्यस्थाः । एतेषां प्रतिभ्[6]वादीनां त्रयाणां सन्दिग्धिर्यायान्यायव[7]र्तिताभ्यां सन्देहः । तस्मिन् सन्देहे सति यो राजा विचारयितुं प्रभवति तस्योत्पत्तिरभिधीयत इत्यर्थः । यस्मादाजा सोमेन्द्रादिदेवतांशसम्भवत्वात् ऋ[8]णादानादीन् व्यवहारान् विचारयितुं प्रभवति तस्मात्तानसौ विचारयेत् । तदाह याज्ञवल्क्यः—

---

१. D. reads °पशु° for °परि.°　२. D. reads सुरैः for पुरा. ३. D. does not add °रूप° after क्षत्रियत्व°.　४. D. substitutes अर्थस्य for धनस्य. ५. A. and B. read संदिग्ध° and C. संदिग्धे for संदिग्धिः. ६. A. reads °भूत्वादीनां: while B. also originally reads the same, but in correction of the same and in marginal reading of A. C. °भुवादीनि. ७. A. and B. read °प्रवर्तिताभ्यां. ८. B. originally reads ऋणादि° for ऋणादान°.

'व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।
धर्मशास्त्रानुसारेण क्रोध-लोभविवर्जितः' ॥

(या. स्मृ. २. १. )

इति । अत्र व्यवहारशब्दो रूढि-योगाभ्यां निर्णयफलकमर्थि-प्रत्यर्थिविवादमाचष्टे । तत्र रूढिः कात्यायनेन निरूपिता—

'प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे ।
साध्यमूलस्तु यो वादो व्यवहारः स उच्यते' ॥

इति । न्यायः शिष्टसम्प्रतिपन्नं लौकिकमाचरणं तस्य विस्तरः 'इदं मदीयं धनमन्येनापहृतम्' 'तत् क्षेत्रधनादिकं एतस्य युक्तं नान्यस्य' इत्युपपत्तिपुरःसरो निर्णयः । तस्मिन्न्यायविस्तरे विषयीभूते सति तत्प्रवर्त्तकोऽर्थि-प्रत्यर्थिनोर्यो विवादः स व्यवहार उच्यते । 'मदीयं धनमन्येनापहृतं तत्पुनर्मया साधनीयम्' इत्यर्थी यदुद्दिश्य प्रवर्तते तद्धनं साध्यम् । तच्च मूलं यस्य विवादस्य सोऽयं साध्यमूलः । अयं च कदा सम्पद्यत इत्यपेक्षायामुक्तम्—

'प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे' ।

इति ।

'सत्यं ब्रूयात्प्रियं ब्रूयान्न स्तेनः स्यान्न वार्धुषिः' ।

इत्यादिविधि-निषेधावुपलभ्य विहितानुष्ठाने प्रतिषिद्धवर्जने चोत्पन्न उत्साहः प्रयत्नस्तेन साध्यो धर्मनामकः पदार्थो यदा

१. B. C. D. read अर्थिविवादं instead of अर्थि-प्रत्यर्थिविवादं. २. C. reads विस्तारः for विस्तरः. ३. This sentence is not in A. B. C.; ४. B. originally reads अन्येन, but in margin reads अनेन; while C. reads अनेकेन for अन्येन. ५. This sentence is not mentioned in C. ६. C. and D. read स for अयं. ७. This word is not mentioned in C.

विच्छिन्नो भवति तदानीमयं विवाद उपपद्यते[1] । असति तु धर्मविच्छेदे नास्ति[2] व्यवहारस्यावकाशः । अत एव नारदः—

'मनुः प्रजापतिर्यस्मिन्काले राज्यमबूभुजत् ।
धर्मैकतानाः पुरुषास्तदाऽऽसन् सत्यवादिनः ॥
तदा न व्यवहारोऽभून्न द्वेषो नापि मत्सरः ।
नष्टे धर्मे मनुष्येषु व्यवहारः प्रवर्तते' ॥

( ना. स्मृ. १. १-२. )

इति । बृहस्पतिस्तु द्वेष-लोभादिदुष्टस्यैव व्यवहारकर्तृत्वमाह[3]-

'धर्मप्रधानाः पुरुषाः पूर्वमासन्नहिंसकाः ।
लोभ-द्वेषाभिभूतानां व्यवहारः प्रवर्त्तितः[4]' ॥

इति । तस्माद्धर्मे विच्छिन्ने सति साध्यमूलो न्यायनिर्णयफलो विवादो व्यवहारशब्देन रूढ्याऽभिधीयते । हारीतोऽपि रूढिम्[5]-भिप्रेत्याह—

'स्वधर्मस्य यथा प्राप्तिः परधर्मस्य वर्जनम् ।
न्यायेन क्रियते यत्तु व्यवहारः स उच्यते' ॥

इति । व्यवहारशब्दस्य यौगिकमर्थं कात्यायन आह-

'विनानार्थेऽवसन्देहे हरणं हार उच्यते ।
नानासन्देहहरणाद्व्यवहार इति स्मृतः' ॥

इति । व्यवहार इत्यत्र वि शब्दो नानेत्यस्मिन्नर्थे वर्त्तते । अवशब्दश्च सन्देहे वर्त्तते । तानेतानेवंविधानेकसंदेहहारिणो व्यवहारानर्थ्यादि[6]गतराग-द्वेषवशात् प्राप्तान् राजा सम्यग्विचारयेत् ।

---

१. C. reads उत्पद्यते for उपपद्यते. २. A. and B. had original reading नास्मिन्, but corrected form is नास्ति. ३. C. and D. read व्यवहर्तृत्वं for व्यवहारकर्तृत्वं. ४. B. originally reads प्रवर्तते, but corrected reads प्रवर्तितः; while D. reads प्रवर्त्तते for the same. ५. D. reads निरूढि° for रूढि.° ६. B. originally reads अर्थादि°, but corrected reads अर्थ्यादि°; while D. reads अर्घादि° instead of अर्थ्यादि°.

तद्विचारश्च राज्ञो गुणधर्मरूप आचारः। अतएवाचारकाण्डे व्यवहाराणामन्तर्भावमभिप्रेत्य पराशरः पृथग्व्यवहारकाण्डमकृत्वा 'क्षितिं धर्मेण पालयेत्,' इति सूचनमात्रं व्यवहाराणां कृतवान्। तानेतान्[1] सूचितान् व्यवहारान् वयं स्मृत्यन्तराणि तन्निबन्धनानि चानुस्मृत्य[2] यथाशक्ति निरूपयामः। तत्र पूर्वोदाहृताभ्यां रूढि-योगस्मृतिभ्यां व्यवहारस्वरूपं निरूपितम्।

अथ तद्भेदा निरूप्यन्ते। तत्र सपणत्वाऽपणत्वाभ्यां द्वैविध्यमाह नारदः—

'सोत्तरोऽनुत्तरश्चेति स विज्ञेयो द्विलक्षणः।
सोत्तरोऽभ्यधिको यत्र विलेखापूर्वकः[3] पणः'* ॥
(ना. स्मृ. १. ४)

---

*अस्य व्याख्यनम्। व्यवहार इत्यनुवर्तते। व्यवहार एकः सोत्तरो अपरो अनुत्तर इति द्विलक्षणो ज्ञेयः। सोत्तरलक्षणं चास्यैव श्लोकस्योत्तरार्धेन व्याख्यातम्। 'सोत्तरोऽभ्यधिको यत्र विलेखापूर्वकः पण' इति। अत्र च व्यवहारस्य सोत्तरत्वे पणाधिक्यं केचिदपरिज्ञानादेव ब्रुवते। यत्किल लभ्यद्रव्यादधिकः पणो यत्र भवति स एव सोत्तर उच्यते। यत्पुनर्लभ्यद्रव्यादधिकः पणो न भवति सोऽनुत्तर इति। तदिदमसमञ्जसं वचनम्। किंतर्ह्यत्र मुनिनारदांतर्गतभावार्थोऽयमेवैष्वेवाक्षरेषु लक्ष्यः। यदेकं तावल्लभ्यद्रव्यं व्यवहारसंदेह एव स्थितं तिष्ठत्येव द्वितीयं पुनरिदं यदमर्षितो वादी प्रतिवादी वा एवंविधप्रभूतद्रव्यव्यवहारेऽपि शतद्वयमात्रं शतिकमात्रं वार्धशतमात्रमपि यावन्निजविभवानुसारेण द्रव्यमुपन्यस्यति स एवाभ्यधिकः पणो दरिद्रस्य। अतः पणाधिक्यमेतत् द्वितीयद्रव्योपन्यास एव द्रष्टव्यम्। न पुनरनवस्थाप्रसंगो द्रव्याधिक्यविषय इति।

---

१. C. reads तानेव तेनैवात्र for तानेतान्; while D. तानेवात्र. २. B. and A. originally °स्मृ°, but corrected it read °सृ°; while C. and D. read °सृत्य for °स्मृत्य. ३. B. had formerly °पूर्वकः, but corrected became पूर्वतः; while C. and D. read °पूर्वकः for °पूर्वतः.

इति । 'अहं यदि पराजयेयं तदा शास्त्रप्रापितादण्डद्रव्यादधिकमेव द्रव्यं राज्ञे तुभ्यं च दास्यामि' इति पत्रं लिखित्वा यदभिभाषणं तदुत्तरं तेन सह वर्तत इति सोत्तरः । तद्रहितोऽनुत्तरः। पुनरपि चतुष्पादादिभिस्त्रयोदशभिः प्रकारैर्व्यवहारस्यावांतरभेदान् स एव निर्दिश्य विवृणोति—

'चतुष्पाद[2]श्चतुःस्थानश्चतुःसाधन एव च ।
चतुर्हितश्चतुर्व्यापी चतुष्कारी च कीर्त्तितः* ॥ (८)

तथाचोक्तमेवान्यैरपि च—

'वादी वा प्रतिवादी वा यः समर्थः स्वतारणे ।
द्रव्यं वित्तानुसारेण करोति स पणः स्मृतः' ॥

इति । अथवा किमन्येनायमभ्याधिकः पणशब्दः प्रशंसायामेव संबध्यते। यथा समस्तयुक्तव्यवहाराणां मध्ये स एवाभ्याधिको व्यवहारो यत्र 'विलेखापूर्वकः पण' इति यथोक्तम् । सोऽपि पणो यदि विलेखापूर्वको भवति तदा सोत्तरो व्यवहार उच्यते। अन्यथा पुनरनुत्तर एव। अस्य निगमः । लेखा लेखनम् । विशेषेण लेखा विलेखा । तत्पूर्वकः पणः कर्त्तव्य इति । अत्रापि मुनिभावार्थोऽयम् । यदि विलेखा लिखिताक्षरनिबन्धपूर्वः पणो भवति तदासोत्तरो व्यवहारोऽसौ । यदि पुनर्वाङ्मात्र एवानिबद्धाक्षरो मुक्तवचनैर्जल्पित एव न चाक्षरैर्निबद्धस्तदा सपणः कृतोऽपि अकृतवत् द्रष्टव्यः । यतोऽनक्षरैर्निबद्धपणो निर्णयकाले व्यभिचरत्येव इति ॥ ४ ॥

* अत्रानेन श्लोकद्वयेनापि व्यवहारस्य संख्यापूर्वकः संज्ञासूत्रोपन्यास एव कृतः ॥ ८ ॥

१. B. originally had °दा°, but corrected it became °त्वा°; while C. and D. substitute °त्वा° for °दा.° २. In the word चतुष्पादः C. and D. read चतुष्पाद्य for चतुष्पादः.

त्रियोनिर्ह्यभियोगश्च द्विद्वारो द्विगतिस्तथा।
अष्टाङ्गोऽष्टादशपदः शतशाखस्तथैव च* ॥ ( ९ )
धर्मश्च व्यवहारश्च चरित्रं राजशासनम्।
चतुष्पाद्व्यवहारोऽयमुत्तरः पूर्वबाधकः† ॥ ( १० )
§तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु।
चरित्रं तु स्वीकरणे राजाज्ञायां तु शासनम् ॥ ( ११ )

---

* सविस्तरार्थप्रतिपत्तिविवरणं वक्ष्यमाणमुपरितनश्लोकैः शास्त्रकार एव करिष्यति ॥ ९ ॥

† एवं चतुष्पादोऽयमभिहितो व्यवहारः। अस्य चैवंनिर्दिष्टचतुष्पादस्य चतुर्णामपि पादानां विवरणश्लोकोऽयमनुगत एव भवति ॥ १० ॥

§ यदा धनिकर्णिकयोरेकान्तव्यवहारेऽपि परस्परं सत्याच्चलनं नास्ति तदाऽसौ सत्यव्यवहार उच्यते। तस्मिन् सत्यसंव्यवहारे साक्षात् धर्म एव स्थितो भवति। सच व्यवहार-चरित्र-राजशासनानामदत्तावकाशस्व-रूपत्वेन स्वतो वर्तमानः धर्म एवोच्यते। 'व्यवहारस्तु साक्षिषु' इति यदुक्तं तत्र धनिकर्णिकयोरेकतरदोषादपि सत्यधर्मचलनशङ्कोत्पत्तौ संजातायां साक्षिप्रत्ययो यः संव्यवहारः प्रवर्तते स व्यवहार इत्युच्यते। सचोत्तर-पूर्वस्य बाधयोत्पन्नस्तेन पूर्वबाधक इति। यत् 'चरित्रं पुस्तकरणे' इत्युक्तं तच्चरित्रमिति पत्रक-भूज- चीरक-संपुटिकादिषु साक्षिस्वहस्तसुनिबद्धं कृत्वा यो व्यवहारः प्रवर्तते स चरित्रमित्युच्यते। स च पूर्ववाक्यात्'उत्तरः पूर्वबाधक' इति। यस्तु राज्ञा समावेदितो व्यवहारः स राजशासनायत्तः सर्वेषामप्येतेषामधिकः सर्वोत्तरश्च। यत इत्युक्तम्—

'ग्रामे दृष्टः पुरे याति पुरे दृष्टस्तु राजनि।
राज्ञा दृष्टः कुदृष्टो वा नास्ति पौनर्भवो विधिः' ॥

इति। तदेवायं चतुर्विभागरूपत्वाच्चतुष्पादो व्यवहारः। तदा तदत्र लोकसंव्यवहारः संव्यवहार इत्युच्यते। स च द्विविधः प्रयोजनापेक्षया प्रवर्तितोऽपि देशकालवशात् ॥ ११ ॥

सामाद्युपायसाध्यत्वाच्चतुःसाधन उच्यते ।
चतुर्णामपि वर्णानां रक्षणाच्च चतुर्हितः* ॥ (१२)

कर्तॄनर्थो[१] साक्षिणश्च सभ्यान्[२] राजानमेव च ।
व्याप्नोति पादशो यस्माच्चतुर्व्यापी ततः स्मृतः† ॥ (१३)

धर्मस्यार्थस्य यशसो लोकपंक्तेस्[३]तथैव च ।
चतुर्णां करणादेष चतुष्कारी प्रकीर्तितः‡ (१४) ॥

कामात् क्रोधाच्च लोभाच्च त्रिभ्यो यस्मात् [४]प्रवर्तते ।
त्रियोनिः कीर्त्यते तस्मात्[५] त्रयमेतद्विवादकृत् ॥ (२६)

---

*साम-भेदोपप्रदान-दण्डैश्चतुर्भिरपि साधनोपायैर्यथावसरप्रयुक्तैःसाध्यते तेन चतुःसाधन उक्तः । एवं चायमस्खलितप्रवृत्तधर्मा व्यवहारः चतुर्णामपि वर्णानामाश्रमाणां च रक्षणात्परिपालनाच्चतुर्हितो भवतीति ॥ १२ ॥

†स च यदा सुदृष्टो भवति ततश्चतुरो ऽप्येतान्पादशो धर्मरूपेण व्याप्नोति। अथ कुदृष्टो भवति ततस्तानेव पापरूपेण व्याप्नोति इति चतुर्व्यापीति ॥ १३ ॥

‡लोकपङ्क्तिर्जनानुरागः । शेषं प्रसिद्धम् । एतेषां चतुर्णामपि करणात् चतुष्कारीति उच्यते ॥ १४ ॥

१. D. reads कर्त्तारं तत् for कर्तॄनर्थो. २. C. reads सत्यात् for सभ्यान्. ३. A. reads °हेतोः also B. the same, but corrected reads °पक्तेः. ४. A. and B. read °च्च वर्तते instead of प्रवर्तते. ५. A. reads येन. B. also originally reads येन, but corrected reads तस्मात् and तत्र; while C. reads यस्मात्, and D. reads यत्र.

द्व्यभियोगस्तु विज्ञेयः शंका-तत्वाभियोगतः ।
शंकाऽसतां तु संसर्गात् तत्वं होढादिदर्शनात् ॥* ( २७ )

पक्षद्वयाभिसम्बन्धात्[1] द्विर्द्वारः[2] स उदाहृतः ।
पूर्ववादस्तयोः[3][4] पक्षः प्रतिवादस्तदुत्तरः[5]† ॥ ( २८ )

---

*तत्र द्विप्रकार एवाभियोगो भवति । एकः शंकाभियोगो द्वितीयस्तत्वाभियोगः । एतयोश्च द्वयोरपि लक्षणमेकस्यैव श्लोकस्यार्धेनाभिहितम् । शंका सदा असत्संसर्गादिति । असन्तो ये प्रसिद्धाश्चौरकर्मवृत्तयः । तथा वेश्या-द्यूतव्यसनं चासत् एतेषु यस्य सदा अत्यासक्तिर्दृश्यते तस्य गृहभेदज्ञस्योपरि नाष्टिकस्य पुरुषस्य महती शङ्का समुत्पद्यते । तेनार्थचलनं तस्यासत्संगिनो नाष्टिकोऽभियोगं यं ददाति स शंकाभियोग उच्यते । यस्तु तत्वाभियोगः स होढादिदर्शनाद्भवति । स्वकीयं द्रव्यं यन्नष्टं तद्धोढमुच्यते । तं दृष्ट्वा योऽभियोगः परस्य दीयते स तत्वाभियोग उच्यते । तत्र शंकाभियोगस्य देवकुलं निर्णयस्थानम् । तत्वाभियोगस्य राजकुलमिति ॥ २७ ॥

† पूर्वपक्षरूपं प्रथमं द्वारं तेन द्वारेण व्यवहारः प्रविशति । द्वितीयं द्वारं प्रतिपक्षस्थित उत्तरवादी यानि वदति तेन द्वारेण प्रविशतीति ॥ २८ ॥

१ B. originally reads संबद्धो but corrected reads सम्बन्धात् , while C and D. read, संबन्धात् for संबद्धो. २. Only C. reads द्विवारः for द्विद्वारः ३. In this whole line A. B. C. read पूर्वपाद° and प्रतिपाद° respectively. ४. B. originally reads °स्तू यो, but corrected reads °स्तयोः. ५. B. before correction had °स्तु उत्तरः but after °स्तदुत्तरः

भूतच्छलानुसारित्वात् द्विगतिः स उदाहृतः ।
भूतं तत्त्वार्थसंयुक्तं[1] प्रमादाभिहितं[2] छलम् ॥* (२९)
राजा सत्पुरुषः सभ्याः शास्त्रं गणक-लेखकौ ।
हिरण्यमग्निरुदकमष्टाङ्गः स उदाहृतः ॥† (१५)
‡ऋणादानं ह्युपनिधिः संभूयोत्थानमेव च ॥ (१६)

---

* व्यवहारो यथा प्रवेशकाले द्विद्वारः तथा नियमनकाले ऽपि द्विर्गतिः । तत्र व्यवहारस्यैका गतिर्धर्मन्यायतत्वभूतार्थनिर्णयेन भवति । द्वितीया प्रमादाभिहितनिर्णयेन भवतीत्यर्थः ॥ २९ ॥

† तत्र राजपुरूषो दुष्टावकोटनार्थी।तस्यानवसरे राजकीयचक्षुर्भूतो राज्ञा नियुक्तः प्राड्विवाकः पुरुषः। स उभयात्मकः सत्यश्च राजपुरुषश्च । तथा सभ्या उपरिवक्ष्यमाणलक्षणाः । तथा शास्त्रं मनु-नारदविश्वरूपात्मकम् । सत्यासनं शतभेदव्यवहारदण्डनियमसन्देहविच्छेदकारकम् । तथा लेखकः स्थानप्रतिबद्धः । भाषोत्तरक्रिया जयपत्रादिलेखनोपयोगी । हिरण्यमग्निरुदकमिति एतान्यपि त्रीणि प्रत्यक्षदेवतास्वरूपाणि । इत्येतान्यष्टावप्यङ्गानि यदा सभायां संनिहितानि भवन्ति तदा दिव्यादिष्वपि धर्मः साक्षादेव । तीर्थी सत्यासत्ययोर्विभक्तिं परिस्फूटिकरोति ॥ १५ ॥

‡ अथाष्टादशपदमुच्यते । तस्य 'ऋणादान' मित्यादि सूत्रम् ।

एवं चैषामष्टादशव्यवहारपदानां मध्ये यस्य यस्य पदस्य ये ये निरूपणीया व्यवहारभेदा मुनिना दृष्टास्तस्य तस्यैव ते ते संख्यापूर्वकाः संयोज्य संततप्रकरणस्थिता एव द्वात्रिंशन्मात्रा अपि सविस्तरमभिहिताः । एष सकलशास्त्रार्थसंग्रहः । तेषां च यथाक्रमास्थितिभेदसहितानामष्टादशव्यहारपदानामनुलग्ना एव निर्णया भविष्यन्ति । तेन व्यवहारभेदा अपि द्वात्रिंशदधिकशतप्रमाणाः । शाखोपशाखावस्थिताः संक्षेप-विस्तर-संख्योपलक्षिता इहापि लिख्यन्ते । तत्रतावत्संक्षेपसंख्येयम् ।

---

१. D. reads तत्वादि° for तत्वार्थ°. २. C. reads °हतं for °हितं in the word प्रमादाभिहितं.

वेतनस्यानपाकर्म तथैवास्वामिविक्रयः ॥ ( १७ )

दत्तस्य पुनरादानमशुश्रूषाऽभ्युपेत्य च ॥ ( १८ )

विक्रीयासंप्रदानं च क्रीत्वानुशय एव च ॥ ( १७ )

---

इदानीमियमेव भेदसंख्या प्रत्येकतामुद्दिष्टव्यवहारपदशाखाभेदैः सविस्तरादभिधीयते । तत्र ऋणादाने देयादेयादिभेदाः कृताः । ऋणभेदो धनभेद आपद्ब्राह्मणवृत्तिः । प्रमाणभेदः । कुसीद-वार्धुषिकभेदौ । प्रतिभूभेदः । आधिभेदो लेख्यभेदः । असाक्षिभेदः । पूर्वोत्तरसाक्षिनियमः । षड्विवादपदकसाक्षिनिन्दा । साक्षिप्रत्युद्धारः । कूटसाक्षिकम् । साक्ष्यधिश्रावणा । साक्षिबलाबलम् । लेख्यसाक्ष्यभावविधिः । घटविधिः । अग्निविधिः । उदकविधिः । विषविधिः । कोशविधिः इति पंचविंशति भेदमृणादानं भवेत् ।

तथा औपनिधिके—न्यासः । औपनिधिकम् । याचितकम् । अन्वाहितकम् । शिल्पिहस्तगतमिति भेदाः षट् । संभूयसमुत्थाने—सामवायिकम् । ऋत्विग्याज्यम् । शौल्किकं चेति भेदत्रयम् । दत्ताप्रदानिके—देयमदेयं दत्तमदत्तं चेति भेदचतुष्टयम् । अशुश्रूषाभ्युपगमे—शुश्रूषाभेदः । अशुभकर्मभेदः । शिष्यवृत्तम् । अन्तेवासिवृत्तम् । अधिककर्मकृद्वृत्तम् । स्वामिप्रसादाद्दास्यविमोक्षश्चेति भेदा नव । वेतनस्यानपाकर्मणि—भृतकवेतनम् । गोपालादिकम् । पण्यस्त्रीशुल्कविधानम् । भाटकविकल्पश्चेति भेदचतुष्टयम् ।

अस्वामिविक्रये—अस्वामिविक्रयो निधिलाभश्चेति भेदद्वयम् । विक्रियासंप्रदानमेकभेदम् । क्रीत्वानुशये—कालभेदः । परिभुक्तवासोनियमः । धातुक्षयभेदः । तान्तवसंस्कारश्चेति भेदचतुष्टयम् । समयस्यानपाकर्मैकभेदम् । तथा क्षेत्रजे—क्षेत्रवादो गृहवादः । उद्यानवादो निपानवादः । आयतनवादो ग्रामवादश्चतुष्पथादिभूषणप्रतिषेधः । सेतुविधानं । खिलविषयः सस्यरक्षा सस्यवृद्धिहेतुविधानम् ।

---

१. C. reads व for वा°. २. C reads °विक्रियाः for °विक्रयः. ३. B. originally reads कृत्वा, but corrected क्रीत्वा.

समयस्यानपाकर्म विवादः क्षेत्रजस्तथा ।
स्त्रीपुंसयोश्च संबन्धो दायभागोऽथ साहसम् ॥ ( १८ )
वाक्पारुष्यं तथैवोक्तं दण्डपारुष्यमेव च ।
द्यूतं प्रकीर्णकं चैवेत्यष्टादशपदः स्मृतः ॥ ( १९ )
एषामेव प्रभेदोऽन्यो द्वात्रिंशदधिकं शतम् ।
क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते' ॥ ( २० )
( ना. स्मृ. १. ८-२१)

---

स्त्री-पुंसयोः संबन्धे—पुंस्त्वपरीक्षा । कन्यादाननियमः । ऋत्विग्व्यतिक्रमदोषः । कन्यादानकालः । कन्यावरयोरदुष्टदूषणापराधः । विवाहविधिः । स्वैरिण्यादिविधानम् । अपत्यताविवेकः । संग्रहणविधानम् । स्त्रीव्यतिक्रमदण्डः । गुरुतल्पलक्षणम् । पश्वादिगमनदोषः । पत्न्यभावेऽपत्यविधिः । जारजातविधानम् । नियुक्ता-ऽनियुक्तापरगमनविधिः । दुष्टस्त्री-पुरुषविधानम् । प्रोषितभर्तृकानिर्णयः । संकेतलक्षणम् चेत्येवं विंशतिभेदाः ।

दायभागे—रिक्थभागविवेकः । तद्भागनिरूपणा । अविभाज्यानियमः । स्त्रीधननिरूपणा । स्त्रिया अभावे स्त्रीधननिरूपणा । भ्रातृद्रव्यविधिः । माता-पितृपुत्रविभागः । अज्ञातपितृपुत्रिकादिविधिः । अनियुक्तापितृविधानम् । दीर्घतीव्रामयादिपुत्रांशविधिः । संसृष्टिपुत्रविभागः । प्रेतादिभ्रातृद्रव्यलब्धविधिः । कुटुम्बार्थे युक्तायासादिविधिः । विभागसंदेहनिर्णयः । पुत्रसंख्यानियमश्चेति भेदानामेकोनविंशतिः ।

साहसे—साहसलक्षणम् । साहसदण्डविधानम् । आधिच्छलस्तेयम् । क्षुद्रद्रव्यमध्यमोत्तमविधानम् । द्विविधतस्करलक्षणम् । तस्करस्य व्यत्रकर्षणम् । भक्तावकाशदानादि । चौरविधिः । साहसस्तेयदण्डः । पदेन चौरान्वेषणविधिः । चोराभावे चौरादिद्रव्यापनयनं चेति द्वादश भेदाः ।

वाक्पारुष्ये—तद्भेदः । दण्डपारुष्ये तद्भेदः । उभयोर्दण्डलक्षणं चेति भेदत्रयम् । द्यूतसमाह्वयमेकभेदम् । प्रकीर्णके—राज्ञा स्वयं वर्णाश्रमपालनम् । राजोपवर्णनम् । राज-ब्राह्मणवृत्तिः । स्वद्रव्यदाने राज्ञोऽभ्यनुज्ञा । ब्राह्मणकर्मवृत्तिनिरूपणम् । अष्टमंगलकविधानमिति षड्भेदाः । एवमेतेष्वष्टादशप्रधानव्यवहारपदेष्वंतर्गतव्यवहारपदभेदाः द्वात्रिंशदधिकशतं भवन्तीत्यलं विस्तरेण ॥ १६-२० ॥

इति। ननु-धर्मादीनां पादत्वमयुक्तम्। प्रतिज्ञोत्तर-प्रमाण-निर्णयानां व्यवहारपादत्वात्। यतो याज्ञवल्क्यः प्रतिज्ञादीनि[1] प्रकृत्याह—

'चतुष्पाद्व्यवहारोऽयं* विवादेषूपदर्शितः'

( या. स्मृ. २. ८. )

इति। बृहस्पतिरपि—

'पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरः स्मृतः।
क्रियापादस्तृतीयस्तु चतुर्थो निर्णयः स्मृतः'॥

इति। नायं दोषः। धर्मादीनां प्रकारान्तरेण पादत्वोपपत्तेः। योऽयं निर्णयाख्यश्चतुर्थः पादोऽभिहितः। स धर्मादिभिश्चतुर्भिर्निष्पद्यते। तदाह बृहस्पतिः—

'धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया।
चतुष्प्रकारोऽभिहितः संदिग्धेऽर्थे विनिर्णयः'॥

इति। तस्मान्निर्णयहेतुतया धर्मादीनां व्यवहारपादत्वं भविष्यति। तेषां च निर्णयहेतुत्वं कात्यायनेन प्रपञ्चितम्—

'दोषकारी तु कर्तृत्वं धनस्वामी स्वकं धनम्।
विवादे प्राप्नुयाद्यत्र स धर्मेणैव निर्णयः'॥

इति। दोषकारी वाक्पारुष्यादिकारी। यस्मिन्विवादे व्यवहारे चरित्र-राजशासननैरपेक्ष्येण धर्माभिमुखः सन्नधर्माद्भीतः[2] स्वकी-

---

*चतुष्पाच्चतुरंशकल्पनया विवादेषु ऋणादानादिषु उपवर्णितो दर्शित इत्यर्थः। भाषोत्तरक्रिया-साध्यसिद्धिरित्याख्याः चत्वारः पादाः। संप्रतिपत्त्युत्तरे तु साधनानिर्देशात् भाषार्थस्यासाध्यत्वाच्च न साध्यसिद्धिलक्षणः पादोऽस्ति। अतः तत्र द्विपात्त्वमेव भवति।

---

१. B. originally reads प्रकृत्यादीनि, but corrected reads प्रतिज्ञादीनि.
२. D. reads सद्धर्मो° for सन्नध°.

यं दोषकर्तृत्वं स्वयमेवांगीकरोति यत्र धनस्वामी व्यवहारादिप्रयासमंतरेणाधर्माभिमुखाद्धनापहारिणः स्वकीयं धनं प्राप्नोति तत्र दोषकारिणो धर्माभिमुख्यमेव निर्णयहेतुः । व्यवहारस्य निर्णयहेतुत्वं स एवाह—

'स्मृतिशास्त्रं तु यत्किञ्चित् प्रथितं धर्मसाधकैः ।
कार्याणां निर्णयार्थे तु व्यवहारः स्मृतो हि सः' ॥

इति । यत्र धर्मशास्त्रकुशलैर्विद्वद्भिरर्थिप्रत्यर्थिनोरग्रे निर्णयार्थं धर्मशास्त्रं प्रख्यापितं भवति स निर्णयो व्यवहारजन्यः । चरित्रजन्यं निर्णयमाह स एव--

'यद्यदाचर्यते येन धर्म्यं चाधर्म्यमेव वा ।
देशस्याचरणं नित्यं चरित्रं तद्धि कीर्तितम्' ॥

इति । शास्त्रोक्तधर्मानपेतं धर्म्यं तद्विपरीतमधर्म्यम् । तदुभयं देशाचारानुसारेण यत्र स्वीक्रियते तत्र चरित्रं निर्णयहेतुः राजशासनस्य निर्णयहेतुतामाह स एव--

'न्यायशास्त्राविरोधेन देशदृष्टेस्तथैव च ।
यद्धर्मं स्थापयेद्राजा न्याय्यं तद्राजशासनम्' ॥

इति । न्यायशास्त्रमिति व्यवहारप्रतिपादकस्मृतिशास्त्रम् । तस्य च देशाचारस्याविरोधेन राजायमनुशास्ति स निर्णयो राजशासनजन्यः । यथोक्तानां धर्मादीनां चतुर्णां मध्ये पूर्वस्य पूर्वस्य बाध्यत्वं उत्तरस्योत्तरस्य बाधकत्वं च बृहस्पतिना प्रपञ्चितम्—

---

१. D. reads निर्णयाद्धेतोः for निर्णयार्थे तु. २. C. and D. read निर्णयाय for निर्णयार्थं. ३. D. reads आचरते for आचर्यते. ४. C. and D. read वा° for चा°. ५. B. originally reads °शास्त्र°, but corrected °शास्त्रा°. ६. B. originally reads न्यायं, but corrected न्याय्यं; while C. substitutes स्थाय्यं and याप्यं.

'शास्त्रं केवलमाश्रित्य क्रियते यत्र निर्णयः ।
व्यवहारः स विज्ञेयो धर्मस्तेनापि वर्द्धते ॥
देशस्थित्याऽनुमानेन नैगमानुमतेन च ।
क्रियते निर्णयस्तत्र व्यवहारस्तु बाध्यते ॥
विहाय चरिताचारं यत्र कुर्यात्पुनर्नृपः ।
निर्णयं सा तु राजाज्ञा चरित्रं बाध्यते तया' ॥

इति। चतुर्षु वर्णेषु यःकश्चिद्राजद्रोहं कृत्वा राज्ञा तर्जितः सन् अतिभीरुतया स्वापराधमङ्गीचकार तत्र समीपवर्तिनः साक्षिणो वर्णिवधं निवारयितुमिच्छन्तः सत्यमुल्लंघ्य–

'तत्र साक्ष्यनृतं वदेत्'

( म. स्मृ. १०. १३०. )

इत्येतादृशं शास्त्रमेवाश्रित्य तदीयमपराधं पर्यहार्षुः । तत्र व्यवहारेण धर्मो बाध्यते । केरलदेशादौ वेश्यागमने साक्षिभिरापादितेऽपि देशाचारवशान्नायं राज्ञा दण्ड्यते । तत्र चरित्रेण व्यवहारस्य बाधः। सत्यपि तादृशे देशाचारे त्वयैवं न कर्तव्यमिति राजा चेदनुशास्ति तदा राजाज्ञया चरित्रस्य बाधः। य एते प्रोक्ता धर्मादयश्चत्वारः पादाः ते चतुर्षु सभ्यादिषु प्रतिष्ठिताः । दोषकारी स्वयमनृताङ्गीतोऽप्यपराधोऽस्तीति सत्यं

१. C. and D. read शास्त्रमेव स° for शास्त्रं केवलम्. २. B. originally reads वर्द्धते, but corrected हीयते; while C. and D. read नीयते for वर्द्धते. ३. B. originally reads बाध्यते, but corrected कथ्यते; while C. and D. both read साध्यते for बाध्यते. ४. B. originally reads °त्तु नर्तनम् for पुनर्नृपः. ५. C. and D. read राज्ञो भीतः सन् for राज्ञा तर्जितः सन्. ६. A. has marginal reading तादृशैतन्न व्यवहर्तव्यम्; while B. has original reading, the same, but corrected त्वयैतन्न व्यवहर्तव्यम्, ७. A. has marginal readings सत्या° and सामा° and B. has corrected readings सत्या° and सभ्या.° ८. A. in marginal reading reads अपराधात्; while B. originally reads अपराधात् and corrected अनृतात्.

ब्रूते । अतो धर्मस्य सत्येऽवस्थानम् । प्रतिज्ञोत्तरयोः कृतयोः साक्षिणा यस्य पक्षोऽभ्युपगम्यते तस्य जयः । तेन व्यवहारस्य साक्षिण्यवस्थानम् । कर्नाटकदेशे बलान्मातुलसुताविवाहो न दोषाय । केरलदेशे कन्याया ऋतुमतीत्वं न दोषायेत्येवमादिकस्तद्देशसमयः[1] । तत्र तत्र पत्रादिशासनेऽवतिष्ठते । शिष्यत इति शासनम् । राजानुशासनेन[2] प्रजानां वर्तनम् । तत्र राजाज्ञायां प्रतिष्ठितं साम-भेद-दान-दण्डैश्चतुर्भिर्दोषकारिणो दोषनिवारणाच्चतुःसाधनत्वम्[3] ॥ चतुर्हितत्वं विस्पष्टम् । कर्त्रादिचतुष्टयव्यापित्वं[4] मनुना स्पष्टीकृतम्—

'पादो धर्मस्य कर्तारं पादो गच्छति साक्षिणम् ।
पादः सभासदः सर्वान्पादो राजानमृच्छति'* ॥
( म. स्मृ. ८. १८. )

---

* नचैषा मनीषा कर्तव्या अर्थिना प्रत्यर्थिना वान्यतरस्य भूम्याद्यपह्रियते स एव भूम्यपहारदोषभाग् भवति । वयं तु तदकारिणः किमिति दोषवंतः स्यामो ? यतस्तस्यायं चतुर्धा विभज्यते । अर्थवादश्चायम् । न ह्यन्यकृतस्यैनसोऽन्यत्र गमनमस्ति । तेषामपि मिथ्यादर्शननिषेधादुत्पद्यते मिथ्यालम्बनम् । राज्ञः स्वयमपश्यतोऽप्यधिकृतराजस्थानीयादिदोषात् दोषवत्त्वम् । यदि राजाधिकृतो मिथ्याचरितेन शापितः पराजितं दुष्टं न गृण्हीते न च पुनः सम्यङ्निर्णयं करोति ततः सोऽपि पापभाग्भवति । अधिकृतोपलक्षणार्थं वा राजग्रहणम् । यदा राजा स्वयं मिथ्या पश्यति तदा दुष्यति । यदा राजस्थानीयस्तदा तस्य दोषः । यदा पुनर्निन्दार्ह एव निन्द्यते तदा राजा भवत्यनेनाः अपापः । सभासदोऽपि तस्मात् पापाद्विमुच्यन्ते । तत्सर्वमेवैनः कर्तारमेवैकं प्रतिपद्यते । यथाह नारदः—

'राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः ।
एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते' इति ।

---

१. A. and B. originally read ताद्दृशः, but A. has marginal reading तद्देश° and B. has corrected the same. २. A. has marginal reading राजानुज्ञानुसारेण and B. has corrected reading the same. ३. In A. this word दोषनिवारणात् is not found. ४. A. originally reads °व्याप्तित्वं.

इति । जेतुर्नृपस्य वा धर्मोऽर्थयशो[1]-लोकानुरागसंपादनाच्चतुष्कारित्वम् । त्रियोनित्वं स्पष्टम् । असतां कितव-स्तेनादीनां संसर्गं यः करोति तस्मिन्नपि चौर्यादिशंका जायते। होढा अपहृत-द्रव्यादिदर्शनं तल्लिङ्गं वा तस्मादभियोगो भवति । अर्थि-प्रत्यर्थिनोर्यौ पूर्वोत्तरपक्षौ तौ व्यवहारस्य प्रवर्तकौ तस्मात् द्विद्वारत्वम् । द्रव्यसंख्यादिकं याथातथ्येनान्यथा वा राजादीनामग्रे यदा ब्रूते तदा तस्योभयस्योपरि व्यवहारः प्रवर्तते ततो द्विगतित्वम्[2] । अष्टाङ्गेषु स पुरुषो राजेत्येतदेकमङ्गम् । अतोनास्ति नवत्वसंख्याप्रसक्तिः । ऋणादानादीनामष्टादशपदानां स्वरूपमुपरिष्टात्तत्रतत्र विचारयिष्यते[3] । एतेषामष्टादशपदानां मध्येएकैकस्य पदस्यावांतरक्रियाभेदादनंतभेदभिन्नत्वं शतशाखत्वम्[4] । एतानष्टादशपदानवांतरानन्तभेदभिन्नान्व्यवहारान्प्रकारान्तरेण द्वेधा उपसंगृण्हाति[5] कात्यायनः—

'द्विपदे[6] साध्य[7]भेदात्तु पदाष्टादशतां गते ।
अष्टादशक्रियाभेदात् भिन्नान्यथ सहस्रधा' ॥

इति । द्विपदत्वं विशदयति बृहस्पतिः—

'द्विपदो व्यवहारस्याद्धन-हिंसासमुद्भवः ।
द्विसप्तकोऽर्थमूलस्तु हिंसामूलश्चतुर्विधः' ॥

---

१. A. has marginal reading °शास्त्रयशो° for °यशो° and B. has correction. २. C. reads द्विमतित्वम् for द्विगतित्वम्. ३. B. originally reads विचारिष्यते, but corrected विचरिष्यते, C. reads विवरिष्यते, and D. विचारयिष्यंते. ४. A. and B. originally read °शास्त्र°, but in margin A. reads °शाख° and B. corrected; while C. D. also read °शाल° instead of °शाख°. ५. C. and D. simply read संगृण्हाति. ६. B. originally reads द्वे पदे, but corrected द्विपदे; while C. and D. read द्वे गती for द्विपदे. ७. A. has °क्षि° in margin, B. corrected. C. originally reads °धि° for °ध्य.°

इति। तदेतदुभयविधं स एव विवृणोति—

'कुसीद-निधि[1]-देयाद्यं संभूयोत्थानमेव च
भृत्यदानमशुश्रूषा भूवादोऽस्वामिविक्रयः ॥
क्रय-विक्रयानुशयः समयातिक्रमस्तथा।
स्त्री-पुंसयोगः स्तेयं च दाय[2]भागो ऽक्ष[3]देवनम् ॥
एवं सम्यक् समुत्थानं पदानि च चतुर्दश।
पुनरेव प्रभिन्नानि क्रियाभेदैरनेकधा ॥
पारुष्ये द्वे साहसं च परस्त्रीसंग्रहस्तथा।
हिंसोद्भवपदान्येवं चत्वार्याह बृहस्पतिः[4]' ॥

इति। जगति संभावितानशेषान्विवादानुक्तेष्वष्टादशसु स एवान्तर्भावयति—

'पदान्यष्टादशैतानि धर्मशास्त्रोदितानि तु।
मूलं सर्वविवादानां ये विदुस्ते परीक्षकाः' ॥

इति। इति व्यवहारपरिच्छेदः ॥

### अथ सभा निरूप्यते।

तत्र बृहस्पतिः—

'दुर्गमध्ये गृहं कुर्याज्जलवृक्षा[5]वृतं पृथक्।
प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत् सभाम् ॥

---

१. B. originally reads °निष्ठो,° but corrected °निधि° and °निध्य°; while C. °निधि° and D. °निध्य°. २. B. originally दार°, corrected दान°; while C. reads दात्ट° for दाय°. ३. A. and B. originally read ऽथ°, but corrected read ऽक्ष°, C. and D. also substitute ऽस्त्र°. ४. B. has marginal reading प्रजापतिः and B. corrected. ५. D. reads °वृक्षान्वितं °वृक्षावृतं.

माल्य-धूपासनोपेतां बीज-रत्नसमन्विताम्।
प्रतिमा-लेख्य-देवैश्च युक्तामन्नाम्बुना तथा' ॥

इति। गृहं राजगृहम्। तस्य प्राग्दिशि धर्माधिकरणभूता सभा। सा च वास्तुशास्त्रलक्षणोपेता कर्तव्या। तस्याः सभाया धर्माधिकरणत्वं कात्यायनो दर्शयति—

'धर्मशास्त्रविचारेण मूलशास्त्रविवेचनम्।
यत्राधिक्रियते स्थाने धर्माधिकरणं हि तत्' ॥

इति। मूलस्याविदितार्थस्य सारासारविवेचनं तत्वनिष्कर्षः। तत्र प्रवेशनं स एवाह—

'प्रातरुत्थाय नृपतिः शौचं कृत्वा समाहितः*।
गुरुं ज्योतिर्विदं वैद्यान्देवान्विप्रान्पुरोहितान् ॥
यथार्हमेतान्संपूज्य सुपुष्पाभरणांबरैः।
अभिवन्द्य च गुर्वादीन्सुमुखां प्रविशेत्सभाम्' ॥

इति। प्रविश्य च विद्वद्भिर्मन्त्रिभिः सहकार्याण्यनुसन्दध्यात्। तदाह मनुः—

---

* शौच—गुरु-ज्योतिर्विदादिपूजनं नित्यकृत्यत्वेन विहितम्। न पुनर्व्यवहारदर्शननिमित्तम्। व्यवहारान् अदिदृक्षोरपि शौचादीनामवश्यकर्तव्यत्वेनोक्तत्वात्।

---

१. B. corrected reads °पट्टा° for °धूपा°. २. A. in margin reads °सार° B. originally reads °सार°, but corrected °शास्त्र°. D. reads °धर्म° for °शास्त्र°. ३. C. reads प्रवेशं for प्रवेशनं; whille D. substitutes प्रवेशकाले for प्रवेशनं. ४. A. and D. read the whole line thus प्रातरुत्थाय च नृपः कृत्वा नित्यं समाहितः। ५. A. has marginal reading समा°; while B. reads in correction समा° for पुरो°. ६. C. reads °भरणं नृपः; while D. reads °भरणैर्नृपः. ७. C. and D. read सुमुखान् for सुमुखां. ८. only D. substitutes तत्र for च.

'व्यवहारान्दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः ।
मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत् सभाम् ॥
तत्रासीनः स्थितो वापि पाणिमुद्यम्य दक्षिणम् ।
विनीतवेषाभरणः पश्येत् कार्याणि कार्यिणाम् ॥
प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ।
अष्टादशसु मार्गेषु निबद्धानि पृथक् पृथक्' ॥

( म. स्मृ. ८. १–३ )

इति । अथ विचारकालमाह कात्यायनः—

'दिवसस्याष्टमं भागं मुक्त्वा कालत्रयं तु यत् ।
स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः' ॥

इति । दिवसं अष्टधाकृत्वा प्रथमं भागमग्निहोत्राद्यर्थं मुक्त्वा अनन्तरं भागत्रयं व्यवहारकालः। अत्र वर्ज्यास्तिथीराह संवर्तः-

'चतुर्दशी ह्यमावास्या पौर्णमासी तथाऽष्टमी ।
तिथिष्वासु न पश्येत्तु व्यवहारान्न नित्यशः'† ॥

† सामान्यतः प्रतिक्षणं प्रत्यहं च प्राप्तस्य व्यवहारदर्शनस्य अपवादोऽयम् । दिवसस्याष्टमभागवर्जनं चतुर्दश्यादितिथिवर्जनमपि सति सम्भवे द्रष्टव्यम् । दण्डपारुष्यादौ तु तत्कालमेव व्यवहारा द्रष्टव्याः । यथाह कात्यायनः—

'साक्षि-लिङ्गादिनाशने साध्यनाशस्य सम्भवे ।
न कालनियमं पश्येत् व्यवहारस्य दर्शने' ॥ इति ।

१. C. reads व्यवरदिदृक्षुः instead of व्यवहारान् दिदृक्षुः. २. C. reads प्राविशेत् for प्रविशेत्. ३. B. originally reads कारिणाम्, but corrected कार्यिणाम्. ४. D. reads व्यवहारान् instead of निबद्धानि. ५. in C. and D. अथ is not found. ६. D. substitutes च for तु. ७. This word is only found in C. and D.

इति। येयमुक्ता सभा तस्याश्चातुर्विध्यमाह बृहस्पतिः–

'प्रतिष्ठिताऽप्रतिष्ठिता मुद्रिता शास्त्रिता तथा।
चतुर्विधा सभा प्रोक्ता सभ्याश्चैव तथाविधाः ॥
प्रतिष्ठिता पुरे ग्रामे चलानामप्रतिष्ठिता।
मुद्रिताऽध्यक्षसंयुक्ता राजयुक्ता च शास्त्रिता' ॥

इति। राजगृहसमीपवर्तिनः सभास्थानान्मुख्यादन्यान्यमुख्यानि स्थानान्याह भृगुः–

'दश स्थानानि वादानां पञ्च चैवाब्रवीद्भृगुः।
निर्णयं येन गच्छंति वादं प्राप्य च वादिनः ॥
आरण्यास्तु स्वकैः कुर्युः सार्थिकाः सार्थिकैस्तथा।
सैनिकाः सैनिकैरेव ग्रामेऽप्युभयवासिनः ॥
उभयानुमतं चैव गृण्हन्ति स्थानमीप्सितम्।
कुलिकाः सार्थमुख्याश्च पुर-ग्रामनिवासिनः ॥
ग्राम-पौरगणश्रेण्यश्चातुर्विद्याश्च वर्गिणः।
कुलानि कुलिकाश्चैव नियुक्ता नृपतिस्तथा' ॥

---

१. A. has marginal reading एवं या; while B. originally reads एवं and corrected येयं. २. C. reads मुद्रिका for मुद्रिता. ३. B. originally reads शास्तिता, but correction is शास्त्रिता. ४. A. and C. originally read बला° and B. originally reads छला°, but corrected बला°. ५. A. and B. originally read शास्तिता; while corrected शास्त्रिता. ६. C. D. read विवादं for वादं. ७. च is not found in C. and D. ८. B. reads originally स्वास्तिकं, but corrected तु स्वकैः. ९. B. originally reads आर्थिकाः and corrected सार्थिकाः. १०. C. and D. read °वासिभिः for °वासिनः. ११. C. reads गृण्हते; while D. गृह्यते for गृण्हन्ति. १२. B. originally reads स्वामिनेप्सितम् and corrected स्थानमीप्सितम्. १३. B. orginally reads चातुर्विध्याः, but corrected चातुर्विद्याः; while D. reads चातुर्वैद्याः. १४. B. originally reads वर्गिनः, but corrected वर्गिणः. १५. B. originally reads च प्रतिष्ठिताः instead of नृपतिस्तथा.

इति । स्वकैरारण्यकैः । ग्रामेऽपीत्यादिशब्दात् ये तु अरण्यादौ ग्रामे च निवसन्ति ते ह्युभयवासिभिः ग्रामवासिभिः अरण्यवासिभिर्वा निर्णयं कुर्युः । उभयव्यवहाराभिज्ञत्वात्तेषाम् । कुलिकाः कुलश्रेष्ठिनः । सार्थिनो ग्रामयात्रादौ मिलितो जनसङ्घः । मुख्या ग्रामण्यादयः । पुरं मुख्यं नगरम् । तस्मादर्वाचीनो ग्रामः । पुरग्रामनिवासिनां भेदः कुलिकादीनि पञ्च स्थानानि तानि चारण्यकादिजनविशेषाणामेव । ग्रामाकारेणावस्थितजनविवादे समीपग्रामनिवासिभिर्निर्णयः । अर्थि-प्रत्यर्थिनोरनुशयानुमतं स्थानं कुलिक-सार्थमुख्य-पुरग्रामनिवासिनो गृण्हते । ग्रामादीनि दश स्थानानि साधारणानि । ग्रामो ग्रामाकारेणावास्थितो जनः । पौरः पुरवासिनां समूहः । गणाः कुलानां समूहः । श्रेण्यः रजकाद्यष्टादश हीनजातयः । चातुर्विद्या आन्वीक्षिक्यादिविद्याचतुष्टयोपेताः* । वर्गिणो गणप्रभृतयः । तथा च कात्यायनः—

---

* विद्याचतुष्टयं कामन्दकीये प्रदर्शितम्—

'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथैव च ।
विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः' ॥

इति । तत्र आन्वीक्षिकी—श्रवणादनु पर्यालोचना प्रयोजनमस्याः । न्यायविद्येत्यमरः । प्रत्यक्ष-परोक्षाभ्यामीक्षितस्य अर्थस्यानु पश्चात् ईक्षणं अन्वीक्षा । सा प्रयोजनं यस्याः सा आन्वीक्षिकी । इयं हि त्रयी वार्तादिविद्याचतुष्टयान्तर्गता आत्मविज्ञानहेतुका धर्मार्थसंसाधिका । एतस्यां ये कुशलास्ते विद्याचतुष्टयेऽपि कुशला एव । त एवात्र विवक्षिताः । न केवलं तर्कशास्त्रकुशलाः ।

---

१. This sentence is not found in A. B. and C. २. This sentence is not found in A. B. and C. ३. C. and D. read सार्थो for सार्थिनो. ४. C. reads °मादि कुर्वतो गणिताः for °मनिवासिनो गृण्हते, which is absurd; while D. reads गृह्यन्ते.

'[१]गणाः पाखण्डपूगाश्च व्राताश्च श्रेणयस्तथा।
समूहस्थाश्च ये चान्ये [२]वर्णाख्या [३]ये बृहस्पतिः'॥

इति। आयुधधराणां समूहो [४]व्रातः। कुलान्यर्थि-प्रत्यर्थिनोः सगोत्राणि। कुलिकास्तत्र वृद्धा नियुक्ता [५]अपि प्राड्विवाकसहितास्त्रयः सभ्याः [६]नृपति-ब्राह्मणादिसहिताः। सभ्यानाह याज्ञवल्क्यः

'श्रुताध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः।
राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः'॥
( या. स्मृ. २. २. )

इति। तेषां संख्यामाह बृहस्पतिः—

*'लोक-[७]वेदाङ्ग-धर्मज्ञाः सप्त पञ्च त्रयोऽपि वा।

---

*मनुरपि सभां प्रविश्य व्यवहारान् पश्येदित्युक्त्वा सभाशब्दो लोके गृह-प्रासादविशेषेऽपि वर्तते—

'मयेन निर्मिता दिव्या सभा हेमपरिष्कृता'

इत्यादिभारतोक्तेः क्वचित् पुरुषविशेषसंघटिताऽपि सभा भवेदिति तन्निरासार्थं सभाया लक्षणमाह—

'यस्मिन् देशे निषिदन्ति विप्रा वेदविदस्त्रयः।
राज्ञश्चाधिकृतो विद्वान् ब्राह्मणस्तां सभां विदुः'॥
(म. स्मृ. ८. ११.)

इत्युक्तवान्।

---

१. A. in marginal reading, B. in correction and C. originally substitute ग्रामस्थाश्च पुरस्थाश्च ब्राह्मणाः for गणाः पाखण्डपूगाश्च व्राताश्च, but D. reads the same as in original, A. only substituting ब्राह्मणाः for व्राताश्च. २. A. in marginal reading, and B. in correction; while C. and D. as usual read वर्ग्याख्याः for वर्णाख्याः. ३. A. in margin, B. in correction, C. and D. as usual read °स्ते for ये. ४. This sentence is dropped from C.; while D. substitutes व्रातम् for व्रातः. ५. B. and C. only mention अपि. ६. D. reads नृपतिर्ब्राह्मणादिसहितः for नृपति-ब्राह्मणादिसहिताः. ७. A. in marginal reading; while B. in correction and C. and D. as usual read °धर्माङ्ग-तत्त्व° for °वेदाङ्ग-धर्म°.

ये[1]त्रोपविष्टा विप्राः[2]स्युः सा यज्ञसदृशी सभा' ॥

इति । तत्र वर्ज्यान् स एवाह—

'देशाचारानभिज्ञा ये नास्तिकाः शास्त्रवर्जिताः ।
उन्मत्त[3]-लुब्ध-क्रुद्धाश्च न प्रष्टव्या विनिर्णये' ॥

इति । राज्ञः प्रतिनिधिमाह याज्ञवल्क्यः—

'अपश्यता कार्यवशाद्व्यवहारान् नृपेण तु ।
सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित्' ॥
( या. स्मृ. २. ३ )

इति । सोऽपि राजवत्सर्वकार्याणि विचारयेत् । त[4]दाह मनुः—

'यदा स्वयं न कुर्यात्तु नृपतिः कार्यदर्शनम् ।
तदा नियुंज्याद्विद्वांसं ब्राह्मणं कार्यदर्शने ॥
सोऽस्य कार्याणि संपश्येत्सभ्यैरेव त्रिभिर्वृतः ।
सभामेव प्रविश्याग्र्या[5]मासीनः स्थित एव वा' ॥
( म. स्मृ. ८. ९-१०. )

इति । स च विचारको ब्राह्मणः प्राड्विवाक* इत्युच्यते तदाह बृहस्पतिः—

---

*अर्थि-प्रत्यर्थिनौ पृच्छतीति प्राट् । तयोर्वचनं विरुद्धमविरुद्धं च सभ्यैः सह विविनक्ति विवेचयति वेति विवाकः । प्राट् चासौ विवाकश्चेति प्राड्विवाकः । उक्तं च—

'विवादानुगतं पृष्ट्वा ससभ्यस्तान् प्रयत्नतः ।
विचारयति येनासौ प्राड्विवाकस्ततो मतः' ॥ इति ।

---

१. A. has marginal reading शास्त्रो°; while B. has original and corrected B. reads तत्रो°. २. A. has marginal reading लोकाग्र्याः; while B. has recorrected reading, C. and D. also read विप्राग्र्याः for विप्राः स्युः. ३. B. originally reads उन्मत्त-लुब्ध-क्रुद्धर्षा and corrected °क्रुद्धाश्च; while D. reads उन्मत्त-कुहका लुब्धाः. ४. C. reads यदाह for तदाह. ५. B. originally reads प्रविश्यारमा°, but corrected प्रविश्याग्र्या°; while D. reads प्रविश्येमा°.

'राजा कार्याणि संपश्येत्प्राड्विवाकोऽथ वा द्विजः।
न्यायांगान्यग्रतः कृत्वा सभ्यशास्त्रमते स्थितः॥
बलेन चतुरङ्गेण यतो रञ्जयते प्रजाः।
दीप्यमानः स्ववपुषा तेन राजाभिधीयते॥
विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च।
प्रियपूर्वं प्राग्वदति प्राड्विवाकोऽभिधीयते'॥

इति। नारदोऽपि—

'अष्टादशपदाभिज्ञः षड्भेदाष्टसहस्रवित्।
आन्वीक्षिक्यादिकुशलः श्रुति-स्मृतिपरायणः॥
विवादसंश्रितं धर्मं पृच्छति प्रकृतं मतम्।
विवेचयति यस्तस्मात्प्राड्विवाकस्तु संस्मृतः॥
*यथा शल्यं भिषक्कायादुद्धरेद्यन्त्रयुक्तितः।
प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः'॥ ( १६ )॥
( ना. स्मृ. ३. १६. )

*यथा नष्टशल्यमदृष्टमपि दुःखोद्धरणीयमपि भिषग्वैद्यः शस्त्रक्रिया-निपुण इत्यर्थः। बहुप्रकारं शल्यतन्त्रप्रयोगयुक्तिभिः शल्यमुद्धरेत्। एवमेव प्राड्विवाकः व्यवहारान्तर्गतं पापशल्यं अनुपलक्ष्यमपि व्यवहार-युक्तिभिरुद्धरेदित्यभिप्रायः।

१. C. reads वाग्वदति for प्राग्वदति. २. A. has marginal reading यत्तस्मात्; while B. corrected reads यत्तस्स्यात्. ३. A. has marginal reading °यन्त्र for यंत्र°; while B. originally reads यन्त्र and corrected यन्त्र°.

इति । प्राड्विवाकस्य गुणाः स्मृत्यंतरे दर्शिताः—

‘अक्रूरो मधुरः स्निग्धः क्रमायातो विचक्षणः ।
उत्साहवानलुब्धश्च वादे योज्यो नृपेण तु’ ॥

इति । प्राड्विवाकस्यानुकल्प्य[1]माह कात्यायनः—

‘ब्राह्मणो यत्र न स्यात्तु क्षत्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं[2] शूद्रं यत्नेन वर्जयेत्’ ॥

इति । बृहस्पतिरपि—

‘यत्र विप्रो न विद्वान्स्यात्क्षत्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्’ ॥

इति । तदवर्जने बाधमाह मनुः—

‘जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः[3] ।
धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथंचन ॥ (२०)
यस्य शूद्रस्तु कुरुते राज्ञो धर्मविवेचनम् ।
तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः ॥ (२१)
द्विजान्विहाय यः[4] पश्येत्कार्याणि वृषलैः सह ।
तस्य प्रक्षुभ्यते[5] राष्ट्रं[6] बलं कोशश्च नश्यति’ ॥
(म. स्मृ. ८. २०–२२)

इति । गणक-लेखकावपि कार्यावित्याह बृहस्पतिः—

---

१. B. C. and D. read अनुकल्प° for अनुकल्प्य°. २. A. has marginal reading °तत्त्वज्ञं; while B. has original, but corrected reads °न्यायज्ञं. ३. C. and D. read ब्राह्मणो ब्रुवः instead of ब्राह्मणब्रुवः. ४. D. reads सम्पश्येत् for यः पश्येत्. ५. C. reads प्रक्षुभते for प्रक्षुभ्यते. ६. C. reads राष्ट्रे for राष्ट्रं.

‘शब्दा[1]भिधानतत्वज्ञौ गणनाकुशलौ शुची ।
नानालि[2]पिज्ञौ कर्तव्यौ राज्ञा गणक-लेखकौ’ ॥

इति । व्यासोऽपि—

‘त्रिस्कन्धज्योतिषाभिज्ञं* स्फुटप्रत्ययका[3]रकम् ।
श्रुता[4]ध्ययनसंपन्नं गणकं योजयेन्नृपः ॥
स्फुटलेखं नियुञ्जीत शाब्दं लाक्षणिकं शुचिम् ।
स्पष्टाक्षरं जितक्रोधमलुब्धं सत्यवादिनम्’ ॥

इति । साध्यपालोऽपि कर्तव्य इति तेनैवोक्तम्—

‘साध्यपालस्तु कर्तव्यो राज्ञा साध्यस्य साधकः ।
क्रमायातो दृढः शूद्रः सभ्यानां च मते स्थितः’ ॥

---

*तत्रतावत् ज्योतिः शास्त्रस्य त्रयः स्कन्धाः । ते च गणितस्कन्धः जातकस्कन्धः, सिद्धान्तस्कन्धश्चेति त्रयः । तत्र गणितं द्विविधमुक्तं लीलावत्याम् । व्यक्तं पाटीगणितं अव्यक्तं बीजगणितमिति । जातकस्कन्धे तु जातस्य शिशोः शुभाशुभचिन्ता । सिद्धान्तस्कन्धस्तु भास्कराचार्यैः शिरोमणौ प्रदर्शितः । यथा—

‘त्र्युट्यादिप्रलयान्तकालकलनामानप्रभेदः क्रमात्
चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः ।
भू-धिष्ण्यग्रहसंस्थितेश्च कथनं जन्मादि यत्रोच्यते
सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः’ ॥

इति । एवं प्रकारकत्रिस्कन्धज्योतिषाभिज्ञो लेखकोऽत्र नियोक्तव्य इत्याशयः ।

---

१. A. has marginal reading राजा वि° for शब्दाभि° and B. originally reads राजा वि°, but corrected शब्दाभि°. २. B. originally reads °तिथिज्ञौ, but corrected reads °लिपिज्ञौ; while C. and D. read °क्षरज्ञौ and °विधिज्ञौ. ३. D. reads °कारणम् for °कारकम्. ४. A. has marginal reading सुतीर्था° for श्रुताध्य°; while B. originally reads सुतीर्थाह्वान° and corrected श्रुताध्ययन°.

इति । बृहस्पतिरपि—

'आकारणे रक्षणे च साक्ष्यर्थि-प्रतिवादिनाम् ।
सभ्याधीनः सत्यवादी कर्तव्यस्तु स पूरुषः' ॥

इति । राज्ञा कतिपयैर्वणिग्भिरधिष्ठितं सदः कर्तव्यम् । तदाह कात्यायनः—

'कुल-शील-वयो-वृत्त[1]-वित्तवद्भिरमत्सरैः ।
वणिग्भिः स्यात्कतिपयैः कुलभूतैरधिष्ठितम्' ॥

इति । कुलभूतैर्वृन्दभूतैरित्यर्थः । तेषामुपयोगमाह स एव—

'श्रोतारो वणिजस्तत्र कर्तव्या न्यायदर्शिनः[2]' ।

इति । यथोक्तराजादियुक्तायाः सभाया दशाङ्गानि सम्प्रयोजनान्याह बृहस्पतिः—

'नृपोऽधिकृतसभ्याश्च स्मृतिर्गणक-लेखकौ ।
[3]सहेमाग्न्यम्बु-पुरुषाः साधनाङ्गानि वै दश ॥
एतद्दशाङ्गकरणं यस्यामध्यास्य पार्थिवः ।
न्यायं पश्येत्कृतमतिः सा सभाऽध्वरसंमिता ॥
दशानामपि चैतेषां कर्म प्रोक्तं पृथक्पृथक् ।
[4]वक्ताऽध्यक्षो नृपः शास्ता सभ्याः कार्यपरीक्षकाः ॥
स्मृतिर्विनिर्णयं ब्रूते जयदानं धनं तथा ।
शपथार्थौ[5] हिरण्याग्नी जलं तृषित-लुब्धयोः[6] ॥

१. D. reads °वृद्धैः for °वृत्त°. २. D. reads °दर्शने for °दर्शिनः ३. A. B. C. read हेमाग्न्यम्बु-स्वपुरुषाः for सहेमाग्न्यम्बु-पुरुषाः. ४. B. originally reads वक्ताऽभ्यस्तो, but corrected वक्ताऽध्यक्षो; while D. reads सभाध्यक्षो for वक्ताऽध्यक्षो. ५. C. and D. read शपथार्थे for शपथार्थौ. ६. B. originally reads °क्रुद्धयोः, but corrected °लुब्धयोः; while C. reads °क्षुब्धयोः for the same.

गणको गणयेदर्थं लिखेन्न्यायञ्च लेखकः।
प्रत्यर्थिसभ्यानयनं साक्षिणां च स पूरुषः॥
वाग्दण्डश्चैव धिग्दण्डो विप्राधीनौ तु तावुभौ।
अर्थदण्ड-वधावुक्तौ राजायत्तावुभावपि॥
राज्ञा ये विदिताः सम्यक् कुल-श्रेणि-गेणादयः।
साहस-न्यायवर्ज्यानि कुर्युः कार्याणि ते नृणाम्'॥

इति। यथाविधिविचारे राज्ञः फलमाह कात्यायनः—

'सप्राड्विवाकः सामात्यः सब्राह्मण-पुरोहितः।
ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः'॥

इति। वैपरीत्ये दोषमाह मनुः—

'अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकं चैव गच्छति'॥
(म. स्मृ. ८. १२८.)

इति। सभ्यानां फलमाह बृहस्पतिः—

'अज्ञानतिमिरोपेतान् संदेहपटलान्वितान्।
निरामयान्यः कुरुते शास्त्राञ्जनशलाकया॥
इह कीर्तिं राजपूजां लभते स्वर्गतिं च सः।
लोभद्वेषादिकं त्यक्त्वा यः कुर्यात् कार्यनिर्णयम्॥
शास्त्रोदितेन विधिना तस्य यज्ञफलं भवेत्'।

इति। विपक्षे दोषमाह कात्यायनः—

'न्यायशास्त्रमतिक्रम्य सभ्यैर्यत्र विनिश्चितम्।
तत्र धर्मो ह्यधर्मेण हतो हंति न संशयः॥

१. C. and D. read °दर्थं for दर्थं. २. A. has marginal reading °धि for °धी°; while B. had originally °धि°, but corrected became °धी. ३. C. reads °गुहोदयः for °गणादयः.

अपन्यायप्रवृत्तं तु नोपेक्षेरन्[1] सभासदः ।
उपेक्षमाणाः सनृपा नरकं यान्त्यधोमुखाः ॥
अन्यायेनापि तं यांतं येऽनुयांति[2] सभासदः ।
तेऽपि तद्भागिनस्तस्माद्बोधनीयः स तैर्नृपः ॥
न्यायमार्गादपेतं तु ज्ञात्वा चित्तं महीपतेः ।
कर्तव्यं[3] तत्प्रियं तत्र न सभ्यः किल्बिषी भवेत्' ॥

इति । कार्यानिष्पत्तावपि यथाशास्त्रवादिनो नास्ति प्रत्यवाय इति स एवाह—

'सभ्येनावश्यकर्तव्यं धर्मार्थसहितं वचः ।
शृणोति यदि नो राजा स्यात्तु सभ्यस्ततोऽनघः' ॥

इति । यदा तु राजा यथाशास्त्रं धर्मं श्रुत्वा दोषकारिणे पक्षपातं न करोति तदा निष्पापो[4] भवति । तदाह मनुः—

'राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः ।
एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते[5]' ॥
( म. स्मृ. ८. १९. )

इति । अन्यथावादिनः सभ्यस्य दण्डमाह नारदः—

'रागादज्ञानतो वापि यो लोभादन्यथा वदेत् ।
सभ्योऽसभ्यः स विज्ञेयस्तं पापं विनयेद्भृशम्' ॥

इति । कात्यायनोऽपि —

---

१. A. in margin reads उपेक्षेयुः and B. originally and corrected reads उपेक्षन्ते; while C. D. उपेक्ष्यं तत् for उपेक्षेरन्. २. D. substitutes तु for ऽनु. ३. A. has marginal reading स्मर्तव्यं; while B. has in correction and C. D. as usual read वक्तव्यं for कर्तव्यं. ४. C. reads न पातो for निष्पापो. ५. B. originally reads विद्यन्ते, but corrected निन्द्यते; while C. नेष्यन्ते for the same.

'स्नेहादज्ञानतो वापि लोभाद्वा मोहतोऽपि वा ।
तत्र सभ्योऽन्यथावादी दण्ड्योऽसभ्यः स्मृतो हि सः' ॥

इति । याज्ञवल्क्योऽपि—

'रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः ।
सभ्याः पृथक्पृथग्दण्ड्या विवादाद्द्विगुणं* दमम्' ॥
( या. स्मृ. २. ४. )

इति । बृहस्पतिरपि—

'अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।
विश्वस्ते वञ्चकाश्चैव निर्वास्याः सर्व एव ते' ॥

इति । कात्यायनः—

*अत्र विज्ञानेश्वरः—विवादपराजयनिमित्ताद्दमाद्द्विगुणं दमं दण्ड्याः न पुनर्विवादास्पदीभूतात् द्रव्यात् । तथा सति स्त्रीसङ्ग्रहणादिषु दण्डाभावप्रसङ्गः । राग-लोभ-भयानामुपादानं रागादिष्वेव द्विगुणो दमो नाज्ञानमोहादिषु इति नियमार्थम् । न च—

'राजा सर्वस्येष्टे ब्राह्मणवर्ज्यम्'—

इति गौतमवचनात् न ब्राह्मणा अदण्ड्या इति मन्तव्यम् । तस्य प्रशंसार्थत्वात् । यत्तु—

'षड्भिः परिहार्यो राज्ञा वध्यश्चा-ऽबन्ध्यश्चा-ऽदण्ड्यश्चा-ऽबहिःकार्यश्चा-ऽपरिवाद्यश्चाऽ-परिहार्यश्च

इति तदपि 'स एष बहुश्रुतो भवति । लोक-वेद-वेदाङ्गवित् वाकोवाक्येतिहासपुराणकुशलः तदपेक्षसाद्वृत्तिश्चाष्टाचत्वारिंशत्संस्कारैः संस्कृतः त्रिषु कर्मस्वभिरतः षट्सु वा समयाचारिकेष्वभिविनीतः' । इतिप्रतिपादितबहुश्रुतविषयम् । न ब्राह्मणमात्रविषयं इति ।

---

१. C. and D. read सभ्यो दण्ड्यः for दण्ड्योऽसभ्यः. २. C. and D. read द्वेषाद् for लोभात्. ३. C. reads दमः for दमम्.

'अनिर्णीते तु यद्यर्थे सम्भाषेत रहोऽर्थिना ।
प्राड्विवाकोऽर्थे[1] दण्ड्यः स्यात्सभ्याश्चैव विशेषतः' ॥

इति । राजादीनां सभायामुपवेशनप्रकारमाह बृहस्पतिः—

'पूर्वामुखस्तूपविशेद्राजा सभ्या उदङ्मुखाः ।
गणकः पश्चिमास्यस्तु लेखको दक्षिणामुखः' ॥

इति । सभोपविष्टा[2] नृपादयो यस्यांगानि तमङ्गिनं व्यवहारं पुरुषरूपेण परिकल्पयति स एव—

'एषां मूर्द्धा नृपोऽङ्गानां मुखं चाधिकृतः स्मृतः[3] ।
बाहू सभ्याः स्मृतिर्हस्तौ जङ्घे गणक-लेखकौ ॥
हेमाग्न्यम्ब्वन्न-पुरुषाः पादौ च पुरुषस्य च' ।

इति । या वृद्धराहित्यादिदोषरहिता सा मुख्या सभा । तदुक्तं महाभारते—

'न सा सभा यत्र न संति वृद्धाः
वृद्धा न ते ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनानुविद्धम्[4]' ॥

(ना. स्मृ. ३. १८.)

इति । इति सभा निरूपणम् ।

---

१. D. reads ऽपि for ऽर्थ. २. A. has marginal reading सभाप्रविष्टा; while B. originally reads the same, but corrected सभोपविष्टाः. ३. D. reads कृतः for स्मृतः. ४. B. originally reads कपटेना°, but corrected यच्छलेना°. C. also reads as B.'s corrected form.

अथ व्यवहारदर्शनविधिर्निरूप्यते । तत्र प्रजापतिः—

‘राजाऽभिषेकसंयुक्तो ब्राह्मणो वा बहुश्रुतः ।
धर्मासनगतः पश्येद्व्यवहारानुल्बणम्’ ॥

इति । नारदः—

‘* तस्माद्धर्मासनं प्राप्य राजा विगतमत्सरः ।
समःस्यात्सर्वभूतेषु बिभ्रद्वैवस्वतं व्रतम् ॥ (३४)
(ना. स्मृ. १. ३४.)

इति । †वैवस्वतव्रतमुक्तं बृहस्पतिना—

---

* यस्मात्—
धर्मेणोद्धरतो राज्ञो व्यवहारान् कृतात्मनः ।
सम्भवन्ति गुणाः सर्वे सत्यं वन्हेरिवार्चिषः ॥ (३२)
धर्मश्चार्थश्च कीर्तिश्च लोकपक्तिरुपग्रहः ।
प्रजाभ्यो बहुमानं च स्वर्गे स्थानं च शाश्वतम् ॥

तस्मादेवंविधमहार्थलाभात् राजा विगतमत्सरो राग-द्वेषविवर्जितो वैवस्वतो यमो धर्मराजः तस्य व्रतं लोकानां स्वकर्मजातशुभाशुभ-फलदत्वं तद्विभूतिवान् धारयन् धर्मासनं धर्माधिकरणं प्राप्य सर्वभूतेषु समः स्यादिति भावः ।

† ‘वैवस्वतव्रतमुक्तं बृहस्पतिना’ नास्तीदं A. संज्ञकपुस्तकातिरिक्तेष्वादर्शपुस्तकेषु । नोपलभ्यते चाधस्तनं वाक्यं बृहस्पतिस्मृतौ । D. संज्ञकपुस्तके इदं वचनं यमवाक्यत्वेन दर्शितम् । परं नोपलभ्यते यमस्मृतौ । तस्मादिदं बृहस्पतिवाक्यं यमवाक्यं वेति विचारयन्तु सुधिय इत्यलमप्रसक्तेन ।

---

१. A. had marginal reading °स्थान° and original reading °नप° similarly B. has corrected reading °शन° and original °सन° C. also reads °नप° for °सन°.

'य[१]था यमः प्रिय-द्वेष्यौ प्राप्ते काले नियच्छति ।
तथा राज्ञा नियंतव्याः प्रजास्तद्धि यमव्रतम्' ॥

इति । यद्व्यवहारप्रतिपादकं धर्मशास्त्रं यच्च तदन्तर्गतं द्रव्यदण्डादिरूपमर्थशास्त्रं तदुभयमपि व्यवहारदर्शि[२]ना राज्ञाऽनुसरणीयम् । तदाह स एव—

'धर्मशास्त्रा-ऽर्थशास्त्राभ्यामविरोधेन पार्थिवः ।
समीक्षमाणो नि[३]पुणं व्यवहारगतिं नयेत्'* ॥

(ना. स्मृ. १. ३७)

इति । धर्मशास्त्राणि पितामहेन दर्शितानि—

'वेदाः साङ्गास्तु चत्वारो मीमांसा स्मृतयस्तथा ।
एतानि धर्मशास्त्राणि [४]पुराणं न्यायदर्शनम्' ॥

इति । ननु-नधर्मशास्त्रांतर्गतमर्थशास्त्रम् ।कित्वन्यदेवं [५]नीत्यात्मकम् । यत्तु [६]भविष्यत्पुराणे दर्शितम्—

* क्वचित् धर्मशास्त्रोक्तं अर्थशास्त्रविरुद्धं भवति । क्वचित् पुनरर्थशास्त्रोक्तं धर्मशास्त्रविरुद्धं भवति । तयोरितरेतरतामालोच्य यथा लोकाचारविरुद्धं न भवति तथा ससभ्योऽपि राजा व्यवहारगतिं नयेत् निर्णयं-कुर्यादित्यर्थः ।

---

१. D. split the two words यथा यमः, and quotes them as author and reads the following thus:–प्रिय-द्वेष्यौ समौ ज्ञात्वा for यथा यमः प्रियद्वेष्यौ. २. A. has marginal reading; °वर्तिना for °दर्शिना; while B. originally reads °दर्शिना and corrected °वर्तिना. ३. D. reads निपुणो for निपुणं. ४. D. reads पौराणं न्यायवित्तमम् for पुराणं न्यायदर्शनम्. ५. A. in margin reads रीत्यात्मकम्; while B. originally reads रीत्या° and corrected नीत्या°. ६. D. reads भविष्यपुराणे, for भविष्यत्पुराणे.

'षाड्गुण्यस्य प्रयोगश्चा[1]ऽप्रयोगः कार्यगौरवात् ।
सामादीनामुपायानां योगो व्यास-समासतः ॥
अध्यक्षाणं च निक्षेपः कण्टकानां निरूपणम् ।
दृष्टार्थे सं[2]स्मृतिः प्रोक्ता ऋषिभिर्गरुडाग्रज' ॥

इति । बाढम् अस्मिन्नप्यर्थशास्त्रे धर्मशास्त्राविरुद्धो योंऽशः स उपादेयः । इतरस्तु परित्याज्यः । तदाह नारदः—

'यत्र विप्रतिपत्तिःस्याद्धर्मशास्त्रार्थशास्त्रयोः ।
अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत्'* ॥
( ना. स्मृ. १. ३९ )

* धर्मशास्त्रार्थशास्त्रयोर्विरोधे धर्मशास्त्रं बलवत् । धर्मशास्त्रेऽपि एकस्याः स्मृतेः स्मृत्यन्तरेण विरोधे पुरस्तादुक्तयाज्ञवल्क्यवचनेन व्यवहार-न्यायस्य बलवत्वम् । धर्मशास्त्रोक्तमपि न सर्वं ग्राह्यम् । यथा—

'अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्' ।

इत्यादिना विहितो ऽपि नियोगो—

'नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः ।
अन्यस्मिन् हिं नियुञ्जाना धर्मं हन्युः सनातनम् ॥ ( ६४ )
नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ।
न विवाहविधावुक्तं विधवावेदनं क्वचित् ॥ ( ६५ )
अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः' । ( ६६ )
( म. स्मृ. ९. ६४—६६ )

इत्यादिवचनैर्निषिद्धत्वात् लोकव्यवहारे शिष्टैरनादृतत्वान्नाचरणीयम् । तथा—

१. D. reads °स्य for °श्चा°. २. C. reads सु for सं°; while D. reads यं° for सं.

इति। धर्मशास्त्रयोर्द्वयोर्विरोधे न्यायेन निर्णेतव्यम्। तदाह याज्ञवल्क्यः—

'स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः'

( या. स्मृ. २. २१ )

इति। व्यवहारतो वृद्धव्यवहारात् प्रसिद्धो न्यायो बलवान्। न्यायानाश्रयणे बाधमाह बृहस्पतिः—

'केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः।
युक्तिहीने विचारे तु धर्महानिः प्रजायते॥
चोरोऽचौरः साध्वसाधुर्जायते व्यवहारतः।
युक्तिं विना विचारेण माण्डव्यश्चोरतां गतः॥
असत्याः सत्यसदृशाः सत्याश्चासत्यसन्निभाः।
दृश्यन्ते भ्रान्तिजनकास्तस्माद्युक्त्या विचारयेत्'॥

इति। न्यायस्य निर्णायकत्वमुपपादयति मनुः—

'यथानयत्यसृक्पातैर्मृगस्य मृगयुः पदम्।
नयेत्तथानुमानेन धर्मस्य नृपतिः पदम्॥ ( ४४ )

---

'नष्टेमृते प्रव्रजिते क्लीबे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते'॥

इत्यादिवचनैः पुनरुद्वाहे विहितेऽपि अन्यत्र निषेधदर्शनात् शिष्टैरपरिगृहीतत्वाच्च स्त्रीपुनरुद्वाहो वर्जनीय एव। एवं मातुलकन्यापरिणयः श्रुति-स्मृत्यादिभिर्निषिद्धोऽपि शिष्टैरादृतत्वात् दाक्षिणात्यैः कर्तव्य एव भवति।

---

१. D. reads धर्मशास्त्रार्थशास्त्रयोः for धर्मशास्त्रयोर्द्वयो°:. २. C. reads भासन्ते for दृश्यन्ते. ३. D. reads °पाकैः for °पातैः.

बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्।
स्वरवर्णेङ्गिताकारैश्चक्षुषश्चेष्टितेन च' ॥ (२६)
( म. स्मृ. ८. २५–४४. )

इति। याज्ञवल्क्योऽपि—

'असाक्षिके हते[2] चिन्हैर्[3]युक्तिभिश्चागमेन च।
द्रष्टव्यो व्यवहारस्तु कूटचिन्हकृताद्भयात्' ॥
( या. स्मृ. २. ३९ )

इति। 'यत्तु पूर्वमुक्तं 'भूतछलानुसारित्वात् द्विगतिः' इति तत्र छलं हेयं[4] भूतमुपादेयम्। तदाह याज्ञवल्क्यः—

'छलं[5] निरस्य भूतेन व्यवहारान्नयेन्नृपः।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः'॥
( या. स्मृ. २. १९. )

इति। निर्णये[6] प्रमाणं साक्ष्यादिकम्। तदाह गौतमः—

'विप्रतिपत्तौ साक्षिनिमित्ता तस्य व्यवस्था'।
( गौ. स्मृ. २७. १३ )

इति। मनुरपि—

'प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः।
अष्टादशसु मार्गेषु निबद्धानि[7] पृथक्पृथक्' ॥
( म. स्मृ. ८. ३. )

---

१. D. reads वाक्यैः for बाह्यैः. २. B. originally reads घने, but corrected reads हते. ३. C. and D. read चिन्हे for चिन्हैः. ४. B. originally reads °तु° for °यं°; while C. and D. do not read हेयं भूतमुपादेयं. ५. B. originally reads बलं, but corrected reads छलं. ६. C. reads निर्णायके for निर्णये. ७. D. reads निबन्धानि for निबद्धानि.

इति । देशाचारैः शास्त्रोक्तदिव्यादिभिश्चा[1]ष्टादशपदसंबंधीनि कार्याणि निर्णयेत् । तत्र देशाचारोऽनुकल्पः । तदाह कात्यायनः—

‘तस्माच्छास्त्रानुसारेण राजा कार्याणि साधयेत् ।
वाक्याभावे तु सर्वेषां देशदृष्टमतं[2] नयेत्’ ॥

इति । देशदृष्टस्य लक्षणमाह स एव—

‘यस्य देशस्य यो धर्मः प्रवृत्तः[3] सार्वकालिकः ।
श्रुति-स्मृत्यविरोधेन देशदृष्टः स उच्यते’ ॥

इति । तत्तद्देशीयानां मिथो विवादे त[4]द्देशदृष्टेन निर्णयः । तदाह स एव—

‘देश-पत्तन-गोष्ठेषु पुर-ग्रामेषु[5] वादिनाम् ।
तेषां स्वसमयै[6]र्धर्मः[7] शास्त्रतोऽन्येषु तैः सह’ ॥

इति । यत्र तद्देशीया[8]नामितरैः सह विवादः । तत्र शास्त्रतो[9] निर्णयो न तु देशदृष्टतः । लेख्यादिप्रमाणाभावे राजा स्वेच्छया निर्णयेत् । तदाह स एव—

‘लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः ।
न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः’ ॥

इति । वणिगादिसमयेषु समयिभिरेव निर्णेतव्यम् । तदाह व्यासः ।

१. C. reads °सा° for °श्वा°. २. C. reads °दृष्टमनन्तयेत्; while D. reads °दृष्टेन तन्नयेत् for °दृष्टमतं नयेत्. ३. C. reads प्रदत्तः for प्रवृत्तः. ४. D. omits तत्. ५. B. originally substiutes °मार्गेषु for °ग्रामेषु. ६. A. and B. read स्वसमये. ७. D. reads धर्म शास्त्रतो for धर्मः शास्त्रतो. ८. D. adds तत् to तद्देशीयानाम्. ९. A. and B. read शास्त्रे यो for शास्त्रतो.

'वणिक्शिल्पि-प्रभृतिषु कृषि-रङ्गोपजीविषु।
अशक्यो निर्णयो ह्यन्यैस्तज्ज्ञैरेव[१] तु कारयेत्' ॥
गुरुः स्वामी कुटुम्बी[२] च पिता ज्येष्ठः पितामहः।
विवादं[३] नैव पश्येयुः स्वाधीने विषये नृणाम्' ॥

इति। निर्णयकारिणामुत्तमाधमभावमाह नारदः—

'कुलानि श्रेणयश्चैव गणाश्चाधिकृतो नृपः।
प्रतिष्ठा व्यवहाराणां सर्वेषा[४]मुत्तरोत्तरम्' ॥

इति। पितामहोऽपि— ( ना. स्मृ. १. ७.)

'ग्रामे दृष्टः पुरे[५] यायात् पुरे दृष्टस्तु राजनि।
राज्ञादृष्टः कुदृष्टो[६] वा नास्ति तस्य पुनर्भयम्[७]' ॥

इति। राज्ञो नियममाह पितामहः—

'न रागेण न लोभेन न क्रोधेन[८] ग्रसेन्नृपः[९]।
परैरप्रार्थितानर्थान्न चापि स्वमनीषया' ॥

इति। अस्यापवादमाह स एव—

'छलानि वाऽपराधांश्च पदानि नृपते[१०]स्तथा।
स्वयमेव निगृह्णीयान्नृपस्त्वावेदकैर्विना' ॥

इति। तत्र छलान्याह स एव—

१. C. reads अन्यैरेव न and D. तत्तैरेव तु for तज्ज्ञैरेव तु. २. D. reads कुटुम्बं for कुटुम्बी. ३. D. reads विवादानथ for विवादं नैव. ४. A. B. C. read गुर्व्येषा° for सर्वेषा°. ५. A. has marginal reading पुरं; while B. in correction पुरीं. ६. B. originally reads सुदृष्टो; while corrected कुदृष्टो. ७. B. corrected reads °र्भवेत्, C. reads °र्भवः, D. also reads as C. ८. D. reads कोपेन for क्रोधेन. ९. B. corrected reads भसे°, D. reads नये°. १०. D. reads नृपतिः for नृपतेः.

पथिभङ्गी कराक्षेपी प्राकारोपरि लङ्घकः ।
निपा[1]नस्य विनाशी च तथा चायतनस्य च[2] ॥
परिखापूरकश्चैव राजच्छिद्रप्रकाशकः ।
अन्तःपुरं वासगृहं भाण्डागारं महानसम् ॥
प्रविशत्यनियुक्तो यो भोजनं च निरीक्षते[3] ।
विण्मूत्र-श्लेष्मघा[4]तानां क्षेप्[5]तुकामो नृपा[6]ग्रतः ॥
पर्यङ्कासनबन्धश्चा[7]ऽप्यग्रस्थाननिरोधकः ।
राज्ञोतिरिक्तवेषं[8]श्च श्ववृत्तःप्रविशेत्तु यः ॥
यश्चापद्वारेण प्रविशेदवे[9]लायां तथैव च ।
शय्यासने पादुके च शयनास[10]नरोहणे ॥
राजन्यासन्नशयने यस्तिष्ठति समीपतः ।
राज्ञो विद्विष्टसेवी चा[11]ऽण्यदत्तविहितासनः ॥
वस्त्राभरणयोश्चैव सुवर्णपरिधायकः ।
स्वयंग्राहेण ताम्बूलं गृहीत्वा भक्षयेत्तु यः ॥
अनियुक्तप्रभाषी च नृपाक्रोशक एव च ।
एकवासास्तथाभ्यक्तो मुक्तकेशोऽवे[12]गुंठितः ॥

१. A. has marginal reading नृपालस्य; while B. originally reads नृपालस्य and corrected निपानस्य° २. C. substitutes वा for च. ३. D. reads निरीक्ष्यते. for निरीक्षते. ४. B. originally reads °वातानां, but corrected °घातानां. ५. B. originally reads हेतुकामः, but corrected क्षेप्तुकामः. ६. C.D. read नृपात्मजः for नृपाग्रतः, ७. D. reads °वन्धी चा° for °वन्धश्चा. ८. A. has marginal readings °वर्षश्च, द्विवर्षश्च, वर्षाद्यः; while B. reads the same forms in correction and D. reads °वेषैश्च विधृतश्च for °वेषश्च श्ववृत्तः प्र°. ९. C. reads °दचैत्यायां for °दवेलायां. १०. A. has marginal reading °श° for °स° in the word °नासन°; while B. in correction reads °श°. ११. C. D. read वा° for चा°. १२. A. has marginal reading °कुं°, °लुं° for °गुं° in the word ऽगुंठितः, while B. reads in correction °मुण्डितः, C. reads °लुंठितः and D. ऽगृहीतः for ऽगुंठितः.

विचित्रिताङ्गः स्रग्वी च परिधानविधूनकः
शिरःप्रच्छादनश्चैव छिद्रान्वेषणतत्परः ॥
आसङ्गी मुक्तकेशश्च पाक्षि-पर्णा-ऽक्षिदर्शकः ।
दन्तोल्लेखनकश्चैव कर्ण-नासाविशोधकः ।
छलान्येतानि पञ्चाशद्भवंति नृपसन्निधौ' ॥

इति । सापराधानाह नारदः—

'आज्ञालङ्घनकर्तारः स्त्रीवधो वर्णसंकरः' ।
परस्त्रीगमनं चौर्यं गर्भश्चैव पतिंविना ॥
वाक्पारुष्यमवाच्यं यद्दण्डपारुष्यमेव च ।
गर्भस्य पातनं चैवेत्यपराधा दशैव हि' ॥

इति । विवादमन्तरेणापि दण्डनहेतुत्वादेतेषामपराधत्वम् । अतएव संवर्त्तः—

'आसेधं प्रतिभङ्गं च यश्च गर्भः पतिं विना ।
स्वयमन्वेषयेद्राजा विना चैव विवादिना ॥
कन्यापहारकं पापं विप्रं च पतितं तथा ।
परार्थवादसंयुक्तं स्वयं राजा विचारयेत् ॥
षड्भागकालं शुल्कार्थे मार्गभेदकमेव च ।
स्वराष्ट्रे चौर्यभीतिं च परदाराभिमर्शनम् ॥

१. A. has marginal reading °काल° for °धान°; while B. reads in correction °बाल° and C. reads °वाल° for °धान°. २. A. substitutes °म° for °न° in the margin; while B. has corrected reading and C. reads originally °म° for °न.° ३. These three lines are omitted in C. and D. ४. C. and D. read अपराधा° for सापराधा°. ५. C. and D. read आसेवं for आसेधं. ६. A. has marginal reading पथि°; while B. in correction and C. D. as usual read पवि° for प्रति°. ७. C. reads पतन्ति वा for पतिं विना.

गो-ब्राह्मणनिहंतारं सस्यानां चैव घातकम् ।
दशैतानपराधांश्च स्वयं राजा विचारयेत्' ॥

इति । पादान्याह पितामहः—

'[1]उत्कृती सस्यघाती च अग्निदश्च[2] तथैव च ।
[3]विवेसकः कुमार्याश्च निधानस्योपगोपकः ॥
सेतु-कण्टकभेत्तारः क्षेत्रसंसारकस्तथा ।
आरामछन्दसश्चैव गरदश्च तथैव च ॥
पटहा घोषणाछादी द्रव्यमस्वामिकं च यत् ।
राजावलीढद्रव्यं च यच्चैवांगविनाशनम् ॥
द्वाविं[4]शतिपदान्याहुर्नृपज्ञेयानि पण्डिताः' ।

इति । यत्र छलादीनि राजा स्वयं द्रष्टुमशक्तः तत्रस्तोभकात् सूचकाच्च बोद्धव्यम्[5] । तयोः स्वरूपमाह कात्यायनः—

'शास्त्रेण निन्दितं त्वर्थं मुख्यश्चार्थः[6] प्रचोदितः ॥
आवेदयति यः पूर्वं स्तोभकः स उदाहृतः ॥
नृपेणैव नियुक्तो यः परदोषमवेक्षितुम्[7] ।
नृपस्य समयं[8] ज्ञात्वा सूचकः स उदाहृतः' ॥

इति । शास्त्रेण निन्दितं छलादिकमर्थम् । मुख्यो धनलाभश्च प्रधानः । राज्ञा शास्त्रादिपर्यालोचनपुरःसरमेव कार्यं कर्तव्यम् । तदाह हारीतः—

---

१. B. originally reads उत्कृष्टसस्य° for उत्कृती सस्य°; while A. has marginal reading निकृत्तवित्त°. २. A. in margin and B. originally read °दग्धः for °दश्च. ३. In C. and D. these three lines are not found and is this word विवेसकः; A. and B. one in margin and one in correction but subsititute °श° for °स°. ४. C. reads °त्रिंशति° for °विंशति° ५. C. reads द्रष्टव्यम् for बोद्धव्यम्. ६. A. in margin reads मुधास्वा°, B. originally and D. मुख्यो राज्ञा for मुख्यश्चार्थः. ७. B. originally reads °मपेक्षितुम् for °मवेक्षितुम्. ८. D. reads सूचयेत् for समयं.

'शास्त्राणि वर्णधर्मांस्तु प्रकृतीनां च भूपतिः ।
व्यवहारस्वरूपं च ज्ञात्वा कार्यं समाचरेत्' ॥

इति । प्रकृतयः पितामहेन दर्शिताः——

'रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्तकश्च विज्ञेयो म्लेछो भिल्लस्तथैव च ॥
[1]मैथिकस्त्रिरवव्यालः हस्तलक्ष-दुघट्टिकाः ।
कौसेदिका भारुपदा मातंगाः पदगोपकाः ॥
एताः प्रकृतयः प्रोक्ता अष्टादशमनीषिभिः ।
वर्णानामाश्रमाणां च सर्वदा तु बहिः स्थिताः' ॥

इति । मनुश्च जात्यादि[2] समीक्षणीयमित्याह—

'जाति[3]-जानपदान् धर्मान् श्रेणिधर्मांश्च शाश्वतान् ।
समीक्ष्य कुलधर्मांश्च सवर्णे[4] प्रतिपादयेत्' ॥

इति । उन्मार्गवर्त्तिनो[5] बलात्[6]स्वमार्गे स्थापयेदित्याह याज्ञवल्क्यः—

'कुलानि प्रकृतीश्चैव श्रेणिर्जानपदानपि ।
स्वधर्माच्चलितान्[7] राजा विनीय स्थापयेत्पथि' ॥

इति । कार्यदर्शनप्रकारमाह नारदः—

---

१. These two lines are omitted in B. and C. २. B. in correction reads ज्ञात्यादि and C. originally जात्यादि. ३. C. reads ज्ञाति° for जाति°. ४. A. has marginal reading स्वे for स°; while B. in correction, and C. and D. originally read स्ववर्णे for सवर्णे. ५. B. reads उन्मार्ग° for उन्मार्ग°; C. and D. also the same. ६. C. reads बालान् for बलात्; while D. reads कुलादिन्. ७. A. and B. originally read °चरितान् for °चालितान्.

'धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः ।
समाहितमतिः पश्येत् व्यवहारमनुक्रमात् ॥
आगमः प्रथमः कार्यो व्यवहारपदं ततः ।
विचारो निर्णयश्चेति दर्शनं स्याच्चतुर्विधम्' ॥

( ना. स्मृ. १. ३५–३६ )

इति । आगमोऽर्थिवचनश्रवणं तदादौ कर्तव्यम् । ततस्तद्वचनमृणादानाद्यन्यतमस्मिन्पदेऽन्तर्भाव्यम् । ततः प्रतिज्ञोत्तरप्रमाणानां विचारः । ततः प्रमाणतो जयावधारणम् ।

इति व्यवहारदर्शनविधिः ।

अथासेधादिविधिः ।

तत्र नारदः—

'वक्तव्योर्थे[1] न तिष्ठन्तमुत्क्रामन्तं च तद्वचः ।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम्' ॥

( ना. स्मृ. १.४७ )

इति । प्रथमं तावदर्थी प्रत्यर्थिनोऽग्रे त्वयैतावन्मह्यं देयमित्यादिकं कार्यं ब्रूयात् । तत्र यदि तदुक्तमनभ्युपगम्योत्क्रान्तुमिच्छेत् तदा स्वकार्यपर्यंतं राजाज्ञया तं निरुंध्यात् । आसेधस्य भेदानाह स एव—

'स्थानासेधः कालकृतः प्रवासात् कर्मणस्तथा ।
चतुर्विधः स्यादासेधस्तमासिद्धो[2] न लङ्घयेत्' ॥

( ना. स्मृ. १.४८ )

---

१. C. and D. read °व्ये° in the word वक्तव्यार्थे. २. D. reads °मासेधं° for °मासिद्धो.

इति। अस्मात्स्थानात्त्वया न चलितव्यमिति स्थानासेधः मदीयद्रव्यप्रदाने दिनमेतन्नोल्लङ्घनीयमिति कालासेधः। अदत्वा ग्रामान्तरं नगन्तव्यमिति प्रवासासेधः। अदत्वा न सन्ध्यावन्दनं कार्यमिति कर्मासेधः। सन्ध्यावन्दनादिवदिन्द्रियनिरोधो नासेधार्हः। तदाह कात्यायनः—

'यस्त्विन्द्रियनिरोधेन [1]व्यवहारोत्सवादिभिः।
आसेधयेदनासेध्यैः[2] स दण्ड्यो न त्वतिक्रमात्'॥

इति। इन्द्रियनिरोधवद्विषमदेशोऽपि नासेधार्ह इत्याह नारदः—

'नदीसन्तार-कान्तारदुर्देशोपप्लवादिषु।
आसिद्धस्तं परासेधमुत्क्रामन् नापराध्नुयात्'॥
(ना. स्मृ. १.४९)

इति। आसेध्यासेधकयोः [3]स्वकालोल्लङ्घने दण्डमाह स एव—

'आसेधकाल आसिद्ध आसेधं योऽतिवर्तते।
स विनेयोऽन्यथा कुर्वन्नासेद्धा दण्डभाग्भवेत्'॥
(ना. स्मृ १.५१)

इति। अन्यथा कुर्वन्नयोग्ये निशीथादिकाले तमासेधयन्। अनासेध्यानाह कात्यायनः—

'वृक्ष-पर्वतमारूढा हस्त्यश्व-रथ-नौ[4]गताः।
विषमस्थाश्च ते सर्वे नासेध्याः कार्यसा[5]धकैः॥

१. C. reads व्यासेधात् कुशलादिभिः; while D. reads व्याहरेत् कुशलादिभिः for व्यवहारोत्सवादिभिः. २. B. originally reads °धैः while correction °ध्यैः, C. and D. read for the same. ३. D. reads तत्° for स्व°. ४. A. in marginal reading and in correction reads °मताः for °गताः; while C. reads the same. ५. B. originally reads °सिद्धिदैः, but corrected °साधकैः. A. also has marginal reading °सिद्ध° for °साध°.

व्या[1]ध्यार्ता व्यसनस्थाश्च यजमानास्तथैव च ।
अनुत्तीर्णाश्च नासेध्या मत्तोन्मत्तजडास्तथा ॥
न कर्षको बीजकाले सेनाकाले च[2] सैनिकाः ।
प्रतिज्ञाय प्रयाताश्च कृतकालश्च नान्तरा ॥
उद्युक्तः कर्षकः सस्ये वापस्यागमने स[3]दा ।
आरम्भा[4]त् सङ्ग्रहं यावत्तत्कालं न विवादयेत्' ॥

इति । बृहस्पतिरपि—

'सत्रो[5]द्वाहोद्यतो रोगी शोकार्तोन्म[6]त्त-बालकाः ।
मत्तो वृद्धो[7]ऽनुयुक्तश्च नृपकार्योद्यतो व्रती ॥
आसन्ने सैनिकः सङ्ग्ये कर्षको वा[8]पसङ्ग्रहे ।
विषमस्थाश्च नासेध्याः स्त्रीसनाथास्तथैव च' ॥

इति । नारदोऽपि—

'निवेष्टुकामो रोगार्त्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथा[9]न्येन राजकार्योद्यतस्तथा ॥
गवां प्रचारे गोपालः सस्यारम्भे कृषीवलाः ।
शिल्पिनश्चापि तत्काल आयुधीयाश्च[10] विग्रहे ॥

---

१. A. in marginal reading and B. in correction read से° for व्या° in the word व्याध्यार्त्ताः. २. C. and D. substitute ऽथ for च. ३. A. in margin and B. in correction read य° for स° in the word सदा. C. and D. also read the same. ४. D. reads आरम्भसंग्रहं for आरम्भात् संग्रहं. ५. A. in margin, B. in correction substitute °न्नो° for °त्रो°; while C. reads originally. ६. C. reads मत्त° for °न्मत्त° and D. °मृत° for the same. ७. A. in margin, B. in correction, C. and D. as usual subsitute ऽनि° for ऽनु°. ८. D. reads कर्षकश्चाय° for कर्षको वाप°. ९. C. reads सेना for ऽन्येन. १०. A. in margin and B. in origin read °स्त्र° for °श्च; while C. and D. as usual read °श्च, but B. corrected reads °स्त्र°.

अप्राप्तव्यवहारश्च दूतो दानोन्मुखो[1] व्रती ।
विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः' ॥

(ना. स्मृ. १. ६२--६४)

इति । कदा तर्हि द्रव्यं दापनीयमित्याकांक्षायां बृहस्पतिराह—

'वणिग्विक्रीतपण्यस्तु सस्ये जाते कृषीवलः ।
सत्रोद्यताश्चैव तथा दापनीयाः कृत क्रियाः' ॥

इति । यद्यासिद्धो नागच्छेत्तदा राज्ञा समानेयः । तदाह बृहस्पतिः—

'यस्या[2]भियोगं कुरुते सत्येनाशङ्कयाऽथ वा ।
तमेवा[3]नाययेद्राजा मुद्रया पुरुषेण वा' ॥

इति । नारदोऽपि—

'देशं कालञ्च विज्ञाय कार्याणाञ्च बलाबलम् ।
अकल्पादीनपि शनैर्या[4]नैराह्वानयेन्नृपः' ॥

इति । आ[5]ह्वानानर्हानाह हारीतः

'अकल्प-बाल-स्थाविर-विषमस्थ-क्रियाकुलान् ।
कार्यातिपाति-व्यसनि-नृपकार्योत्सवाकुलान् ॥
मत्तोन्मत्तप्रम[6]त्तांश्च स्वजातिप्रभुकां स्त्रियम् ।
[7]धर्मोत्सुकान् जडानार्तभृत्यान् नाह्वानयेन्नृपः' ॥

इति । कात्यायनोऽपि—

१. A. in margin, B. in origin read °दको for °न्मुखो; while B. in correction reads °त्सुको, C. and D. as usual read °न्मुखो. २. D. reads यत्रा° for यस्या°. ३. Only C. reads तमेनं दीपयेत् for तमेवानाययेत्. ४. D. reads तथा शनः for शनैर्यानैः. ५. A. in margin and B. originally read आह्वानानर्थान् instead of आह्वानानर्हान्; while C. reads आहूतानर्हानाह. ६. D. reads this line thus जडान्मत्तप्रमत्तांश्च स्वजातिविमुखां स्त्रियम् and C. रोगोन्मत्तप्रमत्तांश्च जातित्यक्तां स्त्रियं तथा and E. मत्तोन्मत्तप्रमत्तार्तभृत्यान् नाह्वानयेन्नृपः. ७. This line is found only in P.

'धर्मोत्सुकानभ्युदये रोगिणो थ जडोनपि ।
अस्वस्थमत्तोन्मत्तार्त-स्त्रियो नाव्हाययेन्नृपः ॥
न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ।
स्वजातिप्रभुक्तां चैव तथा नाव्हानयेन्नृपः' ॥

इति । स्वजातिप्रभुक्ता तु मरीचिना निरुक्ता—

'सर्ववर्णोत्तमा कन्या सा जातिप्रभुक्ता स्मृता ।
तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः ॥
निष्कुला याश्च पतितास्तासामाव्हानमिष्यते' ।

इति । दुष्टस्य दण्डमाह बृहस्पतिः—

'आहूतो यस्तु नागच्छेद्दर्पाद्बन्धुबलान्वितः ।
अभियोगानुरूपेण तस्य दण्डं प्रकल्पयेत्' ॥

इति । कात्यायनोऽपि—

'आहूतस्त्ववमन्येत यः शक्तो राजशासनम् ।
तस्य कुर्यान्नृपो दण्डं विधिदृष्टेन कर्मणा ॥
हीने कर्मणि पञ्चाशन्मध्यमे तु शतावरः ।
गुरुकार्येषु दण्डः स्यान्नित्यं पञ्चशतावरः' ॥

इति । आपन्नस्याऽनागमनेऽपि दण्डो नेत्याह व्यासः—

'परानीकहते देशे दुर्भिक्षे व्याधिपीडिते ।
कुर्वीत पुनराव्हानं दण्डं न परिकल्पयेत्' ॥

इति ।

इत्यासेधविधिः ।

---

१. A. in margin and B. in correction substitute °ना° for °डा° in जडानपि. २. This is mentioned only in D.; ३. A. B. C. read ता जातिप्रभुक्ता स्मृताः; while in the preceding half of this line, D. reads nominative case instead of objective case. ४. C. and D. read दृप्तस्य for दुष्टस्य

अथ दर्शनोपक्रमः ।

तत्र मनुः—

‘ धर्मासनमधिष्ठाय संवीताङ्गः समाहितः ।
प्रणम्य लोकपालेभ्यः कार्यदर्शनमारभेत्’ ॥

(म. स्मृ. ८. २३.)

इति । आरब्धुः[1] कर्तव्यमाह कात्यायनः—

‘ कालं कार्यार्थिनं पृच्छेत् प्रणतं पुरतः स्थितम् ।
किं कार्यं का च ते पीडा माभैषीर्ब्रूहि मानव’ ॥

इति ।

केन कस्मिन्कथं[2] कस्मात्पृच्छेदेनं[3] सभागतत् ।

इति । बृहस्पतिरपि—

‘ आगतानां विवदतामसकृद्वादिनां नृपः ।
वादान्पश्येन्नात्मकृतान्न चाध्यक्षनिवेदितान् ॥
पीडितः स्वयमायातः शास्त्रेणार्थी यदा भवेत्
प्राड्विवाकस्तु[4] तं पृच्छेत्पुरुषो वा शनैः शनैः’ ॥

इति । पृष्टश्च कार्यं यथावदावेदयेदित्याह याज्ञवल्क्यः—

‘ स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्’ ॥

(या. स्मृ. २. ५.)

---

१. D. reads आरभ्य for आरब्धुः. २. A. in margin and B. in correction read कदा for कथं. ३. D. reads °देवं for °देनं. in B. C. D. mention this line, But not in A.; ४. A. in margin and B. in correction substitute °स्थि° for °स्तु.

इति । यदि केनचिन्निमित्तेन स नावेदयेत् । तदा स व्यवहारो न[1] बलात्कारयितव्य इत्यभिप्रेत्य चेदित्युक्तम् । आवेदनकाले सख्यादयो[2] वर्जनीया इत्याह उशनाः—

'ससखोऽनुत्तरीयो[3]* वा मुक्तकच्छः[4] सहासनः ।
वामहस्तेन वा लग्वी वदेद्दण्डमवाप्नुयात्' ॥

इति । अर्थिनः[5] प्रतिनिधिमभ्युपगच्छति †कात्यायनः—

'अर्थिना सन्नियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा ।
यो यस्यार्थे विवदते तयोर्जय-पराजयौ' ॥

(ना. स्मृ. २. २२.)

इति । अन्तरेणापि नियोगं पित्रादयो विवादं कुर्युरित्याह पितामहः—

'पिता माता[6] सुहृद्वापि बन्धुः सम्बन्धिनोऽपि वा ।
यदि कुर्युरुपस्थानं वादं तत्र प्रवर्तयेत् ॥

*सखा मित्रं तेन सहितः ससखः । अनुत्तरीयः प्रावरणरहितः । सहासनः प्राड्विवाक-सभ्यादीनामासने तैः सह स्थितः । यद्वा हासो हास्यं तेन सहितः । वामहस्तमग्रे कृत्वा यः वदति इत्यनेन सभ्यादीनामवज्ञाव्यञ्जनं गम्यते । एते सर्वेऽपि दण्ड्या एव ।

†सर्वेष्वप्यादर्श पुस्तकेषु अधस्तनं अर्थिनेत्यादि वाक्यं कात्यायनीयत्वेनावतारितम् । उपलभ्यते चैतन्नारदस्मृतौ । कात्यायनव्यवहारस्त्वदृष्टाश्रुतपूर्वः । अतो न निश्चीयते इदं कात्यायनीयं वानवेति । विज्ञानेश्वरेण तु ( व्य. ६ श्लोकव्याख्यायां ) अन्यतरनामनिर्देशमन्तरा ' इति सामान्यतयैवोद्धृतम् ।

१. D. does not read न. २. A. in margin and B. originally read शख्या° for सख्या°. ३. A. and B. read स्वशास्त्रो for ससखो. ४. A. in margin and B. in correction place °शस्त्रः for °कच्छः. ५. A. in margin and B. originally substitute द्वय° for अ.° ६. A. in margin and B. originally read भ्राता for माता.

यः कश्चित् कारयेत् किञ्चिन्नियोगाद्येन केनचित् ।
तत्तेनैव कृतं ज्ञेयं अनिवर्त्त्यं हि तत्स्मृतम्' ॥

इति । उक्तेभ्यो व्यतिरिक्तस्य विवादं निषेधति नारदः ।

'यो न भ्राता न च पिता न पुत्रो न नियोगकृत् ।
परार्थवादी* दण्ड्यः स्यात् व्यवहारेषु विब्रुवन्[1]' ॥
(ना. स्मृ. २. २३.)

इति । कात्यायनोऽपि—

'दासाः कर्मकराः शिष्या नियुक्ता बान्धवास्तथा ।
वादिनो न च दण्ड्याः स्युर्यस्ततोऽन्यः स दण्डभाक्†' ॥

इति । आवेदितार्थो लेखनीय इत्याह नारदः—

'रागादिना[2] यदेकेन कोपितः[3] करणे वदेत् ।
तदोमिति लिखेत्सर्वं वादिनः फलकादिषु' ॥
(ना. स्मृ. २. १८.)

इति । करणे धर्माधिकरणे । लिखितस्यार्थस्य सम्भावितत्वे सति प्रभुस्तत्र प्रवर्त्तते इत्याह कात्यायनः—

---

* केचन पुरुषाः काम-क्रोध-लोभाद्यभिभूताः परकीयार्थे स्वयमसंबध्यमाना अपि अनियुक्ता अपि स्वस्य कमपि सम्बन्धं प्रदर्श्य वैरसाधनार्थं परार्थं विवदन्ते तन्निवारणाय अयं नियमः ।

† तेभ्यो दासादिभ्यो ऽन्यः। यस्यार्थे ते विवदन्ति स एव दण्ड्यो न तु दासादयः। तेषां परार्थवादित्वाभावेन स्वामि-गुर्वादिभिः सह तेषामेवार्थत्वे ऽपि प्रत्यक्षतया अर्थक्रियायाः कर्तृत्वाभावादिति तात्पर्यम् ।

---

१. A. in margin and B. originally read स for वि°. २. D. reads रागादीनां for रागादिना. ३. A. and B. read कोपितैः for कोपितः, also A. and B. substitute तत् after °पि in कोऽपि.

'एवं पृष्टः स यद्ब्रूयात्तत्सभ्यैर्ब्राह्मणैः सह।
विमृश्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम्॥
मुद्रां वा निक्षिपेत्तस्मिन्पुरुषं वा समादिशेत्'॥

इति। आहूतं प्रत्यर्थिनं सुरक्षितस्थाने स्थापयेदित्याह पितामहः॥

'सभायाः पुरतःस्थाप्योऽभियोगी वादिना तथा।
शंसितेऽन्यत्र वा स्थाने प्रमाणं सोऽन्यथा तु न'॥

इति। स्थापितस्य छलवादित्वं भूतवादित्वं वा लिङ्गैर्निश्चेयम्। अतएव मनुः—

'बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्।
स्वर-वर्णेङ्गिता-ऽऽकारैश्चक्षुषा चेष्टितेन च'॥
'आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च।
नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं *मनः'॥

(म. स्मृ. ८. २५-२६.)

इति। लिङ्गान्तराण्याह याज्ञवल्क्यः—

---

* अनुमानेनापि सत्यानृतवादिता व्यवहारतः साक्षिणां निश्चेतव्या इति श्लोकार्थः। अतश्च स्वरादिग्रहणं प्रदर्शनार्थम्। तेन निश्चितलिङ्गैरेव परिछिन्द्यादित्युक्तं भवति। न पुनः स्वरादिभिरेव। सव्यभिचारित्वात्तेषाम्। अनुचितप्रवेशा हि महाप्रकृतिदर्शनेन सत्यकारिणोऽपि स्वभावतो विक्रियन्ते। प्रगल्भास्तु संवृताकारा भवन्ति। स्वरश्च वर्णश्च इङ्गितं च स्वरवर्णेङ्गितानि। तेषामाकाराः। आकारो विकारः। स्वाभाविकानां हि स्वरादीनामन्यथात्वम्। तैर्विवादि-साक्ष्यादीनां मनुष्याणां

---

१. C. reads समुद्ब्रूयात् for स यद्ब्रूयात्; while D. reads ब्रुयात् for ब्रूयात्.
२. A. in margin and B. originally read बल° for छल°, but corrected B. reads छल°. C. omits छल,° and D. reads छलवादित्वादि बाह्यलिंगैर्निश्चेयम् instead of छलवादित्वं भूतवादित्वं वा लिंगैर्निश्चेयम्.

'देशाद्देशान्तरं याति सृक्किणी परिलेढि च।
ललाटं स्विद्यते तस्य मुखं वैवर्ण्यमेति च' ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः।
अभियोगेऽथ साक्ष्ये वा दुष्टः स परिकीर्तितः* ॥
(या. स्मृ. २. १३—१५.)

इति। छलवादपक्षे स एवाह।

---

अन्तर्गतं भावं विभावयेत् निश्चिनुयात्। तत्र स्वरस्य विकारो वाचि गद्गद-रुदितादि। वर्णस्य गात्र-रूपविपर्ययादि। इङ्गितं वेपथु-रोमाञ्चादि। चक्षुषा सम्भ्रम-क्रोधदृष्टिपातेन। चेष्टितेन हस्तनिक्षेप-भ्रूविक्षेपादि। स्वसंवेद्यं चैतत्। यद् गृह्यमाणमप्यभिप्रायं स्वरादयः प्रकाशयन्ति निपुणतो लक्ष्यमाणाः। यतः प्रसिद्धमेतेषां गूढाभिप्रायप्रकटनसामर्थ्यम्। तथा हि लोके दृष्टं शक्तितः।

अनेन श्लोकेन स्वरादीनां पूर्वोक्तार्थाधिगमेन दर्शयतीत्यपौनरुक्त्यम्। तत्र आक्रियन्ते विक्रियन्ते इत्याकारा इङ्गितादयः। इङ्गितं व्याख्यातम्। अत्र व्यक्तिभेदाद्बहुवचनम्। गतिः पूर्वश्लोकादत्राधिका। सा प्रस्खलन्ती स्वभावतो ऽन्यथाभूता। भाषितं पौर्वापर्यविरुद्धं वचनम्। वक्त्रविकारः आस्यविशेषादिः। शेषं पूर्वश्लोक एव व्याख्यातम्। एतैर्विकृतैरन्तर्गतं चित्तं लौकिकैरन्यत्रापि गृह्यते इति समासार्थः।

*भयादिनिमित्तं विनापि स्वभावादेव यः मनोवाक्कायकर्मभिर्विकृतिं याति स पुरुषः साक्ष्ये दुष्टः वर्जनीय इत्यर्थः। विकृतीरेव दर्शयति। एकस्माद्देशाद्देशान्तरं याति न क्वचिदवतिष्ठते। सृक्किणी ओष्ठपर्यन्तौ परिलेढि जिह्वाग्रेण स्पर्शयति घटयतीति एषाकर्मणो विकृतिः। यस्य

---

१. C. and D. read चास्य for तस्य. २. A. in margin and B. in correction read बल° for छल°.

'उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये' ॥
(या. स्मृ. २. १०.)

इति । तत्र वर्ज्यानाह कात्यायनः—

'न स्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा ।
निरुद्धो[1] दण्डितश्चैव संशयस्थश्च न क्वचित् ॥

इति । तथा च—

'नैव रिक्थी न रिक्थश्च न चैवात्यन्तवासिनः[2]
राजकार्यनियुक्ताश्च ये च प्रव्रजिता नराः ॥
नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम् ।
नाविज्ञातो ग्रहीतव्यः प्रतिभूस्तत्क्रियांप्रति' ॥

इति । यदि वादी विवादप्रतिभुवं दातुमसमर्थः तदापि तेनैवोक्तम्-

---

ललाटं श्रमादिकारणमन्तरापि स्वेदबिन्द्वङ्कितं भवति मुखं च विवर्णत्वं पाण्डुत्वं कृष्णत्वं स्वाभाविकवर्णविहीनत्वं वा गच्छतीत्येषा कायस्य विकृतिः । परिशुष्यत् सगद्गदं स्खलत् व्यत्यस्तं च वाक्यं यस्य । विरुद्धं पूर्वापरविरोधि बहुभाषत इति एषा वाचो विकृतिः । परोक्तां वाचं प्रतिवचनदानेन न पूजयाति, प्रतिवीक्षणेन चक्षुर्वा न पूजयाति इति मनोविकृतेर्लिङ्गम् । तथा ओष्ठौ निर्भुजति वक्रयति इत्यपि कोपस्य विकृतिः । एतच्च विकृतिदर्शनं दोषसम्भावनार्थसाधनमात्रमुच्यते । न दोषनिश्चयार्थम् । स्वाभाविक-नैमित्तिकविकारयोर्विवेकस्य दुर्ज्ञेयत्वात् । अथ काश्चिन्निपुणमतिर्विवेकं प्रतिपद्येत तथापि न पराजयनिमित्तं कार्यं भवति । न हि कस्यचिन्मरिष्यतो लिङ्गदर्शनेन मृतकार्यं कुर्वन्ति । एवमस्य पराजयो भविष्यतीति लिङ्गादवगतेऽपि न पराजयनिमित्तकार्यप्रसङ्ग इति सुधियो विदाङ्कुर्वन्त्वित्यलं पल्लवितेन ।

1. C. and D. read विरुद्धो for निरुद्धो. 2. D. reads °वासितः for °वासिनः. 3. C. does not mention this word.

'अथ चेत्प्रतिभूर्नास्ति कार्ययोग्यस्य वादिनः।
स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनम् ॥
द्विजातिः प्रतिभूहीनो रक्ष्यः स्याद्ब्राह्मचारिभिः।
शूद्रादीन् प्रतिभूहीनान्बन्धयेन्निगडैस्तु ॥
अतिक्रमेऽप्ययाते च दण्डयेत्तं पणाष्टकम्।
नित्यकर्मोपरोधस्तु न कार्यः सर्ववर्णिनाम् ॥

इति। अभियोक्त्रादीनामुक्तिक्रमोऽपि तेनैवोक्तः—

'तत्राभियोक्ता प्राग्ब्रूयादभियुक्तस्त्वनन्तरम्।
तयोरन्ते सदस्यास्तु प्राड्विवाकस्ततः परम्' ॥

इति। प्राग्ब्रूयात् प्रतिज्ञां कुर्यादित्यर्थः। तथा च नारदः—

'आज्ञालेख्ये पट्टके शासने वा
आधिःपत्रं विक्रयो वा क्रयो वा।

१. A. has marginal reading वाद°, while B. originally reads the same and corrected कार्य°, also A. in margin and B. originally substitute °श्व° for स्य; while in correction B. reads °स्य. C. reads वाद° for कार्य°; D. दक्षो यस्य च for कार्ययोग्यस्य. २. A. in margin and B. originally substitute °हि° for °क्षि°, but corrected B. reads °क्षि° in the word रक्षितो. ३. A. in margin and B. originally read °द्भूता°, but corrected B. °द्भृत्या°. ४. A. substitutes °ले° for °डे° in margin; while B. substitutes °ले° originally and in correction reads °डे°. ५. A. and B. read ऽपमाने for ऽपयाते. ६. D. reads दिना° for पणा°. ७. C. reads प्रभूयात् प्रतिमां for प्राग्ब्रूयात् प्रतिज्ञां. ८. D. reads पाट्टिके for पट्टके. ९. A. originally and B. in correction read आधा पारे and C. आधौ पत्रे for आधिःपत्रं.

राज्ञे कुर्यात् पूर्वमावेदनं यः
तस्य ज्ञेयः पूर्वपक्षो विधिज्ञैः' * ॥
(ना. स्मृ. २. ३८.)

इति । विवादे पूर्वाभियोक्तुरेव प्रतिज्ञावादित्वमित्यर्थः । तत्रा[1]पवादमाह स एव—

'यस्यस्यादधिकापीडा कार्यं वाभ्यधिकं भवेत् ।
तस्यार्थवादो दातव्यो न यः पूर्वं निवेदयेत्' ॥

इति । कात्यायनः—

'यस्य स्यादधिका पीडा कार्यं वाभ्यधिकं भवेत् ।
पूर्वपक्षो भवेत्तस्य न यः पूर्वं निवेदयेत्' ॥

इति । यत्रोभयोरपि परस्परमर्थित्वं प्रत्यर्थित्वं च साध्यभेदाद्युगपद्भवति तत्रोत्कृष्टजातेर्बहुपीडस्य वाऽर्थिनो वादः पूर्वं द्रष्टव्यः । तथा च बृहस्पतिः—

'अहंपूर्विकया यातावर्थिप्रत्यर्थिनौ यदा ।
वादो वर्णानुपूर्व्येण ग्राह्यः पीडामवेक्ष्य वा' ॥

*यो राज्ञे पूर्वमावेदयति तस्य पूर्वपक्षो ज्ञेयः । आवेदनोदाहरणानि यथा—आज्ञा—एतेन राजाज्ञा न गणिता । लेखः—प्रभुसत्कृतलेखेनायं प्रारब्धः । पट्टकः—अनेन मदीया दासी अवष्टब्धा । पट्टकं लिखितम् । शासनं—अयं मदीयं शासनग्राममवष्टभ्य भुंक्ते । ममेदं शासनं तिष्ठति । आधिः—मम ऋणिकेन प्रथममयमाधिः कृतः तत् केन भोक्तव्यः? । पत्रं—एष मम पत्रलिखितगृहीतमपि द्रव्यं न प्रयच्छति । क्रयः—अस्य हस्तात् भाण्डं मया क्रीतं, मूल्यद्रव्यं च दत्तं, भाण्डं मम नार्पयति इत्यादीनि पूर्वपक्षस्य भाषावादिनो वा आवेदनोदाहरणानि भवन्ति ।

---

1. C. and D. read अत्रा° for तत्रा°.

इति। समानवर्णत्वे पीडापेक्षया ग्राह्यः। अनेकवादियुग्मानां युगपदुपस्थाने दर्शनक्रममाह मनुः—

'अर्था-ऽनर्थावुभौ बुध्वा धर्मा-ऽधर्मौ च केवलौ।
वर्णक्रमेण सर्वाणि पश्येत् कार्याणि कार्यिणाम्[*]
(म. स्मृ. ८. २४.)

इति। दर्शनोपक्रमो निरूपितः—

अथ चतुष्पाद्व्यवहारः प्रस्तूयते।

तत्र प्रतिज्ञोत्तरं प्रमाणं निर्णयश्चेति चत्वारः पादाः। तत्र[२] प्रतिज्ञां संगृण्हाति याज्ञवल्क्यः—

'प्रत्यर्थिनोग्रतो लेख्यं यथावेदितमर्थिना।
समा-मासतदर्द्धाहर्नाम-जात्यादिचिन्हितम्' ॥
(या. स्मृ. २. ६)

---

*धर्माधर्माविव केवलौ अर्थानर्थौ। न गोहिरण्यादिलाभोऽर्थः तद्विपर्ययो वा अनर्थः। किं तर्हि धर्मएवार्थो ऽनर्थ आधर्मः इति बुध्वाहृदिनिश्चित्य कार्याणि पश्येत्। अथवा अर्थानर्थावपि शोध्यौ धर्माधर्मावपि। धर्मस्य सारता बोद्धव्या। अर्थस्य फल्गुता। अथवा यत्र महाननर्थः स्वल्पश्चाधर्मः तत्र अनर्थं परिहरेत्। शक्योहिमतार्थेन ईषदधर्मो दानप्रायश्चित्तादिना निराकर्तुम्। बहूनां व्यवहारिणां सन्निपाते वर्णक्रम आश्रितव्यः। एष च दर्शने क्रमो वर्णानां यदा अर्थे तुल्यपीडा भवन्ति। यदा त्ववरवर्णस्यात्यायिकं कार्यं महद्वा तदा—

'यस्य चात्ययिका पीडा'।

इत्यनेन न्यायेन तदेव प्रथमं पश्येत्। न वर्णक्रममाद्रियेत। 'राज्यस्थित्यर्थोहि व्यवहार निर्णयः' इत्युक्तम्। अतो न यथाश्रुतमादरणीयम्।

---

१. Marginal reading of A., corrected reading of B, is सर्वदा for कार्यिणाम्; while C. and D. read thus-सर्वाणि पश्येत् and कार्याणि सर्वदा, respectively, only substituting वादिनाम् for कार्यिणाम्. २. B. C. D. read तच्च for तत्र.

इति । एतच्च बृहस्पतिना स्पष्टीकृतम्--

'उपस्थिते[1] ततस्तस्मिन्वादी पक्षं प्रकल्पयेत् ।
निरवद्यं[2] सप्रतिज्ञं प्रमाणागमसंयुतम् ॥
देश-स्थान-समा-मास-पक्षा-ऽहो-नाम-जातिभिः ।
द्रव्यसंख्योदयं पीडां क्षमा लिङ्गं च लेखयेत् ॥
प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम् ।
निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः ॥
अल्पाक्षरस्त्वसन्दिग्धो बह्वर्थश्चाप्यनाकुलः ।
युक्तो विरोधिकरणे[3] विरोधिप्रतिषेधकः' ॥

इति । ततः प्रत्यर्थ्याव्हानानन्तरम् । तस्मिन्नुपस्थिते प्रत्यर्थिन्यागते सति निरवद्यं पक्षदोषरहितम् । पक्षदोषास्तु कात्यायनेन दर्शिताः--

'देश-काल-विहीनश्च द्रव्यसंख्याविवर्जितः ।
साध्यप्रमाणहीनश्च पक्षोऽनादेय इष्यते' ॥

इति । स्मृत्यन्तरेऽपि--

'अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत्' ॥

इति । अप्रसिद्धं-मदीयं शशविषाणं गृहीत्वा न प्रयच्छतीत्यादि । निराबाधं-अस्मद्गृहप्रदीपप्रकाशेनायं[4] स्वगृहे व्यवहरतीत्यादि । निरर्थकं-अभिधेयरहितं कचटतप इत्यादि । निष्प्रयोजनं यथा--अयं देवदत्तोऽस्मद्गृहसन्निधौ सुस्वरमधीत इत्यादि ।

---

१. C. reads लिपिस्थिते for उपस्थिते. २. C. reads निर्णयज्ञं and D. reads निवेद्य for निरवद्यं. ३. D. reads विरोध° for विरोधि°. ४. These two sentences between निराबाधं and निष्प्रयोजनं are not in C.

असाध्यं यथा—अहं देवदत्तेन श्मश्रुभङ्गं प्रहसित इति। विरुद्धं यथा—अहममुकेन शप्त इत्यादि। पुरराष्ट्रादिविरुद्धं वा। एवं-विधपक्षदोषरहितं निरवद्यम् 'मदीयं द्रव्यमनेन गृहीतं तत्प्रत्य-र्पणीयम्' इति प्रतिज्ञा तया युक्तं सप्रतिज्ञम्। प्रमाणं लिखित-भुक्त्यादि। आगमो द्रव्यप्राप्तिप्रकारः। कात्यायनोऽपि स्पष्टमुदाजहार—

'निर्दिश्य कालं वर्षं च मासं पक्षं तिथिं तथा।
वेलां प्रवेशं विषयं स्थानं जात्याकृती वयः॥
साध्य प्रमाणं द्रव्यं च सङ्ख्या नाम तथात्मनः।
राज्ञां च क्रमशो नाम निवासः साध्यनाम च॥
क्रमात् पितॄणां नामानि पीडामाहर्तृदायकौ।
क्षमालिङ्गानि वाक्यानि पक्षं सङ्कीर्त्य कल्पयेत्॥
देशं कालं तथात्मानं सन्निवेशं तथैव च।
जाति-संज्ञाधिवासांश्च प्रमाणं क्षेत्रनाम च॥
पितृपैतामहं चैव पूर्वराजानुकीर्तनम्।
स्थावरेषु विवादेषु दशैतानि निवेदयेत्'॥

इति। देशादीनां स्थावरविवादेषु पुनरभिधानं यत्र याव-दुपयुज्यते तत्र तावदुपादेयम्। न तु सर्वं सर्वत्रेति प्रदर्शना-र्थम्। सङ्ग्रहकारोऽपि—

---

१. C. and D. read भागञ्च after °विरुद्धं वा; which A. and B. do not mention. २. विषय° for एवंविध° is substituted by C. and D. ३. C. reads °षाभिहितं and D. reads °षनिहितं for °षरहितं. ४. D. reads तथोन्मानं for तथात्मानं. ५. A. in margin and B. in correction substitute श° for °द°, but C. and D. both have °श° and not °द° in origin. ६. A. has marginal reading °देवो° after ताव° and before °पादेयं°; while B. in correction and C. and D. read as usual तावद्देवोपादेयम्.

'अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम् ।
साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च ॥
प्रसिद्धमविरुद्धं च निश्चितं साधनक्षमम् ।
संक्षिप्तं निखिलार्थं च देश-कालाविरोधि च ॥
वर्षर्तु-मास-पक्षा-ऽहो-वेला-देशप्रदेश[1]वत् ।
स्थाना-ऽऽवसथ-साध्याख्या-जात्याकारवयोयुतम् ॥
साध्यप्रमा[2]ण्यसङ्ख्यावदात्मप्रत्यर्थिनामवत् ।
परात्मपूर्वजानेकराजनामभिरङ्कि[3]तम् ॥
क्षमालिङ्गात्मपीडावत् कथिताहर्तृदायकम् ।
यदावेदयते राज्ञे तद्भाषेत्यभिधीयते' ॥

इति । परात्मपूर्वजानेकराजनामभिः-परः प्रतिवादी, आत्मा वादी, तयोः पूर्वजाः पित्रादयः, अनेकराजानो भुक्तिकालीनाः तेषां नामभिः । भाषादोषास्तु नारदेन दर्शिताः--

'अन्यार्थमर्थहीनं च प्रमाणागमवर्जितम् ।
लेख्यस्थानादिभिर्भ्रष्टं भाषादोषा उदाहृताः ॥
(ना. स्मृ. २. ८.)

इति । तांश्च स्वयमेव व्याचष्टे—

'दृष्टे साधारणेऽप्येको यद्य[4]र्थे वा नियुक्तकः ।
लेखयेद्यस्तु भाषायामन्यार्था[5] तां[6] विदुर्बुधाः ॥

१. A. in margin and B. originally substitute °वे° for °दे°, but corrected B. reads °दे°. २. C. D. read °प्रमाण° for °प्रमाण्य°. ३. A. in margin and B. originally read °रञ्जितम्° for °रङ्कितम्, but corrected B. reads °रङ्कितम्. ४. A. in margin, B. in correction, C. and D. as usual read यद्यर्थैवा° for यद्यर्थे वा. ५. C. and D. read °मन्यार्थी for °मन्यार्था. ६. C. reads नो instead of तां; while D. reads च for तां.

गणिते तुलिते मेये तथा क्षेत्र-गृहादिके ।
यत्र सङ्ख्या न निर्दिष्टा सा प्रमाणविवर्जिता ॥
नत्वेवं लिख्यते यत्र सा भाषा स्यादनागमा ॥
समा मासस्तथा पक्षस्तिथिर्वारस्तथैव च ।
यत्रैतानि न लिख्यन्ते लेख्यहीनां तु तां विदुः ॥
लेखयित्वा तु यो भाषां निर्दिष्टे च तथोत्तरे ।
उद्दिष्टे साक्षिणः पूर्वमधिकां तां विनिर्दिशेत् ॥
यत्र स्यादुभयं सर्वं निर्दिष्टं पूर्ववादिना ।
सन्दिग्धमिव लिख्येत भ्रष्टभाषां तु तां विदुः' ॥

इति । अर्थे साधारणे बहूनां सम्बन्धिनि कार्ये पुनरपि स एव पक्षं सङ्गृह्य विवृणोति—

'भिन्नक्रमो व्युत्क्रमार्थः प्रकीर्णार्थो निरर्थकः ।
अतीतकालोद्दिष्टश्च पक्षो नादेय इष्यते ॥
यथास्थाननिवेशेन नैवं पक्षार्थकल्पना ।
शस्यते न स पक्षस्तु भिन्नक्रम उदाहृतः ॥
मूलमर्थं परित्यज्य तद्गुणो यत्र लिख्यते ।
निरर्थकः स वै पक्षो भूतसाधनवर्जितः ॥
भूतकालमतिक्रान्तं द्रव्यं यत्र हि लिख्यते ।
अतीतकालः पक्षोऽसौ प्रमाणे सत्यपि स्मृतः ॥

---

१. A. in marginal reading has आगमे तुलिते. B. has the same originally, for गणिते तुलिते. २. A. in margin and B. in correction read ऋक्षं यत्र न लिख्येत for न त्वेवं लिख्यते यत्र. ३. B. originally reads न तथैव च, but corrected च तथोत्तरे. ४. D. reads उद्दिशेत् for उद्दिष्टे. ५. B. originally reads सहिताः, but corrected is साक्षिणः. ६. A. in margin, B. originally substitutes °त्तरं for °भयं in the word स्यादुभयं, but corrected B. reads °भयं.

यस्मिन्पक्षे द्विधा साध्यं भिन्नकालविमर्शनम् ।
विमृश्यते क्रियाभेदात् स पक्षो दिष्ट उच्यते' ॥

इति । एके[1]नाप्यर्थिना बहुसाध्यनिर्देशो युगपन्न कर्तव्यः । [2]कालभेदेन तु कर्तव्यः । तदुभयं कात्यायन आह—

'पुर-राष्ट्रविरुद्धश्च यश्च राज्ञा विवर्जितः ।
अनेकपदे[3]सङ्कीर्णः पूर्वपक्षो न सिध्यति ॥
बहुप्रतिज्ञं यत् कार्यं व्यवहारेषु निश्चितम् ।
कामं तदपि गृह्णीयाद्राजा[4] तत्वबुभुत्सया' ॥

इति । पूर्ववादिनो नियममाह बृहस्पतिः—

'मृषायुक्तं क्रियाहीनमसारान्यार्थमाकुलम् ।
पूर्वपक्षं लेखयतो वा[5]दहानिः प्रजायते ॥
अप[6]दिश्याभियोगं यस्त[7]मतीत्यापरं वदेत् ।
क्रियामुक्त्वान्यथा ब्रूयात्सवादी हानिमाप्नुयात् ॥
ऊ[8]नाधिकं पूर्वपक्षे तावद्वादी विशोधयेत् ।
न दद्यादुत्तरं यावत्प्रत्य[9]र्थी सभ्यसन्निधौ' ॥

इति । कात्यायनोऽपि—

'अधिकान् छेदयेदर्थान् हीनांश्च प्रतिपूजयेत् ।
भूमौ निवेशयेत्तावद्यावदर्थोऽभिवर्णि[10]तः' ॥

इति । नारदोऽपि—

---

१. C. and D. read येनकेन for एकेन. २. This sentence is not in C. ३. A. in margin and B. originally read °पक्ष° for °पद°, but corrected B. reads °पाद°. ४. C. reads राज्यतत्व° for राजा तत्व°. ५. A. in margin and B. corrected read पाद° for वाद°. C. also reads पाद°. ६. D. reads उपदिश्य for अपदिश्य. ७. C. reads यः सम° and D. reads यत् सम°. ८. D. reads न्यूना° for ऊना.° ९. C. reads प्रत्यर्थे for प्रत्यर्थी. १०. A. in marginal reading substitutes °र्ति° for °र्णि°; while B. originally reads °वर्तितः and corrected °वर्णितः.

'भाषायां उत्तरं यावत् प्रत्यर्थीनाभिलेखयेत् ।
अर्थी, तु लेखयेत्तावद्यावद्वस्तु विवक्षितम्' ॥
( ना. स्मृ. २. ७ )

इति । अप्रगल्भं वादिनं प्रति बृहस्पतिराह—

'अभियोक्ताऽप्रगल्भत्वाद्वक्तुं नोत्सहते यदा ।
तस्य कालः प्रदातव्यः कार्यशक्त्यनुरूपतः' ॥

इति । काले इयत्तामाह कात्यायनः—

'सोल्लेखनं वा लभते त्र्यहं सप्ताहमेव वा ।
मतिरुत्पद्यते यावद्विवादे वक्तुमिच्छतः' ॥

इति । पूर्वपक्षस्य चातुर्विध्यं प्रतिपादयति बृहस्पतिः—

'चतुर्विधः पूर्वपक्षः प्रतिपक्षस्तथैव च ।
चतुर्धा निर्णयः प्रोक्तः कैश्चिदष्टविधः स्मृतः ॥

शङ्काऽभियोगस्तत्त्वञ्च लब्धेर्थेऽभ्यर्थिनं तथा ।
वृत्ते वादे पुनर्न्यायः पक्षो ज्ञेयश्चतुर्विधः ॥
भ्रान्तिः शङ्का समुद्दिष्टा वंश्यं नष्टार्थदर्शनम् ।
लब्धेऽर्थेऽभ्यर्थिनं मोहैस्तथावृत्ते पुनः क्रियाः' ॥

---

१. D. reads भाषायाम् for भाषायाः. २. C. reads यस्मात्तु for अर्थी तु and D. स यत्तु for the same. ३. B. originally reads विवर्जितम्, but corrected substitutes °क्षि° for °र्जि°. ४. C. reads °शक्त्यानुपायतः for °शक्त्यनुरूपतः. ५. D. reads स्वो° for सो°. ६. B. originally reads °स्तथ्यञ्च, but corrected °स्तत्वं च. D. also reads °स्तथ्याच. ७. B. originally reads °र्थे°; while corrected °र्थि° in ऽभ्यर्थिनं. ८. C. reads समुद्दिश्य for समुद्दिष्टा. ९. B. originally reads तथ्यं and corrected ऽवश्यं. D. also reads तथ्यं. १०. A. in margin and B. originally substitute °र्थे°, but corrected B. reads °र्थि°; C. and D. also read °र्धे° for °र्थि°. ११. A. in margin, and B. in correction read मोहात् for मोहः.

इति । एतत्पाण्डुलेखेन लिखित्वा वायोद्धारेण शोधितं पत्रे निवेशयेदित्याह कात्यायनः—

‘ पूर्वपक्षं स्वभावोक्तं[1] प्राड्विवाकोऽभिलेखयेत् ।
पाण्डुलेखेन[2] फलके ततः पत्रे विशोधितम्[3]’ ॥

इति । शोधनं यावदुत्तरदर्शनम् । न अतः[4]परम् । अतएव नारदः—

‘ शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम् ।
अवष्टब्धस्यो[5]त्तरणे निवृत्तं शोधनं भवेत्’ ॥

इति । हेयादेयौ पूर्वपक्षौ विविनक्ति बृहस्पतिः—

राज्ञाऽपवर्जितो[6] यस्तु यश्च पौरविरोधकृत् ।
राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च ॥
अन्ये वा ये पुर-ग्राम-महाजनविरोधकाः[7] ।
अनादेयास्तु[8] ते सर्वे व्यवहाराः प्रकीर्तिताः ॥
न्यायं वा[9] नेच्छते कर्त्तुं अन्यायं[10] वा करोति यः[11] ।
न[12] लेखयति यस्त्वेवं तस्य पक्षो न सिध्यति ॥
विरुद्धं चा[13]विरुद्धं च द्वावप्यर्थौ निवेशितौ ।
एकस्मिन् यत्र दृश्येते[14] तं पक्षं दूरतः[15]स्त्यजेत् ॥

१. D. reads पूर्वपक्षस्य भावोक्तं for पूर्वपक्षं स्वभावोक्तं. २. D. reads °लेख्येन for °लेखेन. ३. D. substitutes च for वि°. ४. This was not mentioned in A. ५. C. reads अवष्टब्धश्च for अवष्टब्धस्य. ६. D. reads ऽपवर्जितो for विवर्जितो. ७. C. reads °विरोधतः for °विरोधकाः. ८. C. reads अप्रादेयाः for अनादेयाः. ९. B. reads originally न्यायमालभते. १०. D. reads नान्यार्थं for अन्यायं. ११. D. substitutes यत् for यः. १२. B. substitutes स. for न. १३. B. D. substitute वा°. for चा° also the next च is replaced by यत्. १४. C. and D. read दृश्येतां ; B. also the same originally, but corrects दृश्येत. १५ B. originally reads परतः and corrects दूरतः.

उन्मत्त-मत्त-निर्धूता महापातकदूषिताः ।
जडातिवृद्धबालाश्च विज्ञेया स्युर्निरुत्तराः ॥
पक्षः प्रोक्तस्त्वनादेयो वादी चानुत्तरस्तथा ।
यादृग्वादी यश्च पक्षो ग्राह्यस्तत्कथयाम्यहम् ॥
पीडातिशयमाश्रित्य यद्ब्रवीति विवक्षितम् ।
स्वार्थसिद्धिपरो वादि पूर्वपक्षः स उच्यते' ॥

इति । इति प्रतिज्ञापादो निरूपितः ।

अथोत्तरपादो निरूप्यते ।

तं च याज्ञवल्क्यः सङ्गृह्णाति—

'श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ' ॥

(या. स्मृ. २. ७.)

इति । तदेतद्बृहस्पतिर्विवृणोति—

'यदा त्वेवंविधः पक्षः कल्पितः पूर्ववादिना ।
दद्यात्तत्पक्षसंबद्धं प्रतिवादी तदोत्तरम् ॥
विनिश्चिते पूर्वपक्षे ग्राह्याग्राह्यविशोषिते ।
प्रतिज्ञार्थे स्थिरीभूते लेखयेदुत्तरं ततः' ॥

इति । उत्तरे स्वतः प्रवृत्त्यभावे च तत् दापनीयमित्याह—

---

१. D. reads °मत्ताभिभूताः for °मत्त-निर्धूताः, but this breaks in metre. २. A. B. C. read च for स्युः. ३. C. substitutes वा° for च. ४. C. reads नथः for यश्च, but corrects यादृग्वादी विवादी च पक्षो ग्राह्यश्च यो भवेत्. ५. A. and B. read तथा for तं. ६. D. substitutes च for तु. ७. C. and D. read °सम्बन्धं for सम्बद्धं. ८. A. in margin and B. in origin read तथा for तदा, but corrected form of B. is सदा. ९. A. and B. read यत् for तत्; while C. यद्यप्युभय° for तद्दापनीय°.

स एव—

'पूर्वपक्षे यथार्थे तु न दद्यादुत्तरं तु यः ।
प्रत्यर्थी दापनीयः स्यात् सामादिभिरुपक्रमैः ॥
प्रियपूर्वं[१] वचः साम भेदस्तु[२] भयदर्शनम् ।
अर्थापकर्षणं[३] दण्डस्ताडनं बन्धनं तथा' ॥

इति । उत्तरलक्षणमाह प्रजापतिः—

'पक्षस्य व्यापकं सारम[४]सन्दिग्धमनाकुलम् ।
अव्याख्या[५]गम्यमित्येतदुत्तरं तद्विदो विदुः' ॥

इति । हारीतोऽपि—

'पूर्वपक्षार्थ[६]संबद्धमनेकार्थमनाकुलम् ।
अनल्पमव्यस्तपदं व्यापकं नातिभूरि च ॥
सारभूतमसन्दिग्धं स्वपक्षैकान्त[७]संभवम् ।
अर्थिश्रव्यमगूढार्थं[८] देयमुत्तरमीदृशम्' ॥

इति । स्वपक्षैकान्त[९]संभवमनवशेषित[१०]स्वपक्षैकदेशं सम्पूर्णस्वपक्षमिति यावत् । सहसोत्तरं दातुमशक्तंप्रति कात्यायन आह—

'श्रुत्वा लेख्यगतं त्वर्थं[११] प्रत्यर्थी कारणाद्यदि ।
कालं विवादे याचेत तस्य देयो न संशयः' ॥

---

१. C. reads प्रियः, D. reads श्रयेत् for वचः. २. C. reads °स्तूभयदर्शनम् and D. °स्तूभयदर्शिनः for °स्तु भयदर्शनम्, both seem to be incorrect. ३. C. reads अथाप° and D. यथाप्. for अर्थाप°. ४. D. reads साध्य° for सार°. ५. C. substitutes अथाख्या° for अव्याख्या°. ६. D. reads °पक्षस्यसम्बन्ध° and C. पक्षमर्थसम्बन्ध° for °पक्षार्थसम्बद्ध;° the latter seems incorrect. ७. D. reads °कांश° for °कान्त°. ८. C. and D. read °समूढार्थं° for °मगूढार्थं. ९. D. reads °कांश° for कान्त°, B. originally reads °कांश° but, corrected °कान्त°. १०. B. originally reads अनवेक्षित° for अनवशेषित°. D. corrected reads अनवधार्षित. ११. C. reads °मतत्वार्थं. D. मसत्यार्थं for °गतं त्वर्थं.

इति । कालभेदं कारण[1]विशेषं चाह नारदः—

'शालीनत्वाद्भयार्तत्वात् प्रत्यर्थी स्मृतिविभ्रमात् ।
कालं प्रार्थयते यत्र [2]तत्र तं लब्धुमर्हति ॥
एकाहं त्र्यह-पञ्चाहं सप्ताहं पक्षमेव वा ।
मासं चतु[3]ष्टयं वर्षं ल[4]भते शक्त्यपेक्षया' ॥

इति । तत्र व्यवस्थामाह स एव—

'सद्य[5]ःकृते त[6]दा वादः स[7]मातीते दिनं क्षिपे[8]त् ।
षडब्दिके त्रिरात्रं तु सप्ताहं द्वादशाब्दिके ॥
विंशत्यब्दे दशाहं तु मासार्द्धं वा लभेत सः ।
मासं त्रिंशत्समातीते त्रिपक्षं परतो भवेत् ॥
अस्वतन्त्र-जडोन्मत्त-बाल-दीक्षित-रोगिणाम् ।
कालः संवत्सरादर्वाक् स्वयमेव यथेप्सितम्' ॥

इति । कात्यायनोऽपि—

'सं[9]वत्सरं जडोन्मत्तेऽमनस्के व्याधिपीडिते ।
दिगन्तरप्र[10]पन्ने च अज्ञातार्थे च वस्तुनि ॥
मूलं वा साक्षिणो वाथ परदेशस्थिता यदा ।

---

१. C. and D. read कारणार्थशेषं for कारणविशेषं. २. Only D. reads तत्र तत् for तत्रेदं. ३. C. reads द्विमासं वा for चतुष्टयं; while D. reads मासत्रयं for the same. ४. C. reads न भवेत् for लभते. ५. B. originally °त्स्यं, but corrected °द्यः°. ६. D. reads सद्य° for तदा. ७. C. reads समानीते and D. reads मासेऽतीते for समातीते. ८. B. originally reads त्यजेत्, but corrected क्षिपेत्. ९. C. reads संवत्सरात् गते मासे मनाक्त्वे व्याधिपीडिते for संवत्सरं जडोन्मत्तेत्यादि whole line. १०. B. reads प्रपन्नेन substituting last word च for °नि C. reads °गर्तेनच for °प्रपन्ने च, and D. reads °प्रपञ्चेन for °प्रपन्ने च.

तत्र कालो भवेत् पुंसामा स्वदेशसमागमात् ॥
दत्तेऽपि काले देयं स्यात् पुनः कार्यस्य गौरवात् ।'

इति । कालदानस्य विषयमाह नारदः—

'गहनत्वाद्विवादानामसामर्थ्यात् स्मृतेरपि ।
ऋणादिषु हरेत् कालं कामं तत्वबुभुत्सया' ॥
(ना. स्मृ. १. ४४)

इति । ऋणादीन्दर्शयति पितामहः—

'ऋणोपनिधि-निक्षेप-दान-सम्भूयकर्मणाम् ।
समये दायभागे च कालः कार्यः प्रयत्नतः' ॥

इति । कालदानस्यानर्हविषयमाह याज्ञवल्क्यः—

साहस-स्तेय-पारुष्य-गोभिशापात्यये स्त्रियाम् ।
विवादयेत् सद्य एव कालोऽन्यत्रेच्छया स्मृतः' ॥
(या. स्मृ. २. १२)

इति । बृहस्पतिरपि—

'साहस-स्तेय-पारुष्य-गोभिशापे तथात्यये ।
भूमौ विवादयेत् क्षिप्रमकालेऽपि बृहस्पतिः' ॥

इति । कात्यायनोऽपि—

'धेनावनडुहि क्षेत्रे स्त्रीषु प्रजनने तथा ।
न्यासे याचितके दत्ते तथैव क्रय-विक्रये ॥

---

१. B. originally reads महत्तत्वात् for गहनत्वात्. २. B. originally reads तृणा° for ऋणा°. ३. B. reads तत्र ज्ञानं, but corrected. B. reads कामं; while D. reads मासं for कालं. ४. B. originally नागों°, but corrected ऋणो°. ५. D. reads °वृत्त° for दान°. ६. C. °कर्मणा and D. reads °कर्मणि for °कर्मणाम्. ७. The sentence and one verse is not mentioned in C. D. ८. C. reads स्तेनावन-द्रुमक्षेत्रे for धेनावनडुहि क्षेत्रे; while D. reads अनड्वाहि for अनडुहि.

कन्याया दूषणे स्तेये कलहे साहसे निधौ[1]।
उपधौ कूटसाक्ष्ये च सद्य एव विवादयेत्' ॥

इति। उपधिर्भयादिवशात्[2] प्राप्तं कार्यम्। उत्तरभेदानाह नारदः—

'मिथ्यासम्प्रतिपत्तिश्च प्रत्यवस्कन्दनं तथा।
प्राङ्न्यायश्चोत्तराः[3] प्रोक्ता चत्वारः शास्त्रवेदिभिः ॥

इति। मिथ्यादीनां स्वरूपमाह बृहस्पतिः—

'अभियुक्तोऽभियोगस्य यदि कुर्यात्तु निन्हवम्।
मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः ॥
श्रुत्वाऽभियोगं प्रत्यर्थी यदि तत्[4] प्रतिपद्यते।
सा तु संप्रतिपत्तिस्तु शास्त्रविद्भिरुदाहृता ॥
अर्थिनाभिहितो योऽर्थः प्रत्यर्थी[5] यदितं तथा।
प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं हि तत् ॥
आचारेणावसन्नोऽपि पुनर्लेखयते यदि।
स विनेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते' ॥

इति। प्रजापतिरपि—

'यावदावेदितं[6] किंचिन्मत्संबन्धमिहार्थिना।
तावत् सर्वमसंभूतमिति मिथ्योत्तरं स्मृतम् ॥

---

१. B. originally reads विधौ, but corrected निधौ. D. also reads the same. २. A. B. C. read उपाधिः for उपधिः. This sentence was originally in B. as उपाधेर्भयादित्वशान्तिकार्यम् also A. had the same in margin, which seems incorrect. ३. A. B. C. read °श्चोत्तरः for °श्चोतराः. ४. B. originally reads तत्र प्रवर्तते and corrected तत् प्रतिपद्यते. ५. B. reads सत्यार्थी for प्रत्यर्थी, which is not preferable. ६. A. in marginal reading and B. originally read ऽप्येऽचिरं and B. corrected आवेदितं.

यस्यैतद्देवमेवैतं नासंभावितमर्थिना ।
इति संप्रतिपत्त्याख्यं द्वितीयमिदमुत्तरम् ॥
दत्तमेव ममानेन किन्त्वस्यापि मया पुनः ।
प्रतिदत्तमितीदृक्च प्रत्यवस्कन्दनं स्मृतम् ॥
अस्मिन्नर्थान्तरे पूर्वं प्रलब्धोऽस्म्यहमर्थिना ।
जितश्चायं मया तत्र प्राङ्न्यायविधिरुच्यते' ॥

इति । मिथ्योत्तरस्यावान्तरभेदमाह स एव—

'मिथ्यैतन्नाभिजानामि तदा तत्र न सन्निधिः ।
अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधम्' ॥

इति । उत्तराभासानाह कात्यायनः—

'अप्रसिद्धं विरुद्धं यदत्यल्पमतिभूरि च ।
सन्दिग्धा-ऽसम्भवाव्यक्तमन्यार्थं चातिदोषवत् ॥
यद्व्यस्तपदमव्यापि निगूढार्थं तथाऽऽकुलम् ।
व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये' ॥

इति । अप्रसिद्धादीन् स एव व्याचष्टे—

'चिन्हाकारसहस्रं तु समयं वा विजानता ।
भाषान्तरेण वा प्रोक्तमप्रसिद्धं तदुत्तरम् ॥
प्रतिदत्तं मया बाल्ये प्रतिदत्तं मया नहि ।
यदेवमाह विज्ञेयं विरुद्धं तदिहोत्तरम् ॥

१. D reads यस्यैव देय° for यस्यैतदेव°. २. D. reads प्रारब्धो° for प्रलब्धो°. ३. B. originally चापि, corrected चाति°. ४. B. C. D. read °मव्यापि for °मव्यापि. ५. B. originally समं चाति°, but corrected समयं वा.

जितः पुरा मयाऽयं तु अर्थेऽस्मिन्नोति भाषिते
पुरा मया च प्रमितेमंगीकारोत्तरं स्मृतम् ॥
गृहीतमिति वाच्ये तु कार्यं तेन कृतं मया।
पुरा गृहीतं यद्द्रव्यमिति चेद्वक्ति भूरि तत् ॥
देयं ममेति वक्तव्ये मया देयमितीदृशम् ॥
सन्दिग्धमुत्तरं ज्ञेयं व्यवहारे बुधैस्तदा ॥
बलाबलेन चैतेन साहसं स्थापितं पुरा।
अनुक्तमेतन्मन्यन्ते तदन्यार्थमितीरितम् ॥
अस्मै दत्तं मया सार्धं सहस्रमिति भाषिते।
प्रतिदत्तं तदर्धं यत्तदिहाऽव्यापकं स्मृतम् ॥
पूर्ववादक्रियां यावत्सम्यङ् नैव निवेशयेत्।
मया गृहीतं पूर्वन्नो तद्व्यस्तपदमुच्यते ॥
तत् किं तामरसं किञ्चिदगृहीतं प्रदास्यति।

१. C. reads जेतुरर्थे, for जितःपुरा and D. substitutes त्वं for ऽयं. २. D. reads भाषितम् for भाषिते. ३. A. reads यद्भूतं चोत्तरं; while B. originally °यमिति तद्दत्तं चोत्तरं, but corrected as A. yet यद्भूतं चोत्तरं for प्रमितमङ्गीकारोत्तरं. is another correction in B. D. C. reads पत्रमिति यद्दत्तं चोत्तरं. ४. D. reads चास्मात्ते for वाच्ये तु, but it seems incorrect. ५. A. reads वस्त्र°. B. also the same; while B. in correction and C. read वस्य रूपि and D. वस्तु भूरि for वक्ति भूरि. ६. A. B. in correction, C. and D. read ममेति for ममेति. ७. B. originally reads बलाबलेन न चैतेन साहसं स्थापितं पुरा; while C. reads साहस्यं स्थापितं for साहसं स्थापितं. ८. C. reads भाषितम् for भाषिते. ९. C. and D. read तदर्थं for तदर्धं, but D. believes it in correction तदर्हं. १०. C. reads °क्रिया यद्य त्सम्यक्त्वेन for °क्रियां यावत्सम्यङ्नैव. ११. D. substitutes न for नो. १२. D. reads कामरसं, A. in mar. and C. ori. reads तामरसः कश्चित् for तामरसं किंचित्, but B. in cor. reads as ori. A.; १३. D. गृहीतं न for अगृहीतं.

निगूढार्थं तु तत् प्रोक्तमुत्तरं व्यवहारतः ॥
किं तेनैव सदा देयं मया देयं भवेदिति ।
एतदाकुलमित्युक्तमुत्तरं तद्विदो विदुः ॥
काकस्य दन्ता नो सन्ति सन्तीत्यादि तदुत्तरम् ।
असारमिति तत्त्वेन सम्यङ्नोत्तरमिष्यते ' ॥

इति । अत्र चिन्हेत्यादेरयमर्थः । विवादविषयस्य गो-हिरण्या-दिद्रव्यस्य वर्णविशेषादिकं चिन्हम् । दीर्घशृङ्गत्वादिराकारः । सहस्रादिः संख्या । समयः कालविशेषः सङ्केतविशेषो वा । तत् सर्वमजानता यत् प्रोक्तम्, जानता वा सभ्यानामपरिचितया भाषया यदुक्तं तदुभयमप्रसिद्धम् । बाल्य एव मया सर्वं द्रव्यं प्रतिदत्तमित्युक्त्वा स पुनरपि विस्मृत्य वा प्रतिवादिबुद्धिं प्रच्छादयितुकामो वा न दत्तमिति यद्ब्रूयात्तद्विरुद्धम् । 'पुरा मयाऽयं जित' इति वक्तव्ये सति, जितशब्दं परित्यजति चेत्त-दुभयम् । गृहीतमित्येतावत्येव वक्तव्ये सति प्रथमं तदनुक्त्वा तेन यत् कर्तव्यं तत् कार्यं मया कृतमित्येतादृशं प्रस्तुतानुपयोगि किञ्चिदुक्त्वा पश्चाद्गृहीतमिति यद्ब्रूयात्तदुत्तरं भूरि। देयं मयेत्युक्ते सति सन्देहमन्तरेण दातव्यनिश्चयो भवति तदनुक्त्वा मया

१. C. and D. substitute ज्ञेयम् for प्रोक्तम्. २. D. reads कति वा दन्ता for दन्ता नो सन्ति. ३. D. reads तत्तेन for तत्वेन. ४. A. and B. read अपरिचिन्तया. ५. A. and B. read सत्यं for प्रति°, but B. in correction reads सभ्य°. ६. A. and B. omit ऽयं. ७. D. reads परित्यज्य for परित्यजति. ८. C. reads तदुत्तरम् for तदुभयम्. ९. D. reads प्रथमतः and C. प्रथमः for प्रथमं. १०. D. does not insert यत्. ११. D. reads प्रकृता° for प्रस्तुता°. १२. D. adds भ्रान्ति to भूरि. १३. A. B. C. read तदनुक्तं.

देयमिति यद्ब्रूयात्तदानीमदेयमिति[1] वा देयमिति वा पदस्य[2] छेत्तुं शक्यत्वादुत्तरं सन्दिग्धं भवति । यदि षोडशवर्षः प्रतिवादी 'मत्पौत्रेण दत्तम्' इति ब्रूयात्तदसम्भवम्[3] । एकादश वस्त्राणि मया दत्तानीति वक्तव्ये सति रुद्राकाशनामकानि युष्मत्प्रयोग[4]शब्दवाच्येन[5] विभागितानीत्येवमप्रसिद्धैः पदैरभिहितमुत्तरमव्यक्तम्[6] । प्रकृतार्थ[7]स्योचितमुत्तरमनुक्त्वा [8]अनुपयुक्तमेव किञ्चिद्ब्रूते, 'एतेन वादिना प्राबल्येन[9] दौर्बल्येन वा किञ्चित्साहसं कृतम्'-इत्यादि तत्र प्रकृत[10]स्यानुक्तत्वा[11]दुत्तरमन्यार्थं भवति । शतं देयमिति प्रतिज्ञा तस्यार्थस्य शतद्वयं दत्त[12]मित्युत्तरं दोषवत् । सार्द्धं सहस्रं मह्यं देयमिति प्रतिज्ञा तस्य तदर्धं प्रत्यर्पि[13]तमित्युत्तरमव्यापकम् । वादिना स्वपक्षस्य सम्यक् लेखनात् पूर्वमेव मया न गृहीतमित्युत्तरं व्यस्तपदम् । मया दत्तमपि यदा न गृहीतमिति वक्तव्ये सति विस्पष्टं न वदति किन्तु लोके यः कोऽपि किमगृहीतं ताम्[14]रसं प्रदास्यतीत्येवमप्रसिद्धेन शब्देन व्यतिरेकमुखेन काकस्वरेणाभिहितमुत्तरं निगूढम् । किं ते नैव सदा देयं मया देयमित्यत्रोभयोर्वाक्ययोरदेयं[15] मया देयमिति पदच्छेदसंभवा-

१. D. reads °मस्य देयमिति वा. २. D. reads पदं for पदस्य. ३. D. reads असम्भावि for असंभवम्. ४. B. C. and D. read °प्रतियोगि° for °प्रयोग°. ५. D. reads °वाच्यत्वेन विभावितानि° for वाच्येन विभागितानि and A. in margin and B. originally substitute विहायितानि for विभागितानि. ६. C. and D. substitute उक्तम् for अव्यक्तम्. ७. C. and D. read प्रकृतस्य प्रतिज्ञार्थस्य. ८. C. and D. add च before अनुपयुक्त°. ९. A. B. and C. do not insert प्राबल्येन दौर्बल्येन वा. १०. B. originally adds तस्य before प्रकृतस्य. ११. B. C. insert तत् after अनुक्तत्वात्. १२. D. omits दत्तम्, C. also. १३. D. reads प्रमितं. also C.; १४. From इत्युत्तरम् till न गृहीतमिति वक्तव्ये सति is not mentioned in D.; C. also omits as. १४. D. reads °नाम रत्नं. १५. D. reads आदेयं.

दर्थस्यानिश्चयात् किमिति काक्वा व्यज्यमानस्या[१]प्यनिश्चयादिदमुत्तरं व्याकुलम् । त्वत्पित्रा सुवर्णशतं गृहीतमित्यभियोगे पितुर्वाक्यं जानामीति वक्तव्ये व्यत्ययस्यान्वयेन दुर्बोधं वचो ब्रूते गृहीतं शतमिति वचनात् सुवर्णानां पितुर्नजानामीति तदिदमुत्तरं व्याख्यागम्यम् । काकदन्तादिविषयं निष्प्रयोजनं असारमिति । सङ्कराख्यमुत्तराभासमाह कात्यायनः---

‘[२]पक्षैकदेशे यत्सत्यं एकदेशे च कारणम् ।
मिथ्या चै[३]वैकदेशे यत्सङ्क[४]रात्तदनुत्तरम्’ ॥

इति । तच्च स एव विशदयति---

‘न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।
न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम्’ ॥

इति । मिथ्याकारणो[५]क्तयोः सङ्करे अर्थिप्रत्यर्थिनोर्द्वयोरपि क्रिया प्राप्नोति ।

‘मिथ्याक्रिया पूर्ववादे कारणे प्रतिवादिनि’ ।

इति स्मरणा[६]त्तदुभयमेकस्मिन्व्यवहारे विरुद्धम् । [७]तथा सुवर्णं रूपकशतं [८]अनेन गृहीतम्’ इत्यभियोगे ‘सुवर्णं न गृहीतं, रूपकशतं गृहीतं प्रतिदत्तम्’ इति । कारणप्राङ्न्यायसङ्करे तु प्रत्यर्थिन एव क्रियाद्वयम् ।

‘प्राङ्न्यायका[९]रणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम्’ ।

---

१. C. reads व्यासिषक्तस्य for व्यज्यमानस्य. २. C. D. read एकैक° for पक्षैक°. ३. D. reads कै° for वै°. ४. D. reads संस्कारात् for संकरात्. ५. C. and D. read °उत्तरयोः for °उक्तयोः. ६. C. and D. insert तदपि after स्मरणात्. ७. A. in margin substitutes° य; while B. originally य° and cor. त°, D. also reads य° for त°. ८. the word अनेन was not mentioned in A. B.; ९. C. reads °कारणेनोक्ते for °कारणोक्तौ तु.

इति स्मरणात्। यथा[1] 'सुवर्णं गृहीतं प्रतिदत्तं, रूपके व्यवहार[2]मार्गेण पराजितः' इति। अत्र प्राङ्न्याये[3] जयपत्रेण वा प्राङ्न्यायदर्शिभिर्वा भवितव्यम्। कारणोत्तरे तु साक्षिलेख्या[4]दिभिर्भावयितव्यमित्यविरोधः। एवमु[5]त्तरत्रयसङ्करेऽपि द्रष्टव्यम्। यथा 'अनेन सुवर्णरूपकशतं वस्त्राणि च गृहीतानि' इत्यभियोगे 'सत्यं सुवर्णं गृहीतं प्रतिदास्यामि। रूपकशतं तु न गृहीतम्। वस्त्रविषये पूर्व[6]न्यायेन पराजितः' इति। एवं चतुस्सङ्करेऽपि। एतेषां चानुत्तरत्वं यौगपद्येन। तस्यतस्यांशस्य[7] तेनतेन विवाद[8]प्रसिद्धेः क्रमेणोत्तरत्वमेव। क्रमश्चार्थिनः प्रत्यर्थिनः सभ्यानां चेच्छया भवति। यत्र पुनरुभयोः सङ्करस्तत्र यस्य प्रभूतार्थविषयत्वं तत्र क्रियोपादानेन व्यवहारः प्रवर्तयितव्यः। पश्चाद[9]न्यविषयांतरोपादानेन। यत्र च संप्रतिपत्तेरुत्तरान्तरस्य च सङ्करः तत्रोत्त[10]रांतरोपादानेन व्यवहारो द्रष्टव्यः। संप्रतिपत्तेः प्रयोगाभावात्। यथा हारीतेनोक्तम्---

'मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे।
सत्यं वापि सहान्येन तत्र ग्राह्यं किमुत्तरम्' ॥

---

१. C. reads यत् for यथा. २. A. in margin and B. originally read व्यवहारे for व्यवहार°, but corrected व्यवहारात्. ३. C. and D. read °न्यायेन for °न्याये. ४. A. and B. read °लिप्या ° for °लेख्या°. ५. in this sentence C. omits एवम् and instead of उत्तरत्रय° reads उत्तरत्र. ६. D. reads पूर्वं for पूर्व°. ७. B. reads तस्यान्तस्य for तस्यांशस्य. ८. C. reads विवादाप्रसिद्धेः for विवादप्रसिद्धेः. ९. A. and B. read यश्चाल्प°; while C. reads पश्चादल्प° for पश्चादन्य°. १०. C. reads उत्तरोपादान° and D. उत्तरोपादानेन for उत्तरान्तरोपादानेन.

इत्युक्त्वा—

'यत् प्रभूतार्थविषयं यत्र वा स्यात् क्रियाफलम्।
उत्तरं तत्र विज्ञेयं असंकीर्ण[१]मतोऽन्यथा' ॥

इति। सङ्कीर्णं भवतीति शेषः ऐच्छिकक्रमं भवतीत्यर्थः। तत्र प्रभूतार्थविषयं यथा—'अनेन रूपकशतं सुवर्णं वस्त्राणि च गृहीतानि' इत्यभियोगे 'सुवर्णं रूपकशतं न गृहीतम्, वस्त्राणि गृहीतानि प्रतिदत्तानि च' इति। अत्र मिथ्योत्तरस्य प्रभूतविषयत्वादर्थिनः क्रियामादाय प्रथमं व्यवहारः प्रवर्तयितव्यः। पश्चाद्[२]वस्त्रविषयो[३] व्यवहारः। एवं मिथ्याप्राङ्न्यायसङ्करे कारणप्राङ्न्यायसङ्करे च योजनीयम्। यथा तस्मिन्नेवाभियोगे 'सत्यं सुवर्णं रूपकशतं च गृहीतं दास्यामि। वस्त्राणि तु न गृहीतानि प्रतिदत्तानि' इति वा वस्त्रविषये पूर्वं पराजित इति चोत्तरे संप्रतिपत्तेर्भूरिविषयत्वेऽपि तत्र क्रियाऽभावात् मिथ्योत्तरक्रियामादाय व्यवहारः प्रवर्तयितव्यः। यत्र तु मिथ्याकारणयो[४]रुत्तरयोः कृत्स्नपक्षव्यापित्वं, यथा—शृङ्गग्राहिकया कश्चिद्वदति 'इयं गौर्मदीया' अमुकस्मिन्काले नष्टा, अस्य गृहे दृष्टा' इति। अन्यस्तु 'मिथ्यैतत्[५], एतस्मद्दर्शितकालात्पूर्वमेवास्मद्गृहे स्थिता[६]। मम गृहे जाता[७]' वा इति वदति। इदं तावत् पक्षनिराकरणसमर्थत्वान्नानुत्तरम्। नापि मिथ्यैव[८]। कारणोपन्यासात्। नापि अकारणम्। एकदेशाभ्युपगमाभावात्।

---

१. B. reads असंकीर्त° for असंकीर्ण°. २. B. originally reads वस्तु°, but corrected वस्त्र°. ३. D. reads °विषये for °विषयः. ४. D. reads °कारणोत्तरयोः for °कारणयोरुत्तरयोः. ५. B. C. D. read मिथ्यैतदेतत् for मिथ्यैतत्. ६. these three words are not found in D.; ७. D. reads सेति for वा इति. ८. C. reads मिथ्या वा for मिथ्यैव.

तस्मात् संकारणमिथ्योत्तरमिदम्। अत्र च प्रतिवादिनः क्रिया। 'कारणे प्रतिवादिनि' इति वचनात्। ननु-'मिथ्या क्रिया पूर्ववादे' इति पूर्ववादिनः कस्मात्क्रिया न भवति। तस्य शुद्धमिथ्याविषयत्वात्। 'कारणे प्रतिवादिनि' इति एतदपि कस्माच्छुद्धकारणविषयं न भवति। नैतत् सर्वस्यापि कारणोत्तरस्य मिथ्यासहचरितरूपत्वाच्छुद्धकारणोत्तर*स्याभावात्। प्रसिद्धकारणोत्तरे प्रतिज्ञातार्थैकदेशस्याभ्युपगमेनैकदेशस्य मिथ्यात्वम्। यथा-'सत्यं रूपकशतं गृहीतम्, न धारयामि, दत्तत्वात्' इति। प्रकृतोदाहरणे तु प्रतिज्ञार्थैकदेशस्याभ्युपगमो नास्तीति विशेषः। एतच्च हारीतेन स्पष्टमुक्तम्—

'मिथ्याकारणयोर्वापि ग्राह्यं कारणमुत्तरम्' ॥

इति। यत्र मिथ्या-प्राङ्न्याययोः पक्षव्यापित्वं यथा—'रूपकशतं धारयति' इत्यभियोगे 'मिथ्यैतत् अस्मिन्नर्थे पूर्वमयं पराजितः' इति तत्रापि प्रतिवादिन एव क्रिया।

'प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम्'

इति वचनात्। शुद्धस्य प्राङ्न्यायस्याभावादनुत्तरप्रसङ्गात्। संप्रतिपत्तेरपि साध्यत्वेनोपदिष्टस्य सिद्धत्वोपन्यासेन साध्यत्वनिराकारणादेवोत्तरत्वम्। यत्र तु कारणं प्राङ्न्यायसङ्करः।

---

१. C. substitutes तु for स°. २. D. reads यस्मात् for कस्मात्. ३. this is omitted in C.; ४. C. reads वा स्यात् for कस्मात्. for the same D. reads तस्मात्. ५. A. in marginal reading and B originally substitute °दा for °था but B. corrects °हि. ६. A. in margin and B. in origin reads °त्वं. for °त्यं. but B. corrects °त्यं. ७. B. & D. read प्रतिज्ञार्थैक° for प्रतिज्ञातार्थैक. This portion is omitted in C.; ८. D. reads °तत्तास्मिन्° for °तत् अस्मिन्. ९. D. reads °अनुत्तरस्य for अनुत्तर°. १०. D. reads निराकरणाद्धतोत्तरत्वम् for निराकारणादेवोत्तरत्वम्.

यथा–'शतमनेन गृहीतम्' इत्यभियुक्तः प्रतिवदति 'सत्यं गृहीतम्। प्रतिदत्तं च' इत्यस्मिन्नेवार्थे प्राङ्न्यायेनायं पराजित इति तत्र प्रतिवादिनो यथारुचीति[1] न क्वचिद्वादि-प्रतिवादिनोरेकस्मिन्व्यवहारे क्रियाप्रसङ्ग इति निर्णयः। निरुत्तरं प्रत्यर्थिनं प्रति कात्यायन आह—

'उपायैश्चोद्यमानस्तु न दद्यादुत्तरं तु यः।
अतिक्रान्ते[2] सप्तरात्रे जितो[3]ऽसौ दातुमर्हति' ॥

इति। हीनवादिनं दर्शयति नारदः—

'पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः।
वादसङ्क्रमणात् ज्ञेयो हीन[4]वादी स वै नरः ॥ (२४)
न मया[5]भिहितं कार्यमभियुक्तं परं वदेत्।
विब्रुवंश्च भवेदेवं हीनं तमपि निर्दिशेत् ॥
अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः।
आहूतप्र[6]पलायी च हीनः पञ्चविधः स्मृतः' ॥
(ना. स्मृ. २--२४--३३)

इति। तान् वादिनो विवृणोति स एव—

'लेखयित्वा तु यो वाक्य[7]मूनं वाभ्याधिकं पुनः।
वदेद्वादी स हीयेत नाभियोगं तु सोऽर्हति ॥

१. A. in margin and B. originally read °ब्रवीति for °रुचीति, but corrected read °रुच्यमिति. २. B. reads अतिकाले and C. reads मुक्तस्यान्ते. ३. B. originally reads हितो° for जितो,° but corrects हीनो°. ४. B. originally reads दीन° and corrected reads हीन°. ५. D. reads समया° for न मया°. ६. D. reads आहूतोऽप्यपलापी च and C. आहूतः प्रपलायी च for आहूतव्यपलापी च. ७. B. reads वाक्यादूनं for वाक्यमूनं. C. मूलं वा व्यधिसंयुतः, D. मूलवाद्यादिसंयुतः for ऊनं वाऽभ्याधिकं पुनः.

सभ्याश्च[1] साक्षिणश्चैव क्रिया ज्ञेया मनीषिणः[2] ।
तां क्रियां द्वेष्टि यो मोहात्क्रियाद्वेषी स उच्यते ॥
आव्हानादनुपस्थानात् सद्य एव प्रहीयते ।
ब्रूहीत्युक्तोऽपि[3] न ब्रूयात्सद्यो बन्धनमर्हति ॥
द्वितीयेऽहनि दुर्बुद्धे[4]र्विद्यात्तस्य पराजयम्' ।

इति । बृहस्पतिः—

'आहूतव्य[5]पलापी च मौनी साक्षि[6]ः पराजितः ।
स्ववाक्य[7]प्रतिपन्नश्च हीनवादी चतुर्विधः' ॥

इति । हीनत्वे[8] कालावधिमाह स एव—

'प्रपलायी तु पक्षेण मौनकृत्सप्तभिर्दिनैः ।
साक्षिभिस्तत्क्षणेनैव प्रतिपन्न[9]श्च हीयते' ॥

इति । दैविकादिविघ्नेन यथोक्तकालातिक्रमेऽपि नापराध इत्याह स एव—

'दैव-राजकृतो दोषस्तत्काले तु यदा भवेत् ।
अवधित्याग[10]मात्रेण न भवेत् स पराजितः' ॥

इति । हीनवादिनो दण्डेन पुनर्वादाधिकारमाह कात्यायनः—

---

१. C. reads ससाक्षिणः for °श्च साक्षिणः. २. B. reads originally मनीषिभिः, but corrected मनीषिणः; while D. reads मनीषिणम्. ३. B. substitutes हि for ऽपि. ४. A. originally and B. in correction read दुष्टे च for दुर्बुद्धेः. ५. D. आहूतोऽप्यपलापी च for आहूतव्यपलापी च. ६. B. originally and C. as usual read °क्षी for °क्षिः, but corrected B. reads °क्षिः. ७. A. in margin and B. originally read स्वभाव° for स्ववाक्य°, but B. corrects स्वावाच्य°. ८. D. reads हीनत्वकालावधि° for हीनत्वे कालावधि°. ९. A. in margin, B. originally substitutes स for °च, but corrected B. reads प्र°. १०. A. in marginal reading and B. originally read °त्यक्त° for °त्याग° and corrected B. reads °स्वत्व°.

'अन्यवादी पणान् पञ्च क्रियाद्वेषी[1] पणान् दश ।
नोपस्थाता[2] दश द्वे च षोडशैव निरुत्तरः ॥
आहूतप्र[3]पलायी च पणान् ग्राह्यस्तु विंशतिम्' ।

इति ।

'त्रिराहूतमनायातमाहूतप्र[4]पलायिनम् ।
पञ्चरात्रमतिक्रान्तं विनयेत्तं महीपतिः' ॥

इति । यत्तु तेनैव पुनर्वादनिषेधकथनम्[5]—

'दोषानुरूपं संग्राह्यः[6] पुनर्वादो न विद्यते' ॥

इति । तदेतन्न्यक्[7]कृतविवादविषयम् । इतरत्र तु प्र[8]कृतिहानिर्नास्तीत्याह नारदः—

'सर्वेष्वर्थविवादेषु वाक्छलेनावसीदति[9] ।*
पशु-स्त्री-भूम्यृणादाने शास्योऽप्यर्थान्न[10] हीयते' ॥

( ना. स्मृ. २--२९ )

---

* अस्यार्थः—सर्वेष्वर्थविवादेषु न मन्युकृतेषु । वाक्छले प्रमादाभिधानेऽपि नावसीदति न पराजीयते । न प्रकृतादर्थाद्धियते इत्यर्थः । अत्रोदाहरणं पशु-स्त्रीत्यादि । पशु-स्त्रीभूम्यृणादाने प्रमादाभिधानेन दण्ड्योऽपि यथा प्रकृतादर्थान्नहीयते एवं सर्वेष्वर्थविवादेष्विति । अर्थविवादग्रहणात् मन्युकृतविवादेषु प्रमादाभिधाने प्रकृतादप्यर्थाद्धीयत इति गम्यते ।

---

१. C. reads °द्वेषात् for °द्वेषी. २. A. in margin and B. originally read उपस्थायी and in cor. नोपस्थायी. ३. D. C. read व्यपलापी for °प्रपलायी. ४. B. and D. originally substitute °व्य°. for °प्र°, but corrected B. reads °प्र°. ५. D. reads °धःकथितः for °धकथनम्. ६. C. reads संग्राह्य for संग्राह्यः. ७. C. reads पुंकृत° for न्यक्कृत° and D. °न्मन्युकृत°. ८. B originally reads प्रकृत° and corrected प्रकृति°; while D. reads प्रस्तुत°. ९ A. and B. read न च सीदति for नावसीदति. १०. B. originally reads °प्यर्थो न, but corrected °प्यर्थान्न, C. reads °प्यर्थो न for the same.

इति । नावसीदतीति प्रतिज्ञा[1]तार्थस्य न हीयत इत्युपपादनम् । अत्रापवादमाह कात्यायनः—

‘उभयोर्लिखिते वाक्ये प्रारब्धे कार्यनिर्णये ।
अयुक्तं तत्र यो ब्रूयात्तस्माद[2]र्थात्सहीयते’ ॥

इति । याज्ञवल्क्योऽपि—

‘सन्दिग्धार्थस्व[3]तन्त्रो यः साधयेद्यश्च निष्पतेत् ।
न चाहूतो वदेत्किञ्चिद्धीनो दण्ड्यश्च स स्मृतः’ ॥
(या. स्मृ. २. १६)

इति । अत्र दण्डग्रहणेनैव हीनत्वे सिद्धे पुनर्हीनग्रहणं प्रकृतादर्थाद्धीन इति ज्ञापनार्थम् । वादमुपक्रम्य[4] निवृत्तयोर्द्वयोरपि दण्डमाह बृहस्पतिः—

‘[5]पूर्वरूपे सन्निविष्टे विचा[6]रे संप्रवर्त्तिते ।
प्रशमं ये मिथो यान्ति दाप्यास्ते द्विगुणं दमम्[7]’ ॥

इति । तदेतन्नृ[8]पव[9]चनविषयमित्याह कात्यायनः—

‘आवेद्य प्रगृहीतार्थं प्रशमं यान्ति ये मिथः ।
सर्वे द्विगुणदण्ड्याः स्युर्विप्रलम्भान्नृपस्य ते’ ॥

---

यथा ‘अहमनेन शिरासि पादेन ताडितः’ इत्यावेदनसमये अभिधाय भाषाकाले ‘हस्तेन पादेन वा ताडितः’ इति वदन् न केवलं दण्ड्यः अपि तु पराजीयते च ।

---

१. B. C. D. read प्रतिज्ञानार्थस्य for प्रतिज्ञातार्थस्य. २. C. reads °चार्थात् for °दर्थात्. ३. C. reads संदिग्धार्थस्वतंत्रो for संदिग्धार्थं स्वतंत्रो. ४. C. reads उपक्रमनिवृत्तये; while D. reads उपक्रमतो निवृत्तये for उपक्रम्य निवृत्तयोः. ५. B. ori. reads पूर्वोत्तरे, cor. पूर्वरूपे. ६. C. reads वाचने for विचारे. ७. B. ori. पणम् and cor. दमम्. A. also in margin reads पणम्. ८. नृप° is omitted in C.; ९. D. reads °वचन° and C. °वाचनं.

इति । एवञ्चोऽवञ्चनया प्रशान्तानां न दण्डः । अत एव बृहस्पतिः--

‘ पूर्वो[1]त्तरेऽभिलिखिते प्रक्रान्ते कार्यनिर्णये ।
द्वयोः सन्तप्तयोः सन्धिः स्यादयःखण्डयोरिव ॥
साक्षिस[2]भ्यविकल्पस्तु भवेत्तत्रोभयोरपि ।
दोलायमा[3]नयोः सन्धिः प्र[4]कुर्यातां विचक्ष[5]णैः ॥
प्रमाणसमता यत्र भेदः शास्त्र-चरित्रयोः ।
तत्र राजाज्ञया सन्धिरुभयोरपि शस्यते’ ॥

इति । अर्थि-प्रत्यर्थिनोरभियोगे कञ्चिन्नियममाह याज्ञवल्क्यः ।

‘ अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।
अभियुक्तं च नान्येन नोक्तं विप्रकृतिं नयेत्’ ॥
(या. स्मृ. २. ९)

इति । प्रत्य[6]र्थी स्वस्मि[7]न् वादिना सम्पादितमभियोगमपरिह[8]त्य प्रत्यभियोगं न कुर्यात् । अर्थी चान्येनार्थिना अभियुक्तं प्रत्यर्थिनं तदभियोगपरिहारात्पुरा स्वयं नाभियुञ्ज्यात् । उभाभ्यामपि प्रतिज्ञारूपमुत्तरस्वरू[9]पं वाचा[10] यद्यथाभिहितं तत्तथैव समाप्तिपर्यन्तं निर्वाह्यम् । प्रत्यभियोगनिषेधस्यापवादमाह स एव—

‘ कुर्यात् प्रत्यभियोगं तु कलहे साहसेषु च’ ।
(या. स्मृ. २. १०)

---

१. C. reads वाऽ for चाऽ; while D. reads च. for the same. २. D. reads °सत्य°. for °सभ्य° ३. B. ori. दोलायमानौ, but cor. दोलायमानयोः. ४. C. reads प्रकुर्यात्तां for प्रकुर्यातां. ५. B. ori. विचक्षणः cor. विलक्षणैः. C. reads व्याचक्षाणः for विचक्षणैः. ६. D. reads प्रत्यर्थिनि for प्रत्यर्थी. ७. D. reads यस्मिन्. of for स्वस्मिन्, C. also as D.; ८. C. reads अनिस्तीर्य for ऽपरिहृत्य also insert नैनम् after ऽपरिहृत्य. D. inserts प्रत्युतैनम् after the same. ९. C. and D. read simply °रूपं for °स्वरूपं. १०. D. reads वचो for वाचा; while C. वा यस्मिन् instead of वाचा यद्यथा°.

इति। कलहे वाग्दण्डपारुष्यात्मके। साहसेषु च विष[1]-शस्त्रादिनिमित्तप्राणव्यापादनादिषु। प्रत्यभियोगसम्भवे त्वभियो[2]गमनिस्तीर्यापि स्वाभियोक्तारं[3] प्रत्यभियोजयेत्।

ननु—अत्रापि पूर्वपक्षानुपमर्दरूपत्वेनानुत्तरत्वात्[4] प्रत्यभियोगस्य प्रतिज्ञान्तरत्वे युगपद्व्यवहारासम्भवः समानः। सत्यम्। नात्र युगपद्व्यवहाराय प्रत्यभियोगोपदेशः। अपि तु न्यूनदण्डप्राप्तये अधिकदण्डनिवृत्तये वा[5]। तथा हि। 'अनेनाहं ताडितः शप्तो वा' इत्यभियोगे 'पूर्वमहमनेन ताडितः शप्तो वा' इति प्रत्यभियोगे दण्डाल्पत्वम्। यथाह कात्यायनः—

*'[6]पूर्वमाक्षारयेद्यस्तु नियतं स्यात् स दण्डभाक्।
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः' ॥

इति। पश्चाद्यः आक्षारयेत् सोऽप्यसत्कारी दण्डभाक्। तयोर्मध्ये

---

*विज्ञानेश्वरेण तु अयं श्लोकः नारदवाक्यत्वेनोद्धृतः व्यवहाराध्याये नवमश्लोकव्याख्याने। परमयं मुद्रितनारदस्मृतौ न दृश्यते। एवं युगपद्व्यवहारप्रवृत्त्यसम्भवेऽपि कलहादौ प्रत्यभियोगोऽर्थवान् भवति ऋणादादानादिषु तु निरर्थक एवेति तात्पर्यम्।

---

१. C. reads विष-शस्त्रादिभिः for विषशस्त्रादि°. २. C. and D. read °सम्भवेनाभियोग° for °सम्भवे त्वभियोगम्. ३. C. reads ह्यभि° for स्वाभि°. ४. C. reads चानुत्तरत्वात् for °नानुत्तरत्वात्. ५. D. reads च for वा. ६. B. originaly reads this verse in the following way—

पूर्वसाक्षी च यद्यस्तु नियतं स्यात् स दण्डभाक्।
पश्चाद्यः सोऽप्यसत्कारी पूर्वे भुवि नयोगुरुः ॥

but corrected reads thus—

पूर्वमावेदयेद्यस्तु नियतं स्यात्स दण्डभाक्।
पश्चाद्यः सोऽप्यसत्कारी पुर्वे तु विनयो गुरुः ॥

पूर्वस्य दण्डाधिक्यं इत्युत्तरपादः ।

अथ क्रियापादः । तच्च[1] याज्ञवल्क्यः संगृण्हाति[2]—

'ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनम्' ।

( या. स्मृ. २. ७ )

इति । बृहस्पतिस्तु तं विवृणोति—

'पूर्वपादे[3] विलिखितं[4] यथाक्षरमशेषतः[5] ।
अर्थी तृतीयपादे तु क्रियया प्रतिपादयेत्' ॥

इति । क्रियाया उपयोगमाह कात्यायनः—

'कारणात् पूर्वपक्षोऽपि उत्तरत्वं प्रपद्यते ।
अतः क्रिया तदा प्रोक्ता पूर्वपक्षप्रसाधनी[6]' ॥

इति । क्रियाभेदानाह बृहस्पतिः—

'द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा ।
एकैकाऽनेकधा भिन्ना ऋषिभिस्तत्ववेदिभिः ॥
साक्षि-लेख्यानुमानं च मानुषी त्रिविधा क्रिया ।
साक्षी द्वादशभेदस्तु लिखितं त्वष्टधा स्मृतम् ॥
अनुमानं त्रिधा[7] प्रोक्तं नवधा[8] दैविकी क्रिया' ।

इति । दैव-मानुषक्रिययोर्मानुष्याः प्राबल्यमाह कात्यायनः—

'यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् ।
मानुषीं तत्र गृण्हीयान्न तु[9] दैवीं क्रियां नृपः ॥

---

१. D. reads तत्र for तच्च. २. C. and D. omit संगृण्हाति. ३. B. C. D. read °वादे for °पादे. ४. B. reads ऽभिलिखितं for विलिखितं. ५. C. reads यवक्षार°, which seems incorrect; while D. reads यदक्षर° for यथाक्षर°. ६. C. D. read पूर्वपक्षस्य for पूर्वपक्षप्र°. ७. A. in margin and B. originally read द्विधा, but corrected B. reads त्रिधा. ८. D. reads मानुषी for नवधा. ९. C. substitutes च for तु.

यद्येकदेशप्राप्तापि क्रिया विद्येत मानुषी ।
सा न्याय्या न तु पूर्णापि दैविकी वदतां नृणाम्' ॥

इति । मानुषयोः साक्षि-लेख्ययोः सन्निपाते लेख्यस्य प्राबल्यमाह । स एव–

'क्रिया तु दैविकी प्राप्ता विद्यमानेषु साक्षिषु ।
लेख्ये च [2]प्रतिवादेषु न दिव्यं न च साक्षिणः' ॥

इति । लेख्यप्राबल्यस्य विषयमाह स एव–

'पूग[3]-श्रेणि-गणादीनां या स्थितिः परिकीर्तिता ।
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः' ॥

इति । क्वचित्तु[4] साक्षिणः प्राबल्यं तदाह स एव–

'दत्तादत्तेषु[5] भृत्यानां स्वामिनां निर्णये सति ।
विक्रियादानसंबन्धे क्रीत्वा धनमयच्छति[6] ॥
द्यूते समाह्वये चैव विवादे समुपस्थिते ।
साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम्' ॥

इति । क्वचिदनुमानं प्रबलम् । अनुमानं नाम भुक्तिः याज्ञवल्क्येनानुमानस्थाने भुक्तिशब्दप्रयोगात् ।

---

१. this verse is omitted in C. and D.; २. A. in margin, B. originally read साति instead of प्रति°, But in correction B. reads काति. ३. A. in marginal reading and B. in original reading reads पुरा for पूग°, but correction of B. is पूर्ण°. ४. in this quotation marked sentence. B. originally reads प्रागल्भ्यं, but corrected प्राधान्यं. C. साक्षिप्राबल्यस्य विषयमाह for साक्षिणः प्राबल्यं तदाह omitting क्वचित्. D. also reads as C.; ५. B. originally substitutes च for °षु. ६. B. originally reads अपृच्छति, corrected अयच्छति; while D. अनिच्छति for the same.

* ‘ प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।
(या. स्मृ. २. २२)

इति । भुक्तिप्राबल्य[1]विषयमाह कात्यायनः[2]:—

‘ द्वार[3]-मार्ग-क्रियाभोगे जल[4]वाहादिके तथा ।
भुक्तिरेव हि गुर्वी स्यान्न लेख्यं न च साक्षिणः’ ॥

इति । दैव[5]क्रियाविषयमाह व्यासः-

‘ रहःकृतं प्रकाशं च द्विविधं कार्यमुच्यते ।
प्रकाशं साक्षिभिर्भाव्यं दैविकेन रहःकृतम्’ ॥

इति । प्रकाशं साक्षिभिर्भाव्यमित्यस्यापवादमाह बृहस्पतिः—

‘ महापापाभिशापेषु निक्षेपे हरणे[6] तथा ।
दिव्यैः कार्यं परीक्षेत राजा सत्स्वपि साक्षिषु ॥
मणि[7]-मुक्ता-प्रवालानां कूटकृत्पाशहारकः ।
हिंसकोऽन्त्याङ्गनासेवी परीक्ष्यः शपथैः सदा ॥

---

*ननु—लिखितस्य साक्षिणां च शब्दाभिव्यक्तिद्वारेण शाब्देऽन्तर्भावात् युक्तं प्रामाण्यम् । भुक्तेस्तु कथं प्रामाण्यम्? । उच्यते । भुक्तिरपि कैश्चिद्विशेषणैर्युक्ता स्वत्वहेतुभूतक्रयादिकं अव्यभिचारादनुमापयन्ती अनुपपद्यमाना वा कल्पयन्तीत्यनुमानेनार्थापत्तौ चान्तर्भवतीति प्रमाणमेवेति न कश्चिद्विरोधः ।

---

१. B. reads °प्रागल्भ्य°, but corrected °प्राधान्य. C. भुक्तिविषयप्राबल्यम्. D. भुक्तिप्राबल्यस्य विषयम् for भुक्तिप्राबल्यविषयम्. २. C. reads बृहस्पतिः for कात्यायनः and D. व्यासः for the same. ३. This verse is omitted by C. and D.; ४. B, originally reads कुल°, but correction is स्थल°. ५. This sentence is not mentioned in C. and D.; also the word °विषय° after °क्रिया° is omitted by A.; ६. C. and D. read करणे for हरणे. ७. These three lines are not mentioned in C. and D.;

चिरन्तनोपांशुकृते चिरनष्टेषु साक्षिषु।
प्रदुष्टेष्वनुमानेषु दिव्यैः कार्यं विशोधयेत्' ॥

इति। कात्यायनोऽपि—

'समत्वं साक्षिणां यत्र दिव्यैस्तत्रापि शोधयेत्।
प्राणा[1]न्तिकविवादेषु विद्यमानेषु साक्षिषु ॥
दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः।
उत्तमेषु च सर्वेषु साहसेषु विचारयेत् ॥
सर्वं तु दिव्यदृ[2]ष्टेन सत्सु साक्षिषु वै भृगुः' ॥

इति। व्यासोऽपि—

'न मयैतत्कृतं पत्रं कूटमेतेन कारितम्।
अधरीकृत्य[3] तत्पत्रं ह्यर्थे दिव्येन निर्णयः ॥
यन्नामलेख्यं तल्लेख्यं तुल्यं लेख्यं क्वचिद्भवेत्।
अगृहीते धने तत्र कार्यो दैवे[4]न निर्णयः' ॥

इति। कात्यायनोऽपि—

'यत्र स्यात् सोपधं लेख्यं यद्रा[5]जश्रावितं यदि।
दि[6]व्येन शोधयेत्तत्र राजा धर्मासनास्थितः' ॥

इति। दिव्य-साक्षिविकल्पविषयमाह कात्या[7]यनः।

---

१. C. reads प्राणान्तिके for प्राणान्तिक°. २. A. in marginal reading and B. originally reads स्पृष्टे च for दृष्टेन and B. in correction reads दुष्टेन, as well as A. also, which seems incorrect. C. also reads दुष्टेन which is also incorrect; while D. reads दिव्यदृष्टेन for दिव्यं दृष्टेन. ३. B. originally reads °कृतं for °कृत्य, but corrected °कृत्य. ४. C. reads दिव्येन for दैवेन. ५. C. reads राज्ञा श्रावितं for राजश्रावितं and D. सप्रज्ञैश्चालितं for यद्राजश्रावितं. ६. B. originally reads अनेन and corrects दिव्येन. ७. B. C. D. read स एव for कात्यायनः.

'प्रक्रान्ते साहसे वादपारुष्ये दण्डवाचिके ।
बलोद्भूतेषु कार्येषु साक्षिणो दिव्यमेव वा ॥
ऋणे लेख्यं साक्षिणो वा युक्ति-लेख्यादयोऽपि वा ।
दैविकी वा क्रिया प्रोक्ता प्रजानां हितकाम्यया' ॥

इति । युक्तिस्तेनैव दर्शिता—

'साक्षिणो लिखितं भुक्तिः प्रमाणं त्रिविधं विदुः ।
लिङ्गोद्देशस्तु युक्तिः स्याद्दिव्यानीह विषादयः' ॥

इति । चोदनादीनां मुख्यानुकल्पभावमाह स एव—

'चोदना प्रतिकालं तु युक्तिर्लेखस्तथैव च ।
तृतीयः शपथः प्रोक्तस्तैर्ऋणं साधयेत् क्रमात्' ॥

इति । अस्यार्थस्तेनैव विवृतः—

'अभीक्ष्णं चोद्यमानोऽपि प्रतिहन्यान्न तद्वचः ।
त्रि-चतुः-पञ्चकृत्वो वा परतोऽर्थं समाचरेत् ॥
चोदनाप्रतिघाते तु युक्तिलेखैः समन्वियात् ।
देश-काला-ऽर्थसम्बन्ध-परिणाम-क्रियादिभिः ॥

---

१. B. C. D. read वादे for वाद° २. B. originally reads अभिभूतेषु for बलोद्भूतेषु and substitutes अत्रोद्° for बलोद्° in correction. ३. C. reads कृषे for ऋणे. ४. A. also in margin reads लेखा° B. originally reads लेखा° for लेख्या.° ५. D. substitutes च for वा. ६. B. originally reads भुक्ति: and corrects युक्तिः. ७. B. has original form भुक्तिः and corrected form युक्तिः. ८. B. has original reading दिव्यानाह; while corrects दिव्यानीह. ९. B. reads वादनादिनां originally and corrects चोदनादीनां. १०. C. and D. place तु at चोदनादीनां. ११. A. C. originally read यक्तिलेशः for युक्तिलेशः, but B. originally reads भुक्तिलेखः and in correction भुक्तिलेशः for युक्तिर्लेखः. १२. C. reads स ऋणं and D. तत्क्षणं for तैर्ऋणं. १३. B. originally reads भुक्तिलेशैस्तथान्वियात् and in correction युक्तिलेशः समन्वियात्. C. also the same as corrected B.; १४. B. reads परिमाण° for °परिणाम°.

युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत् ।
अर्थकालबलापेक्षमग्न्यम्बु-सुकृतादिभिः' ॥

इति । येयमुक्ता प्रमाणव्यवस्था साऽवश्यं परिपालनीया। तदाह नारदः—

'प्रमाणानि प्रमाणज्ञैः परिभाव्यानि यत्नतः ।
सीदन्ति हि प्रमेयानि प्रमाणैरव्यवस्थितैः' ॥
(ना. स्मृ. १. ६७.)

इति । अव्यवस्थितैः प्रमाणैः प्रमाणकथितोऽर्थो यतो विनश्यति अतः कालस्यानन्तत्वात् न किं प्रमाणमिति प्रत्याकलनकुशलैः प्रत्याकलयितव्यानीत्यर्थः*। यत्र प्रमाणैर्निर्णयः कर्तुं न शक्यते तदा राजेच्छया निर्णयः कार्यः । तदाह पितामहः—

* अत्र यत् किमपि प्रमेयं वस्तु-प्रकर्षेण मेयं प्रमेयं तत्वतो ज्ञेयमित्यर्थः । तत्सर्वं प्रमाणैः परिच्छिन्नं स्फुटीभवति । यथा—गणितं सङ्ख्यया मापनेन, तथात्रापि द्वात्रिंशच्छतभेदोपलक्षितो अष्टादशपदो व्यवहारः प्रमेयभूतो लिखित-साक्षि-भुक्ति-दिव्यप्रमाणैः परिच्छिन्नः स्फुटो भवति । अतो मतानि प्रमाणानि प्रमाणज्ञैः पुरुषैः साधु-नृपति-सभ्यादिभिः यत्नतः परिकल्प्यानि । यतः प्रमाणैर्व्यवस्थापरिभ्रष्टैः सद्भिः यानि प्रमेयाणि सन्दिग्धीकर्तुमभिप्रेतानि तानि सीदन्ति सिद्धिं न प्राप्नुवन्ति इत्यतः प्रमाणरक्षणे यत्न उपन्यस्त इति तात्पर्यम् ।

१. भुक्तिष्वर्थसमर्थासु is reading originally in B.; but correction is युक्तिष्वप्यसमर्थासु. २. B. reads अर्थकाले in original, but corrects अर्थकाल°. C reads अथ कालबलं प्रेक्ष्य. D. also as B. in original, for अर्थकालबलापेक्ष°. ३. C. reads येन युक्त्या प्रमाणव्यवस्थाऽवश्यं परिसमानेया and D. reads शपथमयुक्तिप्रमाणव्यवस्थयाऽवश्यं परिपालनीयम् for येयमुक्ता प्रमाणव्यवस्था साऽवश्यं परिपालनीया. ४. C. omits this verse. ५. D. and E. read पालनीयानि for परिभाव्यानि. ६. D. reads सीदन्ति for स्पन्दन्ति. ७. D. reads पुरुषस्यापराधतः for प्रमाणैरव्यवस्थितैः. ८. this portion including quotation marks is omitted in C. and D.; but only प्रमाणज्ञैः प्रमाणं is read in D. before प्रत्याकलयितव्यानि, which A. and B. do not mention.

'लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः ।
न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः ॥
निश्चेतुं ये न शक्याः स्युर्वादा[1]ः सन्दिग्धरूपिणः ।
तेषां नृपः प्रमाणं स्यात् स[2] सर्वस्य प्रभुर्यतः' ॥

इति क्रियापादो निरूपितः ।

## अथ साक्षिनिरूपणम् ।

तत्र साक्षिशब्दार्थं निर्वक्ति मनुः—

'स[3]मक्षदर्शनात्साक्षी श्रवणाच्चैव सिध्यति' ।

(म. स्मृ. ८. ७४)

इति । विष्णुरपि—

'समक्षदर्शनात्साक्षी श्रवणाद्वा' ।

(वि. स्मृ. ८. १३)

इति । चक्षुषा श्रो[4]त्रेण सह मनोव्यापारो यस्य स साक्षी इति ।

'साक्षाद्द्रष्टरि संज्ञायाम्' ।

(पा. सू. ३. ७.)

इति पाणिनिस्मरणात् । साक्षिणः प्रयोजनानि म[5]नुरेवाह—

'सन्दिग्धेषु च[6] कार्येषु द्वयोर्विवदमानयोः ।
दृष्ट-श्रुतानुभूतत्वात्साक्षि[7]भ्यो व्यक्तदर्शनम्' ॥

(ना. स्मृ. ३. १४७)

---

१. B. reads न च for वादाः. २. D. reads सर्वं तस्य प्रभावतः for स सर्वस्य प्रभुर्यतः. ३. B. reads originally समीक्ष्य and corrects समक्ष°. ४. C. and D. do not mention श्रोत्रेण. ५. A. in margin and B. in correction read नारद° for मनु°. ६. C. D. substitute तु for च. ७. C. reads साक्षिणो for साक्षिभ्यो.

इति। साक्षिलक्षणं तु मनुः[1]—

'यादृशा धनिभिः[2] कार्या व्यवहारेषु साक्षिणः।
तादृशान् संप्रवक्ष्यामि यथा वाच्यमृतं च तैः॥

गृहिणः पुत्रिणो मौलाः[3] क्षत्र-विट्-शूद्रयोनयः।
अर्थ्युक्तं साक्ष्यमर्हन्ति[4] न ये केचिदनापदि॥

आप्ताः सर्वेषु वर्णेषु कार्याः कार्येषु साक्षिणः।
सर्वधर्मविदोऽलुब्धा विपरीतांस्तु वर्जयेत्'॥

(म. स्मृ. ८. ६१–६३)

इति। व्यासोऽपि—

'धर्मज्ञाः पुत्रिणो मौलाः कुलीनाः सत्यवादिनः।
श्रौत-स्मार्तक्रियायुक्ता विगतद्वेष-मत्सराः॥

श्रोत्रिया न पराधीनाः सूरयश्चाऽप्रवासिनः।
युवानः साक्षिणः कार्या ऋणादिषु विजानता'॥

इति। याज्ञवल्क्योऽपि—।

'तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः॥

---

१. A. in margin and B. in correction read व्यासः for मनुः. B. has also व्यासः. २. A. B. read धर्मभिः which seems incorrect. D. reads अर्थिभिः for धनिभिः. ३. B. originally reads °णा मौलिकाः साक्ष्ये for °णः पुत्रिणो मौलाः. ४. B. originally reads साक्षिणो°, but corrected साक्ष्य°; while C. reads शास्त्र°.

ञ्यवराः साक्षिणो ज्ञेयाः श्रौत-स्मार्तक्रियापराः ।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः' ॥

(या. स्मृ. २. ६८–६९)

इति । स्मृत्यन्तरे ऽपि–

'कुलीना ऋजवः शुद्धा जन्मतः कर्मतोऽर्थतः ।
ञ्यवराः साक्षिणो ज्ञेया शुचयश्च सुबुद्धयः ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चाप्यनिन्दिताः ।
प्रतिवर्णं भवेयुस्ते सर्वे सर्वेषु वादिनः ॥
श्रेणिषु श्रेणिपुरुषाः स्वेषु स्वे चैव[३] वर्गिणः ।
बहिर्वासिषु बाह्याश्च स्त्रियः स्त्रीषु च साक्षिणः' ॥

(ना. स्मृ. ३. १५२–५५)

इति । बृहस्पतिः सङ्ख्यामाह–

'नव सप्त च पञ्च स्युश्चत्वारस्त्रय एव वा ।
उभौ वा श्रोत्रियौ ख्यातौ नैकं पृच्छेत् कदा च न' ॥

इति । यत्पुनस्तेनैवोक्तम्–

१. The portion is omitted in C. D. as.—

ञ्यवराः साक्षिणोः ज्ञेयाः श्रौत-स्मार्तक्रियापराः ।
यथाजाति यथावण सर्वे सर्वेषु वा स्मृताः' ॥

( या. स्मृ. २. ६८—६९ )

इति । स्मृत्यन्तरे ऽपि—

'कुलीना ऋजवः शुद्धा जन्मतः कर्मतो ऽर्थतः ।.

२. A. in margin and B. in correction read वा स्मृताः for वादिन. ३. A. in margin reads वर्णेषु and वर्गेषु; while B. originally reads वर्णेषु and in correction वर्गेषु and स्वे चैवं. C. and D. both read वर्गेषु for स्वे चैव.

'द्यूतकः[१] शाटिकाग्राही[२] कार्यमध्यगतस्तथा[३] ।
एक एव प्रमाणं स्यान्नृपोऽध्यक्षस्तथैव च' ॥

इति । व्यासोऽपि–

'शुचिक्रियश्च धर्मज्ञः[४] साक्षी योऽत्रानुभूतवाक्[५] ।
प्रमाणमेकोऽपि भवेत्साहसेषु विशेषतः' ॥

इति । यदपि कात्यायनेन–

'आभ्यन्तरस्तु विज्ञेयो[६] साक्ष्यमेकोऽपि[७] वा वदेत्[८]' ॥

इति तदेतत्सर्वमुभयानुमतसाक्षिविषयम् । तथा च नारदः–

'उभयानुमतो यः स्यात्[९] द्वयोर्विवदमानयोः ।
स साक्ष्येको ऽपि साक्षित्वे प्रष्टव्यः स्यात्तु संसदि' ॥

इति । साक्षिषु[१०] वर्ज्यानाह मनुः–

'नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः ।
न दृष्टदोषाः कर्तव्या[११] न व्याध्यार्ता न दूषिताः *' ॥

---

* दृश्यते चायं श्लोको नारदस्मृतावपि ( ३, १७७ ) ।

---

१. A. in margin B. in correction read दूतकः for द्यूतकः. C. also reads as A.; but B. D. read कृतकः and E. हृतकः. २. A. in margin and B. in correction read खाटिका° for शाटिका°, but C. and D. read शाटिका° for शाटिका°. ३. A. in margin and B, originally read °गमः for °गतः, but B. in correction reads °गतश्च यः. ४. C. reads सुक्रियश्च सुधर्मज्ञः for शुचिक्रियश्च धर्मज्ञः. ५. A. in margin and B. originally read पुत्रो for योऽत्रा°; while D. reads योक्त्रा° for योऽत्रा°. ६. B. originally reads निक्षेपो; while corrects विज्ञेयो. ७. B. reads originally साक्षिम् and D. reads साक्षिषु for साक्ष्यम्, but B. corrects साध्यम्. ८. B. originally reads वा वहेत् for वा वदेत्. C. also वा हरत् for वा वदत्; while D. reads वा भवेत् instead of वा वदेत्. ९. D. reads यस्तु for यः स्यात्. १०. A. in margin and B. originally read साक्ष्ये; while corrected B. reads साक्षिषु. ११. A. reads प्रष्टव्याः साक्षिणः प्रतिदूषिताः.

न साक्षी नृपतिः कार्यो न कारुक-कुशीलवौ ।
न श्रोत्रियो विलिङ्गस्थो न सङ्गेभ्यो विनिर्गतः ।
नाऽन्याधीनो न वक्तव्यो न दस्युर्न विकर्मकृत् ॥
न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रियैः ।
नार्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः ॥
न श्रमार्त्तो न कामार्त्तो न क्रुद्धो नापि तस्करः' ।

(म. स्मृ. ८. ६४-६८)

इति । नारदोऽपि—

'दास-नैकृतिक-क्रुद्ध-वृद्ध-स्त्री-बाल-चाक्रिकाः ।
मत्तोन्मत्त-प्रमत्तार्त्त-कितव-ग्रामयाजकाः ॥
महापथिक-सामुद्रिवणिक्प्रव्रजिताऽऽतुराः ।
व्यङ्गैक-श्रोत्रिया-ऽऽचारहीन-क्लीब-कुशीलवाः ॥
नास्तिक-व्रात्य-दाराग्नित्यागिनो ऽयाज्ययाजकाः ।
एकस्थाली सहावासी चर-ज्ञाति-सनाभयः ॥
वाग्दृष्टदोष-शैलूषा विषजीव्यहितुण्डिकाः ।
गरद-छद्म्यग्निदाता शूद्रापत्युपपातिकाः ॥

---

१. B. originally reads न for वि°, but corrects ऽपि. २. C. reads नैषां for नैको. ३. A. reads °विवशेन्द्रियः for °विकलेन्द्रियः. ४. C. reads °नैष्कृतिका-ऽश्रद्ध. ५. A. in margin and B. originally substitutes, °श्व° for °ऽऽर्त°, but corrects ऽर्ह°. ६. D. reads स्वरिचरः अरिज्ञाति° for सहावासी चर-ज्ञाति°. ७. D. reads °दोषि° for °दोष°. ८. A. in margin and B. originally reads.—

गरदा-ऽग्निद-कीनाश-शूद्रापत्युपपातकाः ।

while C. reads—

गरदाश्चाग्निदानाश्च शूद्रापत्येन पातकाः ।

but corrected B. reads—

गरदश्छद्म्यग्निदाता शूद्रापत्योपपातकाः ।

D. reads गरदश्चाग्निदश्चैव for गरदछद्म्यग्निदाता.

क्रान्तसाहासिक-श्रान्तनिर्धनान्त्यावसायिनेः ।
भिन्नवृत्ताऽसमावृत्य जड-तैलिक-मूलिकाः ॥
भूताविष्ट-नृपद्विष्ट-वर्षनक्षत्रसूचकाः ।
अघशंस्यात्मविक्रेतृ-हीनाङ्ग-भगवृत्तयः ॥
कुनखी श्यावदन्तश्च मित्रध्रुक्-शठ-शौण्डिकाः ।
ऐन्द्रजालिक-लुब्धोग्र-श्रेणीगणविरोधिनः ॥
वधकश्चित्रकृन्मूर्खः पतितः कूटकारकः ।
कुहकः प्रत्यवसितस्तस्करो राजपूरुषः ॥
मनुष्य-विष-मांसा-ऽस्थि-मधु-क्षीरा-ऽम्बु-सर्पिषाम् ।
विक्रेता ब्राह्मणश्चैव द्विजो वार्धुषिकश्च यः ॥
च्युतः स्वधर्मात् कुलिकः सूचको हीनसेवकः ।
पित्रा विवादमानश्च भेदकृच्चेत्यसाक्षिणः' ॥

( ना. स्मृ. ३. १७८–१८७ )

---

१. D. reads °शान्त° for °श्रान्त°. २. C. reads °न्त्यवसायिनः; while D. reads °न्त्यावसादिनः. ३. B. originally reads समावृत्त°, but corrects समावृत्य. C. reads समावृत्त° and D. समावृत्ताः for समावृत्य° also A. in margin reads the same. ४. A. in margin, and B. originally read °तल्पक-पौपिकाः, but B. corrects °तैलिक-पालिकाः. ५. C. reads °द्वेष्टा for °द्विष्ट°. ६. C. reads.

अन्धशंस्यात्मविक्रेतहीनाशनविवृत्तयः ॥

and D.

अघशंस्यात्मविष्कम्भविहीनाशनवृत्तयः ॥

७. A. in margin reads श्याम° for श्याव°. ८. D. also not mention °शठ°. ९. A. in margin, B. originally read °लुब्धोऽर्थ° for °लुब्धोग्र°; while corrected B. स्तब्धोग्र°. १०. A. in margin and B. originally read भ्रष्टभुग्मांस° for चित्रकृन्मूर्खः, but the reading is incorrect. B. corrects चित्रकृन्मूर्खः. ११. B. originally reads छलिकः and corrects कुलिकः.

इति। नैकृतिकः पररन्ध्रान्वेषणशीलः। चाक्रिको वैतालिकः समुद्रवणिग्वाहित्रयायी[1]। युग्मौ द्वित्व विशिष्टौ एकस्थालीत्यस्य[2] द्वेधाविग्रहः। एका पाकसाधनस्थाली यस्य। यद्वा[3] पाकस्थाली भोजनस्थानम्। एकं भोजनस्थानं यस्य। अरिषु चरतीत्यरिचरः। शत्रुसम्बन्धीति यावत्। सनाभयस्तु कात्यायनेन दर्शिताः—

मातुः स्वसुः सुताश्चैव सोदर्य-सुत-मातुलाः[4]।
एते सनाभयस्तूक्ताः साक्ष्यं तेषु न योजयेत् ॥

इति। शैलुषो नटः। विषजीवी विषस्य सङ्ग्रह-रक्षणादि-व्यापारे[5] नियुक्तः[6]। अहितुण्डिकः सर्पग्राही। गरदो विषदः। अग्निदो गृहदाहादिकर्त्ता। कीनाशः[7] कृपणः। श्रान्तः श्येनः। निर्धूतो बहिष्कृतः। अन्तावसायी[8] प्रतिलोमजः। भिन्नवृत्तो दुराचारः। असमावृत्तोऽनैष्टिकब्रह्मचारी। जडो-मन्दबुद्धिः। तैलिकस्तिलाघाती। वर्षसूचको वृष्टिसूचकः। नक्षत्रसूचको ज्योतिषः। अघशंसी परदोषप्रकाशकः। भगवृत्तिः[9] स्ववृत्तये भार्यावेश्यात्वकारी। शौण्डिको मद्यविक्रयी। देवताव्याजेन द्रव्योपजीविको[10] मूर्खः[11]। कुहको दाम्भिकः[12]। प्रत्यवसितः

---

१. D. reads स्वाहित्रयायी for वाहित्रयायी. २. D. reads °त्यत्र for °त्यस्य. ३. D. reads यद्वा पाकस्थाली, भोजनस्थाली वा एकं भोजनपात्रं स्थानं यस्येति for यद्वा पाकस्थाली भोजनस्थानम्। एकं भोजनस्थानं यस्य. ४. C. reads सोदर्यःसुतमातुलाः for सोदर्यसुतमातुलाः. ५. C. reads व्यापारैः for व्यापारे. ६. C. reads युक्तः for नियुक्तः. ७. C. reads हीनाशः for कीनाशः; while D. omits this. ८. C. and D. read अन्त्यावसायी for अन्तावसायी. ९. D. omits this sentence. १०. A. in margin and B. originally read द्रव्योपार्जकः for द्रव्योपजीविकः, but B. corrects द्रव्योपजीवकः. ११. A. in margin and B. in correction read मखः, मुखः and मंशः for मूर्खः, which is incorrcet; while D. reads आत्मविष्कंभः for मूर्खः. १२. A. has marginal reading दम्भारकिः and B. corrects दम्भाधिकः.

प्रव्रज्यातो निवृत्तः। सूचकः परदोषसूचनार्थं राज्ञा नियुक्तः। भेदकृत् पिशुनः। अन्ये प्रसिद्धाः। कात्यायनोऽपि—

'पिता बन्धुः पितृव्यश्च श्वशुरो गुरवस्तथा।
नगर-ग्राम-देशेषु नियुक्ता ये पदेषु[1] च॥
वल्लभाश्च न पृच्छेयुर्भक्तास्ते राजपुरुषाः'।

इति। न पृच्छेयुः भवदीयो विवादःकीदृश इति तैर्न-प्रष्टव्यम्। साक्षिणो न भवन्तीति यावत्। एतेषामसाक्षित्वे हेतुमाह नारदः—

'असाक्षिणो ये निर्दिष्टा दास-नैष्कृतिकादयः। (१८८)
तेषामपि न बालःस्यान्नैको न स्त्री न कूटकृत्॥
न बान्धवो न चारातिर्ब्रूयुस्ते साक्ष्यमन्यथा। (१९०)
बालोऽज्ञानादसत्यात्स्त्री पापाभ्यासाच्च कूटकृत्॥
विब्रूयुर्बान्धवाः स्नेहाद्वैरनिर्यातनादरिः। (१९१)
एकोऽलुब्धस्तु साक्षी स्याद्बहवः शुच्यो[2]ऽपि न स्त्रियः॥
स्त्रीबुद्धेरस्थिरत्वाच्च दोषैश्चान्यैश्च ये वृताः'॥
(ना. स्मृ. ३. १८८-१९९, ८. मनुः ७७)

इति। बृहस्पतिरपि—

'स्तेनाः साहसिका[3]ः षण्ढाः कितवाः सूचका[4]स्तथा।
न साक्षिणस्ते दुष्टत्वात् तेषु साक्ष्यं न विद्यते'॥

---

१. D. reads परेषु for पदेषु. २. A. originally reads तद्वच्छूद्रां; while B. reads in correction the same. ३. A. in origin and B. in correction C. also originally reads सौदासिकाः for साहसिकाः. ४. A. has marginal readings च्यवकाः and वधकाः; while B. reads originally बाधनाः and corrects सूचकाः, and चवकाः, D. reads वंचकाः all for सूचकाः.

इति याज्ञवल्क्योऽपि—

'श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजिता नराः ।
असाक्षिणस्ते वचनात्तत्र[1] हेतुरुदाहृतः' ॥

इति । उक्तानां साक्षिणामसम्भवे कार्यगौरवे च प्रतिप्रसवमाह नारदः—

'अ[2]साक्षिणो ये नि[3]र्दिष्टा [4]दासनैष्कृतिकादयः ।
कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः' ॥
(ना. स्मृ. ३. १८८)

इति । मनुरपि—

'स्त्रियाप्यसम्भवे कार्यं बालेन स्थविरेण वा ।
शिष्येण वापि दासेन बन्धुना भृतकेन वा' ॥
(म. स्मृ. ८. ७०)

इति । नारदोऽपि—

'स्तेयेऽपि साहसे चैव पारुष्ये सङ्गमे स्त्रियाः ।
श[5]मादीनां प्रयोगे च न दोषः साक्षिषु स्मृतः' ॥

इति । व्याघ्रोऽपि—

'साहसेषु च सर्वेषु स्तेये सङ्ग्रहणेषु च ।
वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः' ॥

इति । यत् पूर्वमुक्तं 'साक्षी द्वादशभेद' इति तान् द्वादशभेदानाह बृहस्पतिः—

---

१. A. in margin and B. originally and D. also, read °न नत्र for °नात्तत्र. २. D. reads साक्षिणो येन for असाक्षिणो ये. ३. D. substitutes च after ये. ४. C. reads शान्ताः for दास°. ५. A. in margin and B. originally read रागा° for शमा°, but B. in correction reads श्मा°; while D. reads ऋणादीनां for शमादीनां.

'लिखितो लेखितो गूढः[1] स्मारितः कुल्य-दूतकौ[2] ।
यदृच्छोत्तरसाक्षी च कार्यमध्यगतोऽपरः ॥
नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः' ।
प्रभेदमेषां वक्ष्यामि यथावदनुपूर्वशः ॥
जातिनामाभिलिखितं येन स्वं पित्र्यमेव[3] च ।
निवासञ्च समुद्दिष्टं स साक्षी लिखितः स्मृतः ॥
सन्धिक्रिया क्रियाभेदैस्[4]तस्य कृत्वा ऋणादिके ।
प्रत्यक्षं लिख्यते यस्य लेखितः स उदाहृतः ॥
कुड्यव्यवहितो[5] यस्तु श्राव्यते ऋणि[6]भाषितम् ।
विनिन्हुते यथा[7]भूतं गूढः साक्षी स कीर्तितः ॥
आहूय यः कृतः साक्षी ऋणन्यासक्रियादिके ।
स्मार्यते च मुहुस्तच्च स्मारितः सोऽभिधीयते ॥
विभागे दान आधाने ज्ञातिर्यत्रोपदिश्यते ।
द्वयोः समानो धर्मज्ञः[8] कुल्यः स परिकीर्तितः ॥
अर्थि-प्रत्यर्थिवचने शृणुयात्प्रेषितस्[9]तु यः ।
उभयोः सम्मतः साधुः दूतकः[10] स उदाहृतः ॥

---

१. D. reads मूढः for गूढः. २. A. originally and B. in correction read °सूतकौ. ३. D. reads पितृनाम च for पित्र्यमेव च. ४. D. reads.—

सन्धिक्रियादिभेदैर्यत्तत्कृत्वा च ऋणादिकम् ।

for

संधिक्रियाक्रियाभेदैस्तस्य कृत्वा ऋणादिके ।.

५. C. and D. read °व्यवस्थितो for °व्यवहितो. ६. D. reads ऋण° for ऋणि°. ७. B. originally reads तथा for यथा, but corrects कदा. ८. D. reads समानधर्मज्ञः for समानो धर्मज्ञः. ९. B. originally reads प्रेरितः for प्रेषितः. १०. B. originally reads सूचकः, but corrects दूतकः.

क्रियमाणे तु कर्तव्ये यः कश्चित् स्वयमागतः ।
अत्र साक्षी त्वमस्माकं उक्तो यादृच्छिको मतः ॥
यत्र साक्षी दिशं गच्छन्मुमूर्षुर्वा यथास्मृतम्[1] ।
अन्यं संश्रावयेत्तं तु विद्यादुत्तरसाक्षिणम् ॥
उभाभ्यां यस्य विश्वस्तं कार्यं वा विनिवेदितम् ।
कूटसाक्षी स विज्ञेयः कार्यमध्यगतस्तथा ॥
अर्थि-प्रत्यर्थिनोर्वापि यद्वृत्तं भूभृता स्वयम् ।
स एव तत्र साक्षी स्याद्विसंवादे द्वयोस्तथा ॥
निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ।
अध्यक्षः स[2]भ्यसहितः साक्षी स्यात्तत्र नान्यथा ॥

[3]व्युषितं छादितं यत्र सीमायां च समं ततः ।
स [4]कृतोऽपि भवेत्साक्षी ग्रामस्तत्र न संशयः' ॥

इति । तेष्वेव द्वादशसु विशेषान्तरमाह स एव–

'[5]लिखितौ द्वौ तथा गूढौ त्रि-चतुः पञ्च लेखिताः ।
यदृच्छास्मारिताः कुल्यास्तथा चोत्तरसाक्षिणः ॥
[6]दूतकः ख[7]टिकाग्राही कार्यमध्यगतस्तथा ।
एक एव प्रमाणं स्यान्नृपो ऽध्यक्षस्तथैव च ' ॥

---

१. B. originally reads मुमूर्षा च यथाश्रुतम्, but corrects मुमूर्षुर्वा यथास्मृतम्, C. reads °स्मृतः for °स्मृतम्. २. B. originally reads सत्य°, but corrects सभ्य°. ३. B. and C. read मुषितं, but B. corrects अध्युषितं. while D. reads उषितं A. also in marginal reading reads मुषितं. ४. A. in margin and B. originally read आहूतोऽपि for स कृतोऽपि, but B. corrects. सुकृतोऽपि. ५. A. and C. originally read दूषितौ for लिखितौ. ६. B. reads चूतकः and corrects दूतकः. ७. D. reads पृच्छकग्राही for खटिकाग्राही.

इति। लिखितादावपरं विशेषमाह नारदः—

'सुदीर्घेणापि कालेन लिखितः शुद्धिमाप्नुयात्।
आत्मनैव लिखेज्ज्ञातमज्ञस्त्वन्येन लेखयेत्'॥

( ना. स्मृ. ३. १६७ )

इति। यत्पुनस्तेनैवोक्तम्—

'अष्टमाद्वत्सरात्सिद्धिः स्मारितस्येह साक्षिणः।
आपञ्चमात्तथा सिद्धिर्यदृच्छोपगतस्य तु
आतृतीयात्तथा वर्षात्सिद्धिर्गूढस्य साक्षिणः।
आसंवत्सरात्सिद्धिं च वदन्त्युत्तरसाक्षिणः'॥

( ना. स्मृ. ३. १६८-१६९ )

इति। तदेतत्परमताभिप्रायेणोक्तम्। यतः स्वमतमुपरि स एवाह—

'[४]निर्णये कालनियमो न दृष्टः साक्षिणंप्रति।
स्मृत्यपेक्षं हि साक्षित्वमाहुः शास्त्रविदो जनाः॥
यस्य नोपहता बुद्धिः स्मृतिः श्रोत्रं च नित्यशः।
सुदीर्घेणापि कालेन स साक्षी साक्ष्यमर्हति'॥

( ना. स्मृ. ३. १७०--१७१ )

इति। साक्षिदोषोद्भावनं विदधाति बृहस्पतिः—

---

१. B. reads लिखितादेरपरं for लिखितादावपरं. २. A. in margin and B. originally read सिद्धिम्; while D. as usual read सिद्धिम्, but correct शुद्धिम्. ३. B. and D. read ज्ञातम् for जातम्. ४. A. B. read अथवा for निर्णये. ५. A. in marginal reading and B. originally read प्रायपेक्षं, but B. corrects श्रुत्यपेक्षं. ६. C. reads °द्भवनं for °द्भावनं.

'साक्षिणोऽर्थसमुद्दिष्टान्यस्तु दोषेण[1] दूषयेत् ।
अदुष्टं दूषयन्[2]वादी तत्समं दण्डमर्हति' ॥
साक्षिणो दूषणं हार्यं पूर्वसाक्षिपरीक्षणम्[3] ।
शुद्धेषु साक्षिषु ततः पश्चात्कार्यं विशोधयेत्' ॥

इति । कात्यायनोऽपि—

'सभासदां प्रसिद्धं यल्लोकसिद्धमथापि वा ।
साक्षिणां दूषणं ग्राह्यमसाध्यं[4] नान्यदिष्यते' ॥

इति । संसदि प्रतिवादिना साक्षिदूषणे कृते साक्षिणः प्रष्टव्याः । युष्मास्वभिहितो दोषः सत्यं न वा । ते च यदि दूषणमभ्युपगच्छन्ति तदा न साक्षिणः । अथ न अङ्गीकुर्वन्ति तदा दूषणवादिना दूषणक्रिया भाव्या । अथ सम्भावयितुं न शक्नोति तदा दूषणवादी सारानुसारेण[5] दण्ड्यः । यदि भावयति तदा तेन साक्षिणः सर्वे एव दुष्टा भवन्ति तदा अर्थिनः पराजयः । विपर्ययस्य[6] निश्चितत्वात् । अथ साक्षिणां दोषैः[7] सभ्यानां साध्यार्थसन्देहस्तदा वादविशेषः साधनान्तरेण[8] प्रवर्तयितव्यः । यदि साधनान्तरं पूर्वं[9] निर्दिष्टं तदा वादसमाप्तिः ।

'पूर्वमावेदितं नचेत्' ।

इति वचनात् । नचैतत्प्रस्तुतव्यवहाराद्व्यवहारान्तरम् । तस्मिन्नेव व्यवहारे प्रमाणसाधनदूषणव्यवहारादिति । एतत्सर्वं कात्यायन आह—

---

१. A. and B. read दोषेषु for दोषेण. २. D. reads दूषयेत् for दूषयन्. ३. D. reads °परीक्षणात् for °परीक्षणम्. ४. B. oringially reads न साध्यं, but corrects असाध्यं. ५. D. reads तदनुसारेण for सारानुसारेण. ६. A. in margin and. B. originally read विषयस्य for विपर्ययस्य. ७. C. reads दोषः for दोषैः. ८. C. reads साधारणान्तरेण for साधनान्तरेण. ९. D. inserts न after पूर्वं and before निर्दिष्टं.

'साक्षिदोषाः प्रयोक्तव्याः संसदि प्रतिवादिना।
पत्रे विलिख्य तान्सर्वान्वाच्यः प्रत्युत्तरं ततः॥
प्रतिपत्तौ तु साक्षित्वमर्हन्ति न कदाचन।
अतोऽन्यथाभावनायाः क्रियया प्रतिवादिना॥
अभावयन्धनं दाप्यः प्रत्यर्थी साक्षिणः स्फुटम्।
भाविताः साक्षिणः सर्वे साक्षिधर्मनिराकृताः॥
'प्रत्यर्थिनोऽर्थिनो वापि साक्षिदूषणसाधने।
प्रस्तुतार्थोपयोगेन व्यवहारान्तरं न च॥
जितः स विनयं दाप्यः शास्त्रदृष्टेन कर्मणा।
यदि वादी निराकांक्षः साक्षिसत्ये व्यवस्थितः'॥

इति। दोषोद्भावनकालमाह स एव—

'लेख्यदोषास्तु ये केचित्साक्षिणां चैव ये स्मृताः।
वादकाले तु वक्तव्याः पश्चादुक्तान् न दूषयेत्'॥

इति। उक्तान् पश्चाद्दूषयतो दण्डमाह स एव—

'उक्तेऽर्थे साक्षिणो यस्तु दूषयेत्प्रागदूषितान्।
स च तत्कारणं ब्रूयात् प्राप्नुयात् पूर्वसाहसम्॥
न तथ्येन प्रमाणन्तु दोषेणैव तु दूषयेत्।
मिथ्याभोगे तु दण्ड्यः स्यात्साध्यार्थाच्चापि हीयते'॥

इति। साक्षिपरीक्षामाह कात्यायनः—

---

१. C. and D. do not mention these three lines. २. C. and D. read साक्षिणं for साक्षिणः. ३. B. originally reads श्राविताः, but corrects भाविताः. ४. C. reads जितं for जितः. ५. B. originally reads ग्राप्यः, but corrects प्राप्तः. ६. D. reads वादकालेषु for वादिकाले तु. ७. A. originally reads उक्तार्थे. ८. C. and D. read नाऽतथ्येन for न तथ्येन.

'राजा क्रियां समीक्ष्यैव[1] यत्नान्न्यायं[2] विचारयेत् ।
लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः' ॥

इति । बृहस्पतिरपि—

'उपस्थिता परीक्ष्याः स्युः स्वरवर्णेङ्गितादिभिः' ।

इति । इङ्गितादीनि द[3]र्शयति नारदः—

'यस्त्वात्मदोषदुष्टत्वान्न द[4]क्ष इव लक्ष्यते ।
स्थानात्स्थानान्तरं गच्छेदेकैकं [5]चानुधावति ॥
कासत्यकस्माच्च भृशमभीक्ष्णं निश्वसत्यपि ।
विलिखत्यवनिं पद्भ्यां बाहू [6]वासश्च धूनयेत् ॥
भिद्यते मुखवर्णोऽस्य ललाटं स्विद्यते तथा ।
[7]शोषमागच्छतश्चो[8]ष्ठावूर्ध्वं तिर्यक् च वीक्षते ॥
त्वरमाण इवात्यर्थमपृष्टो बहु भाषते ।
कूटसाक्षी स विज्ञेयस्तं पापं विनयेद्भृशम्' ॥
( ना. स्मृ. ३. १९३–१९६ )

इति । सा[9]क्षिनियोजनमाह मनुः—

'सभान्तः साक्षिणः सर्वानर्थिप्रत्य-र्थिसन्निधौ । ( ७९ )
प्राड्विवाको नि[10]युञ्जीत विधिनाऽनेन सान्त्वयन् ॥

---

१. D. reads समाहूय for समीक्ष्यैव. २. B. originally reads यथान्यायं for यत्नान्न्यायं. ३. C. and D. read इंगितादीन् विशदयाति प्रजापतिः for इंगितादीनि दर्शयति नारदः. ४. B. originally reads अस्वस्थ°, but corrects न दक्ष°; while D. reads निःस्वस्थ° for न दक्ष°. ५. B. reads चानुभाषते C. reads वानुधावति for चानुधावति. ६. C. and D. read नासश्च, नासाञ्च respectively for वासश्च. ७. C. reads गोप°, which is incorrect, but D. reads सोऽय for शोष°. ८. C. reads चेष्टां पूर्वं निर्णीय वीक्षते. D. substitutes आगच्छते for आगच्छतः and the rest as C.; ९. C. and D. read साक्ष्यनुयोजन° for साक्षिनियोजन. १०. D. reads प्रयुंजीत for नियुञ्जीत.

यत् द्वयोरनयोर्वेत्थ कार्येऽस्मिंश्चेष्टितं मिथः।
तद्ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता॥
सत्यं[1] सत्ये ब्रुवन्साक्षी लोकान्प्राप्नोति पुष्कलान्।
इह चानुत्तमां कीर्तिं वागेषा[2]ब्रह्मपूजिता॥ (८१)
ब्राह्मणो वा मनुष्याणामादित्यस्तेजसामिव'।

(म. स्मृ. ८. ७९–८२.)

इति। नारदोऽपि—

'शिरो वा सर्वगात्राणां धर्माणां सत्यमुत्तमम्।
सत्येन पूयते[3] साक्षी धर्मः सत्येन वर्द्धते॥
[4]तस्मात्सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः।
सत्यमेव परं दानं सत्यमेव परंतपः॥
सत्यमेव परो धर्मो लोकानामिति[5] हि[6] स्मृतिः। (२१४)
सत्यं[7] देवाः समानेन मनुष्यास्त्वनृतं[8] स्मृतम्॥
इहैव तस्य देवत्वं यस्य सत्ये स्थिता मतिः। (२१५)
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम्॥
साक्षिधर्मे[9] विशेषेण सत्यमेव वदेत्ततः'। (२१६)

(ना. स्मृ. ३.)

इति। व्यासोऽपि—

---

१. D. reads ऋतं सत्यं for सत्यं सत्ये. २. C. reads वाह्येषा व्रतपूजिता. ३. C. and D. read पूज्यते for पूयते. ४. B. reads सत्यंसत्यं for तस्मात् सत्यं. ५. C. reads लोकान्तम् for लोकानाम्; while D. reads लोकोत्तरम् for लोकानाम्. ६. A. in margin and B. originally read विश्रुतिः for हि स्मृतिः; while हि is omitted in D.; ७. D. reads this whole line thus सत्ये देवाः समुद्दिष्टा मनुष्यास्त्वनृतं स्मृतम्. ८. A. in margin and B. originally read मनुष्याणां नवं, but B. corrects मनुष्यास्त्वनृतं. ९. A. and B. read साक्षिधर्मो for साक्षिधर्मे.

‘ साक्षिणा धर्मसंस्थेन सत्यमेव वदेत्ततः ।
साक्षिभावे नियुक्तानां देवता विप्रतिष्ठिताः ॥
पितरश्चावलम्बन्ते वितथाख्यानशङ्कया ।
सत्यवाक्ये व्रजन्त्यूर्ध्वं अधो यान्त्यन्यथा च ते ॥
तस्मात्सत्यं हि वक्तव्यं भवद्भिः सभ्यसन्निधौ’ ॥

इति । नारदोऽपि—

‘ कुबेरा-ऽऽदित्य-वरुण-शक्र-वैवस्वतादयः ।
पश्यन्ति लोकपालाश्च नित्यं दिव्येन चक्षुषा ’ ॥

इति । मनुरपि—

‘ आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथात्मनः ।
मावमंस्थाः स्वमात्मानं नृणां साक्षिणमुत्तमम् ॥
मन्यन्ते वै पापकृतो न कश्चित्पश्यतीति नः ।
तांस्तु देवाः प्रपश्यन्ति स्वश्चैवान्तरपूरुषः ॥
द्यौर्भूमिरापो हृदयं चन्द्रा-ऽर्का-ऽग्नि-यमाऽ-निलाः ।
रात्रिः सन्ध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम् ’ ॥

( म. स्मृ. ८. ८४-८६ )

इति । वसिष्ठोऽपि—

---

१. this line is not mentioned in A. B. C.; २. A. in margin and B. originally read ऽभियुक्तानां for नियुक्तानां. but B. corrects नियुक्तानां. ३. A. in margin reads विंशतिस्थिताः and विततः स्मृताः for विप्रतिष्ठिताः. B. originally reads विततं स्मृताः and corrects विंशतिस्थिताः for विप्रतिष्ठिताः; while C. reads विधिना स्थिताः and D. reads विंशतिःस्थिताः. ४. A. in marginal reading and B. originally read संशयः, but B. corrects शंकया. ५. B. originally reads °वाच्ये and corrects °वाक्ये; while D. reads सत्यवाक्यात्. ६. C. reads भान्त्यतथा तु ते for यान्त्यन्यथा च ते. B. with D. reads यान्ति तथाऽनृतात्. ७. A. B. C. read सत्य° for सभ्य°. ८. C. reads य° for स्व°. ९. the word व्रतज्ञाः wrongly wirtten in A. and B. as वृत्तज्ञाः; while, C. reads तनूजाः and D. तनुगाः for वृत्तज्ञाः.

'अथ चेदनृतं ब्रूयात्सर्वतोऽमेध्यलक्षणम्[1] ।
मृतो नरकमायाति तिर्यग्गच्छेदनन्तरम्[2]' ॥

इति । व्यासोऽपि--

'बध्यन्ते वारुणैः पाशैः साक्षिणोऽनृतवादिनः ।
षष्टिर्वर्षसहस्राणि तिष्ठन्ति[3] नरके ध्रुवम् ॥
तेषां वर्षशते पूर्णे पाश एकः प्रमुच्यते ।
कालेऽतीते मुक्तपाशास्तिर्यग्योनिषु[4] जायते' ॥

इति । वसिष्ठोऽपि—

'सूकरो दशवर्षाणि शतवर्षाणि गर्दभः ।
श्वा चैव दशवर्षाणि भासो वर्षाणि विंशतिः ॥
कृमि-कीट-पतङ्गेषु चत्वारिंशत्तथैव च ।
मृगस्तु दशवर्षाणि जायते मानवस्ततः ॥
मानुषत्वं यदाप्नोति मूकोऽन्धस्तु भवेत्तु सः ।
दारिद्र्यंतु भवेत्तस्य पुनर्जन्मानि जन्मानि' ॥

इति । पुराणेऽपि—

'स नरो[5] जायते पश्चात्संपरित्यक्तबान्धवः[6] ।
पङ्ग्वन्धबधिरो मूकः कुष्ठी नग्नः पिपासितः ॥
बुभुक्षितः शत्रुगृहे भिक्षते भार्यया सह ।

---

१. B. reads for ऽमेध्यवृत्तवत्°, but corrects ऽमेध°; while D. reads ऽसाध्य° for the cem. २. D. reads नीचत्वं यात्यनन्तरम् for तिर्यग्गच्छेदनन्तरम्. ३. C. and D. read तिष्ठन्ते for तिष्ठन्ति. ४. B. reads °योनिस्तु for °योनिषु; but corrects जन्मसु. ५. D. reads वानरो for स नरो. ६. B. reads सम्परित्यज्य originally, but corrects सम्परित्यक्त°; while D. reads परित्यक्तस्तु बान्धवैः for सम्परित्यक्तबान्धवः.

ज्ञात्वा त्वनृततो[1] दोषाञ्ज्ञात्वा सत्ये च सद्गुणान् ॥

श्रेयस्करमिहामुत्र सत्यं साक्ष्ये[2] वदेत्ततः' ।

इति । साक्षिप्रश्नप्रकारं दर्शयति मनुः—

'देव-ब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं[3] द्विजान् ।
उदङ्मुखान्प्राङ्मुखान्वा पूर्वाण्हे[4] वै शुचिः शुचीन्' ॥
(म. स्मृ. ८. ८७)

इति । सर्वानेवोपवेशयेत्—

'सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गो-बीज काञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ (११३)

ब्रह्मघ्नो ये स्मृता लोका ये च स्त्री-बालघातिनः ।
मित्रद्रुहः[5] कृतघ्नस्य ते ते स्युर्ब्रुवतो[6] मृषा ॥ (८९)

जन्मप्रभृति यत्किञ्चित्पुण्यं भद्र त्वया कृतम् ।
तत्ते सर्वं शुनो गच्छेद्यादि ब्रूयास्त्वमन्यथा ॥ (९०)

यावतो बान्धवान्यस्मिन्[7]हन्ति साक्ष्येऽनृतं वदन् ।
तावतः सङ्ख्यया तस्मिन् शृणु सौम्यानुपूर्वशः ॥(९७)

पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥

---

१. D. reads त्वनृतदोषांश्च for त्वनृततो दोषान्. २. C. and D. read साक्ष्यम् for साक्ष्ये. ३. D. reads °त्ततो for °दृतं. ४. B. C. D. substitute सर्वानेवोपवेशयेत् for पूर्वाण्हे वै शुचिः शुचीन्; A. reads this originally, but B. reads in correction. ५. B. reads originally मित्रद्रोहकृतघ्नश्च and corrects कृतघ्नस्य. C. reads मित्रभिदः and D. reads मित्रद्रोहि°, ६. C. reads ब्रुवतो नृपे and D. B. ब्रुवतस्तव. ७. D. reads तेऽस्मिन् for यस्मिन्.

हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्।
सर्वं भूम्यनृते हन्ति मास्म भूम्यनृतं वदेः[1] ॥
अप्सु[2] भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने।
अब्जेषु[3] चैव रत्नेषु सर्वेष्वश्ममयेषु च ॥
एतान्दोषानवेक्ष्य[4] त्वं सर्वथानृतभाषणे।
यथाश्रुतं यथादृष्टं सत्यमेवाञ्जसा वद' ॥ (१०१)
(म. स्मृ. ८.८९.११३)

इति। साक्षिणामुक्तिप्रकारमाह[5] वसिष्ठः—

'प्राङ्मुखोऽवस्थितः साक्षी शपथैः शापितः स्वकैः।
हिरण्यं गोशकृद्दर्भान्तान्संस्पृश्य[6] वदेदृतम्' ॥

इति। बृहस्पतिरपि—

'विहायोपानदुष्णीषं[7] दक्षिणं पाणिमुद्धरन्।
हिरण्यं गोशकृद्दर्भान्समादाय ऋतं वदेत्' ॥

इति। कात्यायनोऽपि—

'सभान्तस्थैश्च[8] वक्तव्यं साक्ष्यं नान्यत्र साक्षिभिः।
सर्वसाक्षिष्वयं[9] धर्मो नित्यः स्यात्स्थावरेषु च ॥

१. A. originally and also B. read वदीः, but corrects वदेः. C. also वदीः and D. वदः. २. C. reads पद्मुभूमिवत्; while D. reads यच्च for पद्मु. ३. B. originally reads अन्त्य°, but corrects अब्ज°; while C. reads आज्येषु which seems improper and D. अन्येषु for अब्जेषु. ४. A. in margin and B. in origin read दोषान्, but B. corrects एतान्. C. सर्वान् दोषानपेक्ष्य त्वं for एवं दोषानवेक्ष्य त्वं. D. also reads एवं दोषविधं ज्ञानं. ५. This heading and the verse under this is omitted in C. and D.; ६. B. reads समादाय for संस्पृश्य. ७. D. reads °उष्णीषौ for उष्णीषं. ८. B. originally reads सभान्तश्चैव, but corrects सभान्तस्थैश्च; while D. substitutes °स्तु for °श्च. ९. A. reads साक्षिसत्ये स्वयं for सर्व साक्षिष्वयं.

अर्थस्योपरि वक्तव्यं तयोरपि विना क्वचित् ।
चतुष्पादेष्वयं धर्मो द्विपदस्थावरेषु च ' ॥

इति । तयोः पूर्वोक्तयोः स्थानयोः । क्वचिद्वधरूपविवादे ताभ्यां स्थानाभ्यां विनापि साक्ष्यं वदेत् । तथा च स एव—

' वधे चेत् प्राणिनां साक्ष्यं वादयेच्छवसन्निधौ ।
तदभावे तु चिन्हस्य नान्यथैव प्रवादयेत् ' ॥

इति । ऋतं वदेदित्यस्य क्वचिद्विषयेऽपवादमाह मनुः—

' शूद्र-विट्-क्षत्र-विप्राणां यथोक्तौ तु भवेद्वधः ।
तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते ' ॥

इति । साक्ष्युक्तौ क्वचिद्विशेषमाह वसिष्ठः—

' समवेतैस्तु यद्दृष्टं वक्तव्यं तु तथैव तत् ।
विभिन्नैरेव तत्कार्यं वक्तव्यं स्यात् पृथक् पृथक् ॥
भिन्नकाले तु यत्कार्यं ज्ञातं वा यच्च साक्षिभिः ।
एकैकं वादयेत्तत्र विधिरेष प्रकीर्तितः ' ॥

इति । साक्ष्युक्तौ उपादेयं हेयं च विभजते मनुः—

' स्वभावेनैव यद्ब्रूयुस्तद्ग्राह्यं व्यावहारिकम् ।
अतो यदन्यद्विब्रूयुर्धर्मार्थं तदपार्थकम् ' ॥
(म. स्मृ. ८. ७८.)

इति । बृहस्पतिः—

१. C. reads समं for विना. २. C. and D. read प्राणिवध° for वध°. ३. C. reads चेह for च. ४. A. reads शिव° for शव°. ५. D. ऽसत्वे for ऽभावे. ६. C. and D. read °दिति शास्त्रस्य for °दित्यस्य. ७. A. reads सत्योक्तौ for यथोक्तौ. ८. D. reads तत्र for तद्धि. ९. A. reads विषयविशेषे for क्वचित्. १०. C. reads अनेकैरेव सत् for विभिन्नैरेव तत्. ११. A. reads स्यात् यत्र for वा यच्च. १२. D. reads वादिभिः for साक्षिभिः. १३. B. substitutes साध्योक्तौ. १४. D. reads न for वि°.

देश-काल-वयो-द्रव्य-संज्ञा-जातिप्रमाणतः ।
अन्यूनं चेन्निगदितं सिद्धं साध्यं विनिर्दिशेत् ॥
निर्दिष्टेष्वर्थजातेषु[1] साक्षी[2] चेत् साक्ष्य आगते[3] ।
न ब्रूयादक्षरसमं न तन्निगदितं भवेत् ॥
यस्याशेषः[4] प्रतिज्ञार्थः साक्षिभिः प्रतिवर्णितः ।
सोऽजयी[5] स्यादन्यनीतं साध्यार्थं न समाप्नुयात् ॥
ऊनमभ्यधिकं वार्थं[6] विब्रूयुर्यत्र साक्षिणः ।
तदर्थानुक्तविज्ञेयमेष[7] साक्षिविधिः स्मृतः' ॥

इति । कात्यायनोऽपि—

'न ददाति[8] हि यः साक्ष्यं जानन्नपि नराधमः ॥ ४८ ॥
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन[9] चैव हि' ।
(या. स्मृ. २.७७)

इति । कूटसाक्षिणो दण्डमाह मनुः—

'लोभान्मोहाद्भयान्मैत्रात्कामात्क्रोधात्तथैव च ।
अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते ॥ ११८ ॥
एषामन्यतमे स्थाने[10] यः साक्ष्यमनृतं वदेत् ।
तस्य दण्डविशेषं तु प्रवक्ष्याम्यनुपूर्वशः ॥
लोभात्सहस्रं दण्ड्यस्तु मोहात्पूर्वं तु साहसम् ।
भयाद्वे मध्यमं दण्ड्यो मैत्रात्पूर्वं[11] चतुर्गुणम् ॥

१. C. and D. °वादेषु for °जातेषु. २. D. reads वादी for साक्षी. ३. C. reads °वर्जने for आगते. ४. C. reads यंत्रा° for यस्या°. ५. A. and D. reads स जयी for सो ऽजयी. ६. A. reads सार्थं for वार्थं. ७. A. reads अनुक्तार्थं तु तत् ज्ञेयम्. ८. D. reads ददातीह for ददाति हि. ९. D. reads दण्ड्यो न for दण्डेन. १०. C. and D. read ऽन्यतमत्वेन for ऽन्यतमे स्थाने. ११. D. reads मैत्र्यात् for मैत्रात्.

कामाद्दशगुणं पूर्वं क्रोधात्तु द्विगुणं परम्।
अज्ञानाद्वे शते पूर्णे बालिश्याच्छतमेव तु॥
एतानाहुः कूटसाक्ष्ये प्रोक्तान्दण्डान्मनीषिभिः।
धर्मस्याव्यभिचारार्थमधर्मनियमाय च॥
कूटसाक्ष्यं तु कुर्वाणान् त्रीन् वर्णान् धार्मिको नृपः।
प्रवासयेद्दण्डयित्वा[1] ब्राह्मणं तु विवासयेत्॥ १२३॥
यस्य पश्येत्तु[2] सप्ताहादुक्तवाक्यस्य साक्षिणः।
रोगोऽग्निर्ज्ञातिमरणमृणं[3] दाप्यो दमञ्च सः*'॥

(म. स्मृ. ८. ११८-१२३)

इति। कात्यायनः—

'साक्षी साक्ष्यं न चेद्ब्रूयात् स[4] सदण्डं वहेदृणम्।
अतोऽन्येषु विवादेषु त्रिशतं दण्डमर्हति'॥

इति। बृहस्पतिः—

'आहूतो यस्तु नागच्छेत्साक्षी रोगविवर्जितः।
ऋणं दमञ्च दाप्यः स्यात्त्रिपक्षात्परतस्तु सः'॥

इति। प्रजापतिरपि—

---

*नायं श्लोक उपलभ्यते मुद्रितमनुस्मृतिपुस्तकेषु। केचन कात्यायनवचनत्वेनोदाहरन्ति।

---

१. B. originally reads दण्डशिरः, but corrects दण्डयित्वा. २. A. reads दृश्येत्तु; while B. in correction reads दृश्येत for पश्येत्तु. B's form seems correct. ३. D. reads रोगा-र्तिज्ञाति° for रोगोऽग्निर्ज्ञाति°. ४. D. reads समदण्डं वहेन्नृणम् for स सदण्डं वहेदृणम्. E The quotation of D. seems wrong.

'अपृष्टसत्यवचने पृष्टस्याकथने तथा।
साक्षिणश्च निरो[1]द्धव्या ग[2]र्ह्या दण्ड्याश्च धर्मतः' ॥

इति। साक्षिणामनेकविधत्वे ग्रा[3]ह्यान्विभजते बृहस्पतिः—

'साक्षिद्वैधे प्रभूताः स्यु[4]र्ग्राह्याः साम्ये गुणान्विताः।
गुणिद्वैधे क्रियायुक्तास्त[5]त्साम्ये शुचिमत्तराः' ॥

इति। मनुरपि—

'ब[6]हुत्वं प्रतिगृह्णीयात्साक्षिद्वैधे नराधिपः।
समेषु तु गुणोत्कृष्टान्गुणिद्वैधे द्विजोत्तमान्' ॥
(म. स्मृ. ८.७३)

इति। यत्तु कात्यायनेनोक्तम्—

'साक्षिणां लिखितानां च निर्दिष्टानां च वादिनाम्।
तेषामेकोऽन्यथावादी भेदात्सर्वे न साक्षिणः' ॥

इति। तत्र सर्वशब्देनान्यथावादिसहितानामेव बहूनामसाक्षित्वमुक्तम्। न पुनः केवलानामिति मन्तव्यम्। अन्यथा 'द्वैधे बहूनाम्' इत्यादि वचनविरोधात्। अने[7]कत्वे विशेषान्तरमाह नारदः—

'द्वयोर्विवदतोर[8]र्थे द्वयोः सत्सु च साक्षिषु।
पूर्वपक्षो भवेद्य[9]स्य भवे[10]युस्तस्य साक्षिणः ॥

१. B. originally reads विरोद्धव्याः for निरोद्धव्याः. २. C. reads अर्थदण्ड्याः for गर्ह्या दण्ड्याः. ३. C. and D. read ऽग्राह्यान् for ग्राह्यान् and the preceding word °विधत्वे is substituted by °विधो. ४. A. and B. read स्तु° for स्युः. ५. C. reads स्यात् for तत्°; while D. reads साम्येऽनु for तत्साम्ये. ६. B. in correction and C. read नाहूतः; while for the same D. नाहितम् for बहुत्वम्. ७. D. reads साक्षित्वे for अनेकत्वे. ८. A. B. originally read मध्ये for अर्थे. ९. A. and B. originally read यस्तु for यस्य. १०, D. reads भावयेत् or भवेयुः.

आधर्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत् ।
विवादे साक्षिणस्तत्र प्रष्टव्याः प्रतिवादिनः' ॥

इति । अत्रोदाहरणम्—यत्रैकः क्षेत्रं प्रतिग्रहेण[1] प्राप्य भुक्त्वा त्यक्त्वा सकुटुम्बो देशान्तरं प्राप्तः । पुनरन्येन[2] लब्धं भुक्तं च सोऽपि देशविप्लव[3]वादिना देशान्तरं सकुटुम्बो गतः । पुनस्तौ द्वावपि चिरन्तनका[4]लापगमे स्ववृत्तिलोभेन स्वस्था[5]नमागत्य [6]क्षेत्रविवादनिर्णयार्थं मानं युगपदायतौ । तत्रैकः प्रतिजानीते । [7]जयवर्माख्येन राज्ञा स्वराज्यकाले मह्यं दत्तं मदीयमेवैतत्क्षेत्रम् । अन्योऽपि प्रतिजानीते । धर्मपालेन राज्ञा मह्यं दत्तं मदीयमेवैतत्क्षेत्रम् । अथचैकस्यैवं प्रतिज्ञा । सत्यं [8]जयवर्माख्येनास्मै दत्तम् । एतस्य हस्तात्धर्मपालेनैतत्क्षेत्रं क्रयेण गृहीत्वा मह्यं दत्तमिति । सन्ति च द्वयोरपि वादिनोः साक्षिणः तत्रेदमुक्तं 'द्वयोर्विवदतोरर्थ' इति । अयमर्थः—यस्य विवदमानस्य पूर्वपक्षो भवेत्पूर्वकालिकस्य दानस्य [9]स्वत्वहेतुतयोपन्यासेन[10] पक्षो भवेत् । तस्य[11] साक्षिणः सभ्यैः प्रष्टव्या भवेयुः । नेत[12]रस्य साक्षिणः । तेषामुत्तर-

१. A. and B. add क्षेत्रं after प्रतिग्रहेण. २. B. originally reads पुनरप्यनेन for पुनरन्येन. ३. D. substitutes °विभ्रमा° for °विप्लवा°. ४. D. reads °कालागमे for °कालापगमे. ५. D. substitutes स्वकीयम् for स्वस्थानम्. ६. C. and D. has only the word क्षेत्रम् for क्षेत्रविवादनिर्णयार्थं मानं युगपदायतौ। तत्रैकः प्रतिजानीते। जयवर्माख्येन राज्ञा स्वराज्यकाले मह्यं दत्तं मदीयमेवैतत्क्षेत्रम्. ७. B. reads धर्मपालेन in correction, also C. omits the following:— जयवर्माख्येन राज्ञा स्वराज्यकाले मह्यं दत्तं मदीयमेवैतत्क्षेत्रम्. ८. D. reads नयवर्माख्येन for जयवर्माख्येन. ९. C. reads सत्व° for स्वत्व°. १०. D. inserts यः after उपन्यासेन and before पक्षो. ११. B. originally reads तत्र, but corrects तस्य, १२. C. and D. missingly read अन्येतरस्य साक्षिणः and D. अन्यतरस्य साक्षिणश्च for नेतरस्य साक्षिणः.

कालदान[1]साक्षित्वेनाऽसाक्षिप्रायत्वात्। यदा पुनरितरप्रतिज्ञातदार्थवशेनैतस्य हस्तात्क्रीत्वा मह्यं दत्तमित्यादिना पूर्वदानोपन्यासपक्षस्याधर्यं अकिञ्चित्करत्वं भवेत् तदा पश्चात्प्रतिजानानस्य साक्षिणः [2]प्रष्टव्याः। न पूर्वं प्रतिजानानस्य। असिद्धसाध्य[3]त्वेन वैयर्थ्यात्। किन्तु [4]असाक्षित्वादुपेक्षणीयाः। एतदेवाभिप्रेत्य याज्ञवल्क्य आह—

'साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः।
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः'॥

(या. स्मृ. २. १७.)

इति। [5]साक्षिणमन्तरेण ज्ञानोपायमाह नारदः—

'[6]असाक्षिप्रत्ययास्त्वन्ये षड्वादाः परिकीर्तिताः।
उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः॥
केशाकेशि गृहीतश्च युगपत्पारदारिकः।
कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः॥
तथा कुठारपाणिस्तु वनछेत्ता प्रकीर्तितः।
प्रत्यग्रचिन्हैर्विज्ञेयो दण्डपारुष्यकृन्नरः॥
असाक्षिप्रत्यया ह्येते पारुष्ये [7]तत्परीक्षणम्'।

(ना. स्मृ. ३. १७२–१७५)

इति। शङ्ख--लिखितावपि—

---

१. C. reads °साक्षिप्रायत्वात् for °साक्षित्वेनासाक्षिप्रायत्वात्; while D. साक्षिणामसाक्षिप्रायत्वात्, for the original reading. २. D. omits प्रष्टव्याः न पूर्वं प्रतिजानानस्य । असिद्धसाध्यत्वेन वैयर्थ्यात्। किं तु असाक्षित्वादुपेक्षणीयाः । एतदेवाभिप्रेत्य याज्ञवल्क्यआह—'साक्षिषूभयतः सत्सु साक्षिणः. ३. C. reads °साध्यत्वं न for °साध्यत्वेन. ४. A. reads असाक्षित्वेऽनादरणीयाः. ५. D. reads साक्ष्यमन्तरेण for साक्षिणमन्तरेण. ६. B. in correction and A. and C. read ससाक्षि° for असाक्षि°. ७. D. substitutes नु for तत्.

'केशाकेशिग्रहणात्पारदारिकः । उल्काहस्तोऽग्निदः[1] ।
शस्त्रपाणिर्घातकः । लोप्त्रहस्तश्चोरः' ।

इति ।

अथ लेख्यम् ।

साक्षिनिरूपणोपसंहारपुरःसरं लिखितनिरूपणं करोति बृहस्पतिः—

'साक्षिणामेष[2] निर्दिष्टः सङ्ख्या-लक्षणनिश्चयः ।
लिखितस्याधुना वच्मि विधानमनुपूर्वशः ॥
ऋणादिकेऽपि समये भ्रान्तिः सञ्जायते यतः[3] ।
धात्रा[4]ऽक्षराणि सृष्टानि[5] पत्रा[6]रूढान्यतः पुरा ॥
देशाचारयुतं वर्ष-मास-पक्षादिवृद्धिमत् ।
ऋणि-साक्षि-लेखकानां हस्तांकं लेख्यमुच्यते ॥
राजलेख्यं स्थानकृतं स्वहस्तलिखितं तथा ।
लेख्यन्तु त्रिविधं प्रोक्तं विदुरेवं बुधाः[7] पुनः' ॥

इति । एतत्त्रयं द्वैविध्येन[8] संगृण्हाति वसिष्ठः—

'लौकिकं राजकीयं च लेख्यं विद्यात् द्विलक्षणम्' ।

इति । तयोरवान्तरभेदानाह बृहस्पतिः—

'भाग[9]-दान-क्रयाधानं संविद्दास[10]-ऋणादिभिः ।
सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम् ॥

---

१. C. and D. read ऽग्निधारा for ऽग्निदः. २. D. reads °एव for एष. ३. C. reads यदा for यतः. ४. B. originally reads धारा° for धात्रा, but corrects substituting त्रा for रा°. ५. A. and B. originally read दृष्टानि and सृष्टानि respectively. ६. C. reads यत्र° for पत्रा°; while D. reads यंत्रा°. ७. D. reads वित्तं तत् द्विविधा for विदुरेवं बुधाः. ८. C. and D. read द्विविधेन for द्वैविध्येन. ९. A. B. in correction and C. read भागाधानं for भाग-दान°. १०. A. B. in correction and C. read संविदा स for संविद्दास°.

भ्रातरः संविभक्ता ये स्वरुच्या तु परस्परम् ।
विभागपत्रं कुर्वन्ति भागलेख्यं तदुच्यते ॥[1]
भूमिं दत्वा तु यत्पत्रं कुर्युश्[2]चन्द्रार्ककालिकम् ।
अनाछेद्यमनाहार्यं[3] दानलेख्यं तदुच्यते[4] ॥
गृह-क्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् ।
पत्रं कारयते यत्र क्रयलेख्यं तदुच्यते ॥
जङ्गमं स्थावरं बन्धं[5] दत्वा लेख्यं करोति यः ।
गोप्य-भोग्यक्रियायुक्तमाधिलेख्यं तु तन्मतम्[6] ॥
ग्रामादिसमयात्कुर्यान्मतं लेख्यं परस्परम् ।
राजाविरोधि धर्मार्थं संवित्पत्रं वदन्ति तत् ॥
वस्त्रान्नहीनः कान्तारे लिखितं कुरुते तु यत् ।
कर्माणि ते करोमीति दासपत्रं[7] तदुच्यते ॥
धनं वृध्या गृहीत्वा तु स्वयं कुर्याच्च कारयेत् ।
उद्धारपत्रं तत्प्रोक्तं ऋणलेख्यं मनीषिभिः ॥
दत्वा भूम्यादिकं राजा ताम्रपत्रे पटेऽथ वा ।
शासनं कारयेद्धर्मं[8] स्थान-वंशादिसंयुतम् ॥
अनाछेद्यमनाहार्यं सर्वं भाव्य[9]विवर्जितम् ।
चन्द्रार्कसमकालीनं पुत्र-पौत्रान्वयानुगम् ॥

---

१. C. reads कुर्वन्ति भागलेख्यं तत् and D. कुर्वन्ति भागपत्राणि for विभागपत्रं कुर्वन्ति. २. C. and D. read कुर्वन् for कुर्युः. ३. C. reads अनादेयम् for अनाच्छेद्यम्. ४. D. substitutes विदुः for उच्यते. ५. D. reads बद्धं यत्र for बन्धं दत्वा; while C. substitutes बली for दत्वा. ६. A. B. C. read तत्कृतम् for तन्मतम्. ७. D. reads वासपत्रं for दासपत्रं. ८. D. reads धर्मे and °वंश्यादि° for धर्मं and °वंशादि° respectively. ९. A. originally and D. reads भय° for भाव्य°.

दातुः पालयितुः स्वर्ग्यं[1] हर्तुर्नरकमेव च ।
षष्टिवर्षसहस्राणि दानच्छेदफलं लिखेत् ॥
समुद्रा[2]-वर्ष-मासादि धनाध्यक्षाक्षरान्वितम् ।
ज्ञातं[3] मयेति लिखितं सन्धिविग्रहलेखकैः ॥
एवंविधं राजकृतं शासनं तदुदाहृतम्[4] ।
देशादिकं यस्य राजा लिखितं तु प्रयच्छति ॥
सेवा-शौर्यादिना[5] तुष्टः प्रसादलिखितं तु तत् ।
पूर्वोत्तरक्रियावा[6]दनिर्णयान्ते[7] यदा नृपः ॥
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते' ॥

इति । यत्पूर्वमुदाहृतं 'लिखितं दशधा स्मृतम्' इति तद्दिशदत्वेन संपन्नम्[8] । लौकिकस्य सप्तविधत्वात् । राजपत्रस्य त्रिविधत्वात् । शासनमेकं, जयपत्रं द्वितीयं आज्ञा[9]-प्रज्ञापनपत्रयोरेकीकारेण तृतीयं द्रष्टव्यम् । वसिष्ठस्तु तयोर्भेदमाश्रित्य चातुर्विध्यमाह—

'शासनं प्रथमं ज्ञेयं जयपत्रं तथापरम् ।
आज्ञा[10]प्रज्ञापनापत्रं राजकीयं चतुर्विधम्' ॥

इति । तत्र शासन-जयपत्रे पूर्वमुदाहृते । शासने विशेषमाह याज्ञवल्क्यः—

---

१. D. reads स्वर्गं for स्वर्ग्यं. २. D. reads समुद्रं for समुद्रा°. ३. D. reads दानमेवेति for ज्ञातं मयेति. ४. C. and D. read समुदाहृतम् for तदुदाहृतम्. ५. C. reads °सौख्यादिना for °शौर्यादिना. ६. D. substitutes °पाद° for °वाद°. ७. C. and D. read °निर्णयान्तं for °निर्णयान्ते. ८. D. adds तु after तत् and substitutes संमतम् for संपन्नम्. ९. D. reads राज्ञः शासनपत्रयोरेकीकरणे for आज्ञाप्रज्ञापनपत्रयोरेकीकारेण; while C. omits the portion शासनमेकम् जयपत्रं द्वितीयं आज्ञा-प्रज्ञापनपत्रयोरेकीकारेण तृतीयं द्रष्टव्यम् । वसिष्ठस्तु तयोर्भेदमाश्रित्य चातुर्विध्यमाह—'शासनं प्रथमं ज्ञेयम्. १०. C. reads आज्ञापनायनं for आज्ञाप्राज्ञापन°, D. reads आज्ञापत्रं प्रसादोत्थं for आज्ञाप्रज्ञापनापत्र.

'दत्वा भूमिं[1] निबन्धं वा कृत्वा लेख्यं तु कारयेत् ।
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः' ॥

(या. स्मृ. १. ३१८)

इति । अत्र निबन्धो वाणिज्यादिकारिभिः[2] प्रतिवर्षं प्रतिमासं वा किञ्चिद्धनं अस्मै ब्राह्मणायास्यै देवतायै वा देयमित्यादि-प्रभुसमयलभ्योऽर्थः । अत्र यद्यपि धनदातृत्वं वाणिज्यादिकर्तु-स्तथापि निबन्धनकर्तुरेव[3] पुण्यम् । तदुद्देशेनैव तस्य प्रवृत्तेः । व्यासोऽपि—

'राज्ञा तु स्वयमादिष्टः सन्धिविग्रहलेखकः ।
ताम्रपट्टे पटे वापि प्रलिखेद्राजशासनम् ॥
क्रिया-कारकसम्बन्धं समासार्थ-क्रियान्वितम्' ।

इति । क्रिया-कारकयोः सम्बन्धो यस्मिन्शासने तत्तथोक्तम् । समासार्थक्रियान्वितं संक्षिप्तार्थक्रियया[4] समन्वितमित्यर्थः । तत्रलेखनीयार्थमाह याज्ञवल्क्यः—

'अभिलेख्यात्मनो[5] वंश्यानात्मानं च महीपतिः । ३१९
प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम्[6] ॥

(या. स्मृ. १. ३१९—३२०)

इति । व्यासोऽपि—

---

१. C. reads कार्यनिबन्धं for भूमिं निबन्धं. २. C. and D. read °धिकारिभिः for °दिकारिभिः. ३. D. reads प्रबन्ध° for निबन्धन°. ४. D. reads संक्षिप्तार्थं क्रियया and समक्रियया for संक्षिप्तार्थक्रियया. ५. D. reads लिखेच्चैव for अभिलेख्य. ६. A. in margin and B. C. originally read °भेदो° for °छेदो°.

समा-मास-तदर्धा-ऽहर्नृपनामोपलक्षितम् ।
प्रतिगृहीतृजात्यादिसगोत्रब्रह्मचारिकम् ॥
स्थान-वंशादिपूर्वं च देश-ग्राममुपागतम् ।
ब्राह्मणांस्तु तथैवान्यान्मान्यानधिकृताँल्लिखेत् ॥
कुटुम्बिनोऽथ कायस्थ-दूत-वैद्य-महत्तरान् ।
ते च चण्डालपर्यन्तान् सर्वान् सम्बोधयन्निति ॥
मातापित्रोरात्मनश्च पुण्यायामुकसूनवे ।
दत्तं मयाऽमुकायाथ दानं सब्रह्मचारिणे ' ॥

इति । अपरमपि विशेषं स एवाह—

' सन्निवेशं प्रमाणं च स्वहस्तं च लिखेत्स्वयम् ।
मतं मेऽमुकपुत्रस्य अमुकस्य महीपतेः ॥
सामान्योऽयं धर्मसेतुर्नृपाणां
काले काले पालनीयो भवद्भिः ।
सर्वानेतान्भाविनः पार्थिवेन्द्रान्
भूयो भूयो याचते रामचन्द्रः ' ॥

१. D. reads सर्वमास-पक्षाह° for समा-मासतदर्धाह°. २. C. reads स्थान-वंशानुपूर्व्यं च and D. स्थानं वंशानुपूर्वं च for स्थान-वंशादिपूर्वं च. ३. C. D. read देशं ग्रामनुपाहारम् for देशग्राममुपागतम्; while A. in margin and B. originally substitute °नु° for °दि°. ४. D. reads कुटुम्बनायका अस्य दूत-वैद्य-महत्तराः; while C. substitutes °नाथका for °नायका and महत्तरान् for महत्तराः, also A. in margin B. originally substitute °द्यूत° for °दूत°. ५. D. reads °पर्यन्ताः for °पर्यन्तान्. ६. this would be सम्बोधयन्त्विति instead of सम्बोधयन्निति. ७. B. originally reads अमुकायार्थ° for अमुकायाथ; while C. reads अमुकीयार्थ° which seems to be अमुकायाथ and D. अमुकीयाय for अमुकायाथ. ८. A. reads निर्वन्धं for विशेषं. ९. D. reads °पुत्रस्याप्यमुकस्य for °पुत्रस्य अमुकस्य.

इति । जयपत्रे विशेषमाह स एव—

'व्यवहारं[1] स्वयं दृष्ट्वा श्रुत्वा वा प्राड्विवाकतः ।
जयपत्रं ततो दद्यात्परिज्ञानाय पार्थिवः ॥
जङ्गमं स्थावरं येन परीक्षणेनात्मसात्कृतम्[2] ।
भागाभिशापसन्दिग्धे[3] यः सम्यग्विजयी भवेत् ॥
तस्य राज्ञा प्रदातव्यं जयपत्रं सुलेखितम्[4] ।
पूर्वोत्तरे[5] क्रियापादं प्रमाणं तत्परीक्षणम् ॥
निगदं[6] स्मृतिवाक्यं च यथा सभ्यविनिश्चितम् ।
एतत्सर्वं समासेन जयपत्रे विलेखयेत्[7]' ॥

इति । वसिष्ठोऽपि—

'प्राड्विवाकादिहस्तांङ्कं[8] मुद्रितजराद्रय ।
सिद्धेऽर्थे वादिने दद्याज्जयिने जयपत्रकम्' ॥

इति । जयपत्रकभेदमाह कात्यायनः—

'अनेन विधिना लेख्यं[9] पश्चात्कार्यं[10] विदुर्बुधाः ।
निरस्तो[11] तु क्रिया यत्र प्रमाणेनैव वादिना ॥

१. C. and D. read व्यवहारान् for व्यवहारं. २. B. originally reads प्रमाणेना° and corrects परीक्षणेना°; while D. reads °परीक्ष्यात्म्या° for परीक्षणेना°. ३. D. reads नानाभिशाप° for भागाभिशाप°. ४. In C. the following verse is given in margin—

तस्य राज्ञा प्रदातव्यं जयपत्रं सुलेखितम् ॥
पूर्णान्तरक्रियापादं प्रमाणं तद्विदो विदुः ॥,

and B. originally reads °निश्चितम् for °लेखितम्. ५. C. and D. read पूर्णान्तरक्रियापादं for पूर्वोत्तरे क्रियापादं. ६. B. C. and D. read निगदन् for निगदं. ७. C. reads लिखोदिति for विलेखयेत्. ८. °हस्तांकमुद्रितं for °हस्तांकं मुद्रितं. ९. A. in margin and B. originally read देयं for लेख्यं, but B. corrects लेख्यं. १०. A. in margin and B. originally read पश्चात्कारं for पश्चात्कार्यं. ११. D. reads तिरस्कार° for निरस्ता तु.

पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते ।
अन्यवाद्यादिहीनेभ्य इतरेषां विधीयते[1] ॥
वृद्धानुवादसंसिद्धिस्तच्च[2] स्याज्जयपत्रकम्' ।

इति । आज्ञा-प्रज्ञापनापत्रयोर्लक्षणमाह वसिष्ठः—

'आज्ञा-प्रज्ञापनापत्रे द्वे वसिष्ठेन दर्शिते ।
सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु च ॥
कार्यमादिश्यते येन तदाज्ञापत्र[3]मुच्यते ।
ऋत्विक्-पुरोहिता-ऽऽचार्य-मान्ये[4]ष्वभ्यर्हितेषु तु ॥
कार्यं निवेदितं[5] येन पत्रं प्रज्ञापनाय[6] तत्' ।

इति । जानपदं[7] पुनर्व्यासेन निरूपितम्—

'लिखेत्[8] ज्ज्ञानपदं लेख्यं[9] प्रसिद्धस्थानलेखकः[10] ।
राजवंशक्रमयुतं वर्ष-मासार्ध[11]-वासरैः ॥
पितृपूर्वं नाम[12]-जाती धनि[13]कर्णिकयोर्लिखेत् ।
द्रव्यभेदप्रमाणं च वृद्धिं चोभयसंमताम्' ॥

इति । वसिष्ठोऽपि—

---

१. B. originally reads प्रदीयते, but corrects विधीयते. २. B. originally reads in this line संसिद्धं तच्च, but corrects संसिद्धिस्तच्च; while C. substitutes वृत्तानुवाद° for वृद्धानुवाद° and D. वृत्तानुभावसंदिग्धं; the rest in C. and D. is as original in A.; ३. C. reads जयपत्र° for आज्ञापत्र.° ४. B. originally reads माने, but corrects in मान्ये; while C. reads नान्ये and D. सामान्येन्तर्हितेषु for मान्येष्वभ्यर्हितेषु. ५. B. in correction reads निवेद्यते, C. too the same; while D. निगद्यते for निवेद्यते. ६. C. reads प्रज्ञापनीयं तत् and D. प्रज्ञापनं यतः for प्रज्ञापनाय तत्. ७. after जानपदं D. inserts अपि पत्रं. ८. C. and D. read लेख्यं for लिखेत्. ९. D. reads लोके for लेख्यं. १०. D. reads °लेखकम् for °लेखकः. ११. B. originally reads °मासादि, but corrects °मासार्ध°; while D. reads °मासार्थ°. १२. B. originally reads °पूर्वोत्तमो जातिं°; but corrects °पूर्वं नाम-जाती. १३. D. substitutes ज्ञाति° for धनि°.

'कालं निवेश्य राजानं स्थानं निवसनं तथा ।
दायकं[1] ग्राहकं चैव पितृनाम्ना[2] च संयुतम् ॥
जातिं गोत्रं[3] च शाखां च द्रव्यमाधिं ससंख्यकम् ।
वृद्धिं[4] ग्राहकहस्तं च विदितार्थौ च साक्षिणौ' ॥

इति । ग्राहकहस्तनिवेशनप्रकारमाह याज्ञवल्क्यः—

'समाप्तेऽर्थे ऋणी नाम हस्तेन[5] विनिवेशयेत् ।
मतं मेऽमुकपुत्रस्य यदत्रोपरि[6] लेखितम्' ॥

( या. स्मृ २. ८६.)

इति । ऋणिवत्साक्षिभिः पत्रलेखकेन च स्वहस्तनिवेशनं कर्तव्यमित्याह स एव—

'साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम्[7] ।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः ॥
उभयाभ्यर्थितेनैव मयाह्यमुकसूनुना ।
लिखितं ह्यमुकेनेति लेखकः स्त्वन्ततो लिखेत्[8]' ॥

( या. स्मृ. २. ८७–८८ )

इति । पूर्वं लौकिकलिखितस्य[9] सप्तविधत्वं बृहस्पतिना दर्शितम् । व्यासस्तु प्रकारान्तरेणाष्टविधत्वमाहः—

'चीरकं च स्वहस्तं च तथोपगतसंज्ञितम् ।
आधिपत्रं चतुर्थं च पञ्चमं कार्यपत्रकम्[10] ॥

१. C. reads दापकं for दायकं २. C. reads पितृणां नाम° for पितृनाम्ना च. ३. B. originally reads स्वगोत्रं, but corrects गोत्रं च. ४. D. compound वृद्धिं ग्राहक° as वृद्धिग्राहिक°. ५. B. originally and D. read स्वहस्तेन निवेशयेत् for हस्तेन विनिवेशयेत्. ६. D. reads यत्पत्रोपरि for यदत्रोपरि. ७. C. reads ऋणि° for पितृ°. ८. C. reads स्वं तु तल्लिखेत् for °स्त्वन्ततो लिखेत्. ९. D. reads. °लिखितं तु for °लिखितस्य. १०. B. originally reads क्रय°, but corrects कार्य°; while D. reads क्रम° for कार्य°.

षष्ठं तु स्थितिपत्राख्यं सप्तमं सन्धिपत्रकम् ।
विशुद्धिपत्रकं चैव अष्टधा लौकिकं स्मृतम्' ॥

इति । तेषां लक्षणमुच्यते । तत्र सङ्ग्रहकारः[1]—

'चीरकं[2] नाम लिखितं पुराणैः पौरलेखकैः[3] ।
अर्थि-प्रत्यर्थिनिर्दिष्टं यथासम्भवसंस्कृतैः ॥
स्वकीयैः प्रतिनामाद्यैरर्थि-प्रत्यर्थि-साक्षिणाम् ।
प्रतिनामभिराक्रान्तमर्थि-साक्षिस्वहस्तवत्[4] ॥
स्पष्टावगमसंयुक्तं यथास्मृत्युक्तलक्षणम् ।

इति । कात्यायनः—

'ग्राहकेन[5] स्वहस्तेन लिखितं साक्षिवर्जितम् ।
स्वहस्तलेख्यं विज्ञेयं प्रमाणं तत्स्मृतं बुधैः' ॥

इति । एवमेव दायकेन लिखितं ग्राहकेणाभ्युपगतं[6] लेख्यमुपगताख्यं विज्ञेयम् । आधिपत्रमाह नारदः—

'आधिं कृत्वा तु यो द्रव्यं[7] प्रयुंक्ते स्वधनं धनी ।
यत्तत्र क्रियते लेख्यमाधिपत्रं तदुच्यते' ॥

इति । अन्वाधिलेख्ये[8] विशेषमाह प्रजापतिः—

1. A. reads originally कारकः, also B. the same. 2. D. reads throughout चीकरं for चीरकं, but the form seems incorrect, A. and B. also originally चीनकं, which is also incorrect. 3. C. reads पूर्वलिखितैः for पौरलेखकैः. 4. D. reads पत्रं प्रोक्तं for अर्थि-साक्षि°. 5. C. and D. omit in this verse, from—

'..............................साक्षिवर्जितम् ।
स्वहस्तलेख्यं विज्ञेयं प्रमाणं तत्स्मृतं बुधैः' ॥
इति । एवमेव दायकेन लिखितं ।;

while D. reads पावकेन for ग्राहकेण. 6. A. and B. read अनुपगतं for अभ्युपगतं. 7. D. reads यद्द्रव्यं प्रयुक्तं सत्स्मृतं बुधैः and C. reads न स्मृतं बुधैः. 8. D. reads अन्याधि° for अन्वाधि°, but it seems a mistake.

'धनी धनेन तेनैव परमाधिं नयेद्यदि ।
कृत्वा तदाधिलिखितं[1] पूर्वं चास्य समर्पयेत्' ॥

इति । क्रय-स्थिति-सन्धि-विशुद्धिपत्राण्याह पितामहः—

'क्रीते क्रयप्रकाशार्थं द्रव्ये यत्क्रियते क्वचित् ।
विक्रेत्रनुमतं क्रेत्रा[2] ज्ञेयं तत्क्रयपत्रकम् ॥
यद्यत्पुरःसरश्रेणी-गण-पौरादिकास्थितिः[3] ।
तत्सिध्यर्थं तु यल्लेख्यं तद्भवेत् स्थितिपत्रकम् ॥
उत्तमेषु समस्तेषु अभिशापसमागते[4] ।
वृत्तानुवादलेख्यं यज्ज्ञेयं[5] तत्सन्धिपत्रकम् ॥
अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते जनैः ।
विशुद्धिपत्रकं ज्ञेयं तेभ्यः साक्षिसमन्वितम्' ॥

इति । अन्यदपि लेख्यमाह कात्यायनः—

'सीमाविवादे निर्णीते सीमापत्रं विधीयते' ।

इति । याज्ञवल्क्योऽपि—

'दत्वर्णं[6] पाटयेत्पत्रं शुद्ध्यै वाऽन्यत्तु कारयेत्' ।
( या. स्मृ. २. ९४ )

इति । लेख्यस्य प्रयोजनमाह मरीचिः—

'स्थावरे विक्रियाधाने विभागे दान एव च ।
प्रतिग्रहे च क्रीते च नालेख्या सिद्ध्यति क्रिया' ॥

इति । लिप्यनभिज्ञस्त्वन्येन लेखयेदित्याह नारदः—

---

१. D. reads तदन्याधिलेख्यं पूर्वं वा for तदाधिलिखितं पूर्वं चा°. २. D. reads क्रेतुः for क्रेत्रा. ३. A. originally and B. in margin read यः शूरसरसश्रेणि°; while D. पुरःसरश्रेणिगणा यत्र for यद्यत्पुरः सरश्रेणीगण°. ४ C. and D. read अभिवादे for अभिशाप°. ५. C. reads पत्रं for ज्ञेयं. ६. C. reads दत्वार्थं for दत्वर्णं.

'अलिपिज्ञो ऋणी यः स्याल्लेखयेत्स्वमतं तु सः ।
साक्षी वा साक्षिणाऽन्येन सर्वसाक्षिसमीपतः' ॥
(ना. स्मृ. ३. ८९)

इति । पत्रनाशादौ पत्रान्तरं लेख्यमित्याह याज्ञवल्क्यः—

'देशान्तरस्थे दुर्लेख्ये नष्टे घृष्टे हृते तथा ।
भिन्ने दग्धेऽथ वा छिन्ने लेख्यमन्यत्तु कारयेत्' ॥
(या. स्मृ. २. ९१)

इति । यच्च नारदेनोक्तम्—

'लेख्ये देशान्तरन्यस्ते शीर्णे दुर्लिखिते हृते ।
सतस्तत्कालकरणमसतो द्रष्टृदर्शनम्' ॥
(ना. स्मृ. ३. १४२)

इति । तद्धनदानोद्यतऋणिकविषयम् लेख्यपरीक्षामाह बृहस्पतिः—

'त्रिविधस्यास्य लेख्यस्य भ्रान्तिः सञ्जायते यदा ।
ऋणि-साक्षि-लेखकानां हस्तोक्त्या शोधयेत्ततः' ॥

इति । कात्यायनः—

'राजाज्ञया समाहूय यथान्यायं विचारयेत् ।
लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः ॥
वर्ण-वाक्य-क्रियायुक्तमसन्दिग्धस्फुटाक्षरम् ।
अहीनक्रमचिन्हं च लेख्यं तत्सिद्धिमाप्नुयात्' ॥

---

१. B. originally reads °समन्वितः, but corrects °समीपतः. २. D. reads मृष्टे for घृष्टे. ३. B. originally reads भिन्ने, but corrects लिप्ते, C. reads लुप्ते for भिन्ने. ४. D. reads दुष्टदर्शनम् for द्रष्टृदर्शनम्. ५. D. adds बृहत° to the word बृहस्पतिः as a prefix. ६. C. reads सहोक्त्या for हस्तोक्त्या; while D. reads हस्तात् सं°.

इति। लेख्यस्य प्रामाण्यसिद्धिमाह स एव—

'लेख्यं तु द्विविधं प्रोक्तं स्वहस्तान्यकृतं तथा।
असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः'[२] ॥

इति। देशस्थितिर्देशाचारः। स्वहस्तकृते विशेषमाह— याज्ञवल्क्यः—

'विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत्।
तत्प्रमाणं स्मृतं सर्वं बलोपधिकृतादृते'[३] ॥

(या. स्मृ. २. ८९)

इति। परहस्तकृते पितामह[४] आह—

'वादिभ्यामभ्यनुज्ञातं[५] लेखकेन ससाक्षिकम्।
लिखितं सर्वकार्येषु तत्प्रमाणं स्मृतं बुधैः' ॥

इति। आधिपत्रे[६] नारद आह—

'देशाचाराविरुद्धं यद्व्यक्ताधि[७]विधिलक्षणम्।
तत्प्रमाणं स्मृतं लेख्यं अविलुप्तक्रमाक्षरम्' ॥

इति। लेख्यदोषमाह कात्यायनः—

'स्थानभ्रष्टाः[८] स्त्वकान्तिस्थाः[९] सन्दिग्धा लक्षणच्युताः।
यथासंस्थाः[१०] स्थिता वर्णाः कूटलेख्यं तदा भवेत् ॥

१. B. reads प्रमाणस्य for प्रामाण्यस्य. २. B. and D. read °स्थिता for °स्थितेः; while C. reads °स्थिते तयोः. difference is only of omission of visarga or स्. ३. B. originally and D. read बलोपाधि° for बलोपधि°; while C. reads नोपाधिच for बलोपधि°. ४. D. adds विशेषं to आह पितामहः. ५. D. substitutes, वादिनाम् for वादिभ्याम्. ६. A. B. C. do not mention this quotation. ७. B. originally reads व्यक्तया, but corrects व्यक्ता.; while C. reads धि for दि the last letter in this word and D. reads वक्रादि, which form altogether seems different. ८. B originally reads °ष्टाः, but corrects °भ्रष्टाः. ९. D. substitutes स for स्त्व°, १०. C. reads यदा for यथा°; while D. reads the whole word, तोयसंस्थापिता, for यथा संस्थास्थिता.

देशाचारविरुद्धं यत्सन्दिग्धं क्रमवर्जितम् ।
कृतमस्वामिना यच्च साध्यहीनं च दुष्यति ' ॥

इति । हारीतोऽपि—

' यच्च काकपदाकीर्णं तल्लेख्यं[1] कूटतामियात्[2] ।
बिन्दु-मात्राविहीनं यत्सन्दिग्धसहितं[3] च तत् ' ॥

इति । बृहस्पतिरपि—

' दूषितो गर्हितः साक्षी यत्रैकोऽपि निवेशितः ।
कूटलेख्यं तु तत्प्राहुर्लेखको वापि तद्विधः ॥
मुमूर्षु-हीन-लुब्धार्थै[4]रुन्मत्तव्यसनातुरैः ।
विषोपधि[5]बलात्कारकृतं लेख्यं न सिध्यति ॥
अत्युज्वलं चिरकृतं मलिनं चाल्पकालिकम् ।
भग्नोन्मृष्टा[6]क्षरयुतं लेख्यं कूटत्वमाप्नुयात् ' ॥

इति । नारदोऽपि—

' मत्ता-ऽभियुक्त-स्त्री-बाल-बलात्कारकृतं तु यत् ।
तदप्रमाणं लिखितं भयोपधिकृतं तथा ' ॥
( ना. स्मृ. ३. १३७ )

इति । कात्यायनोऽपि—

' साक्षिदोषाद्भवेद्दुष्टं[7] पत्रं वै लेखकस्य वा ।
धनिकस्यापि वै दोषात्तथाचारणकस्य[8] च ' ॥

---

१. C. reads न लेख्यं for तल्लेख्यं. २. B. originally reads रूढ° but corrects कूट°; while D. substitutes दुष्टताम् for कूटताम्. ३. D. reads सहितं महितं च for संदिग्धसंहितं च. ४. D. reads °धनलुब्धार्त° for हीन-लुब्धार्थैः. ५. B. C. read निशोपाधि° for विषोपाधि°; while D. reads तत् सोपाधि. ६. D. reads °त्सृष्टा° for °न्मृष्टा°. ७. D. reads दग्धं for दुष्टं. ८. B. originally reads न तथाधारकस्य, but corrects तथा चारणकस्य; while D. substitutes तथा वा ऋणिकस्य for तथा चारणकस्य. A. in margin also reads न तथाधारकस्य.

इति । दोषोद्भावयितुः[1] स एवाह–

'प्रमाणस्य हि ये दोषा वक्तव्यास्ते[2] विवादिनः ।
गूढाः[3]स्युःप्रकटाः[4] सभ्यैः काले[5]-शास्त्रप्रदर्शनात्' ॥

इति । उद्भावनप्रकारं च स एवाह––

'साक्षि-लेखनकर्तारः कूटतां यान्ति वादिनः[6] ।
तथा दोषाः प्रयोक्तव्या[7] दुष्टै[8]र्लेख्यं प्रदुष्यति ॥
न लेखकेन[9] लिखितं न दृष्टं साक्षिभिस्तथा ।
एवं प्रत्यर्थिनोक्ते[10] तु कूटलेख्यं प्रकीर्तितम् ॥
तथ्येन हि प्रमाणं तु दोषेणैव[11] तु दूषणम्[12] ।
मिथ्याभियोगे[13] दण्ड्यः स्यात्साध्यार्थाच्चापि[14] हीयते' ॥

इति । अनन्तरभाधिराजकृत्यमाह बृहस्पतिः––

'तथ्येन हि प्रमाणं तु दोषेणैव[15] तु दूषणम् ।
एवं दुष्टं[16] नृपस्थाने यस्मिंस्तद्धि विचार्यते ॥

---

१. A. in margin and B. in correction and C. D. read भावयितॄन् for भावयितुः. २. C. and D. read त्यक्तव्याः for वक्तव्याः. ३. C. reads रूढ for गूढाः. ४. D. reads सुप्रकटाः for स्युः प्रकटाः. ५. B. originally reads काले, and corrects कोण°. while D. reads कार्ये. ६. A. in margin and B. originally read ते सदा for वादिनः; while B. in correction reads वादिनः, ७. B. originally reads प्रकर्तव्याः for प्रयोक्तव्याः. ८. C. reads दुष्ट, and D. दुष्टे for दुष्टैः. ९. C. reads लेखकेनापि for न लेखकेन. १०. D. reads प्रत्यर्थिनोक्तेन for प्रत्यर्थिनोक्ते तु. ११. C. and D. read दूषणेन तु for दोषेणैव तु. १२. A. in margin and B. in correction read दूषयेत् and दूषणम् respectively. १३. C. reads °नियोगे for °भियोगे. १४. C. reads °द्धापि and D. °दापि for °च्चापि. १५. C. and D. read दूषणेन तु for दोषेणैव तु. १६. D. reads दृष्टं for दुष्टं.

विमृश्य ब्राह्मणैः सार्द्धं वक्तृदोषं निरूपयेत् ।
येन ते कूटतां यान्ति साक्षि-लेखक-कारकाः ॥
तेन दुष्टं भवेल्लेख्यं शुद्धैः शुद्धं विनिर्दिशेत्' ।

इति । प्रत्यर्थिना दूषिते साक्षिमुखान्निश्चेतव्यमित्याह स एव—

'दत्तं² लेख्ये स्वहस्तं³ तु ऋणिको यदि निन्हुते ।
पत्रस्थैः⁴ साक्षिभिर्वाचा⁵ लेखकस्य मतेन च' ॥

इति । निश्चयं कुर्यादिति शेषः । सन्दिग्धलेख्य⁶निर्णयमाह याज्ञवल्क्यः—

'सन्दिग्धलेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः ।
युक्ति-प्राप्ति-क्रिया⁷-चिन्ह-सम्बन्धा-ऽऽगम-हेतुभिः' ॥
(या. स्मृ. २. ९२)

इति । नारदोऽपि—

'यस्मिन्स्यात्संशयो⁸ लेख्ये भूताभूतकृते क्वचित् ।
तत्स्वहस्त-क्रिया-चिन्ह-प्राप्ति-युक्तिभिरुद्धरेत्' ॥
(ना. स्मृ. ३. १४३)

इति । बृहस्पतिरपि—

---

१. C. omits,—

'........................वक्तृदोषं निरूपयेत् ।
येन ते कूटतां यान्ति साक्षि-लेखक-कारकाः ॥
तेन दुष्टं भवेल्लेख्यं शुद्धैः शुद्धं विनिर्दिशेत्' ॥

प्रत्यर्थिना दूषिते साक्षिमुखान्निश्चेतव्यमिति—

also D. reads वक्तृदोषाश्च निश्चितम् for वक्तृदोषं निरूपयेत् also omits as much portion C. has omitted. २. D. reads दातुः for दत्तं. ३. C. and D. read सहस्रं for स्वहस्तं. ४. C. reads पत्रस्थः and D. omitting instrumental plural combines it with the following word. ५. D. substitutes वापि for वाचा. ६. D. reads लेख्ये, for °लेख्य°. ७. C. reads °प्रिया° for °क्रिया° which is incorrect. ८. D. reads यत्साक्षिसंशये for यस्मिन्स्यात्संशयो.

'त्रिविधस्यास्य लेख्यस्य भ्रान्तिः सञ्जायते तदा ।
ऋणि-साक्षि-लेखकानां हस्तोक्त्या शोधयेत्तु तत्' ॥

इति । कात्यायनः—

'अथ पञ्चत्वमापन्ने लेखके सहसाक्षिभिः ।
तत्स्वहस्तादिभिस्तेषां विशुद्धयेत्तु न संशयः' ॥
ऋणिस्वहस्तसन्देहे जीवतो वा मृतस्य वा ।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ॥
समुद्रेऽपि यदा लेख्ये मृताः सर्वेऽपि ते स्थिताः ।
लिखितं तत्प्रमाणं तु मृतेष्वपि हि तेषु च' ॥

इति । विष्णुरपि—

'यत्रर्णी धनिको वापि साक्षी वा लेखकोऽपि ।
म्रियते तत्र तल्लेख्यं तत्स्वहस्तैः प्रसाधयेत्' ॥
(वि० स्मृ० ७-१३, )

इति । निराकरणे व्यवस्थितानि साधनान्याह कात्यायनः—

'लिखितं लिखितेनैव साक्षिमत्साक्षिभिर्हरेत् ।
कूटोक्तौ साक्षिणो वाक्याल्लेखकस्य च पत्रकम् ॥
आढ्यस्य निकटस्थस्य यच्छक्तेन न याचितम् ।
शुद्धर्णशङ्कया तत्तु लेख्यं दुर्बलतामियात् ॥

१. C. and D. read विविधस्य for त्रिविधस्य. २. D. reads हस्तात् संशोधयेत् for हस्तोक्त्या शोधयेत्. ३. D. reads विशुद्धयेत for विशुद्धयेत्तु. ४. A. and B. read ऋणी for ऋणि°. ५. D. reads लेख्यविनिर्णयः for °स्तल्लेख्यनिर्णयः. ६. D. substitutes च for ऽपि. ७. B. originally reads साक्षिषु for तेषु च. ८. D. reads लिखिते लिखितं नैव स साक्षी साक्षिभिर्हरेत्. but it seems incorrect. ९. C. reads साक्षिणं for साक्षिभिः. १०. C. substitutes तु for °न. ११. A. in margin and B. originally read सुवर्ण° for शुद्धर्ण°.

लेख्यं त्रिंशत्समातीतमदृष्टाश्रावितं च यत्[1] ।
न तत्सिद्धिमवाप्नोति तिष्ठत्स्वपि हि साक्षिषु ॥
प्रयुक्ते शान्तिलाभे तु लिखितं यो नदर्शयेत् ।
नैव याचेत[2] ऋणिकं न तत्सिद्धिमवाप्नुयात्' ॥

इति । नारदोऽपि—

'अश्रुतार्थमदृष्टार्थं[3] व्यवहारार्थमागतम् ।
न लेख्यं सिद्धिमाप्नोति जीवत्स्वपि हि साक्षिषु ॥ (१४१)
मृताः स्युः साक्षिणो यत्र धनिकर्णिक-लेखकाः[4] ।
तदप्यपार्थं[5] लिखितं ऋते[6] चाधेः स्थिराश्रयात् ॥ (१३८)
अदृष्टाश्रावितं लेख्यं प्रमीतधनिकर्णिकम् ।
अबन्धलग्नकं[7] चैव बहुकालं न सिध्यति' ॥
(ना. स्मृ. ३. १३८–१४१)

इति । लेख्यहानेरपवादमाह बृहस्पतिः[8]—

'उन्मत्त-जड-मूकानां राजभीतिप्रवासिनाम् ।
अप्रगल्भ[9]-भयार्तानां न लेख्यं हानिमाप्नुयात्' ॥

इति । लेख्यसिद्धि[10]प्रकारमाह नारदः—

१. C. reads this line as the following लेख्ये विंशत्समातीतेऽदृष्टाऽयाचितं च यत् । also D. substitutes विंशत् for त्रिंशत्. २. D. reads वाच्यते for याचेत., but it does not give proper sense. ३. C. reads यः श्रुतार्थमदृष्टार्थं व्यवहारेऽर्थमागतम् and D. योऽश्रुतार्थमदृष्टार्थमित्यादि क्रमवर्जितम् । ४. C. reads °लेखकान् for °लेखकाः. ५. A. and B. read अपार्थलिखितं for अपार्थं लिखितं. ६. A. and B. in correction read ऋणत्वाचेत्स्थिराश्रयात् C. ऋणत्वाचास्थिराश्रयात् and D. ऋणत्वाचेश्वराश्रयात्. for ऋते चाधेः स्थिराश्रयात्. ७. D. reads अतथालग्नकं for अबन्धलग्नकं. ८. C. reads here नारदः and the next quoted verse 'दर्शितं. and after reads लेख्यहतौ अपवादमाह बृहस्पतिः. and after that reads 'उन्मत्त-जड-मूकानां. ९. C. reads अप्रमत्त° for अप्रगल्भ°. १०. D. reads °शुद्धि° for सिद्धि.

'दर्शितं प्रति[1]कालं यच्छ्रा[2]वितं स्मारितं च यत् ।
ले[3]ख्यं सिद्ध्यति सर्वत्र मृतेष्वपि हि साक्षिषु' ॥
(ना. स्मृ. ३.१४०)

इति । कात्यायनोऽपि —

'निर्दोषं प्रथितं यत्तु लेख्यं तत्सिद्धिमाप्नुयात् ।
तथाऽदृ[4]ष्टं स्फुटं दोषं[5] नोक्तवानृणिको यदि ॥
ततो विंशतिवर्षाणि [6]क्रीतं पत्रं स्थितं भवेत् ।
श[7]क्तस्य सन्निधावर्थो यस्य लेख्ये न भुज्यते ॥
वर्षाणि विंशतिं यावत्तत्प[8]रं दोषवर्जितम् ।
अथ विंशतिवर्षाणि आधिर्भु[9]क्तः सुनिश्चितम् ॥
तेन लेख्येन तत्सिद्धं लेख्यं दोषविवर्जितम् ।
सीमाविवादे निर्णीते सीमापत्रं विधीयते ॥
य[10]स्य दोषाः प्रवक्तव्या यावद्वर्षाणि विंशतिः ।
आधानसहितं यत्र ऋणं ले[11]ख्ये निवेशितम् ॥
[12]मृतं साक्षिप्रमाणं तु स्वल्पभोगेषु[13] तद्विदुः ।

---

१. B. originally reads °वाक्यं for °कालं. २. D. reads तथातु श्रावितं for श्रावितं स्मारितं. ३. C. reads लेख्यसिद्धिर्हि सर्वत्र सर्वेष्वपि and D. reads this line न लेख्यसिद्धिः सर्वत्र ऋणिष्वपि for लेख्यं सिद्ध्यति सर्वत्र मृतेष्वपि. ४. B. originally reads यथादृष्टं and D. यथा कृष्टे for तथा दृष्टं. ५. C. substitutes बन्धं for दोषं. ६. C. omits—

......................क्रीतं पत्रं स्थितं भवेत् ।
शक्तस्य सन्निधावर्थो यस्य लेख्ये न भुज्यते ॥
वर्षाणि विंशतिं यावत् तत्परं दोषवर्जितम् ।
अथ विंशति वर्षाण्य°.

७. These two lines are omitted in C.; ८. A. in margin and B. originally read °पत्रं for °परं; while B. in correction reads वरं. ९. D. reads °व्यधिकं and separates the compound. १०. B. C. D. read तस्य for यस्य. ११. D. reads लेख्यं for लेख्ये. १२. B. C. D. read मृतः for मृतं. १३. B. originally reads °भोगे तु, but corrects °भोगेषु.

प्राप्तं वाऽनेन चेत्[1] किञ्चिद्दानं[2] चाप्यनिरूपितम् ।
विनापि मुद्रया लेख्यं प्रमाणं मृतसाक्षिकम् ॥
यदि लब्धं भवे[3]त्किञ्चित्प्रज्ञप्तिर्वा कृता भवेत् ।
प्रमाणमेव लिखितं मृता यद्यपि साक्षिणः' ॥

इति । लेख्यानां मिथो विरोधे बाध्यबाधकप्र[4]कारमाह व्यासः—

'स्वहस्तकाज्ज्ञा[5]नपदं तस्मात्तु नृपशासनम् ।
प्रमाणान्तरमिष्टं हि व्यवहारार्थमागतम् ।
द्वित्रिर्लिपिज्ञैः स्वकृतं न संल्लेख्येन युक्तितः ॥
कुर्याज्ज्ञानपदं लेख्यं तस्माज्ज्ञानपदं शुभम् ।
अप्रकाशोत्साधियुक्तं लेखकाक्षरमुद्रितम् ॥
लोकप्रसादात्स्वकृताद्वरमन्यकृतं शुभम् ।
देशाध्यक्षादिना लेख्यं पत्रं जानपदं कृतम् ॥
समकालं पश्चिमं वा तत्र राजकृतं शुभम्' ॥

इति । साक्ष्याद्यसम्भवे हारीतः—

'न मयैतत्कृतं पत्रं कूटमेतेन कारितम् ।
अधरी कृत्य तत्पत्रमर्थं[6] दिव्येन निर्णयः' ॥

इति । प्रजापतिः—

---

१. A. in margin and B. originally C. and D. read वा for चेत्, but B. corrects by placing यत् for वा. २. A. in margin B. in correction and D. read दायं चात्र and C. दायं वात्र for दानं चाप्य°. ३. C. and D. read नचेत् for भवेत्. ४. This word is omitted in D.; ५. D. reads ज्ञानयुतं which is incorrect, also from this word of the line, the following 6 lines with exception of the words जानपदं कृतं. The included portion is omitted in C. and D.; ६. C. and D. read अर्थे for अथ.

'स्वनामगोत्रैस्तत्तुल्यरूपं लेख्यं क्वचिद्भवेत् ।
अगृहीते धने तत्र कार्यो दिव्येन निर्णयः' ॥

इति । कृत्स्नदानासमर्थं प्रति याज्ञवल्क्यः—

'लेख्यस्य पृष्ठे विलिखेद्दत्वा दत्वर्णिको धनम् ।
धनी वोपगतं दद्यात्स्वहस्तपरिचिन्हितम्' ॥

( या. स्मृ. २. ९३.)

इति । लेख्य दोषमनुद्धरतो दण्डमाह कात्यायनः—

'कूटोक्तौ साक्षिणां वाक्यं लेखकस्य च पत्रकम् ।
न चेच्छुद्धिं नयेत्कूटं स दाप्यो दण्डमुत्तमम्' ॥

इति । साक्षिणां वाक्यं वा लेखकस्य एवं प्रतिकूटोक्तौ उक्तिं विधाय यो वादी कूटशुद्धिं न नयेत्स उत्तमसाहसं दण्ड्य इत्यर्थः । स्थावरादौ तु विशेषमाह स एव—

'स्थावरे विक्रयाधाने लेख्यं कूटं करोति यः ।
असम्यग्भावितः कार्यो जिव्हा-पाण्यङ्घ्रिवर्जितः' ॥

इति । अन्यलेख्यधारकेण तल्लेख्यागमनकारणमुद्भावनीयमित्याह व्यासः—

---

१. D. reads स्वगृहीत° for अगृहीते. २. C. reads कृत्स्नं दातुं समर्थ; while D. °दान° for °दाना°. ३. D. reads तद्दृणिको for दत्वर्णिको. ४. C. reads साक्षिणं वा for साक्षिणां वाक्यं. ५. D. reads च after लेखकस्य. ६. C. omits एवं and D. too. ७. D. reads उक्तविधां for उक्तिं विधाय. ८. C. reads कूटं and separates the compound कूटशुद्धिं. ९. C. reads °भाविनः for °भावितः. १०. B. originally reads अन्य लेख्याधारके याते तल्लेख्यागमन° for अन्य लेख्याधारके याते लेख्यागमन° but corrects अन्य लेख्यधारकेण तल्लेख्यागमन°.

'यच्चान्यस्य[1] कृतं लेख्यं अन्यहस्ते प्रदृश्यते ।
अवश्यं तेन वक्तव्यं पत्रस्यागमनं ततः' ॥

इति । नारदोऽपि—

'लेख्यं यच्चान्यनामाङ्कं हेत्वंतर[2]कृतं भवेत् ।
विवृत्य वै पैरीक्ष्यं[3] तत्सम्ब[4]न्धाऽऽगम-हेतुभिः' ॥
(ना. स्मृ. ३. १४४.)

इति व्यवहारमाधवीये लेख्य प्रकरणम् ।

अथ भुक्तिः । लिखितोपसंहारपुरःसरं भुक्तिमुपक्रमते बृहस्पतिः—

'एतद्विधानमाख्यातं साक्षिणां लिखितस्य च ।
संप्रति स्थावरप्राप्तेर्भुक्तेश्च[5] विधिरुच्यते' ।

इति । तत्र स्थावरप्राप्ति[6]निमित्तानि स एवाह—

'विद्यया क्रयबन्धेन शौर्य-भार्यान्वयागतम् ।
सपिण्डस्याऽप्रजस्यांशं[7] स्थावरं सप्तधोच्यते' ॥

इति । नारदोऽपि—

'लब्धं दानात्क्रयात्प्राप्तं[8] शौर्यं वैवाहिकं तथा ।
बान्धवादप्रजाज्जातं षड्विधस्तु[9] धनागमः' ॥

इति । आगमपूर्वकमेव भुक्तेः प्रामाण्यमित्याह हारीतः—

१. D. reads पश्चात् यस्य for यच्चान्यस्य. २. C. reads देशान्तर° for हेत्वन्तर°; while D. reads बाह्यान्तर° for हेत्वन्तर°. ३. D. reads वैपरीत्यं for वै परीक्ष्यं. ४. D. reads सर्वैः for सम्बन्धा°. ५. D. reads स्थावरे प्राप्ते-भुक्तेश्च for स्थावरप्राप्तेर्भुक्तेश्च. ६. C. and D. read °प्राप्ति° for °प्राप्त°. ७. B. originally reads प्रवाहःस्यात् for ऽप्रजस्यांशं. ८. C. and D. read दानक्रियाप्राप्तं for दानात्क्रयात्प्राप्तं. ९. C. reads षड्विधं for षड्विधः.

‘न मूलेन विना शाखा अन्तरिक्षे प्ररोहति ।
आगमस्तु भवेन्मूलं भुक्तिःशाखा प्रकीर्तिता’ ॥

इति । नारदोऽपि—

‘आगमेन विशुद्धेन भोगो याति प्रमाणताम् ।
अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति’ ॥
( ना. स्मृ. ३. ८५. )

इति । आगमवद्दीर्घकालत्वादिकमपि भुक्तेः प्रामाण्यकरणमित्याह नारदोऽपि—

‘आगमो दीर्घकालश्च विच्छेदोपरमोज्झितः[2] ।
प्रत्यर्थिसन्निधानश्च[3] पञ्चाङ्गो भोग इष्यत’ ॥

इति । अन्यतराङ्गवैकल्ये भोगस्य प्रामाण्यं नास्तीत्याह नारदः—

‘सम्भोगं केवलं यस्तु[4] कीर्तयेन्नागमं क्वचित् ।
भोगच्छलापदेशेन विज्ञेयः स तु तस्करः’ ॥
( ना. स्मृ. ३. ८६. )

इति । कात्यायनोऽपि—

‘प्रनष्टागमलेख्येन[5] भोगारूढेन वादिना ।
कालः प्रमाणं दानं च कीर्तनीयानि संसदि[6]’ ॥

इति । पञ्चाङ्गेषु विप्रतिपत्तौ साधनीयमित्याह सङ्ग्रहकारः—

---

१. B. originally reads व्यासः, but corrects नारदः. २. A. in margin and B. originally read परतोसितः, but B. in correction reads परमोज्झितः; while C. परमोमितः and D. परबोधितः. ३. B. originally reads °सन्निधानं च, but corrects सन्निधानश्च. ४. D. reads यत्तु for यस्तु. ५. B. originally reads प्रमृष्टा° for प्रणष्टा° while C. and D. read प्रणष्टा° for प्रनष्टा°. ६. D. reads कीर्तनीयाधिसंसदि for कीर्तनीयानि संसदि.

‘ भुक्तिप्रसाधने मुख्याः प्रथमं तु कृषीवलाः ।
ग्रामण्यः क्षेत्रसामन्तास्तत्सीमापतयः क्रमात् ॥
लिखितं साक्षिणो भुक्तिः क्रिया[1] क्षेत्र-गृहादिषु ।
आगमे क्रय[2]-दानादौ प्रत्याख्याते[3] चिरन्तना[4]’ ॥

इति । क्रयदाना[5]वगमे प्रतिवादिना प्रत्याख्याते सति लिखित-साक्षि-भुक्तयः क्रियाः[6]प्रमाणम् । भुक्तेर्भेदमाह कात्यायनः—

‘ भुक्तिस्तु द्विविधा प्रोक्ता सागमा नागमा तथा ।
त्रिपुरुषीया[7] स्वतन्त्रा साचेद्[8]अल्पा तु सागमा’ ॥

इति । पुरुषत्रयानुगता भुक्तिः आगमानुपन्यासेऽपि प्रमाणम् । स्वल्पा[9] तु भुक्तिरागमसहितैव प्रमाणम् । एतदेव बृहस्पतिरप्याह—

‘ भुक्तिस्त्रैपुरुषी यत्र चतुर्थे संप्रवर्तिता ।
तद्भोगः स्थिरतां याति न पृच्छेदागमं क्वचित् ॥
अनिषिद्धेन यद्भुक्तं पुरुषैस्त्रिभिरेव तु ।
तत्र नैवागमः कार्यो भुक्तिस्तत्र[10] गरीयसी’ ॥

इति । त्रिपुरुषभोगेन षष्ठिसंवत्सरादय उपलक्ष्यन्ते । अत एव व्यासः—

---

१. D. reads क्रिया and splits up the compound; while A. B. C. has compounded क्रिया with क्षेत्र-गृहादिषु. २. A. in margin B. in correction and C. read सापदानादौ for क्रयदानदौ. ३. B. originally reads प्रत्याख्याने, but corrects प्रत्याख्याते. ४. D. reads चिरन्तने for चिरन्तना. ५. C. क्रयदानादवगमे and D. क्रयदानादावागमे. for क्रयदानावगमे. ६. D. reads क्रियाप्रमाणम् for क्रियाः प्रमाणम्. ७. D. reads त्रिपुरुषी for त्रिपुरुषीया and substitutes तु after स्वतन्त्रा. ८. B. originally reads भवेत्, but corrects साचेत्. also D. the same. ९. C. reads स्वतन्त्रानु भुक्तिः for स्वल्पा तु भुक्तिः and आगमसाहिता च for आगमसहितैव. १०. D. reads त्रिपुरुषी यतः for तत्र गरीयसी.

'वर्षाणि[1] विंशतिं भुक्ता स्वामिनाऽव्याहता[2] सती ।
भुक्तिः सा पौरुषी ज्ञेया द्विगुणा च द्विपौरुषी ॥
त्रिपूरुषी त्रिगुणिता तत्र[3] नान्वेष्य आगमः' ।

इति । बृहस्पतिस्तु नवतिसंवत्सरानुपलक्षयति—

'पिता[4] पितामहो यस्य जीवेच्च प्रपितामहः ।
त्रिंशत्समा या तु भुक्ता[5] भूमिरव्याहता[6] परैः ॥
भुक्तिः सा पौरुषी ज्ञेया द्विगुणा च द्विपूरुषी ।
त्रिपूरुषी च त्रिगुणा परतः स्याच्चिरन्तना'[7] ॥

इति । स्मृत्यन्तरेऽपि पञ्चत्रिंशद्वर्षैः[8] पौरुषो भोग इत्युक्तम्—

'वर्षाणि पञ्चत्रिंशत्तु पौरुषो भोग उच्यते' ॥

इति । यदि विंशतिवर्षैः पौरुषो भोगः यदि वा त्रिंशद्वर्षैः पञ्चत्रिंशद्वर्षैर्वा सर्वथापि त्रिपुरुषभोगेन स्मरणयोग्यः[9] काल उपलक्ष्यते । अत एव कात्यायनः—

*'स्मार्तकाले[10] क्रिया भूमेः सागमा भुक्तिरिष्यते ।

---

*नैगमाभावात्क्रमात्त्रिपुरुषागतो अनुगमाभावादिति योग्यानुपलब्ध्यभावेन आगमाभाव अस्मार्त इति अधिकं ए. संज्ञितपुस्तके ।

---

१. D. reads पूर्वाणि for वर्षाणि. २. D. reads व्याहता for ऽव्याहता. ३. C. does not read तत्र नान्वेष्य आगमः. ४. C. and D. read पितामहो यस्य जीवेत् for पिता पितामहो यस्य. ५. D. reads भुक्तिः for भुक्ता. ६. D. reads सा भुक्तिर्व्याहता for भूमिरव्याहता. ७. D. reads सा for स्यात् and C. and D. substitute चिरन्तनी for चिरन्तना. ८. D. reads पंचत्रिंशद्वर्षाणि for पंचत्रिंशद्वर्षैः. ९. C. and D. read तत्करणयोग्यः for स्मरणयोग्यः. १०. C. and D. read स्मार्ते काले for स्मार्तकाले.

इति । अस्मार्ते निश्चयासम्भवात् । एतदुक्तं भवति । स्मरणयोग्ये पञ्चाधिकशतवर्षपर्यन्तातीतकालमध्ये प्रारब्धा भुक्तिः स्वेतरप्रमाणावगतागममूलैव[1] स्वत्वे प्रमाणम् । स्वतन्त्रमूलागमस्य[2] योग्यानुपलब्ध्या बाध्यमानत्वात् । स्मरणायोग्ये पुनः पञ्चाधिकशतवर्षातीतकालात्प्राचीनकाले[3] प्रारब्धा स्वकीयदाढर्येऽवसितागममूलिका[4] विनापि मानान्तरागममूलतां[5] स्वत्वे[6] प्रमाणमिति । अस्मार्तेऽपि काले अनागमस्मृतिपरम्परायां सत्यां न भोगः प्रमाणम् । अत एव नारदः—

'अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चोरदण्डेन तं पापं दण्डयेत् पृथिवीपतिः' ॥

( ना. स्मृ. ३. ८७ )

इति । निश्चिता ऽनागमाश्च भोगास्तेनैव[7] दर्शिताः—

'अन्याहितं[8] हृतं न्यस्तं बलावष्टब्ध-याचिते
अप्रत्यक्षं च यद्भुक्तं षडेतान्यागमं[9] विना' ॥

( ना. स्मृ. ३. ९२ )

---

१. C. reads °प्रमाणाभावात् अवगतागम° for the original; while D. reads °स्वेतत्सारप्रमाणावगम° for स्वेतरप्रमाणावगतागम°. २. C. reads स्वमूलागमावमत्य and D. तन्मूलसागमाभावात् for स्वतन्त्रमूलागमस्य. ३. D. reads पंचाशदधिकशत° for पंचाधिकशत° also the foregone word पंचाधिकशत° is replaced by पंचाशततदधिकशत° in D.; ४. D. reads स्वकालदाढर्याव° for स्वकीयदाढर्येऽव°. ५. D. reads °गतसागममूलतां for °गममूलतां. ६. C. reads तत्वे for स्वत्वे. ७. D. reads निश्चितानागमः स्वभोगः for निश्चितानागमाश्च भोगाः. ८. B. originally reads असहितं, but corrects अन्वाहितं and D. अन्वाहितं. in this very line B. also reads बलावलुब्ध° for बलावष्टब्ध°. ९. C. and D. read षडेतेऽप्यागमं for षडेतान्यागमं.

इति। अन्याहितमन्यस्मै दातुमर्पितम्। हृतमपहृतम्। न्यस्तं निक्षिप्तम्। बलावष्टब्धं राजप्रसादादिबलावष्टम्भेन भुक्तम्। याचितं परकीयमलङ्कारार्द्यर्थमानीतम्। संवर्त्तोऽपि—

'या राज्ञा क्रोध-लोभेन छलान्न्यायेन वा कृता।
प्रदत्तान्यस्य तुष्टेन न सा सिद्धिमवाप्नुयात्'॥

इति। यत्तु हारीतेनोक्तम्—

'अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः।
न तच्छक्यमपाकर्त्तुं क्रमात्त्रिपुरुषागतम्'॥

इति। एतच्चान्यायेनापि भुक्तमपहर्तुमशक्यं किं पुनर्न्यायेन भुक्तमिति। शासन विरोधे भुक्तेः अप्रामाण्यमाह बृहस्पतिः—

'यस्य त्रिपुरुषा भुक्तिः पारम्पर्यक्रमागता।
न सा चालयितुं शक्या पूर्वकाच्छासनादृते'॥

इति। यत्तु पितामहेनोक्तम्—

'स्वहस्तकाज्ज्ञानपदं तस्मात्तु नृपशासनम्।
ततस्त्रिपुरुषो भोगः प्रमाणान्तरमिष्यते'॥

इति तत्प्रवाहपरम्परया तत्प्रसिद्ध्या निश्चितागमभोगविषयम्। सत्यपि विच्छेदे सागमा भुक्तिः प्रमाणमित्याह बृहस्पतिः—

१. C. reads संहृतम्. while D. आहृतम्. २. C. and D. read परिहर्त्तुं, and पराहर्त्तुं respectively for अपाकर्त्तुं. ३. A. originally reads अन्येनापि. ४. D. reads त्रिपुरुषी for त्रिपुरुषा. ५. C. reads परम्पर्य° for पारम्पर्य°. ६. D. reads पूर्विकात् for पूर्वकात्. ७. C. reads शासनादिव for शासनादृते. ८. D. reads स्वहस्तादागम° for स्वहस्तकात् ज्ञान°. ९. C. substitutes अतः for ततः. १०. D. reads त्रैपुरुषो for त्रिपुरुषो. ११. D. reads सत्यविच्छेदे for सत्यपि विच्छेदे.

'भुक्तिर्बलवती शास्त्रे ह्यविच्छिन्ना चिरन्तनी ।
विच्छिन्नापि हि सा ज्ञेया या तु[1] पूर्वं प्रसाधिता' ॥

इति । चिरन्तनाया भुक्तेः क्वचिदपवाद माह याज्ञवल्क्यः—

'योऽभियुक्तः परेतः स्यात्तस्य[2] रिक्थी तमुद्धरेत् ।
न तत्र[3] कारणं भुक्तिरागमेन विनाकृता' ॥
(या. स्मृ. २. २९)

इति । नारदोऽपि—

'अथारूढविवादस्य प्रेतस्य व्यवहारिणः ।
पुत्रेण सोऽर्थः शोध्यः स्यान्न तद्भोगान्[4]निवर्तयेत्' ॥
(ना. स्मृ. ३. ९३)

इति । अनुद्धारे त्वभियुक्तस्यैव दण्डो न तत्पुत्रादेः । तदुक्तं स्मृत्यन्तरेः—

'आगमस्तु कृतो येन स दण्ड्यस्तमनुद्धरन् ।
न तत्सुतस्तत्सुतो[5] वा भोग्यहानिस्तयोरपि' ॥

इति । एतदेवाभिप्रेत्य कात्यायन आह—

'आहर्ता भुक्तियुक्तो[6]ऽपि लेख्यदोषान्विशोधयेत् ।
तत्सुतो भुक्तिदोषांस्तु लेख्यदोषांस्तु नाप्नुयात्' ॥

इति । त्रिपुरुषेषु व्यवस्थितं साधकं क्रमेण दर्शयति नारदः —

---

१. C. reads °ऽनुपूर्वं प्रसाधिता for तु पूर्वं प्रसाधिता and D. पूर्णं प्रसाधिता for पूर्वं प्रसाधिता. २. C. reads तस्य विक्रीतम् for तस्य रिक्थी तम्. ३. B. originally reads तत्व°, but corrects तस्य. ४. C. reads °भोगो for भोगात्. ५. C. reads सुतो वापि भोग्यदानं for स्तत्सुतो वा भोग्यहानिः. ६. C. and D. read युक्तभुक्तोऽपि for भुक्तियुक्तोऽपि.

'आदौ तु कारणं दानं[1] मध्ये भुक्तिस्तु सागमा ।
कारणं भुक्तिरेवैका[2] सन्तता या चिरन्तनी' ॥

इति । अक्षरार्थस्तु सङ्ग्रहकारेण दर्शितः—

'कृतागमस्योक्तकाले भुक्तेश्च प्रभुरागमः ।
तस्यैवात्मतृतीयस्य[3] प्रभुर्भुक्तिः स्फुटागमा ॥
भुक्तिर्या सा चतुर्थस्य प्रमाणं सन्तता मता ।
परित्यक्तागमा भुक्तिः केवलैव प्रभुर्मता' ॥

इति । क्वचिद्भुक्तेरेव प्राबल्यमितराभ्यामित्याह कात्यायनः—

'रथ्यानिर्गमनद्वारे जलवाहादिसंश्रये ।
भुक्तिरेव तु गुर्वी स्यात्प्रमाणेष्विति निश्चयः' ॥

इति । नारदोऽपि—

'विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु ।
विशेषतः स्थावराणां[4] यन्न[5] भुक्तं न तत्स्थिरम्' ॥
(ना. स्मृ. ३. ७०)

इति । संवर्त्तोऽपि—

'भुज्यमाने[6] गृहे क्षेत्रे विद्यमाने तु राजनि ।
भुक्तिर्यस्य भवेत्तस्य न[7] लेख्यं तत्र कारणम्' ॥

इति । एतच्च[8] लेख्यवैयर्थ्यकथनार्थमुक्तम् । न पुनर्भोक्तुः[9] स्वामित्वप्रतिपादनार्थम् । तस्य भोगमात्रेण स्वामित्वासिद्धेः । अपहारेणापि[10] भोगसम्भवात् । अत एव कात्यायनः—

१. C. and D. read भुक्तिः for दानं. २. C. reads एकैका for एवैका. ३. D. substitutes वाऽप्य for °वात्म°. ४. C. reads स्थावरेण, D. स्थावरेषु for स्थावराणां. ५. C. reads येन or यन्न. ६. D. reads त्यज्यमाने for भुज्यमाने. ७. C. omits न, but inserts तु after तत्र. ८. C. reads तच्च for एतच्च. ९. C. reads भोक्तुं for भोक्तुः. १०. C. reads अपहारिणा for अपहारेण.

'नोपभोगे वलं कार्यं आहर्त्रा तत्सुतेन वा ।
पशु-स्त्री-पुरुषादीनामिति धर्मो व्यवस्थितः' ॥

इति । यत्तु याज्ञवल्क्येनोक्तम्ः—

'पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी' ॥
( या. स्मृ. २. २४ )

इति । यदपि प्रजापतिनोक्तम्ः—

'आदानकालादारभ्य भुक्तिर्यस्याऽविघातिनी ।
समा विंशत्यवधिका तस्यै तां न विचारयेत' ॥

इति । तदेतदासेधमकुर्वतः फलहानिविषयम् । न तु भूहानिविषयम् । यस्मात्तत्कालोपलक्षितभुक्तेरेव तत्र प्रामाण्यात् । अत एव बृहस्पतिः—

'त्रिपुरुषं भुज्यते येन समक्षं भूरवारिता ।
तस्य सा नापहर्तव्या क्षमालिङ्गं न चेद्वदेत्' ॥

इति । आध्यादिषूपेक्षकस्य न फलहानिरित्याह याज्ञवल्क्यः—

'आधि-सीमोपनिक्षेप-जड-बालधनैर्विना ।
तथोपनिधि-राज-स्त्री-श्रोत्रियाणां धनैरपि' ॥
( या. स्मृ. २. २५ )

इति । मनुरपि—

१. D. reads दानकालाद्यदाऽऽरभ्य for आदानकालादारभ्य. २. C. and D. read तस्य for यस्या°. ३. D. reads तस्यान्तं for तस्य तां. ४. B. originally reads अस्मार्त, but corrects यस्मात्तत् ; while C. यः स्मार्त° for यस्मात्तत्°. ५. D. reads °लिंगेन चेदथ for °लिंगं नचेद्वदेत्. . D. reads आध्यादिपक्षकस्य for आध्यादिषूपेक्षकस्य.

'आधि-सीमा-बलधनं निक्षेपोपनिधिः स्त्रियः ।
राजस्वं श्रोत्रियद्रव्यं नोपभोगेन नश्यति' ॥
( म. स्मृ. ८. १४९ )

इति । श्रोत्रियग्रहणमन्यासक्तोपलक्षणार्थम् । अत एव कात्यायनः—

'ब्रह्मचारी चरेत्कश्चिद्व्रतं षट्त्रिंशदाब्दिकम् ।
अर्थार्थी चान्यविषये दीर्घकालं वसेन्नरः ॥
समावृत्तो ऽव्रती कुर्यात्स्वधनान्वेषणं ततः ।
पञ्चाशदाब्दिको भोगस्तद्धनस्यापहारकः ॥
प्रतिवेदं द्वादशाब्दः कालो विद्यार्थिनां स्मृतः ।
शिल्पविद्यार्थिनां चैव ग्रहणान्तः प्रकीर्तितः ॥
सुहृद्भिर्बन्धुभिश्चैषां यत्स्वं भुक्तमपश्यताम् ।
नृपापराधिनां चैव भवेत् कालेन हीयते' ॥

इति । धनस्य दशवार्षिकी हानिरिति यदुक्तं तस्य विषयविशेषे सङ्कोचमाह मरीचिः—

'धनंग्राह्यालङ्करणं याचितं प्रीतिकर्मणा ।
चतुः पञ्चाब्दिकं देयं अन्यथा हानिमाप्नुयात्' ॥

इति । अत्रापवादमाह मनुः—

---

१. C. and D. read आधिः सीमा for आधि-सीमा°. २. C. reads यत् for षट्°. ३. B. originally reads अन्यार्थी, but corrects अर्थार्थी. ४. C. reads वसन् and D. चरेत् for वसेत्. ५. C. B. originally read बहुभिः, but correct बन्धुभिः. ६. C. reads °श्चैव for °श्चैषां. ७. A. in margin reads तत्त°; while B. originally reads तत्त°, but corrects भवेत्. ८. A. and B. originally read धेनु° for धन°; while C. reads धनु°.

'सम्प्रीत्या भुज्यमानानि न नश्यन्ति कदाचन ।
धेनुरुष्ट्रो वहन्नश्वो[१] यश्च दम्यैः[२] प्रयुज्यते[३]' ॥
(म. स्मृ. ८. १४६ )

इति । याचितेष्वप्यपवादमाह व्यासः—

'याञ्चाधर्मेण यद्भुक्तं श्रोत्रियै राजपूरुषैः ।
सुहृद्भिर्बान्धवैश्चापि न तद्भोगेन हीयते' ॥

इति । बृहस्पतिरपि—

'अनागमन्तु यद्भुक्तं गृह-क्षेत्र-[४]पणादिकम् ।
सुहृद्बन्धु[५]-सकुल्यैश्च[६] न तद्भोगेन हीयते' ॥

इति । अहानौ[७] कारणमाह स एव—

'धर्मोऽक्षयः[८] श्रोत्रियस्य[९] अभयं राजपूरुषे ।
स्नेहः सुहृद्बान्धवेषु भुक्तमेतैर्न[१०] हीयते' ॥

इति । क्वचिदेकदेशभोगो[११]ऽनुपभुक्तेष्वप्येकदेशान्तरेषु[१२] प्रमाणम् । तदाह बृहस्पतिः—

'यद्येकशासने ग्रामे क्षेत्रारामाश्च लिप्सिताः[१३] ।
एकदेशोपभोगेऽपि सर्वे भुक्ता[१४] भवन्ति ते' ॥

इति ।

---

१. D. reads वहन्वृद्धो for वहन्नश्वो. २. D. reads वश्यः for दम्यः. ३. B. originally reads प्रपुज्यते and corrects प्रयुज्यते; while D. reads प्रभुज्यते for प्रयुज्यते. ४. B. originally reads °क्षेत्रापण°, but corrects क्षेत्र for क्षेत्रा°; while C. reads °क्षेत्र-पण° and D. °क्षेत्रापण° for °क्षेत्र-पण°. ५. C. substitutes °भुक्तं for °बन्धु°. ६. C. reads °सुकुल्यैः for °सकुल्यैः. ७. D. reads हानौ for अहानौ. ८. D. reads धर्मक्षयः for धर्मोऽक्षयः. ९. D. reads श्रोत्रिये स्यात् for श्रोत्रियस्य. १०. C. reads भुक्तेष्वेतेन and D. भुक्तान्येतानि for भुक्तमेतैर्न. ११. D. reads °भोगे for °भोगो. १२. C. and D. read प्रत्येक° for °ष्वप्येक°. १३. B. originally and D. read लिखिताः for लिप्सिताः. १४. C. reads सर्वेषां तत् for सर्वे भुक्ताः.

इति भुक्तिप्रकरणम्।

अथ भुक्त्युपसंहारपुरःसरं दिव्यमुपस्थापयति बृहस्पतिः—

'स्थावरस्य तथाऽऽख्यातं लाभ-भोग-प्रसाधनम्।
प्रमाणहीने वादे तु निर्दोषा दैविकी क्रिया' ॥

इति। प्रमाणं दिव्यव्यतिरिक्तं लिखितादि प्रमाणं विवक्षितम्। अत एव याज्ञवल्क्यः—

'प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्।
एषामन्यतमाभावे दिव्यान्यतममुच्यते' ॥

( या. स्मृ. २. २२ )

इति। दिव्यान्युद्दिशति बृहस्पतिः—

'तुलाऽग्निरुदकं चैव विषं कोषश्च पञ्चमः।
षष्ठश्च तण्डुलः प्रोक्तः सप्तमस्तप्तमाषकः ॥
अष्टमं फालमित्युक्तं नवमं धर्मकं तथा।
दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयंभुवा ॥
यस्माद्देवैः प्रयुक्तानि दुष्करार्थे महात्मभिः'।

इति। शङ्खः—

---

१. C. and D. read तदा° for तथा°. २. C. and D. read पादे for वादे. ३. C. and D. read न दोषो for निर्दोषा. ४. in D. The following is omitted, as—

प्रमाणं दिव्य व्यतिरिक्तं लिखितादि प्रमाणं विवक्षितम्।
अत एव याज्ञवल्क्यः—
'प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्।
एषामन्यतमाभावे दिव्यान्यतममुच्यते' ॥.

५. C. and D. read घटो for तुला. ६. B. originally reads पंचकम्, but corrects पंचमः. ७. B. originally reads चैव, but corrects प्रोक्तः. ८. A. in margin and D. originally read धर्मजं, but B. corrects धर्मकं. ९. D. reads पुष्करार्थे for दुष्करार्थे. १०. B. originally and C. read महात्मने; while B. corrects महात्मभिः.

'तत्र दिव्यं नाम तुला धारणम् । विषाशनमग्निप्रवेशः । लोह धारणमिष्टापूर्तप्रदानमन्यांश्च[1] शपथान्कारयेत्' ।

इति । शपथाश्च बृहस्पतिना दर्शिताः—

'सतां[2] वाहन-शस्त्राणि गो-बीज-कनकानि च ।
देव-ब्राह्मणपादाश्च पुत्र-दारशिरांसि च ॥
एते च शपथाः प्रोक्ता अल्पार्थे सुकराः सदा' ॥

इति । शङ्ख-लिखितावपि—

'इष्टापूर्तप्रदानमन्यांश्च शपथान्कारयेत्' ।

इति । उद्दिष्टानां दिव्यानां मध्ये तुलादीनि महाभियोगे प्रयोक्तव्यानि । तथा च याज्ञवल्क्यः—

'तुला[3]ग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभि[4]योक्तरि' ॥

( या. स्मृ. २. ९९ )

इति । एषामग्निशब्देन तप्तायःपिण्ड-तप्तमाष-तप्तफा[5]-लाश्च गृह्यन्ते । न[6]नु—

'कोशमल्पेऽपि दापयेत्' ।

इति । स्वल्पाभियोगे कोशः[7] स्मर्यते । सत्यम् । कोशस्य तुलादिषु पाठः सावष्टम्भाभियोगेऽपि प्राप्त्यर्थः । न महाभियोगेष्वेवेति नियमार्थः । अन्यथा कोशस्य शङ्काभियोग एव प्राप्तिः स्यात् ।

---

१. A. सभ्यांश्च for अन्यांश्च. २. B. originally and D. read सत्यं for सतां, but B. corrects सतां. ३. B. C. read तुलाग्नयो for तुलाग्न्यापो. ४. C. reads ऽतियोक्तरि for ऽभियोक्तरि. ५. C. reads °पटालाश्च for °फालाश्च; while B. substitutes °तण्डुलाश्च. ६. C. and D. read न भुक्तौ for ननु. ७. C. omits कोशः स्मर्यते । सत्यम् and D. स्मर्यते । सत्यम्.

'अवष्टम्भाभियुक्तानां घटादीनि विनिर्दिशेत् ।
तन्दुलाश्चैव कोशश्च शङ्कास्वेव न संशयः' ॥

इति स्मरणात् । शीर्षकं विवादपराजयनिबन्धनो दण्डः तत्र तिष्ठतीति शीर्षकस्थः । यदा शीर्षकस्थोऽभियोक्ता[1] न स्यात्तदा एतानि दिव्यानि न[2] देयानि । तथा च नारदः—

'शीर्षकस्थो[3] यदा न स्यात्तदा दिव्यं न[4] दीयते' ।
( ना. स्मृ. ३. २६७ )

इति । दिव्यदाने नियममाह पितामहः—

'अभियोक्ता शिरस्थाने दिव्येषु परिकीर्त्यते[5] ।
अभियुक्ताय[6] दातव्यं दिव्यं श्रुतिनिदर्शनात्' ॥

इति । कात्यायनोऽपि—

'न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत् ।
अभियुक्ताय दातव्यं दिव्यं[7] दिव्यविशारदैः' ॥

इति । अभियुक्ताय दातव्यमित्यस्य[8] नियमस्यापवादमाह याज्ञवल्क्यः—

'रुच्या वान्यतरः कुर्यादितरो वर्तयेच्छिरः' ॥
( या. स्मृ. २. ९६ )

इति । नारदोऽपि—

---

१. C. substitutes नियोक्ता for ऽभियोक्ता. २. D. omits this न. ३. A. originally B. in correction and C. read शिष्टावर्ति for शीर्षकस्थो. ४. D. reads तु for न. ५. A. in marginal reading and B. originally read कीर्तयेत् for कीर्त्यते, but B. corrects कीर्त्यते. ६. C. reads अवियुक्ताय for अभियुक्ताय. ७. C. reads नित्यस्य नियमस्य वा for दिव्यं दिव्यविशारदैः. ८. D. reads दातव्यं नान्यस्येति for दातव्यमित्यस्य.

'परियोक्ता शिरःस्थाने सर्वत्रैकः प्रकल्पितः ।
इतरानि[1]तरः कुर्यादितरो वर्त्तयेच्छिरः' ॥

इति । क्वचिद्विषयविशेषे शिरोवि[2]नापि दिव्यं देयमित्याह कात्यायनः—

'पार्थिवैः शङ्कितानां च निर्दिष्टानां च दस्युभिः ।
शङ्का[3]शुद्धिपराणां च दिव्यं देयं शिरोविना ॥
लोकापवाददुष्टानां शङ्कितानां च[4] दस्युभिः ।
तुलादीनि नियोज्यानि न[5] शिरस्तत्र वै भृगुः[6] ॥
न शङ्कासु शिरःकोशो[7] कल्पयेच्च[8] कदाच न ।
अशिरांसि च दिव्यानि राजभृत्येषु दापयेत्' ॥

इति । विषयविशेषेषु दिव्यविशेषान् व्यवस्थापयति सङ्ग्रहकारः—

'घटा[9]दीनि विषान्तानि गुर्वर्थेषु च दापयेत्' ।

इति । पितामहः—

'अवष्टम्भाभियुक्तानां घटादीनि विनिर्दिशेत् ।
तन्दुलाश्चैव कोशश्च शङ्कास्वेतौ नियोजयेत्' ॥

इति । कात्यायनः—

---

१. A. and B. originally read ईश्वरानितरः and both in margin substitute यः for रः for इतरानितरः. २. C, reads शिरोऽनेनाऽपि and D. अशिरो भेदेनापि for शिरोविनाऽपि. ३. B. originally reads आत्म° and corrects शंङ्का°; while D. reads शाखा° for शङ्का°. ४. C. and D. substitute तु for च. ५. D. reads नो for न. ६. C. reads विद्भृगुः for वै भृगुः. ७. D. reads शोके for कोशे. ८. D. reads कल्मषेन for कल्पयेच्च. and C. कल्पयेत्. ९. A. B. D. do not mention this.

'शङ्का-विश्वास-सन्धाने विभागे रिक्थिना[1] सदा।
क्रियासमूहकर्तृत्वे कोशमेव प्रदापयेत्' ॥

इति। पितामहोऽपि—

'विलम्भे सर्वशङ्कासु सन्धिकार्ये तथैव च।
एषु कोशः प्रदातव्यो विद्वद्भिश्चित्तशुद्धये[2] ॥
शिरस्थायि[3]विहीनानि दिव्यादीनि[4] विवर्जयेत्[5]।
घटादीनि विषान्तानि कोश एको शिरःस्मृतः[6]' ॥

इति। धनतारतम्येन दिव्यस्य व्यवस्थामाह बृहस्पतिः—

'विषं सहस्रेऽपहृते[7] पादोने च हुताशनः।
त्रिभागोने तु सलिलमर्द्धे[8] देयो घटः सदा ॥
चतुःशतेऽभियोगे तु दातव्यं तप्तमाषकम्।
त्रिशते तन्दुलं देयं कोशश्चैव तदर्धके[9] ॥
शते हृते निन्हुते[10] वा दातव्यं धनशोधनम्।
गोचोरस्य प्रदातव्यं सभ्यैः[11] फालं प्रयत्नतः ॥
एवं संख्या निकृष्टानां मध्यानां द्विगुणा स्मृता।
चतुर्गुणोत्तमानां तु कल्पनीया परीक्षकैः' ॥

इति। कात्यायनोऽपि—

---

१. C. reads विष्णुना for रिक्थिना. २. B. originally reads वित्तं चित्तविशुद्धये, but corrects विद्वद्भिश्चित्तशुद्धये; while C. परिशुद्धये and D. शुद्धिवृद्धये respectively for चित्तशुद्धये. ३. D. reads शिरस्थोऽपि for शिरस्थायि°. ४. C. reads दिव्यानि for दिव्यादीनि. ५. C. reads विविधानि यत् and D. विवर्द्धयेत् for विवर्जयेत्. ६. D. reads स्थितः for स्मृतः. ७. D. reads ऽपाकृते for ऽपहृते. ८. C. and D. read सर्वे for अर्द्धे. ९. D. reads एकाशिरःस्मृतः for चैव तदर्द्धके. १०. D. reads निकृत्ते for निन्हुते. ११. B. originally and D. read सत्ये for सभ्यैः, but B. corrects सभ्यैः.

'ज्ञात्वा संख्यां सुवर्णानां शतमाने[१] विषं स्मृतम् ।
अशीतिस्तु विनाशे वै दद्याच्चैव हुताशनम् ॥
षष्ठ्या नाशे जलं[२] देयं चत्वारिंशति[३] वै घटम् ।
त्रिंशद्दर्श[४]विनाशे वै कोशपानं विधीयते ॥
पञ्चाधिकस्य वा नाशे तदर्द्धार्द्धस्य तन्दुलाः ।
तदर्द्धार्द्धस्य नाशे तु स्पृशेत्[५]पुत्रादिमस्तकम् ॥
तदर्द्धार्द्धस्य नाशे तु लौकिकाश्च क्रियाः स्मृता' ।

इति । विष्णुरपि—

'सर्वेषु चार्थजातेषु मूल्यं कनकं कल्पयेत । (७)
तत्र कृष्णलोने[६] शूद्रम् । (८)
दूर्वाकरं[७] शापयेद्द्विकृष्णलोने । (९)
तिलकरं त्रिकृष्णलोने । (१०)
रजतकरं चतुः कृष्णलोने । (११)
सुवर्णकरं पञ्चकृष्णलोने । (१२)
शिरोद्धृतमहीकरं[९] द्विगुणेऽर्थे । (१३)
यथा[१०]भिहिता समयक्रिया वैश्यस्य । (१४)

---

१. A. in margin B. originally read शतनाशे, but B. corrects शतमाने and D. in margin and C. both read शतहाने for शतमाने. २. D. reads विषं for जलं. ३. C. reads चत्वारिंशे च, and D. चत्वारिंशतिके for चत्वारिंशति वै. ४. B. originally reads विंशत्, but corrects त्रिंशत्. ५. D. reads देयं for स्पृशेत्. ६. C. reads °लोहेन for °लोने. ७. D. reads दूर्वाकुरैः for दूर्वाकरं. ८. C. reads द्विकृष्णलेन for द्विकृष्णलोने also whereever this form (°लोने) occurs C. reads °लेन for that. ९. D. inserts the word सीरव्रतं before शिरोद्धृतमहीकरम् and reads सीरो° for शिरो°. १०. C. and D. read यथाविहिता for यथाभिहिता. ११. C. reads वैश्यः for वैश्यस्य.

त्रिगुणेऽर्थे राजन्यस्य । ( १५ )

कोशोवर्जं चतुर्गुणेऽर्थे ब्राह्मणस्य । ( १६ )

इति । पादस्पर्शादीनां विशेषः स्मृत्यन्तरे दर्शितः—

'निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम् ।
ऊनत्रिके तु पुष्पं स्यात्कोशपानमतः परम्' ॥

इति । निष्कशब्देन काञ्चनकर्षचतुर्थांशो यो मुद्रामुद्रितः प्रतिपाद्यते । तत्रापि क्वचिद्देशे निष्कव्यवहारात् ।

'ज्ञात्वा संख्यां सुवर्णानां' ।

इति । यदुक्तं तत्र सुवर्णपरिमाणमाह मनुः—

'लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि ।
ताम्र-रूप्य-सुवर्णान्ताः प्रवक्ष्याम्यविशेषतः ॥
जालांतरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥
त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ।
ता राजसर्षपस्तिलस्ते त्रयो गौरसर्षपः ॥
सर्षपाः षड्यवो मध्यास्त्रियवन्त्वेककृष्णलम्' ।

इति । कृष्णलो गुञ्जा ।

'पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश ।
पलं सुवर्णाश्चत्वारः पलानि धरणं दश ॥
द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः ।
ते षोडश स्याद्धरणं पुराणश्चैव राजतः ॥

---

१. C. and D. omit this word. २. C. reads शेषः for विशेषः ३. C. and D. read विप्रे for निष्के. ४. D. reads रूप्यं for पुष्यं or पुष्पं. ५. C. and D. read सुवर्णानां ताः for सुवर्णान्ताः. ६. C. and D. read अशेषतः for अविशेषतः. ७. C. omits this whole line together with 10 following lines.

कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः ।
धरणानि दश ज्ञेयः शतमानस्तु राजतः ॥
चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः' ।
( म. स्मृ. ८. १३१-१३७ )

इति । त्रसरेणुसंज्ञा पुराणे दर्शिता—

'अष्टानां परमाणूनां समवायो यदा भवेत् ।
त्रसरेणुः स विख्यातस्ततः करक उच्यते' ॥

इति । माषशब्दः सुवर्णस्य षोडशे भागे वर्तते । कृष्णल-शब्दस्तु कर्षाशीतिभागवाची माषपंचमांशस्य कृष्णलत्वात् । सुवर्णशब्दस्तु काञ्चनकर्षवचनः । पण-कार्षापण शब्दौ पलच-तुर्थांशस्य ताम्रद्रव्यस्य नामधेये । पुराण-धरण शब्दौ पलद-शमांशस्य नामनी । कर्षचत्वारिंशत्तमांशस्य रूप्यद्रव्यस्य माषसंज्ञा । निष्क-शतमानशब्दौ एकपले रूप्यद्रव्ये वर्त्तेते । अतएव रूप्यसंज्ञाधिकारे याज्ञवल्क्य आह—

१. This sentence and the following verse is omitted from C. D.; २. D. reads °पण तृतीय° for °ऽशीति°. ३. A. and B. read पंच माषत्वात् for माषपंचमांशस्य कृष्णलत्वात्; while D. wrongly substitutes कर्ष° for कृष्णल°. ४. for, this and the following four sentences C. has the following माषपंचमांशस्य रुप्यद्रव्यस्य नामानि, कर्षचत्वारिंशत्तमांशस्य रूप्य-द्रव्यस्य माषसंज्ञा । निष्कशतमानशब्दौ एकपले रूप्यद्रव्ये वर्तते, also for the above mentioned five sentences D. has the following, रूप्यद्रव्यस्य नामानि कर्षवचनमस्ति । कार्षापणशब्दौ पलचतुर्थांशस्य तत्तद्रव्यस्य नामधेये पुराण-ध-रणशब्दौ पलदशमांशस्य रूप्यद्रव्यस्य नामानि. कर्षचत्वारिंशत्तमांशस्य रूप्यद्र-व्यस्य माषसंज्ञा, । निष्कशतमाषशब्दे एकपले रूप्यद्रव्ये वर्तते. both these are not consistant with manus' above quoted verses where description is this. ५. C. reads °संख्या° for °संज्ञा°.

'शतमानं तु दशभिर्धरणैः[1] पलमेव तु[2] ।
निष्कं सुवर्णाः चत्वारः' ॥

( या. स्मृ. १. ३६४—३६५ )

इति । बृहस्पतिस्तु सुवर्णशब्दस्यार्थान्तरमाह—

'ताम्रकर्षकृता मुद्रा विज्ञेयः कार्षिकः[3] पणः ॥
स एव चान्द्रिका[4] प्रोक्ता ताश्चतस्रस्तु धानका[5] ।
ता[6] द्वादश सुवर्णस्तु दीनाराख्यः स एव तु' ॥

इति । याज्ञवल्क्यस्तु पले विकल्पमाह—

'पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम्' ।

( या. स्मृ. १. ३६३ )

इति । राजतो[7]ऽपि कार्षापणोऽस्तीत्याह नारदः—

'कार्षापणो दक्षिणस्यां दिशि रौप्यः[8] प्रवर्तते' ।

इति । व्यासस्तु सुवर्णनिष्कस्य परिमाणमाह—

'पलान्यष्टौ सुवर्णं स्यात्[9]सुवर्णानां चतुर्दश ।
एवं निष्कप्रमाणं तु व्यासेन परिकीर्तितम्' ॥

इति । अत्र[10] मनूक्तप्रमाणान्तरमाषादिद्रव्यं[11] दिव्यदण्ड-व्यतिरिक्तविषये देशव्यवहाराविरोधेन ग्राह्यम् । तथा च बृहस्पतिः—

१. D. wrongly reads धराचैः for धरणैः. २. D. omits तु ३. D. reads कर्षकः for कार्षिकः. ४. B. originally reads चण्डिका for चांद्रिका. ५. D. reads धातका for धानका. ६. D. substitutes तत् for ताः. ७. D. reads राजते for राजतो. ८. D. reads रौप्ये प्रवर्तते; while C. substitutes प्रवर्तकः for प्रवर्तते. ९. C. and D. read स्युस्ते सुवर्णाश्चतुर्दश. १०. A. B. read यत्र for अत्र. ११. A. B. omit दिव्य°; while C. and D. omit द्रव्यं.

'संख्या रश्मिरजोमूलो मनुना समुदाहृता।
कार्षापणान्ता सा दिव्ये नियोज्या विनये तथा॥
कार्षापणसहस्रं तु दण्ड उत्तमसाहसः।
तदर्धं मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृतः'[१]॥

इति। जातिभेदेनापि दिव्यव्यवस्थामाह नारदः—

'ब्राह्मणस्य घटो देयः क्षत्रियस्य हुताशनः।
वैश्यस्य सलिलं देयं शूद्रस्य विषमेव तु॥
साधारणः समस्तानां कोषः प्रोक्तो मनीषिभिः'।
(ना. स्मृ. २. ३३४–३३५)

इति। अनित्या चेयं[२] व्यवस्था—

'सर्वेषु सर्वदिव्यं वा विषं[३] वर्ज्यं द्विजोत्तमे'।

इति कात्यायनस्मरणात्। व्यवस्थापक्षे वयोविशेषादिना व्यवस्थापनीयम्। तदाह नारदः—

'क्लीबान्[४] दीनान् सत्वहीनान् पतितांश्चार्दितान्नरान्।
बाल-वृद्ध-स्त्रियोऽन्धांश्च[५] परीक्षेत घटे सदा॥
स्त्रीणां तु न विषं प्रोक्तं न चापि सलिलं स्मृतम्।
घट-कोशादिभिस्तासामन्तस्तत्वं[६] विचारयेत्॥
न मज्जनीया[७] स्त्री बाला धर्मशास्त्रविचक्षणैः।
रोगिणो ये च वृद्धाः स्युः पुमांसो[८] ये च दुर्बलाः॥

१. C. and D. read °भूत्वा. २. C. reads अन्यनिमित्तविषया for अनित्या चेयम्. ३. D. reads दिव्य° for विषं. ४. C. reads क्लीबादीनां; while D. reads क्लीबानुन्मत्तबाधिरान् for क्लीबान्दीनान्सत्वहीनान्. ५. C. reads °स्त्रियो येषां; while D. °स्त्रिय एषां for स्त्रियो-ऽन्धांश्च. ६. D. reads अतस्तासां for अन्तस्तत्वं. ७. C. reads सज्जनीया for मज्जनीयाः. ८. C. reads यो मांसो for पुमांसो.

साहसे[1]ऽप्यागतानेतान्नैव तोये निमज्जयेत् ।
न चापि हारयेदग्निं न विषेण[2] विशोधयेत्’ ॥
( ना. स्मृ. ३. ३१–३१६ )

इति । कात्यायनः–

‘न[3] लोहशिल्पिनामग्निं सलिलं नांबुसेविनाम्[4] ।
मन्त्रयोगविदां चैव विषं दद्याच्च न क्वचित् ॥
तन्दुलै[5]र्न नियुञ्जीत[6] व्रतिनां मुखरोगिणाम्’ ।

इति । पितामहोऽपि–

‘कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम् ।
पित्त-श्लेष्मवतां नित्यं विषं तु परिवर्जयेत्’ ॥

इति । स्मृत्यन्तरेऽपि–

‘पण्यस्त्रीणां[7] व्यसनिनां कितवानां तथैव च ।
कोशः प्राज्ञै[8]र्न दातव्यो ये च नास्तिकवृत्तयः’ ॥

इति । कात्यायनोऽपि–

‘मातृ-पितृ-द्विज-गुरु-वृद्ध-स्त्री-बालघातिनाम् ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥
लिङ्गिनां प्रशमानां[9] तु मन्त्र-योगक्रियाविदाम् ।
वर्णसङ्करजातानां[10] पापाभ्यासप्रवर्तिनाम् ॥

---

१. C. reads साहसे प्यगते नित्यं; while D. reads सहसाप्यागतानेतान्. २. D. reads विशेषं for विषेण. ३. C. reads बलेन for न लोह°. ४. C. reads °सेविना for सेविनाम्. ५. C. and D. read तंदुले for तन्दुलैः. ६. B. originally reads वियुञ्जीत, but corrects नियुञ्जित. ७. B. originally reads मद्यपस्त्री°, but corrects पण्यस्त्रीणां; while D. यद्याप्यंस्त्री° for पण्यस्त्रीणां. ८. C. reads प्राज्ञा for प्राज्ञैः. ९. A. in margin and B. originally read प्रसवानां, but in correction B. reads प्रशमानां. १०. C. and D. read °जातीनां, for °जातानां.

एतेष्वेवाभियोगेषु निन्दितेष्वेव[१] यत्नतः ।
दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥
एतैरेव नियुक्तानां साधूनां[२] दिव्यमर्हति ।
न सन्ति[३] साधवो यत्र तत्र शोध्याः स्वकैर्नरैः' ॥

इति । यच्च[४] पितामहेनोक्तम्—

'सव्रतानां कृशाङ्गानां बाल-वृद्ध-तपस्विनाम् ।
स्त्रीणां तु न भवेद्दिव्यं यदि धर्मस्त्ववेक्ष्यते' ॥

इति तदग्न्यम्बुविषयम् । यत्तु कात्यायनेनोक्तम्—

'धनदारापहाराणां[५] म्लेच्छानां पापकारिणाम् ।
प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि ॥
तत्प्रसिद्धानि दिव्यानि संशये तेषु[६] निर्दिशेत्' ।

इति तत्तैर्नियुक्तपुरुषालाभविषयम् । हारीतस्तु वर्ण[७]विषये विशेषमाह—

'राजन्येऽग्निं घटं विप्रे वैश्ये तोयं नियोजयेत् ।
न विषं ब्राह्मणे दद्याद्विषं वर्णान्तरे स्मृतम् ॥
कोश-तन्दुल-धर्मास्तु धर्मसम्भवमेव च ।
पुत्र-दारादिशपथान् सर्ववर्णे प्रयोजयेत्' ॥

इति । दिव्यानां कालविशेषमाह पितामहः—

१. C. and D. read निन्द्येष्वेवं तु for निन्दितेष्वेव. २. C. reads धातूनां for साधूनां. ३. A. originally reads नश्यन्ति for न सन्ति. ४. C. reads यत्तु for यच्च; while D. reads यदपि. ५. D. reads अस्पृश्यधनदाराणां स्तेयानां; while B. substitutes °दासानां and C. °दानानां for °दाराणां. ६. B. originally reads संख्यायोग्येषु, but corrects संशये तेषु; while, D. reads संशयेषु न for संशये तेषु. ७. C. reads सुवर्ण° for वर्ण°.

'चैत्रो मार्गशिरश्चैव वैशाखश्च तथैव च ।
एते साधारणा मासा दिव्यानामविरोधिनः ॥
धटः सर्वर्तुकः[1] प्रोक्तो वाते वाति[2] विवर्जयेत् ।
अग्निं[3] शिशिर-हेमन्त-वर्षास्वपि च दापयेत् ॥
ग्रीष्मे सलिलमित्युक्तं हिमकाले तु वर्जयेत्' ।

इति । नारदोऽपि—

'अग्निः शिशिर-हेमन्त-वर्षासु परिकीर्तितः ।
शरद्ग्रीष्मे तु सलिलं हेमन्ते शिशिरे विषम् ॥
न शीते तोयसिद्धिः[4] स्यान्नोष्णकालेऽग्निशोधनम् ।
न प्रावृषि विषं दद्यात् प्रवाते न तुलां नृपः' ॥
(ना. स्मृ. ३. २६४—२६९.)

इति । विष्णुरपि—

'स्त्री-ब्राह्मण-विकला-ऽसमर्थ-रोगिणां तुला देया । सा च न वाति[5] वायौ । न नास्तिकस्य[6] । न च कुष्ठ्यसमर्थ-लोह-कारा-णामग्निर्देयः[7] । न शरद्ग्रीष्मयोश्च । 'न[8] कुष्ठि-पैत्तिक-ब्राह्मणानां विषं देयम् । प्रावृषि च । न श्लेष्मव्याध्यर्दितानां भीरूणां श्वासकासिनामम्बुजीविनां न[9] चोदकं हेमन्त-शिशिरयोश्च । नास्तिकेभ्यः कोशं न[10] देयम् । न देशे व्याध्युपसृष्टे च' ।

इति । पितामहोऽपि—

---

१. D. reads सार्वत्रिकः for सर्वर्तुकः २. C. reads च्याति for वाति. ३. C. omits this line; while D. replaces तथा for अग्निं. ४. C. reads नोपसिद्धिः for तोयसिद्धिः; while D. reads कोशसिद्धिः for तोयसिद्धिः. ५. C. reads न गते for न वाति. ६. A. B. C. do not insert this word. ७. D. reads असद्धर्मलोहकारिणाम् for न च कुष्ठ्यसमर्थलोहकाराणाम्. ८. C. and D. read न. ९. D. only reads this न. १०. C. and D. read न. ११. B. and C. read कुष्ठव्याधिमारकोपसृष्टानां for न कुष्ठि-पैत्तिक-ब्राह्मणानां; while D. कुष्ठव्याधिमारकोपहष्टेश्च.

'पूर्वाण्हेऽग्निपरीक्षा स्यात्पूर्वाह्णे च धटो भवेत् ।
मध्यान्हे तु जलं देयं धर्मतत्वमभीप्सता[1] ॥
दिवसस्य तु पूर्वाण्हे कोशशुद्धिर्विधीयते ।
रात्रौ तु पश्चिमे यामे विषं देयं सुशीतलम् ' ॥

इति । दिव्यदेशानाह पितामहः--

'प्राङ्मुखो निश्चलः कार्यः शुचौ देशे धटः सदा ।
इन्द्रस्थाने सभायां वा राजद्वारे चतुष्पथे ' ॥

इति । इन्द्रस्थानं प्रख्यातदेवतायतनोपलक्षणम् । अत एव नारदः--

'सभा-राजकुलद्वार-देवायतनचत्वरे' ।

( ना. स्मृ. ३. २६९ )

इति । अधिकारिविशेषेण देशविशेषान् व्यवस्थापयति कात्यायनः--

'दण्डस्थानेऽभिशस्तानां[2] महापातकिनां नृणाम् ।
नृपद्रोहप्रवृत्तानां राजद्वारे प्रयोजयेत् ॥
प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे ।
अतोऽन्येषु तु कार्येषु सभामध्ये विदुर्बुधाः' ॥

इति । दिव्यदेशाद्यनादरे दिव्यस्य प्रामाण्यहानिरित्याह नारदः--

'अदेशकाले[3] दत्तानि बहिर्वासकृतानि च ।
व्यभिचारं सदार्थेषु कुर्वन्ति हि[4] न संशयः' ॥

इति । वासो जननिवासः । तस्माद्बहिर्निर्जने[5] प्रदेश इति यावत् । तथा च पितामहः--

१. B. originally reads ऽभीप्सया for ऽभीप्सता. २. D. reads °शस्तानां for °शस्तानां. ३. C. and D. read °काल° for °काले. ४. C. and D. read कुर्वन्तीह for कुर्वन्ति हि. ५. C. and D. read °निर्जन° for निर्जने.

'[1]प्रत्यक्षं दापयेद्दिव्यं राजा[2] अधिकृतोऽपि वा ।
ब्राह्मणानां श्रुतवतां[3] प्रकृतीनां तथैव च' ॥

इति । दिव्ये साधारणेतिकर्तव्यतामाह स एवं[4]—

'दिव्येषु सर्वकार्याणि प्राड्विवाकः समाचरेत्[5] ।
ततः[6] आवाहयेद्देवान्विधिनाऽनेन[7] धर्मवित् ॥
प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् ।
एह्येहि भगवन्धर्म अस्मिन्दिव्ये समाविश ॥
सहितो लोकपालैश्च वस्वादित्य-मरुद्गणैः ।
आवाह्य तु धटे धर्मं पश्चादङ्गानि विन्यसेत्' ॥

इति । धटग्रहणं सर्वदिव्योपलक्षणार्थम् । एषां धर्माणां सर्वदिव्यसाधारणत्वात् । अङ्गविन्यासप्रकारस्तेनैव दर्शितः—

'इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं चापि दक्षिणे[8] ।
वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा ॥
अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ।
इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः ॥

१. The following portion is not found in C. and D:—

'प्रत्यक्षं दापयेद्दिव्यं राजा अधिकृतोऽपि वा ।
ब्राह्मणानां श्रुतवतां प्रकृतीनां तथैव च' ॥
दिव्ये साधारणेतिकर्तव्यतामाह स एवः—

२. A. and B. read राजा व्याधि° for राजा अधि°, but it seems to be incorrect. ३. A. and B. read सूतवतां for श्रुतवतां, but सूतवतां does not give good meaning here. ४. A. and B. read पितामहः—for स एव ५. After this word, A. B. C. add इति, ६. C. substitutes तत्र for ततः. ७. A. B. C. read तेन for ऽनेन. ८. C. and D. read दक्षिणे तथा for चापि दक्षिणे.

कुबेरस्तु सुवर्णाभो ऽप्यग्निश्चापि सुवर्णभः[1] ।
तथैवं[2] निर्ऋतिः श्यामो वायुर्धूम्रः[3] प्रशस्यते ॥
ईशानस्तु भवेद्रक्तः एवं ध्यायेत् क्रमादिमान् ।
इन्द्रस्य दक्षिणे पार्श्वे वसूनावाहयेद्बुधः ॥
धरो[4] ध्रुवस्तथा सोम आपश्चैवाऽनिलो नलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥
देवेशेशानयोर्मध्ये आदित्यानां तथायनम्[5] ।
धाताऽर्यमा च मित्रश्च वरुणेशौ भगस्तथा ॥
इन्द्रो विवस्वान्पूषा च पर्जन्यो दशमः स्मृतः ।
ततस्त्वष्टा ततो विष्णुरजघन्यो[6] जघन्यजः ॥
इत्येते द्वादशादित्यानामभिः परिकीर्त्तिताः ।
अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः ॥
वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ॥
भुवनाधीश्वरश्चैव कपाली च विशांपतिः ।
स्थाणुर्भगश्च[7] भगवान् रुद्रास्त्वेकादश स्मृताः ॥
प्रेतेशरक्षोमध्ये च मातृस्थानं प्रकल्पयेत् ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥
वाराही च महेन्द्राणी चामुण्डा गणसंयुता ।
निर्ऋतेरुत्तरे[8] भागे गणेशायतनं विदुः ॥

१. C. reads सुवर्णभाः; while D. ऽऽर्यसुवर्णभाः for ऽपि सुवर्णभः. २. C. and D. read तत्रैव for तथैव. ३. D. reads ताम्रः for धूम्रः. ४. D. reads धर्मो for धरो, but it seems to be incorrect, because the name of वसु is धर, but not धर्म. ५. D. reads यथाक्रमम् for तथायनम्. ६. D. reads अजयो यो for अजघन्यो. ७. D. reads भवश्च for भगश्च. ८. D. adds तु after निर्ऋतेः.

वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते ।
गगनस्पर्शनो वायुरनिलो मारुतस्तथा ॥
[1]प्राणः प्राणेश-जीवौ च मरुतोऽष्टौ प्रकीर्तिताः ।
[2]धर्मस्योत्तरभागे तु दुर्गामावाहयेद्बुधः ॥
एतासां देवतानां च स्वनाम्ना पूजनं[3] विदुः ।
भूषावसानं धर्माय दत्वा चार्घ्यादिकं[4] क्रमात् ॥
अर्घ्यादि पश्चादङ्गानां[5] भूषान्तमुपकल्पयेत् ।
गन्धादिकां नैवेद्यान्तां[6] परिचर्यां प्रकल्पयेत् ॥
चतुर्दिक्षु तथा होमः कर्तव्यो वेदपारगैः[7] ।
आज्येन हविषा चैव समिद्भिर्होमसाधनैः ।
सावित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत्' ॥

इति । प्रणवादिकां गायत्रीमुच्चार्य पुनः स्वाहान्तं प्रणवमुच्चार्य समिदाज्य-चरून् प्रत्येकमष्टोत्तरशतं जुहुयात् ।

'अनुक्तसंख्या यत्र स्याच्छतमष्टोत्तरं स्मृतम[8] ॥

इति स्मरणात् । एतत्सर्वमुपवासादिपूर्वकं कर्तव्यम् । तदाह नारदः—

---

१. A. in marginal reading and B. originally read प्राणापानौ च for प्राणः प्राणेश°. २. A, in marginal reading reads यमस्य; while C. धनस्य and D. धटस्य for धर्मस्य. also B. originally reads यमस्य for धर्मस्य. ३, A. in marginal reading and B. originally read स्थानान्यायतनं for स्वनाम्ना पूजनं. ४. C. and D. read पाद्यादिकं for चार्घ्यादिकं; while A. in marginal reading and B. originally substitutes तथा for क्रमात्. ५. C. reads देवानां for अंगानां. ६. A. B., C. and D. निवेद्यान्ते, but it seems incorrect form. ७. C. reads °पाठकैः for °पारगैः. ८. C. reads घृतम् for स्मृतम्.

'अहोरात्रोषिते[1] स्नात आर्द्रवाससि मानवे ।
पूर्वाण्हे सर्वदिव्यानां प्रदानमनुकीर्तितम्' ॥
(ना. स्मृ. ३. २६८.)

इति । याज्ञवल्क्योऽपि—

'सचैलं[2] स्नातमाहूय सूर्योदय उपोषितम् ।
कारयेत्सर्वदिव्यानि नृप[3]-ब्राह्मणसन्निधौ' ॥
(या. स्मृ. २. ९७)

इति । पितामहोऽपि—

'त्रिरात्रोपोषितायैव एक रात्रोषिताय वा ।
नित्यं देयानि दिव्यानि शुचये सार्द्रवाससे' ॥

इति । अयं चोपवासविकल्पो बलवदबलवद्[4]विषयतया द्रष्टव्यः । होमानन्तरं पितामहः—

'यं[5] चार्थमभियुक्तः[6] स्याल्लिखित्वा[7] तं तु पत्रके ।
मन्त्रेणानेन सहितं तत्कार्यं तु[8] शिरोगतम्' ॥

इति । मन्त्रस्तु—

'आदित्य-चन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्' ॥

इति । अयं च विधिः सर्वदिव्यसाधारणः ।

'एवं[9] मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत्' ।

---

१. A. and B. read °स्थितः स्नातः for °षिते स्नाते; while D. °षितः स्नात्वाऽऽर्द्रवासाः स मानवः.' २. D. reads सचैल° for सचैलं. ३. D. reads देव° for नृप°. ४. C. omits अबलवत्°. ५. D. reads यत् for यं; while D. originally reads यस्यार्द्धम् for यं चार्थम्. ६. C. reads अभियुक्तं for अभियुक्तः. ७. C. and D. read लिखितं for लिखित्वा. ८. C. and D. substitute च for तु. ९. C. and D. read इमं for एवं.

इति पितामहस्मरणात्। प्रयोगावसाने दक्षिणां दद्यात्। तथा च स एव—

'ऋत्विक्पुरोहिता-ऽऽचार्यान् दक्षिणाभिश्च तोषयेत्'।

इति दिव्यमातृका।

अथ धटविधिः।

तत्र पितामहः—

'प्राङ्मुखो निश्चलः कार्यः शुचौ देशे धटः सदा।
इंद्रस्थाने सभायां वा राजद्वारे चतुष्पथे'॥

इति। नारदोऽपि—

'सभा-राजगृहद्वार-सुरायतनचत्वरे'॥
(ना. स्मृ. ३. २६६.)

'विशालामुच्छ्रितां शुभ्रां धटशालां तु कारयेत्।
यत्रस्थो नोपहन्येत श्वभिश्चाण्डाल-वायसैः॥
कवाटबीजसंयुक्तां परिचारकरक्षिताम्।
पानीयादिसमायुक्तामशून्यां[1] कारयेन्नृपः'॥

इति। धटनिर्माणप्रकारमाह पितामहः—

'चतुर्हस्ता तुला कार्या पादौ कार्यौ तथाविधौ।
अन्तरं तु तयोर्हस्तो[2] भवेदध्यर्द्धमेव वा॥
छित्वा तु याज्ञिकं वृक्षं हेतुवन्मन्त्रपूर्वकम्।
प्रणम्य लोकपालेभ्यस्तुला कार्या मनीषिभिः'॥

इति। नारदः—

'खादिरीं कारयेत्तत्र निर्व्रणां शुक्लवर्जिताम्।
शिंशिपा तदभावे तु सालां वा कोटरैर्विना ॥२६४॥

१. D. reads पशूनां कारणं नृपः for अशून्यां कारयेन्नृपः. २. D. reads °हस्तो न चेद° for °हस्तो भवेद°.

अर्जुनस्तिलकोऽशोकस्तिमियो[1] रक्तचन्दनः ।
एवंविधानि काष्ठानि धटार्थं परिकल्पयेत् ॥२६६॥
ऋज्वी धटतुला कार्या खादिरी तैन्दुकी तथा ।
चतुरस्रा त्रिभिः स्थानैर्धटः कर्कटकादिभिः' ॥२६३॥
( ना. स्मृ. ३. २६३–२६९ )

इति । पितामहः—
'कर्कटानि च देयानि त्रिषु स्थानेषु यत्नतः ।
हस्तद्वयं निखेयं तु पादयोरुभयोरपि' ॥

इति । व्यासः—
'हस्तद्वयं निखेयं तु प्रोक्तं मुण्डकयोस्तयोः[2] ।
षड्ढस्तं तु तयोः प्रोक्तं प्रमाणं परिमाणतः' ॥

इति । पितामहोऽपि—
'तोरणे तु तयोः कार्ये पार्श्वयोरुभयोरपि ।
धटादुच्चतरे[3] स्याता नित्यं दशभिरङ्गुलैः ॥
अवलम्बौ च[4] कर्तव्यौ तोरणाभ्यामधोमुखौ ।
मृण्मयौ[5] सूत्रसम्बद्धौ धटमस्तकचुम्बिनौ' ॥

इति । नारदः—
'शिक्यद्वयं[6] समासाद्य[7] पार्श्वयोरुभयोरपि ।
एकत्र शिक्ये पुरुषमन्यत्र तुलयेच्छिलाम् ॥

१. D. reads शमीयो for °स्तिमियो. २. A. in margin and B. originally reads मुद्गकयोः, but B. corrects मुण्डकयोः; while C. reads उत्तंकयोः for मुण्डकयोः. ३. C. reads ऊर्ध्वतरे for उच्चतरे. ४. C. and D. substitute तु or च. ५. D. reads मृद्गतौ for मृण्मयौ. ६. A. and B. in correction and C. read शिरो° for शिक्य°. ७. B. originally reads समासद्य, but corrects समासाद्य.

धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलाम्।
पिटकं पूरयेत्तत्र[1] इष्टकायां सुलोष्टकैः' ॥
(ना. स्मृ. ३. २७१—२७२)

इति। पितामहः—

'एकस्मिन्तोलयेन्[2]मर्त्यं अन्यस्मिन्मृत्तिकां शुभाम्।
इष्टका-भस्म-पाषाण-कपालास्थिविवर्जिताम्[3]' ॥

इति। अत्र मृत्तिकेष्टका-ग्राव-पांसूनां विकल्पः। समता निरीक्षणार्थं राज्ञा तद्विदो नियोक्तव्याः। तथा च पितामहः—

'परीक्षका नियोक्तव्यास्तुला[4]मानविशारदाः।
वणिजो हेमकाराश्च कांस्यकारास्तथैव च ॥
कार्यः[5] परीक्षकैर्नित्यमवलम्ब[6]समो धटः।
उदकं च प्रदातव्यं धटस्योपरि पण्डितैः ॥
यस्मिन्न प्लवते[7] तोयं स विज्ञेयः समो धटः।
तोलयित्वा नरं पूर्वं पश्चात्तमवतार्य[8] तु ॥
धटं तु कारयेन्नित्यं पताका-ध्वजशोभितम्।
तत आवाहयेद्देवान्विधिनाऽनेन मन्त्रवित् ॥
वादित्र[9]-तूर्यघोषैश्च गन्धमाल्यानुलेपनैः'।

इति। अत्र विशेषमाह नारदः—

---

१. C. reads तस्मिन् for तत्र; while D. पुरतस्तस्मिन्निष्टका-पांशुलोष्ठकम् for पूरयेत्तत्र इष्ठकायां सुलोष्ठकैः. २. C. reads लोकयेत्; while D. रोपयेत् for तोलयेत्. ३. D. °विवर्जिते; while C. °विवर्जितान्, but both seem incorrect. ४. C. reads तुलायां तु for तुलामान° ५. D. reads कार्यं for कार्यः. ६. C. reads अवलम्ब्य for अवलम्ब°. ७. B. reads लभते; while D. reads स्रवते for प्लवते. ८. B. and C. read अवतार्य तु; while D. अवतारयेत् for अवतार्य तु. ९. D. reads वाद्येन for वादित्र°.

'रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः ।
अर्चयेत्तु घटं पूर्वं ततः शिष्टांश्च[1] पूजयेत्' ॥

इति । इन्द्रादीनित्यर्थः । ततः प्राड्विवाकस्तुलामामन्त्रयेत् । तदाह पितामहः—

'घटमामन्त्रयेच्चैवं[2] विधिनानेन शास्त्रवित्[3] ।
त्वं घट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् ॥
धकाराद्धर्ममूर्तिस्त्वं टकारात्कुटिलं नरम् ।
धृतो भावयते[4] यस्माद्धटस्तेनाभिधीयसे ॥
त्वमेव घट जानीषे न विदुर्यानि मानवाः ।
व्यवहाराभिशस्तोऽयं मानुषस्तोल्यते त्वयि ॥
तदेनं संशयाद[5]स्माद्धर्मतस्त्रातुमर्हसि' ॥

इति । शास्त्रवित् प्राड्विवाकः । ततः संशोध्य[6]ः तुलामामन्त्रयीत[7] । तदाह याज्ञवल्क्यः—

'तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः ।
प्रतिमानसमीभूतो रेखां कृत्वावतारितः ॥
त्वं तुले सत्यधर्मा[8]सि पुरा देवैर्विनिर्मिता ।
तत्सत्यं वद कल्याणि संशयान्मां विमोचय ॥

१. C. reads शिक्यां तु for शिष्टांश्च. २. D. reads चैवं for चैव. ३. B. originally reads मंत्रवित् for शास्त्रवित्. ४. D. reads भावयसे for भावयते. ५. C. reads संशयं तस्माद्धर्मतः स्थातुमर्हसि; while D. संशयं तस्मात् धर्मतश्छेत्तुमर्हसि for संशयादस्माद्धर्मतस्त्रातुमर्हसि. ६. A. and B. read शोध्योऽपि for संशोध्य. ७. D. reads आमन्त्रयेत् for आमन्त्रयीत. ८. D. reads °धामा° for °धर्मा°.

यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय।
शुद्धश्[1]चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत्' ॥

(या. स्मृ. २. १००-१०२)

इति। ततः प्राड्विवाकस्तुलाधारकं शपथैर्नियम्य शोध्यं पुनरारोपयेत्। तथा च नारदः—

'समयैः[2] परिगृह्याथ पुनरारोपयन्नरम्।
निर्वाते[3] वृष्टिरहिते शिरस्यारोप्य पत्रकम्' ॥

(ना. स्मृ. ३. २७६)

इति। समयाः शपथाः। ते च विष्णुना दर्शिताः—

'ब्रह्मघ्नानां[4] स्मृता[5] लोका ये लोकाः कूटसाक्षिणाम्।
तुलाधारस्य ते लोकास्तुलां धारयतो मृषा[6]' ॥

इति। पुनरारोपणानन्तरं नारदः—

'त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च। (२७८)
त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोऽयं मानव[7]स्तोल्यते त्वया।
तदेनं[8] संशयारूढं धर्मतस्त्रातुमर्हसि' ॥

इति। देवा-ऽसुरमनुष्याणां सत्ये त्वमतिरिच्यसे।

'सत्यसन्धो[9] हि भगवान् शुभाशुभविभावनः[10]।

---

१. D. reads शुद्धिः for शुद्धः. २. C. and D. read समयं for समयैः. ३. D. reads निहिते for निर्वाते. ४. D. reads ब्रह्मघ्नो ये. ५. C. and D. read कृताः for स्मृताः. ६. B. C. D. read वृथा for मृषा. ७. D. reads नानृतं for मानवः. ८. D. reads तदेवं for तदेनं. ९. C. and D. read सत्यसंधोऽसि for सत्यसंधो हि. १०. A. in margin and B. originally read °विभावकः; while B. corrects °विभावनः. also D. reads °विभावतः.

आदित्य-चन्द्रावनिलोऽनलश्च
　द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
　धर्मश्च जानाति नरस्य वृत्तम्' ॥
(ना. स्मृ. ३. २७८, ३. २८०).

इति । तदनन्तरं पितामहः—

'ज्योतिर्विद्ब्राह्मणः श्रेष्ठः कुर्यात्कालपरीक्षणम् ।
विनाड्यः पञ्चविज्ञेयाः परीक्षा कालकोविदैः ॥
साक्षिणो ब्राह्मणाः[1] श्रेष्ठा यथादृष्टार्थवादिनः ।
ज्ञानिनः शुचयोऽलुब्धा नियोक्तव्या नृपेण तु ॥
तेषां[2] वचनतो गम्यः शुद्ध्यशुद्धि[3]विनिर्णयः' ।

इति । आरोपितं[4] च विनाडीपंचकं यावत्तावत्तथैव स्थापयेत् । दशगुर्वक्षरोच्चारणकालः प्राणः । षट्प्राणा विनाडिका[5] ।
उक्तं च—

'दशगुर्वक्षरः प्राणः षट्प्राणाः स्याद्विनाडिका' ।

इति । शुद्ध्यशुद्धिनिर्णये कारणमाह[6] नारदः—

'तुलितो यदि वर्द्धेत विशुद्धः[7] स्यान्न संशयः ।
समो वा हीयमानो वा न विशुद्धो भवेन्नरः' ॥
(ना. स्मृ. ३. २८३)

इति । व्यासः-

---

१. C. and D. read ब्राह्मणश्रेष्ठाः for ब्राह्मणाः श्रेष्ठाः, २. C. reads एतेषां वचनैः for तेषां वचनतः. ३. C. and D. read शुद्धयुक्ति° for शुध्यशुद्धि°. ४. A. in marginal reading, and B. originally read °गुर्वर्णकः but B. corrects °गुर्वक्षरः; while this sentence does not appear in A. B. and C.; ५. C. reads त्रिनाडिका, but it seems incorrect. ६. C. reads कारणाभावम् for °कारणम्. ७. A. and B. read विशुद्धिः for विशुद्धः.

'अधोगतो न शुद्ध्येत्तु शुद्ध्येदूर्ध्वगतस्तथा।
समोऽपि न विशुद्धः स्यादेषा शुद्धिरुदाहृता॥
शिक्यच्छेदेऽक्षभङ्गे च भूयश्चारोपयेन्नरम्।
एवं निःसंशयज्ञानात्ततो भवति निर्णयः'॥

इति। शुद्धेस्तु संशयो नारदेन प्रपञ्चितः—

'तुला शिरोभ्यामुद्भ्रान्तं विवर्णं न्यस्तलक्षणम्।
[4]यदा वायुप्रणुन्नं वा चलत्यूर्ध्वमधोऽपि वा॥
निर्मुक्तः सहसा वा ऽपि तदा नैकतरं वदेत्'।

इति। अयमर्थः—यदा [5]तुलाग्रभागौ तिर्यक्चलितौ, यदा च समताज्ञानार्थं न्यस्तमुदकादि चलितं, यदा च वायुना प्रेरिता तुला ऊर्ध्वमधश्च कम्पते, यदा च तुला [6]दोलाधारकेण हठात्प्रमुच्यते तदा जयं पराजय वा न [7]निश्चिनुयादिति। राज्ञः कर्तव्यमाह पितामहः—

'साक्षिभिः परिवृतो राजा शुद्धं [8]रूढं प्रपूजयेत्।
ऋत्विक्पुरोहिताचार्यान् दक्षिणाभिश्च तोषयेत्॥
एवं कारयिता राजा भुक्त्वा भोगान्मनोरमान्।
महतीं कीर्तिमाप्नोति ब्रह्मभूयाय कल्पते'॥

इति धटविधिः।

१. A. and B. read अधोगतिर्; while C. अधोगते for अधोगतो
२. C. and D. wrongly read शिरच्छेदे for शिक्यच्छेदे. ३. D. reads विषमं न्यस्त° for विवर्णं न्यस्त°. ४. B. originally reads यथा and C. and D. वा सुप्रणुन्ना वा चलेत्पूर्वं. ५. A. and B. read तुलितौ for तुलाग्रभागौ. ६. D. omits °दोला°. ७. D. reads विनिश्चेतुं शक्नुयात् for निश्चिनुयात्. ८. A. and C. read षृयुद्धमूढं; while B. originally शुद्रगूढं and in correction युद्धमूढं for शुद्धं रूढं.

## अथाऽग्निविधिः।

[१]तत्र प्रजापतिः—

'अग्नेर्विधिं प्रवक्ष्यामि यथावच्छास्त्रचोदितम्।
कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमं तथा॥
आग्नेयं मण्डलं चाद्यं द्वितीयं वारुणं तथा।
तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम्॥
पञ्चमं त्विन्द्रदैवत्यं षष्ठं कौबेरमुच्यते।
सप्तमं सोमदैवत्यं अष्टमं सर्वदैवतम्॥
पुरस्तान्नवमं यत्तु तन्महद्दैवतं विदुः।
गोमयेन कृतानि स्युरद्भिः पर्युक्षितानि च॥
द्वात्रिंशदङ्गुलान्याहुर्मण्डलान्मण्डलान्तरम्।
अष्टभिर्मण्डलैरेवमङ्गुलीनां शतद्वयम्॥
षट्पञ्चाशत्समधिकं भूमेस्तु परिकल्पना।
मण्डले मण्डले देयाः कुशाः शास्त्रप्रचोदिताः'[२]॥

इति। तत्र नवमं मण्डलमपरिमितांगुलिप्रमाणकम्[३]। तद्विहायाष्टभिर्मण्डलैरष्टाभिश्चान्तरालैः प्रत्येकं षोडशांगुलिप्रमाणैरंगुलीनां द्विहानां षट्पञ्चाशत्समधिकं शतद्वयं सम्पद्यते। अङ्गुलिप्रमाणं च स्मृत्यन्तरेऽभिहितम्—

'तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला'॥

इति। अत्र च गम्यानि सप्तैव मण्डलानि।

---

१. C. and D. omit this. २. C. originally reads यथाशास्त्रप्रभोदयात् for कुशाः शास्त्रप्रचोदिताः. ३. D. reads मंडलं परिमितांगुल°.

'स [1]तेमादाय सप्तैव मण्डलानि शनैर्व्रजेत्' ॥
(या. स्मृ. २. १०६.)

इति याज्ञवल्क्यस्मरणात् । नारदोऽपि—

'हस्ताभ्यां तं समादाय प्राड्विवाकसमीरितः ।
स्थित्वैकस्मिन्[2]ततोऽन्यानि व्रजेत्सप्त त्वजिम्हगः ॥
असम्भ्रान्तः शनैर्गच्छेदक्रुद्धः [3]सोऽनलंप्रति ।
न [4]पातयेत्तामप्राप्य या भूमिः परिकल्पिता ॥२९७॥
न मण्डलमतिक्रामेन्न चार्वागर्पयेत्पदम् ॥२९९॥
मण्डलं चाष्टमं गत्वा ततोऽग्निं विसृजेन्नरः' ॥२९७॥
(ना. स्मृ. २९६–२९७)

इति । अग्नि[5]विसर्जनं नवमे मण्डले कार्यम् । तथा च पितामहः—

'अष्टमं मण्डलं गत्वा नवमे निक्षिपे[6]द्बुधः' ॥

इति । [7]अयसः पिण्डपरिमाणमाह पितामहः—

'[8]असंयतं चाग्रहीनं पञ्चाशत्पलिकं समम् ।
पिण्डं तु तापयेदग्नावष्टाङ्गुलमयोमयम्' ॥

इति । [9]आद्यमण्डलाद्दक्षिणतोऽग्निं प्रतिष्ठाप्य अग्नये पवमानायेति मन्त्रेणाष्टोत्तरशतवारं प्राड्विवाको जुहुयात् ।

---

१. C. does not inserts सतमादाय सप्तैव मण्डलानि. २. A. and B. read अतो and D. यतो for ततो. ३. A. originally and B in correction and C. read स्वोन्नतं; while D. सोष्टमं for सोऽनलं. ४. A. and B. read तापयेत् for पातयेत्. ५. C. and D. read °विसर्गश्च for विसर्जनं and कार्यः for कार्यम् ६. D. substitutes ततः for बुधः. ७. A. and D. read अथ for अयसः. ८. B. originally reads असहीनं समं कृत्वा and in margin gives असत्यन्तु समं कृत्वा; while D. आयसन्तु for असंयतं. ९. C. reads समं मंडलं and D. प्रथममंडलात् for आद्यमण्डलात्.

'शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतम्' ।

इति स्मरणात् । तस्मिन्नेवाग्नावयःपिण्डं लोहकारेण तापयेत् । तदाह नारदः—

'जात्यैव लोहकारो यः कुशलश्चापि कर्मणि ।
दृष्टप्रयोगश्चान्यत्र तेनाऽयोऽग्नौ तु तापयेत् ॥
अग्निवर्णमयःपिण्डं सस्फुलिङ्गं सुरंजितम् ।
पञ्चाशत्पलिकं भूयः कारयित्वा शुचिव्रतः ॥
तृतीयतापे ताप्यन्तं ब्रूयात्सत्यपुरस्कृतम्' ।

(ना. स्मृ. ३. २८८–२९०)

इति । लोहशुध्यर्थमवितसमुदके निक्षिप्य पुनः सन्ताप्योदके निक्षिप्य पुनः सन्तापनं तृतीयस्तापः । तस्मिन्तापे वर्तमाने धर्मावाहनादिग्रहणान्तं पूर्वोक्तविधिं विधाय पिण्डस्थमग्निमेभिर्मन्त्रैरभिमन्त्रयीत । मन्त्राश्च नारदेन दर्शिताः—

'त्वमग्ने वेदाश्चत्वारः पञ्चयज्ञेषु हूयसे ।
त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम् ॥
जठरस्थो हि भूतानां तथा वेत्सि शुभाशुभम् ।
पापं पुनासि वै यस्मात् तस्मात्पावक उच्यते ॥

१. D. omits शान्त्यर्थं जुहुयात्. २. C. reads वापयेत्. ३. C. and D. read °श्चामि° for °श्चापि. ४. A. in margin reads सुरार्चितम् and सुरक्षितम् and originally सुरार्जितम्; while B. originally सुरक्षितम् and in correction सुरार्पितम् for सुरंजितम्. ५. C. and D. read शुचिर्द्विजैः for शुचिव्रतः. ६. C. reads °वाहनादिवन्मतं; while D. °वाहनादिमल्मण्डपं for °वाहानादिग्रहाणान्तं. ७. C. reads अभिमंत्र्य for अभिमंत्रयीत and D. reads अभिमंत्रयेत्. ८. C. reads सुर्गतमंत्राश्च for only मंत्राश्च. ९. D. reads स्वं च for पंच°.

पापेषु दर्शयाऽऽत्मानं अर्चिष्मान्भव पावक।
अथवा शुद्धभावेषु शीतो भव हुताशन॥
त्वमेव[1] सर्वभूतानामन्तश्चरसि साक्षिवत्।
त्वमग्ने[2] देव जानीषे न विदुर्यानि मानवाः॥
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति[3]।
तदेनं संशयादस्मात् धर्मतस्त्रातुमर्हसि[4]॥

(ना. स्मृ. ३. २११—२१६.)

इति। शोध्यकर्तव्यमाह[5] हारीतः—

'प्राङ्मुखस्तु ततस्तिष्ठेत्प्रसारितकराङ्गुलिः।
आर्द्रवासाः शुचिश्चैव शिरस्यारोप्य पत्रकम्'॥

इति। नारदोऽपि—

'आदित्याभिमुखास्तिष्ठन्निमं मन्त्रमुदीरयेत्।
त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत्॥
हव्यं वहसि देवानां हुतः शांतिं प्रयच्छसि।
प्रच्छन्नानि मनुष्याणां पापानि सुकृतानि च॥
त्वमेव सर्वं जानीषे न विदुर्यानि मानुषाः।
व्यवहाराभिशस्तोऽहं वन्हे तिष्ठामि संशये॥
तस्मान्मां संशयारूढं धर्मतस्त्रातु मर्हसि'।

(ना. स्मृ. ३. २९—२.)

इति। अत्रादावेव व्रीहिमर्दनेन शोध्यस्य करौ लक्षयेत्।
तदाह विष्णुः—

---

१. D. reads त्वमग्ने for त्वमेव. C. too this same. २. C. and D. read त्वमेव for त्वमग्ने. ३. C. reads सिद्धि° for शुद्धि°. ४. A. and B originally read धर्मेण स्यातु°, but in correction B. reads धर्मतस्त्रातु° ५. this is omitted in B. C. D.

'करौ विमर्दितव्रीही[1] तस्यादावेव लक्षयेत्' ।

(वि. स्मृ. १०. ११)

'लक्षयेत्तस्य चिन्हानि हस्तयो रुभयोरपि ।

प्राकृतानिच[2] गुढानि[3] सव्रणान्यव्रणानि च ॥

हस्तक्षतेषु सर्वेषु कुर्याद्धंसपदानि तु' ।

(ना. स्मृ. २. ३०१).

इति । अग्निधारणात्पूर्वमेतानि ज्ञानार्थम्[4] । तस्य शोध्यस्य-करद्वयस्थितव्रणादिस्थानेषु[5] अलक्तकादिरसेन हंसपदानि कुर्यादित्यर्थः । ततः कर्तव्यमाह याज्ञवल्क्यः—

'करौ विमृदितव्रीही लक्षयित्वा ततो न्यसेत् ।

सप्ताऽश्वत्थस्य पर्णानि तावत्सूत्रेण वेष्टयेत्' ॥

(या. स्मृ. २. १०३.)

इति । पर्णानि च समानि[6] कर्तव्यानि—

'पत्रैरञ्जलिमापूर्य आश्वत्थैः सप्तभिः समैः' ॥

इति स्मरणात् । वेष्टनसूत्राणि च सितानि कर्तव्यानि ।

'वेष्टयीत सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिः' ।

इति नारदस्मरणात् । तथा सप्त शमीपर्णानि तथैव दूर्वापत्राणि दध्यक्तांश्चाक्षतानश्वत्थपत्राणामुपरि न्यसेत् । तदुक्तं स्मृत्यन्तरे—

१. D. reads विमृदितौ व्रीहिभिः for विमर्दितव्रीही. २. D. reads प्राकृतानीव for प्राकृतानि च. ३. B. originally reads मूढानि, but in correction गुढानि. ४. D. reads °धारणतः पूर्वमेतद्विज्ञानार्थं for धारणात्पूर्वमेतानि ज्ञानार्थम्. ५. C. and D. read °वर्णादि° for °व्रणादि°. ६. C. reads सप्तानि for समानि.

'सप्त पिप्पलपत्राणि शमीपत्राण्यथाक्षतान् ।
दूर्वायाः सप्तपर्णानि दध्यक्तांश्चाक्षतान्न्यसेत्' ॥

इति । न्यसेत् दद्यात् । पुष्पाणि च विन्यसेत् ।
तदाह पितामहः—

'सप्तपिप्पलपत्राणि अक्षताः सुमनो दधि ।
हस्तयोर्निक्षिपेत्तत्र सूत्रेणावेष्टनं तथा' ॥

इति । यत्तु स्मृत्यन्तरम्—

'अयस्तप्तं तु पाणिभ्यामर्कपत्रैस्तु सप्तभिः ।
अन्तर्हितं हरन् शुद्धस्त्वदग्धः सप्तमे पदे' ॥

इति तदश्वत्थपत्रालाभविषयम् । यतोऽश्वत्थपत्राणां मुख्यत्वमाह पितामहः—

'पिप्पलाज्जायते वन्हिः पिप्पलो वृक्षराट् स्मृतः ।
अतस्तस्य तु पत्राणि हस्तयोर्निक्षिपेद्बुधः' ॥

इति । अनन्तरकर्तव्यमाह स एव—

'ततस्तं समुपादाय राजा धर्मपरायणः ।
सन्दंशेन नियुक्तोऽथ हस्तयोस्तत्र निक्षिपेत् ॥
त्वरमाणो न गच्छेत स्वस्थो गच्छेच्छनैः शनैः ।
न मण्डलमतिक्रामेन्नान्तरा स्थापयेत्पदम् ॥
अष्टमं मण्डलं गत्वा नवमे स्थापयेद्बुधः ।
भयार्तः पातयेद्यस्तु व्रणं च न विभाव्यते ॥

१. C. and D. omit the following.
'सप्तपिप्पलपत्राणि शमीपत्राण्यथाक्षतान् ।
दूर्वायाः सप्तपर्णानि दध्यक्तांश्चाक्षतान्न्यसेत्' ॥
न्यसेत् दद्यात् । पुष्पाणि च विन्यसेत् ।
तदाह पितामहः—

पुनरारोहयेल्लोहं[1] स्थितिरेषा दृढीकृता' ।

इति । यदा च दग्धादग्धसन्देहः[2] तदाह नारदः—

'यदा तु न विभाव्येते दग्धाविति करौ तदा ।
व्रीहीनतिप्रयत्नेन सप्तवारं[3] तु मर्दयेत् ॥
मर्दितो यदि नो दग्धः सभ्यैरेव विनिश्चितः[4] ।
शोध्यः[5] शुद्धः स सत्कृत्यो दग्धो दण्ड्यो यथाक्रमम् ॥
पूर्वदृष्टेषु चिन्हेषु ततोऽन्यत्रापि[6] लक्षयेत् ।
मण्डलं रक्तसङ्काशं यत्रान्यदग्निसम्भवम् ॥
यो निरुद्धस्तु[7] विज्ञेयो सत्यधर्मव्यवस्थितः' ।
(ना. स्मृ. ३. ३०२–३.)

इति । यस्तु[8] सन्त्रासात्प्रज्वालया हस्ताभ्यामन्यत्र दह्येत तथाप्यशुद्धो न भवति । तदाह कात्यायनः—

'प्रज्वालेनाभिशस्तश्चेत्स्थानादन्यत्र दह्यते ।
अदग्धं तं विदुर्देवास्तस्य भूयो न[9] दापयेत्' ॥

इति । शुद्धः कालावधिमाह पितामहः—

'ततस्तद्धस्तयोः प्रास्येद्व्रीहीन्वा[10] यदि वा यवान् ।
निर्विशङ्केन तेषां तु हस्ताभ्यां मर्दने कृते ॥
निर्विकारो[11] दिनस्यान्ते शुद्धिं तस्य विनिर्दिशेत्' ।

इति अग्निविधिः ॥

---

१. B. originally and D. read ऽऽरोपयेत् for ऽऽरोहयेत्. २. D. omit दग्धा°. ३. C. and D. read °वारांस्तु for °वारं तु. ४. C. reads विनिश्चितम् ५. D. reads गोप्यः and B. originally मोच्यः for शोध्यः. ६. B. originally and C. read पत्राणि for ऽन्यत्रापि. ७. A. in margin and B. originally read विशुद्धस्तुस and D. substitutes स for तु for यो निरुद्धस्तु. ८. D. read यत्तु त्रासात्प्रज्वालनेन for यस्तु सन्त्रासात्प्रज्वालया. ९. A. B. C. substituts अपि for न and D. योजयेत् for दापयेत्. १०. D. reads गृहीत्वान्यैर्यवैर्यवान् for व्रीहिन्वा यदि वा यवान्. ११. C. and D. read निर्विकारे for निर्विकारो.

## अथ जलविधिः ।

तत्र प्रजापतिः—

‘तोयस्यातः प्रवक्ष्यामि विधिं धर्म्यं[1] सनातनम् ।
मण्डलं धूप-दीपाभ्यां कारयेत[2] विचक्षणः ॥
शरान्सम्पूजयेद्भक्त्या वैष्णवं[3] च धनुस्तथा ।
मङ्गलैः[4] पुष्प-धूपैश्च ततः कर्मसमाचरेत्’ ॥

इति । धनुषः प्रमाणमाह नारदः—

‘क्रूरं धनुः सप्तशतं मध्यमं षट्शतं स्मृतम् ।
मन्दं पञ्चशतं ज्ञेयमेष[5] ज्ञेयो धनुर्विधिः ॥
मध्यमेन तु चापेन प्रक्षिपेत्तु शरत्रयम् ।
हस्तानां तु[6] शते सार्द्धे[7] लक्ष्यं कृत्वा विचक्षणः ॥
न्यूनाधिके तु दोषः स्यात्क्षिपतः सायकांस्तथा’ ।

(ना. स्मृ. ३. ३०७.)

इति । अत्राङ्गुलिसङ्ख्या विवक्षिता[8] । शराश्चायसाग्राः[9] कर्तव्याः ।

---

१. B. originally, and D. read धर्मं for धर्म्यं. २. D. reads पूजयेत्तत् for कारयेत्. ३. C. reads वैष्णवांस्तु तत° for वैष्णवं च धनुः. ४. A. originally reads मंडलैः for मंगलैः. ५. B. originally reads पृथक् for एष and corrects एव. ६. D. substitutes च for तु. ७. B. originally reads शतं सार्धं and corrects शते सार्द्धं; while D. शतैनार्धं for शते सार्द्धं. ८. B. originally reads विवर्जिता and corrects विवक्षिता. ९. D. reads ऽनायसाग्रा for श्चायसाग्राः B. orginally and E. also read as D. but B. corrects श्चायसाग्राः.

‘ शरान्[1]प्यायसैरग्रैः प्रकुर्वीत विशुद्धये ।
वेणु[2]काण्डमयांश्चैव क्षेप्ता च सुदृढं क्षिपेत्’ ॥

इति वाचनात् ॥ क्षेप्ताचाऽत्र क्षत्रियः । तद्वृत्तिर्ब्राह्मणो वा । तदाह पितामहः—

‘ क्षेप्ता च क्षत्रियः कार्यस्तद्वृत्तिर्ब्राह्मणोऽपि वा ।
अक्रूरहृदयः शान्तः सोपवासः क्षिपे[3]दिति ॥
शरस्य पतनं ग्राह्यं सर्पणं तु विवर्जयेत् ।
सर्[4]पन्सर्पन्शरो यायाद्दूराद्दूरतरं यतः ॥
इषून्न प्रक्षिपेद्विद्वान्मारुते वाति वा भृशम् ।
विषमे वा प्रदेशे च वृक्ष-स्थाणुसमाकुले ॥
तरु-गुल्म-लता-वल्ली-पङ्क[5]-पाषाणसंयुते’ ।

इति । तोरणं च मज्जनसमीपस्थाने समे शोध्यकर्णप्रमाणोच्छ्रितं कार्यम् । तदाह नारदः—

‘ गत्वा तु तज्ज[6]लस्थानं तटे तोरणमुच्छ्रितम् ।
कुर्वीत कर्णमात्रं तु भू[7]मिभागे समे शुचिः’ ॥

इति । उपादेयानुपादेये ज[8]ले विविनक्ति पितामहः—

---

१. A. and B in marginal version read पिच्छेन च समायुक्तान्; while C. and D. शरैनायसाग्रैश्च. for शरानप्यायसैरग्रैः. २. A. and B. in marginal reading has धनुषस्तान्शरांश्चैव; while C. वेणुदंडमयाश्चैव and D. धनुषस्तान्शरांश्चवै; while C. वेणुदंडमयांश्चैव and D.—

धनुषस्तान्शरांश्चैव सुदृढानिविर्वितयेत् ।
for वेणुकाण्डमयांश्चैव, and
वेणुकाण्डमयांश्चैवक्षेप्ताचसुदृढंक्षिपेत ॥

३. D. reads क्षिपेत्शरान् for क्षिपेदिति. ४. C. reads यत्नसर्पम् for सर्पन्सर्पन्. ५. B. originally reads पंचपल्लवसंयुतं, but corrects पंक-पाषाणसंयुते. ६. D. reads सजलं स्थानं for तज्जलस्थानं. ७. C. reads भूमिभागसमंशुरा while D. भूमिभागसमे शुचौ for भूमिभागे समे शुचिः. ८. D. reads °देयजले for °देये जले.

'स्थिरतोये निमज्जेत्तु न ग्राहिणि न चाल्पके ।
तृण-शैवालरहिते जलौका-मत्स्यवर्जिते ॥
देवखातेषु यत्तोयं तस्मिन्कुर्याद्विशोधनम् ।
आहार्यं वर्जयेत्तोयं शीघ्रगासु नदीषु च ॥
आविशेत् सलिले नित्यमूर्मि-पंकविवर्जिते ।
स्थापयेत्प्रथमं तोये स्तम्भवत्पुरुषं नृपः ॥
आगतं प्राङ्मुखं कृत्वा तोयमध्ये तु कारिणम् ।
ततस्त्वावाहयेद्देवान् सलिलं चानु मन्त्रयेत्' ॥

इति । तत्र चादौ वरुणपूजा कर्तव्या । तदाह नारदः—

'गन्धमाल्यैः सुरभिभिर्मधु-क्षीर-घृतादिभिः ।
वरुणाय प्रकुर्वीत पूजामादौ समाहितः' ॥

इति । एवं वरुणपूजां कृत्वा धर्मावाहनादिसकलदेवतापूजाहोमसमन्त्रकप्रतिज्ञापत्रशिरोनिवेशनान्तं कृत्वा प्राड्विवाको जलाभिमन्त्रणं कुर्यात् । मन्त्रश्च विष्णुना दर्शितः—

'त्वमन्तः सर्वभूतानां अन्तश्चरसि साक्षिवत् ।
त्वमेवाम्भो विजानीषे न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोऽयं मानुषस्त्वयि मज्जति ।
तदेनं संशयादस्मात्धर्मतस्त्रातुमर्हसि' ॥

( वि. स्मृ. १२. ७--८ )

इति । पितामहोऽपि—

१. B. C. D. read तस्मिन् for यस्मिन्. २. D. reads शालं च for स्तंभवत्. ३. C. reads कारिण: for कारिणम्. ४. D. reads त्वमेषां भो for त्वमेवाम्भो. ५. C. D. read तस्मात् for अस्मात्.

'तोय त्वं प्राणिनां प्राणः सृष्टे राद्यं तु निर्मितम् ।
शुद्धेस्त्वं कारणं प्रोक्तं द्रव्याणां देहिनां तथा ॥
अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे' ।

इति । शोध्यस्येतिकर्तव्यतामाह याज्ञवल्क्यः—

'सत्येन माभिरक्ष त्वं वरुणेत्यभिशाप्यकम्[1] ।
नाभिदघ्नोदकस्थस्य गृहीत्वोरूजलं विशेत्' ॥
(या. स्मृ. २. १०८)

इति । तदनन्तरकर्तव्यतामाह स एव—

'समकालमिषुं मुक्तमानीयान्यो जवी नरः ।
गते तस्मिन्निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयात्[2]' ॥
(या. स्मृ. २, १०९)

इति । अयमर्थः । त्रिषु शरेषु मुक्तेष्वेको वेगवान्मध्य-शरपातस्थानं गत्वा तमादाय तत्रैव तिष्ठति । अन्यस्तु पुरुषो वेगवान् शरमोक्ष[3]स्थाने तोरणमुले तिष्ठति । एवं स्थितयोस्तृतीयस्यां करतालिकायां शोध्यो निमज्जति । तत्समकालमेव तोरणमूलस्थितोऽपि द्रुततरं मध्यम[4]शरपातस्थानं गच्छति । शरग्राही च तस्मिन्प्राप्ते द्रुततरं[5] तोरणमूलं प्राप्यान्तर्जलगत यदि न पश्यति तदा शुद्धो भवतीति । तदेव स्पष्टीकृतं पितामहेन—

'गन्तुश्चापि च कर्तुश्च समं गमनमज्जनम् ।
गच्छेत्तोरणमूलात्तु शरस्थानं[6] जवी नरः ॥

---

१. B. C. D. read अभिशाप्य तम् for अभिशाप्य कम्. २. C. and D. read °मात्मनः for °माप्नुयात्. ३. D. reads °मोक्षण° for °मोक्ष°. ४. D. reads मध्य° for मध्यम°. ५. D. reads तदुत्तरं for द्रुततरं. ६. C. and D. read लक्ष्यस्थानं for शरस्थानं.

तस्मिन्गते द्वितीयोऽपि वेगादादाय सायकम्।
गच्छेत्तोरणमूलं[1] तु यतः स पुरुषो गतः ॥
आगतस्तु शरग्राही न पश्यति यदा जले।
अन्तर्जलगतं सम्यक् तदा शुद्धिं[2] विनिर्दिशेत्' ॥

इति। जविनोश्च नरयोर्निर्धारणं कृतं नारदेन—

'पञ्चाशतो धावकानां यौ स्यातामधिकौ जवे।
तौ च तत्र नियोक्तव्यौ शरानयनकारणात्' ॥

इति। निमग्नस्य स्थानान्तरगमने अशुद्धिमाह पितामहः—

'अन्यथा न[3] विशुद्धिः स्यादेकाङ्गस्यापि दर्शनात्।
स्थानादन्यत्र गमनाद्यस्मिन्पूर्वं निवेशिते[4]' ॥

इति। एकाङ्गदर्शनादिति कर्णाद्यभिप्रायेण—

'शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका।
अप्सु प्रवेशने यस्य शुद्धं तमपि[5] निर्दिशेत्' ॥

इतिविशेषस्मरणात्। कारणान्तरेणोन्मज्जने पुनरपि कर्तव्यम्। तदाह कात्यायनः—

'निमज्ज्यो[6]त्प्लवते यस्तु दृष्टश्चेत्प्राणिभिर्नरः।
पुनस्तत्र निमज्जंस्तु स स[7]चिन्हविभावितैः[8]' ॥

इति जलविधिः ॥

१. C. reads °मुले for °मूलं. २. C. reads शुचिं for शुद्धिं. ३. D. reads अन्यस्थान° for अन्यथा न. ४. C. reads पूर्वनिर्वेशिते for पूर्वं निवेशिते. ५. C. reads ततपि for तमपि. ६. A. in margin, and B. and C. read निमग्न for निमज्ज्य; while A. originally and B. in margin read उल्लम्बते for उत्प्लवते. ७. A. originally and B. in margin read सदा for स स° and D. वंश°. ८. A. in margin and B. read त्रिभाविनः for त्रिभावितः.

## अथ विषविधिः ।

तत्र प्रजापतिः[1]—

'विषस्यापि प्रवक्ष्यामि विधिं लक्षणचोदितम् ।
अभियुक्ताय दातव्यं तावन्मात्रं प्रदीयते ॥
यवाः सप्त प्रदातव्या अथवा षट्कसंख्यया ।
शृङ्गिणो वात्सनाभस्य हिमजस्य विषस्य च' ॥[2]

इति । वर्ज्यान्याह[3] स एव—

'चारितानि च जीर्णानि कृत्रिमाणि तथैव च ।
भूमिजातानि[4] सर्वाणि विषाणि परिवर्जयेत्' ॥

इति । नारदोऽपि—

'भृष्टं च चारितं चैव धूपितं[5] मिश्रितं तथा ।
कालकूटमथाशुद्धं[6] विषं यत्नेन वर्जयेत्'
(ना. स्मृ. ३. ३२१.)

इति । कालश्च तेनैवोक्तः—

'तोलयित्वेप्सिते काले देयं तद्धि दिनागमे[7] । (३१९)
नाऽपराह्णे न मध्याह्ने न सन्ध्यायां च[8] धर्मवित्' ॥
(ना. स्मृ. ३. ३१९–३२०.)

---

१. A. and B. originally read पितामहः. २. C. omits ......... विधिं लक्षणं चोदित ॥
अभियुक्ताय दातव्यं तावन्मात्रं प्रदीयते ।
यवाः त्सप्त प्रदातव्या अथवा षट्कसंख्यया ॥
शृंगिणो वात्सनाभस्य हिमजस्य विषस्य च ।
D. also omits the same portion except—
'शृंगिणो वात्सनाभस्य हीमजस्य विषस्यच' ।
and instead of the omitted portion, D. reads विषं चवत्सनाभादि ग्राह्यम्. ३. C. substitutes विषलक्षणान्याह for वर्ज्यानाह. ४. D. reads भूमिजानि च for भूमिजातानि. ५. D. reads भूमिजं for धूपितं. ६. B. originally reads °मथाश्वत्थं, but corrects मथाशुद्धं; while C. reads °मथाशून्यं and D. °मलाबु च for °मथाशुद्धं. ७. B. originally and D. read हिमागमे, but B. corrects दिनागमे; while C. reads समागमे. ८. C. substitutes तु for च.

इति । कालान्तरे तु भुक्त[1]प्रमाणादल्पं देयम् । तदाह स एव—

'वर्षे चतुर्यवा मात्रा ग्रीष्मे पञ्चयवा स्मृता ।
हेमन्ते सा सप्तयवा शरद्यल्पा ततोऽपि हि' ॥
( ना. स्मृ. ३. ३२४. )

इति । विषं च घृतप्लुतं देयं । तदाह स एव—

'विषस्य पलषड्भागाद्भागो विंशतिमस्तु यः ।
तमष्टभागहीनं तु शोध्ये[2] दद्याद्घृतप्लुतम्' ॥
( ना. स्मृ. ३. ४२३

इति । पलं चात्र चतुःसुवर्णकम् तस्य षष्ठो भागो दशमाषो वा दशानां भाषाणां[3] यवाः सार्द्धं शतं भवन्ति । पूर्वं च दशयवाः । एवं षष्ट्यधिकं शतं यवाः पलस्य षष्ठो भागः । तस्माद्विंशति तमो भागोऽष्टयवाः । तस्याष्टमभागहीनः एकयवहीनः । तं सप्तयवं घृतयुतं[4] दद्यात् । घृतं च विषात्त्रिंशद्गुणं[5] ग्राह्यम् । तदाह कात्यायनः—

'[6]पूर्वोक्तशीतले देशे विषं देयं तु देहिनाम् ।
घृतेन योजितं श्लक्ष्णं विषत्रिंशद्गुणेन तु' ॥

इति । अत्र माहादेवस्य पूजा कर्तव्या । तदाह नारदः—

---

१. A. in margin and B. originally read उक्त, but in correction B. reads भुक्त°. also D. reads उक्त°. २. B. originally reads शुद्धे, but corrects शोध्ये. ३. D. reads the following portion after माषाः, माषस्य दश यवाभवन्ति, त्रियवत्वं च कृष्णलं, पंच कृष्णलको माषः । एको माषः पंचदशयवा भवन्ति । एव. ४. D. reads घृतप्लुतं for घृतयुतं. ५. C. reads °महणं for °गुणं. ६. C. and D. omit—

'पूर्वोक्तशीतले देशे विषं देयं तु देहिनाम् ।
घृतेन योजितं श्लक्ष्णं विषं त्रिंशद्गुणेन तु' ॥
इति । अत्रमहादेवस्य पूजाकर्तव्या ।

'प्रदद्यात्सोपवासाय देव-ब्राह्मणसन्निधौ ।
धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम् ॥
द्विजानां सन्निधानेन दक्षिणाभिमुखे स्थिते ।
उदङ्मुखः प्राङ्मुखो वा दद्याद्विप्रः समाहितः' ॥

इति । प्राड्विवाकः कृतोपवासो महेश्वरं सम्पूज्य तत्पुरतो विषं स्थापयित्वा धर्मादिपूजां हवनान्तां पूर्ववद्विधाय प्रतिज्ञापत्रं शोध्यशिरसि निधाय विषमभिमन्त्रयेत् । मन्त्रश्च पितामहेनोक्तः—

'त्वं विष ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम् ।
पापेषु दर्शयात्मानं शुद्धानाममृतं भव ॥
मृत्युमूर्ते विष त्वं हि ब्रह्मणा परिनिर्मितम् ।
त्रायस्वैनं नरं पापात्सत्येनास्याऽमृतं भव' ॥

इति । कर्त्ता तु विषमभिमन्त्र्य भक्षयेत् । मन्त्रश्च याज्ञवल्क्यनोक्तः—

'एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् ।
यस्य वेगैर्विना जीर्येत्तस्य शुद्धिं विनिर्दिशेत्' ॥
'त्वं विष ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः ।
त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम्' ॥
( या. स्मृ. २. ११०--१११ )

इति । वेगो नामधातोर्धात्वन्तर प्राप्तिः । तदुक्तं स्मृत्यन्तरे-

---

१. D. reads सन्निधावेव for सन्निधानेन.

'धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः' ।

इति । वेगाश्च सप्तैव । तेषां लक्षणानि विषतन्त्रे कथितानि—

'वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ
तस्योर्ध्वं तत्परौ[1] द्वौ वपुषि जनयतो वर्णभेद-प्रवेपौ ॥
यो वेगः पञ्चमोऽसौ नयति विवशतां कण्ठभङ्गञ्च हिक्कां
षष्ठो निःश्वास-मोहौ वितरति च मृतिं सप्तमो भक्षकस्य' ॥

इति । शोध्यस्तु कुहकादिभ्यो रक्षणीय इत्याह पितामहः—

'त्रिरात्रं पञ्चरात्रं स्यात्पुरुषैः स्वैरधिष्ठितम् ।
कुहकादिभयाद्राजा धारयेद्[2]दिव्यकारिणम् ॥
औषधीर्मन्त्रयोगांश्च मणीनथ विषापहान् ।
कर्तुः शरीरसंस्थांस्तु गूढोत्पन्नान्परीक्षयेत्' ॥

इति । शुद्धेः कालावधिमाह नारदः—

'पञ्चतालशतं कालं निर्विकारो यदा भवेत् ।
तदा भवति संशुद्धस्ततः कुर्याच्चिकित्सितम्' ॥

इति । यावत्करतालिकाशतपञ्चकं तावत्परीक्षणीयमि[3]त्यर्थः । यत्तु पितामहेनोक्तम्—

'भक्षिते तु यदा स्वस्थो मूर्च्छा-छर्दिविवर्जितः ।
निर्विकारो दि[4]नस्यान्ते शुद्धं तमपि निर्दिशेत्' ॥

इति तदेतच्चतुर्मात्राविषयम । इति विषविधिः ।

१. C. reads तापरोधौ for तत्परौ द्वौ. २. D. reads रक्षयेत् for धारये ३. C. and D. read प्रतीक्षणीयम् for परीक्षणीयम्. ४. C. reads दितस्यान्ते for दिनस्यान्ते.

अथ कोशविधिः ।

तत्र नारदः—

‘अतः परं प्रवक्ष्यामि कोशस्य विधिमुत्तमम् ।
शास्त्रविद्भिर्यथाप्रोक्तं सर्वकालाविरोधिनम् ॥
पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च ।
सशूकस्याऽव्यसनिनः कोशकार्यं[1] विधीयते ॥
इच्छतः श्रद्दधानस्य देव-ब्राह्मणसन्निधौ’ ।
( ना. स्मृ. ३. ३२७–३२९ )

इति ।[2] सशूकः आस्तिकः । अत्रेतिकर्तव्यतामाह याज्ञवल्क्यः ।
‘देवानुग्रान्समभ्यर्च्य तत्स्नानोदकमाहरेत् ।
संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम् ॥
( या. स्मृ. २. ११२ )

इति । उग्राः[3] रुद्र-दुर्गादित्यादयः[4] । पितामहोऽपि—
‘प्राङ्मुखं कारिणं कृत्वा पाययेत्प्रसृतित्रयम् ।
पूर्वोक्तेन विधानेन स्नातमार्द्राम्बरं[5] च तम्’ ॥

इति । पूर्वोक्तेनेति धर्मावाहनादिशोध्यशिरसि पत्रारोप[6]-णान्तमङ्गकलापं विधायाभियुक्तं[7] प्राङ्मुखं कृत्वा प्रसृतित्रयं पाययेत् । तत्र विशेषो नारदेनोक्तः—

१. D. reads कोशपानं for कोशकार्यं. २. C. and D. omit the following portion.—

सशूकः आस्तिकः । अत्रेतिकर्तव्यतामाह याज्ञवल्क्यः—
‘देवानुग्रान्समभ्यर्च्य तत्स्नानोदकमाहरेत् ।
संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम् ॥

इति. ३. D. reads देवस्येति for उग्राः and omits रुद्र°; while C. inserts च after उग्राः. ४. D. adds माह्याः after this word. ५. C. reads पीतम् for स्नातम्. and D. आर्द्रपटं for आर्द्राम्बरं; while B. originally reads शुचिम् for च तम्. ६. C. and D. read पात्र° for पत्र°. ७. C. reads अतियुक्तं; while D. reads इति । कारिणं नियुक्तं.

'तमाहूयाभिशस्तं तु मण्डलाभ्यन्तरे स्थितम् ।
*एनः[१] संश्रावयित्वा तु पाययेत्प्रसृति त्रयम्' ॥

इति । स्नापनीयदेवानाह पितामहः—

'भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम् ।
सम[२]भावे तु देवानामादित्यस्य तु पाययेत्' ॥
दुर्गायाः पाययेच्चोरान् ये च शस्त्रोपजीविनः ।
भास्करस्य च यत्तोयं ब्राह्मणं तन्न[३] पाययेत्' ॥

इति । स्नापनीयप्रदेशविशेषमाह स एव—

'दुर्गायाः स्नापयेच्छूलं[४] आदित्यस्य तु मण्डलम् ।
इतरेषां तु देवानां स्नापयेदायुधानि तु' ॥

इति । शुद्धेः कालावधिमाह पितामहः ।

'त्रिरात्रात्सप्तरात्राद्वा द्विसप्ताहादथापि वा ।
वैकृतं यत्र दृश्येत पापकृत्स तु मानवः ॥
त[५]स्यैकस्य तु सर्वस्य जनस्य यदि वा भवेत् ।
रोगोऽग्निर्ज्ञातिमरणं सैव तस्य वि[६]भावना' ॥

इति । विष्णुः—

* विज्ञानेश्वरस्तु 'आदित्याभिमुखं कृत्वा' इति पठति ।

१. C. reads भनः संश्रावयित्वा D. पयसा स्नापयित्वा for एनः संश्रावयित्वा तु. २. D. reads सर्वाभावे for समभावे. ३. B. originally reads च न; while C. तन्तु for तन्न. ४. D. reads पाययेत् for स्नापयेत्; while B. originally reads कूलं for शूलं. ५. B. originally reads ततश्चैकस्य for तस्यैकस्य. ६. D. reads विभावयेत् for विभावना.

'यस्य पश्येत् द्विसप्ताहात् त्रिसप्ताहादथापि वा ।
रोगोऽग्निर्ज्ञातिमरणं राजदण्डमथापि वा ॥
तमशुद्धं विजानीयाद्विशुद्धिं तु विपर्यये' ॥
(वि. स्मृ. १४, ४–५)

इति । नारदोऽपि—
'सप्ताहाभ्यन्तरे यस्य द्विसप्ताहेन वा पुनः ।
रोगोऽग्निर्ज्ञातिमरणमर्थनाशो यशःक्षयः[1] ॥
प्रत्यात्मिकं भवेत्तस्य विद्यात्तस्य पराजयम्' ।
(ना. स्मृ. ३. ३३०–३३१)

इति । एतानि त्रिरात्राद्यवधिवचनानि[2] द्रव्याल्पत्व-महत्वाभ्यामभियोगाल्पत्व-महत्वाभ्यां वा व्यवस्थापनीयानि । अवधेरूर्ध्वं वैकृतदर्शने न पराजय इत्याह नारदः—
'ऊर्ध्वं यस्य द्विसप्ताहाद्वैकृतं तु समुद्भवेत्[3] ।
नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात्' ॥
(ना. स्मृ. ३. ३३१)

इति । बृहस्पतिरपि—
'सप्ताहाद्वा[4] द्विसप्ताहाद्यस्य हानिर्न जायते ।
पुत्र-दार-धनानां च स शुद्धः स्यान्न संशयः' ॥

इति । इति कोशविधिः ।

---

१. C. and D. read अर्थसंशोधनक्षयः for अर्थनाशो यशःक्षयः. २. D. reads द्वि-त्रि-सप्ताहाद्यवधि° for त्रिरात्राद्यवधि°. ३. C. and D. read सुमहद्भयम् for तु समुद्भवेत्. ४. C. omits वा and reads द्विसप्ताहाद्यस्यापि जायते ननु; while D. substitutes किञ्चित् न for हानिर्न.

अथ तण्डुलादिविधिः ।

तत्र पितामहः—

‘ तण्डुलानां प्रवक्ष्यामि विधिं लक्षण[1]चोदितम् ।
चौर्ये तु तण्डुला देया नान्यत्रेति विनिर्णयः[2]’ ॥

इति । चौर्यग्रहणमर्थविवादप्रदर्शनार्थम् ।

‘ तदर्धार्धस्य[3] तण्डुलाः’ ।

इति धनविवादे कात्यायनेन दर्शितत्वात् । यत्कर्तव्यं तदाह स एव—

‘ तण्डुलान् कारयेच्छुक्लान् शालेर्नान्यस्य कस्य चित् ।
मृण्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥
स्नानोदकेन सम्मिश्रान्रात्रौ तत्रैव वासयेत् ।
आवाहनादि पूर्वं तु कृत्वा रात्रौ विधानतः’ ॥

इति । धर्मावाहनादि सर्व[4]दिव्यसाधारणविधिना[5] दिव्यस्य पुरतः कृत्वा देवतास्नानोदकेन तण्डुलानाप्लुत्य प्रभातपर्यन्तं प्राड्विवाकस्तथैव स्थापयेत् । तदनन्तरं कर्तव्यं तेनैव दर्शितम्—

‘ प्रभाते कारिणो देयास्त्रिः[6]कृत्वः प्राङ्मुखाय तु ।
[7]तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत्ततः[8] ॥

१. C. and D. read भक्षण° for लक्षण°. २. C. and D. read विनिश्चयः for विनिर्णयः. ३. D. reads ततश्चार्थस्य for तदर्धार्धस्य. ४. C. omits सर्व; while D. omits सर्वदिव्य° and reads हवनान्तं for that. ५. B. originally reads विधिमादित्यस्य for विधिना दिव्यस्य. ६. D. reads त्रिःकृत्वा प्राङ्मुखं तथा for त्रिःकृत्वः प्राङ्मुखाय तु. ७. C. and D. omit the following lines—

‘ तंदुलान्भक्षयित्वा तु पत्रे निष्ठीवयेत्ततः ।
भूर्जस्यैव तु नान्यस्य पलाशे पिप्पलस्य तु’ ॥
इति । बृहस्पतिः—
‘ सोपवासः सूर्यमहे.’ ।

८. B. originally reads त्रिधा for ततः.

भूर्जस्यैव तु नान्यस्य पलाशो पिप्पलस्य तु' ।

इति । बृहस्पतिः—

'सोपवासः सूर्यग्रहे[1] तण्डुलान्भक्षयेच्छुचिः ।
शुद्धः[2] स्याच्छुक्लनिष्ठीवे विपरीते तु दोषभाक् ॥
शोणितं दृश्यते यत्र[3] हनुस्तालु च शीर्यतः ।
गात्रञ्च कम्पते यस्य तमशुद्धं[4] विनिर्दिशेत्' ॥

इति तण्डुल विधिः—

अथ तप्तमाषविधिः ।

तत्र पितामहः—

'तप्तमाषस्य वक्ष्यामि विधिमुद्धरणे शुभम् ।
कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ॥
चतुरङ्गुलखातं तु मृण्मयं वाथमण्डलम्' ॥

इति । मण्डलं वर्तुलम् । एवंविधं पात्रं कृत्वा घृततैलाभ्यां पूरयेत् । तथा च स एव—

'पूरयेद्धृत-तैलाभ्यां विंशत्या वै पलैस्तु तत् ।
गव्यं[5] घृतमुपादाय तदग्नौ तापयेच्छुचिः[6] ॥
सुवर्णमाषकं तस्मिन् सुतप्ते निक्षिपेत्ततः ।
अङ्गुष्ठाङ्गुलियोगेन उद्धरेत्तप्तमाषकम् ॥

१. D. reads प्राड्विवाकसमाहूतः; while, A. and B. substitute सूर्यगृहं for सूर्यग्रहे. २. D. reads शुद्धिः for शुद्धः. ३. B. reads यस्य for यत्र. ४. D. reads तस्याऽशुद्धिं for तमशुद्धं and C. तत्वशुद्धिं for the same. ५. D. substitutes तैलं and C. सत्यं for गव्यं. ६. C. and D. read पाचयेत् for तापयेत्.

करामं यो न[1] धुनुयाद्विस्फोटो वा न जायते।
शुद्धो भवति धर्मेण निर्विकारकराङ्गुलिः[2]' ॥

इति। अङ्गुष्ठाङ्गुलियोगेन तर्जन्यङ्गुष्ठमध्यमानां समूहेनेत्यर्थः। केवलगव्यघृततापे[3] विशेषमाह स एव—

'सौवर्णे[4] राजते ताम्रे आयसे मृण्मयेऽपि वा।
गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः ॥
सौवर्णीं राजतीं ताम्रीं आयसीं वा विशोधिताम्।
सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् ॥
भ्रमद्वीचितरङ्गाढ्ये अनखस्पर्शगोचरे[5]।
परीक्षेमार्द्रपर्णेन चुरुत्कारं[6] सुघोषकम्' ॥

इति। प्राड्विवाको धर्मावाहनादिशोध्यशिरःपत्रारोपणान्तं कर्म कृत्वा घृताभिमन्त्रणं कुर्यात्। मन्त्रास्तु तेनैव दर्शिताः—

'परं पवित्रममृतं घृत[7] त्वं यज्ञकर्मसु।
दह पावक पापं त्वं[8] हिमशीतं शुचौ भव ॥
उपोषितं ततः[9]स्नातमार्द्रवाससमागतम्।
ग्राहयेन्मुद्रिकां तां तु घृतमध्यगतां तथा' ॥

इति। शोध्यस्तु 'त्वमग्ने सर्वभूताना' मित्यादि मन्त्रं पठेत्। शुद्धिलिङ्गान्याह स एव—

---

१. B. C. substitute नु for न. २. D. reads निर्विकारा यदा° for निर्विकारकरा°. ३. B. originally reads °घृततापपक्षे and C. °घृततापन° and घृततापने or घृततापे. ४. A. B. and C. do not insert this whole verse but it is quite necessary hole. ५. C. reads घृतस्पृश्य° for अनखस्पर्श°. ६. D. reads सचित्कारं for चुरुत्कारं. ७. C. omits घृत°. ८. D. substitutes नु for त्वं. ९. A. and B. read अतः for ततः.

'प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः ।
यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाऽशुचिः'

इति । इति तप्तमाषविधिः ।

अथ फालविधिः ।

तत्र बृहस्पतिः—

'आयसं द्वादशपलघटितं फालमुच्यते ।
अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तृतम् ॥
अग्निवर्णं तु तच्चौरो जिह्वया लेलिहेत्सकृत् ।
न दग्धश्चेच्छुद्धिमियादन्यथा तु स हीयते' ॥

इति । अत्रापि धर्मावाहनादिशोध्यशिरःपत्रारोपणान्तं कार्यम् । इति फालविधिः ।

अथ धर्माधर्मविधिः ।

तत्र पितामहः—

'अधुना सम्प्रवक्ष्यामि धर्माधर्मपरीक्षणम् ।
राजतं कारयेद्धर्ममधर्मं सीसकायसम् ॥
लिखेद्भूर्जे पटे वापि धर्माधर्मौ सिताऽसितौ ।
अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत् ॥
सितपुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पधृक् ।
एवं विधायोपलिप्य पिण्डयोस्तौ निधापयेत् ॥
गोमयेन मृदा वापि पिण्डौ कार्यौ समं ततः ।
मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ ॥

---

१. D. substitutes प्रदेशनं for प्रदेशिनीं, but it seems to be incorrect.
२. D. reads शुचिर्भूयात् for शुद्धिमियात्. ३. A. reads धर्मजल° B. धर्मज°. and D. धर्माधर्मविचार° for धर्माधर्म° ४. C. reads नव्यहस्ते and D. ऽनुपाहिते for ऽनुपहते.

उपलिप्ते[1] शुचौ देशे देव-ब्राह्मणसन्निधौ ।
आवाहयेत्ततो देवाँल्लोकपालांश्च पूर्ववत् ॥
धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत् ।
यदिपापविमुक्तोऽहं धर्मस्त्वायातु मे करे ॥
अभियुक्तस्ततश्चैकं प्रगृह्णीताऽविलम्बितम्[2] ।
धर्मे गृहीते शुद्धिः स्यादधर्मे तु स हीयते ॥
एवं समासतः प्रोक्तं धर्माधर्मपरीक्षणम्' ।

इति । सीसकायसं सीसकामिश्रायसम्। इति धर्माधर्मविधिः।

इति क्रियापादः ।

अथ क्रमप्राप्तो निर्णयपादः[3] कथ्यते । तत्र[4] बृहस्पतिः—

'धर्मेण व्यवहारेण चारित्रेण[5] नृपाज्ञया ।
चतुःप्रकारोऽभिहितः सन्दिग्धार्थविनिर्णयः ॥
एकैको द्विविधः प्रोक्तः क्रियाभेदान्मनीषिभिः ।
अपराधानुरूपं तु दण्डं च परिकल्पयेत् ॥
प्रतिवादी प्रपद्येत यत्र धर्मः स निर्णयः[6] ।
दिव्यैर्विशोधितः सम्यङ्निर्णयः[7] समुदाहृतः ॥
प्रमाणनिश्चितो यस्तु व्यवहारः स उच्यते ।
वाक्छलानुत्तरत्त्वेन द्वितीयः परिकीर्तितः ॥
अनुमानेन निर्णीतं चारित्रमिति[8] कथ्यते ।

१. D. reads उपालिप्य for उपालिप्ते. २. A. B. read ऽवलंबितः and C. ऽवलंकृतः for ऽविलंबितम्. ३. C. reads विनिर्णय° for निर्णय°. ४. C. and D. substitute अत्र for तत्र. ५. A. B. and D. read चरित्रेण for चारित्रेण. ६. B. originally reads यद्धर्मः स विनिर्णयः; while D. धर्मस्य° for धर्मःस. ७. C. and D. read विनयः for निर्णयः. ८. Here also A. B. C. D. substitute चरित्रम् for चारित्रम्.

देशस्थित्या तृतीयस्तु [1]शास्त्रविद्भिरुदाहृतः ॥
प्रमाणसमतायां तु राजाज्ञा निर्णयः स्मृतः ।
शास्त्र-सभ्याविरोधेन चतुर्थः परिकीर्तितः' ॥

इति । सङ्ग्रहकारोऽपि—

'उक्त[2]प्रकाररूपेण [3]स्वमतस्थापितापि वा ।
राज्ञा [4]परीक्ष्य साक्ष्यैश्च स्थाप्यौ जय-पराजयौ ॥
[5]यो यथोक्तान्यतमया क्रियया ऽर्थं [6]प्रसाधयेत् ।
भाषाक्षरसमं साध्यं स जयी परिकीर्तितः ॥
असाधयन्साधयन्वा विपरीतार्थमात्मनः ।
दृष्टकारणदोषो वा यः पुनः स [7]पराजितः' ॥

इति । व्यासोऽपि—

'[8]जितं तु दण्डयेद्राजा जेतुः पूजां [9]प्रवर्तयेत् ।
अजिता अपि दण्ड्याः स्यु[10]र्वेदशास्त्रविरोधिनः' ॥

इति । पूजाकरणानन्तरं कात्यायनः—

'सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम् ।
लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु पार्थिवः' ॥

इति । नारदोऽपि—

---

१. D. substitutes तत्त्व° for शास्त्र°. २. B. originally reads °प्रमाण° for °प्रकार°. ३. B. originally reads स्वागत° for स्वमत° and substitutes क्रियाः for °पिवा; while D. reads क्रिया for the same. ४. D. reads परीक्ष्या for परीक्ष्य. ५. C. reads सो for यो; while D. सोऽर्थोऽन्यतमया चैव for यो यथोक्तान्यतमया. ६. A. C. D. and B. in margin read सम्प्र° for ऽर्थं प्र°. ७. A. B. C. read पराजयः for पराजितः. ८. D. reads तं तुप्र° for जितं तु. ९. C. reads प्रवर्तते. १०. B. originally reads धर्मशास्त्राविधानतः for वेदशास्त्रविरोधिनः.

'मध्ये यत्स्थापितं द्रव्यं चलं वा यदि वा स्थिरम् ।
पश्चात्तत्सोदयं दाप्यं जयिने पत्रसंयुतम्' ॥

इति । पत्रं जयपत्रम् । तदाह बृहस्पतिः—

'पूर्वोत्तरक्रियायुक्तं निर्णयान्तं[1] यदा नृपः ।
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते' ॥

इति । धनदापनप्रकारे[2] विशेषमाह कात्यायनः—

'राजा तु स्वामिने वित्तं[3] सान्त्वेनैव प्रदापयेत् ।
देशाचारेण चान्यांस्तु दुष्टान्सम्पिड्य दापयेत् ।
रिक्थिनः सुहृदं वापि छलेनैव प्रदापयेत्' ॥

इति । न केवलं स्वामिने धनदापनमात्रं स्वयमपि दण्डं गृण्हीयादित्याह नारदः—

'ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्याद्गृहीत्वांशं[4] तु विंशकम्' ॥
( ना. स्मृ. ३. १३२. )

इति । एतदविप्रतिपन्नऋणिकविषयम्[5] । विप्रतिपन्नऋणिकविषये विष्णुराह—

'उत्तमर्णश्चेद्राराजानामियात्तद्धि भावितोऽधमर्णो
राज्ञे धनदशभागसमं[6] दण्डं दद्यात् ।
प्राप्तार्थश्चोत्तमर्णो विंशतितममंशम्' ॥
( वि. स्मृ. ६. २१ ).

---

१. B. originally reads निर्मंथ्योक्तं for निर्णयान्तं. २. A. and B. read °प्रकार° for °प्रकारे. ३. D. wrongly substitutes विप्रं for वित्तं. ४. D. reads संतु for अंशं तु. ५. C. reads एतदपि तत्प्रपन्न° and D. एतदपि सम्प्रतिपन्न° for एतदविप्रतिपन्न°. ६. D. omits धन°.

इति । उत्तमर्णे[1] धनदानं भृतित्वेन[2] न दण्डत्वेन । यदा तु राज्ञः प्रियोऽधमर्णोऽपलापबुध्या राज्ञे पूर्वं निवेदयति तत्र दण्डविशेषमाह मनुः—

'यः[3] साधयन्तं छन्देन वेदयेद्धनिकं नृपे ।
स[4] च राज्ञा चतुर्भागं दाप्यस्तस्य च तद्धनम्' ॥

(म. स्मृ. ८. १७६).

इति । यत्तु तेनैवोक्तम् ।

'यो यावन्निन्हुवीतार्थं[5] मिथ्या यावति[6] वा वदेत् ।
तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्द्विगुणं दमम्' ॥

(म. स्मृ. ८. ५९)

इति तदुद्वृत्ता[7]धमर्णोत्तमर्णविषयम् । यत्तु याज्ञवल्क्येनोक्तम्—

'निन्हवे भावितो[8] दद्याद्धनं राज्ञे च तत्समम्' ।

(या. स्मृ २. ११).

इति तत् द्विगुणदण्डपर्याप्तधनाभावविषयम् । मिथ्याभियोगिनस्तु [9]अपर्याप्तधनस्यापि तत्समो[10] दण्डः । यदाह स एव—

'मिथ्याभियोगी[11] द्विगुणमभियोगाद्धनं वहेत्'

(या. स्मृ. २. ११)

इति । धनाभावेऽपि—

---

१. C. and D. read उत्तमर्णो for उत्तमर्णे. २. C. reads भूतित्वेन दंडत्वेन; while D. भूतित्वे दण्डत्वे for भृतित्वेन न दण्डत्वेन. ३. C. and D. read शोधयन् स्वच्छन्देन and शोधयन् छन्देन for यः साधयन्तं छन्देन. ४. C. and D. read राज्ञाऽऋणचतुर्भागं for स च राज्ञा चतुर्भागं. ५. D. reads निन्हवीतार्थं for निन्हुवीतार्थं. ६. D. reads वा ह्यभिवादयेत् for यावति वा वदेत्. ७. D. reads तद्वृता° for तदुद्वृत्ता°. ८. C. reads भाविनो for भावितो. ९. D. inserests ऽल्प° before अपर्याप्त°. १०. C. and D. read तत्समं for तत्समो. ११. D. reads °योगात् for °योगी.

'आनृण्यं कर्मणा गच्छेत्' ।

इत्यनुकल्पो द्रष्टव्यः । यः प्रथमतो निन्हवं कृत्वा पश्चात्स्वयं संप्रतिपद्यते । तस्यार्धं दण्डमाह व्यासः—

'निन्हुते तु यदा वादी स्वयं तत्प्रतिपद्यते ।
ज्ञेया सा प्रतिपत्तिश्च तस्यार्धं विनयः स्मृतः' ॥

इति । यत्पुनर्मनुनोक्तम्—

'अर्थेऽपव्ययमानं तु करणेन विभावितम् ।
दापयेद्धनिकस्यार्थं दण्डलेशं च शक्तितः' ॥

( म. स्मृ. ८. ५१ ).

इति तत्संवृत्तब्राह्मणाधमर्णविषयम् । निन्हवविषये विशेषमाह याज्ञवल्क्यः—

'निन्हुते लिखितं नैकं एकदेशविभावितः ।
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः' ॥

( या. स्मृ. २. २० ).

इति । नैकमनेकम् । सुवर्ण-रजत-वस्त्रादिकं प्रतिज्ञा काले लिखितमभियुक्तं प्रत्यर्थी यदि सर्वमेव मिथ्यैतदिति प्रतिजानीते तदा अर्थिना एकदेशभूतहिरण्यादिविषये आक्रमादिभिः प्रत्यर्थी भावितः अङ्गीकारितः तदा स सर्वं पूर्वलिखितमर्थिने नृपेण

---

१. D. omits यः. २. D. reads निन्हवे for निन्हुते. ३. D. reads ऽर्धविनयः for अर्धं विनयः; while B. originally reads ऽर्थं for ऽर्धं. ४. B. originally reads तारणेन and in correction करणेन; while C. and D. substitute कारणेन for करणेन. ५. C. reads ऽर्धं for ऽर्थं. ६. A. and B. read एकदैव for एकदेश°. ७. C. and D. omit सुवर्णरजतवस्त्रादिकं. ८. D. reads °भू° for °भूत°. ९. A. B. C. do not insert °आदि°. १०. D. substitutes प्रमाणादिभिः for आक्रमादिभिः. ११. D. adds ऽर्थं after नृपेण.

दाप्यः । पूर्वं[1] भाषाकाले अर्थिना अनिवेदितः पश्चान्निवेद्यमानो न ग्राह्यो नादर्तव्यो[2] नृपेणेत्यर्थः । नारदोऽपि—

'अनेकार्थाभियुक्तेन सर्वार्थव्यपलोपिनाम्[3] ।
विभावितैकदेशेन देयं यदभियुज्यते' ॥

इति । ननु—प्राचीनवचनानां प्रागुक्तार्थाविधानेन[4] धर्मनिर्णयार्थता[5] न स्यात् । छलानुसारेण तेषां व्यवहारनिर्णयाभिधायकत्वात् । सत्यम् । तथापि न दोषः । प्रागुक्तविषये व्यवहारनिर्णयस्य धर्म[6]निर्णयबाधकत्वात् । अत एव बृहस्पतिः—

'केवलं शास्त्रमाश्रित्य क्रियते यत्र निर्णयः ।
व्यवहारः स विज्ञेयो धर्मस्तेनापि[7] हीयते' ॥

इति । यत्तु कात्यायनवचनम्—

'अनेकार्थाभियोगे तु यावत्साधयते[8] धनम् ।
साक्षिभिस्तावदेवासौ लभते साधिता धनम्' ॥

इति तत्पुत्रादिदेयपित्रादिऋणविषयम् । तत्र हि बहूनर्थानभियुक्तः पुत्रादिर्न जानामीति[9] वदन्निन्हववादी न भवतीति । एकदेशविभावितन्यायस्य तत्राप्रवृत्तेः[10] । दिव्ये जयपराजयावधारणे दण्डविशेषः कात्यायनेन दर्शितः—

---

१. D. substitutes सर्वं. २. A. B. C. read न दातव्यः. ३. D. reads सर्वार्थस्याप° for सर्वार्थव्यप°. ४. D. प्रागुक्तार्थाविधाने for प्रागुक्तार्थाविधानेन; while B. originally reads प्रागुक्ताभिधाने. ५. B. origirnally reads °नियमार्थता and D. °निर्णयार्थत्वं for °निर्णयार्थता. ६. C. substitutes धन° for धर्म° ७. B. originally and C. read तेनाप° for तेनापि. ८. C. reads तत्साधयेत् for साधयते. ९. C. reads जानाति; while D. ज्ञायते for जानामि. १०. C. and D. read °प्रवृत्तिः for °प्रवृत्तेः.

'न[1] दण्डं दापयेच्छुद्धं न शुद्धो[2] दण्डभाग्भवेत्।
विषे तोये हुताशे च चर्या कोशे च तण्डुले ॥
तप्तमाषकदिव्ये च क्रमाद्दण्डं प्रकल्पयेत्।
सहस्रं षट्शतं चैव तथा पञ्चशतानि तु ॥
चतुस्त्रिद्व्येकमेवं[3] च हीनं हीनेषु कल्पयेत्'।

इति। सपणविवादे[4] विशेषमाह याज्ञवल्क्यः—

'सपणश्चेद्विवादः स्याद्राजा हीनं तु दापयेत्।
दण्डं[5] तस्य पणं चैव धनिने धनमेव च' ॥

( या. स्मृ. २. १८ ).

इति। नारदोऽपि—

'विवादे सोत्तरपणे[6] द्वयोर्यस्तत्र हीयते।
स्वपणं[7] स्वकृतं दाप्यो विनयं च पराजये' ॥

इति। उक्तस्य दण्डस्य द्वैविध्यमाह स एव—

'शारीरश्चाऽर्थदण्डश्च दण्डस्तु[8] द्विविधः स्मृतः।
शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्तितः ॥
काकिण्यादिस्त्वर्थदण्डः[9] सर्वस्वान्तः[10] प्रकीर्तितः।
शारीरो दशधा प्रोक्तो ह्यर्थदण्डस्त्वनेकधा' ॥

( ना. स्मृ. १८. ५३–५५ ).

---

१. C. and D. read शतार्द्धं for न दण्डं. २. C. reads शुद्धे for शुद्धो. for the follwing words र्या कोशे च तण्डुले तप्तमाषकादिव्ये च। D. substitutes तंडुले तप्तमाषके इति ॥ दिव्यक्रमात्. ३. A. B. D. read एकं while C. only substitutes तु for च. ४. C. inserts माषवाद्दिव्ये च क्रमं. after विशेषम्; while D. substitutes विधाने for विवादे in the word सपणविवादे. ५. C. and D. read दण्डं स्वस्य for दण्डं तस्य. ६. D. reads चोत्तरपणो for सोत्तरपणे. ७. D. reads सपणं for स्वपणं; while C. reads the whole line thus—

सपणं सत्कृतं दाप्यो विनयि राजशासनमिति.

८. D. substitutes वै for तु. ९. C. reads °त्वर्थ° for °स्त्वर्थ°; while D. °श्चार्थ° for °स्त्वर्थ°. १०. C. reads सर्वश्चान्तः and D. सर्वतस्तु for सर्वस्वान्तः.

इति । द[1]शधेति न संख्यानियमार्थम् । बहुविधस्य बन्धनाङ्ककरण-कर्मकरण-बन्धनागारप्रवेश-ताडनरूपस्य शारी[2]रस्य विद्यमानत्वात् । तत्र नै[3]वविधत्वं शरीरदण्डस्य दर्शयति मनुः—

'दश स्थानानि दण्डस्य मनुः स्वायंभुवोऽब्रवीत् । १२४
उपस्थमुदरं जिव्हा हस्तौ पादौ च पञ्चमम् ॥
चक्षुर्नासा च कर्णौ च ध[4]नं देहस्तथैव च' ॥
(म. स्मृ. ८. १२५)

इति । द्विविधइत्युपलक्षणार्थम् ।

'शिरसो मुण्डनं दण्डस्त[5]स्य निर्वासनं पुरात् ।
ललाटे चा[6]भिशस्ताङ्कः प्रया[7]णं गर्दभेन च' ॥

इति विधानान्त[8]रस्य स्मृतत्वात् । याज्ञवल्क्यस्तु दण्डस्य चातुर्विध्यमाह—

'वाग्दण्डस्त्वथ धिग्दण्डो धनदण्डो वधस्तथा ।
योज्या व्यस्ताः समस्ता वा अपराधवशादि[9]मे' ॥
(या. स्मृ. १. ३६७)

इति । वाग्दण्डःपरुषशापवचनात्मकः । धिग्दण्डो धिगिति कु[10]त्सनम् । समस्तानां योजने क्रममाह मनुः—

---

१. C. omits दशधेति न. २. D. reads शरीरे; while C, शरीराविद्यमानत्वात्. ३. D. reads दशविधत्वं for नवविधत्वं. ४. D. reads नरदेहः for धनं देहः. ५. D. substitutes तथा for तस्य. ६. C. reads चाति° for चाभि°. ७. C. reads प्रापणं for प्रयाणं. ८. C. and D. read विध्यन्तर° for विधानान्तर°. ९. D. reads °दितः for °दिमे. १०. D. substitutes भर्त्सनं for कुत्सनं.

'वाग्दण्डं प्रथमं कुर्याद्धिग्दण्डं तदनन्तरम् ।
तृतीयं धनदण्डं च[1] वधदण्डमतः परम्' ॥

( म. स्मृ. ८. १२९ )

इति। व्यस्तानां योजने व्यवस्थामाह बृहस्पतिः—

'स्वल्पेऽपराधे वाग्दण्डो धिग्दण्डः पूर्वसाहसे ।
मध्योत्तमेऽर्थदण्डस्तु[2] राजद्रोहे च बन्धनम् ॥
निर्वासनं वधो वापि कार्यमात्महितैषिणा ।
व्यस्ताः समस्ता एकस्य महापातककारिणे[3]' ॥

इति। पुरुषतारतम्येन व्यवस्थामाह स एव—

'मित्रादिषु प्रयुञ्जीत वाग्दण्डं धिक्तपस्विनाम् ।
विवादिनो नरांश्चापि दोषिणोऽर्थेन[4] दण्डयेत् ॥
गुरून्पुरोहितान्पूज्यान्वाग्दण्डेनैव दण्डयेत् ।
विवादिनो नरांश्चान्यान् धिग्धनाभ्यां च दण्डयेत' ॥

इति। यत्तु शङ्खेनोक्तम्—

'अदण्ड्यौ माता-पितरौ स्नातक-पुरोहितौ परिव्राजक-वानप्रस्थौ जन्म-कर्म-श्रुत-शील-शौचा-ऽऽचारवन्तश्च'

इति यदपि कात्यायनेन—

'आचार्यस्य पितुर्मातुर्बान्धवानां तथैव च ।
एतेषामपराधे तु दण्डो नैव विधीयते' ॥

इति यत्तु गौतमेन—

---

१. C. and D. substitute तु for च. २. D. reads मध्यमे धन° for मध्योत्तमेऽर्थ°. ३. D. reads एकस्मान् महापातककारिणाम् for एकस्य महापातककारिणः. ४. D. reads न्यायाद्यर्थेन for दोषिणोऽर्थेन.

'षण्ढः परिहार्यो[1] राज्ञा[2] अवध्यश्चा-
ऽदण्ड्यश्चाऽबहिष्कार्यश्चाऽपरिवाद्यश्चाऽपरिहार्यश्च' ।
( गौ. स्मृ. ८. ३. )

इति तदेतत्—

'स एष[3] बहुश्रुतो भवति । लोक[4]-वेद-वेदाङ्गविद्वा[5]न्वाको वाक्येतिहास-पुराण कुशलस्तदवेक्षस्तद्वृत्तिः[6] चत्वारिंशत्संस्कारैः संस्कृतः त्रिषु कर्मस्वभिरतः[7] षट्सु[8] वा समयाचारि[9]केष्वभिनिविष्टः विनीतः[10]' ।

( गौ. स्मृ. ८. २ )

इति प्रतिपादितबहुश्रुतविषयम् । यत्तु पित्रादीनां दण्डविधानं मनुबृहस्पतिभ्यामुक्तम्—

'पिताऽऽचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः ।
नाऽदण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात् ॥
ऋत्विक्पुरोहिता-ऽमात्याः पुत्राः सम्बन्धि-बान्धवाः ।
धर्माद्विचलिता दण्ड्या निर्वास्या राजभिः पुरात्' ॥

इति तदेत[11]च्छरीरार्थव्यतिरिक्तदण्ड[12]विषयम् ।

'गुरून्पुरोहितान्पूज्यान्वाग्दण्डेनैव दण्डयेत्' ।

---

१. C. reads परिवृत्तो for परिहार्यो. २. C. and after this word D. insert वध्य°; while C. प्रवध्य°. ३. C. and D. read स एव for स एष. ४. C. reads तपस्विपरि° before लोक; while D. omits this word. ५. C. reads विद्वान् कोविद् for विद्वान्वाको वाक्ये. ६. B. C. D. add भाष्ट° after वृत्तिः. ७. C. reads सुनिरत. for स्वभिरतः. ८. C. and D. omit this word. ९. D. reads °चारेष्वपि for °चारिकेष्वाभि°; while C. °ष्वपि for °ष्वभि°. १०. C. and D. omit this word. ११. D. reads शारीरार्थदण्ड° for शरीरार्थ°. १२. C. omits this.

इत्युक्तत्वात्। ब्राह्मणस्य वधदण्डो न कार्यः किन्तु स बहिष्कार्य इत्याह कात्यायनः—

'न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम्।
राष्ट्राच्चैनं बहिष्कुर्यात्समग्रधनमक्षतम्' ॥

इति। यस्तु बहिष्कारं नाङ्गीकरोति तस्य क्षत्रियादिवद्दण्ड इत्याह स एव—

'चतुर्णामपि वर्णानां प्रायश्चित्तमकुर्वताम्।
शारीर-धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत्' ॥

इति। यत्तु गौतमेन—

'न शारीरो ब्राह्मणस्य दण्डः'।

(ग. गौ. स्मृ. १२. ६).

इति तदङ्गभङ्गरूपदण्डनिषेधार्थम्।

'नत्वङ्गभेदं विप्रस्य प्रवदन्तिमनीषिणः'।

इति हारीतेनोक्तत्वात्। यत्तु शङ्खेनोक्तम्—

'त्रयाणामपि वर्णानामपहार-वध-बन्धाक्रिया।
विवासनं धिक्करणं ब्राह्मणस्य' ॥

इति तदेतदकिञ्चनब्राह्मणविषयम्। तथा च गौतमः—

'कर्मवियोगविख्यापन-विवासना-ऽङ्ककरणान्यवृत्तौ'।

(गौ. स्मृ. १२. २३).

इति। अवृत्तिर्निर्धनः। धनदानासमर्थान् प्रत्याह मनुः—

१. A. B. C. do not mention this. २. C. and D. read त्वेनं for चैनं. ३. D. reads शारिरं for शारीर°. ४. A. B. C. do not read this word but this is necessary here. ५. C. omits this word.

'क्षत्र-विट्-शूद्रयोनिस्तु दण्डं दातुमशक्नुवन् ।
आनृण्यं कर्मणा गच्छेद्विप्रो दद्याच्छनैः शनैः' ॥

(म. स्मृ. ९०. २२९.)

इति । कर्मकरणासामर्थ्ये तु कात्यायन आह—

'धनदानासहं बुध्वा स्वाधीनं कर्म कारयेत् ।
अशक्तौ बन्धनागारे प्रवेश्यो[1] ब्राह्मणादृते' ॥

इति । मनुरपि—

'स्त्री-बालोन्मत्त-वृद्धानां दरिद्राणां च रोगिणाम् ।
शिफाविदलरज्ज्वाद्यैर्[2]विदध्यान्नृपतिर्दमम्[3]' ॥

(म. स्मृ. ९. २३०)

इति । ब्राह्मणस्य वधस्थाने मौण्ड्यं विदधाति मनुः—

'मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते ।
इतरेषां तु वर्णानां दण्डः प्राणान्तिको भवेत् ॥
न ब्राह्मणवधाद्भूयान्[4]अधर्मो विद्यते भुवि[5] ।
तस्मादस्य वधं राजा मनसापि न चिन्तयेत्' ॥

(म. स्मृ. ८. ३७९–३८१)

इति । बृहस्पतिरपि[6]—

१. C. and D. read °ऽगारप्रवेशो for °ऽगारे प्रवेश्यो. २. D. reads शिथिलावित° for शिफाविदल.° ३. D. reads विद्यान्नृपतिमर्दनम् for विदध्यान्नृपतिर्दमम्. ४. B. originally and C. D. read पापात् for भूयान्. ५. B. originally C. and D. read क्वाचन for भुवि. ६. D. omits this.

'ललाटाङ्कं ब्राह्मणस्य नान्यो दण्डो विधीयते।
महापातकयुक्तोऽपि न विप्रो वधमर्हति ॥
निर्वासनाङ्ककरणे मौण्ड्यं कुर्यान्नराधिपः'।

इति। अङ्कने विशेषो नारदेन दर्शितः—

'गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः।
स्तेये च श्वपदं कार्यं ब्रह्महण्यशिराः पुमान्' ॥

इति। अङ्कनं न क्षत्रियादिषु कर्तव्यम्।

'ब्राह्मणस्यापराधे तु चतुष्वङ्को विधीयते।
गुरुतल्पे सुरापाने स्तेये ब्राह्मणहिंसने ॥
इतरेषां तु वर्णानामङ्कनं नात्र कारयेत्'।

इति। क्वचिद्विषये दण्डं निषेधति कात्यायनः—

---

१. D. reads ललाटाङ्को for ललाटाङ्कं. २. A. originally reads बंध° for वध°. ३. C. reads °ष्वेको, while, D. °ष्वेव for °ष्वेको. ४. C. reads नै for नात्र. ५. The following portion is omitted in C. and D.

इति। क्वचिद्विषये दण्डं निषेधति कात्यायनः—

'प्राणात्यये तु यत्र स्यादकार्यकरणं कृतम्।
दण्डं तत्र तु नैव स्यादेष धर्मो भृगुस्मृतः' ॥

इति। नारदस्तु विहितदण्डस्यार्धदण्डेन दण्डमाह—

'अयुक्तं साहसं कृत्वा प्रत्यापत्तिं व्रजेत्तु यः।
ब्रूयात्सर्वं वा सदसि तस्य वार्द्धो दमः स्मृतः' ॥

इति।

'व्याधिना पीडितो यस्तु यः कश्चिदतिनाल्याति।
नैतन्मयाकृतं कार्यं ब्रूयात्तस्यार्धको दमः' ॥

इति। वर्णविशेषेण दंडविशेषमाह पितामहः—

'येन दोषेण शूद्रस्य दण्डो भवति धर्मतः।
नचैत क्षत्रविप्राणां द्विगुणो द्विगुणो भवेत् ॥
प्रवज्यावासितं शूद्रं जपहोमपरायणम्।
वधेन गमयेत्पापं दण्ड्योऽपि द्विगुणं दमम्' ॥

'प्राणात्यये तु यत्र स्यादकार्यकरणं कृतम् ।
दण्डं तत्र तु नैव स्यादेष धर्मो भृगुस्मृतः' ॥

इति । नारदस्तु—विहित दण्डस्यार्धदण्डेन दण्डमाह—

'अयुक्तं साहसं कृत्वा प्रत्यापत्तिं व्रजेत्तु यः ।
ब्रूयात्स्वयं वा सदसि तस्य वाऽर्द्धो दमः स्मृतः' ॥

इति । अन्यच्च—

'व्याधिना पीडितो यस्तु यः कश्चिदति नान्यति ।
नैतन्मया कृतं कार्यं ब्रूयात्तस्यार्द्धको दमः' ॥

इति । वर्णविशेषेण दण्डविशेषमाह पितामहः—

'येन दोषेण शूद्रस्य दण्डो भवति धर्मतः ।
न चैतत्क्षत्र-विप्राणां द्विगुणो द्विगुणो भवेत् ॥

---

इति । बृहस्पतिः—

वधार्हकः स्वर्णशतं दमं दाप्यस्तु पूरुषः ।
अंगच्छेदार्हकस्त्वर्धं सदसाहस्तदर्धकम् ॥
ताडनं बंधनं चैव तथैव च विडम्बकम् ।
एष दण्डो हिहामस्य नार्थदण्डो बृहस्पतिः ॥

इति । दण्डानां पारिभाषिकसंज्ञा मनुना दर्शिता—

'पणानां द्वेशते सार्धे प्रथमः साहसः स्मृतः ।
मध्यमः पंच विज्ञेयः सहस्रं त्वेव मुत्तमः' ॥

इति । इयं संज्ञा प्रथमापराधविषये मन्तव्या । अपराधावृत्तौ तु याज्ञवल्क्य आह—

'साशीतिपणसाहस्रो दण्ड उत्तम साहसः ।
तदर्धं मध्यमः प्रोक्त स्तदर्धमधमः स्मृतः' ॥

इति पणशब्देनात्र कार्षापणो गृह्यते । यथोक्तमार्गे व्यवहारानिर्णयमकुर्वतोमाल्यादीन्दण्डयित्वा राजा पुनर्व्यवहारं प्रवर्तयेत् । तदाह मनुः—

'अमात्यः प्राड्विवाको या ये कुर्युः कार्यमन्यथा ।
तत्स्वयं नृपतिः कुर्यात्तान्सहस्रं तु दण्डयेत्' ॥

इति ।

प्रव्रज्यावसितं शूद्रं जप-होमपरायणम् ।
वधेन गमयेत्पापं दण्ड्योऽपि द्विगुणं दमम्' ॥

इति । बृहस्पतिः—

'वधार्हकः स्वर्णशतं दमं दाप्यस्तु पूरुषः ।
अङ्गच्छेदार्हकस्त्वर्धं सदशांशस्तदर्धकम् ॥
ताडनं बन्धनं चैव तथैव च विडम्बकम् ।
एष दण्डो हि शूद्रस्य नार्थदण्डो बृहस्पतिः' ॥

इति । दण्डानां पारिभाषिकसंज्ञा मनुना दर्शिता—

'पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्रं त्वेवमुत्तमः' ॥
( म. स्मृ. ८. १३८ )

इति । इयं संज्ञा प्रथमापराधविषये मन्तव्या । अपराधावृत्तौ तु याज्ञवल्क्य आह—

'साशीतिपणसाहस्रो दण्ड उत्तमसाहसः ।
तदर्धं मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृतः' ॥
( या. स्मृ. १. ३६६ )

इति । पणशब्देनात्र कार्षापणो गृह्यते । यथोक्तमार्गं व्यवहारनिर्णयमकुर्वतोऽमात्यादीन्दण्डयित्वा राजा पुनर्व्यवहारं प्रवर्त्तयेत् । तदाह मनुः—

'अमात्यः प्राड्विवाको वा ये कुर्युः कार्यमन्यथा ।
तत्स्वयं नृपतिः कुर्यात्तान् सहस्रं तु दण्डयेत्' ॥
( म. स्मृ. ९. २३४ )

इति । न केवलं सभ्यादीनामेव दण्डः । किन्तु जयिनोऽपीत्याह बृहस्पतिः—

'निश्चित्य बहुभिः सार्द्धं ब्राह्मणैः शास्त्रपारगैः ।
दण्डयेज्जयिना सार्कं पूर्वसभ्यांस्तु दोषिणः' ॥

इति । याज्ञवल्क्योऽपि—

'दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।
सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम' ॥
(या. स्मृ. २. ३०५)

इति । रोग-लोभादिना व्यवहारस्यान्यथाकरणे जयिसहिताः सभ्याः प्रत्येकं विवादपराजयनिमित्तादर्शनोद्द्विगुणं दण्ड्याः । यदा पुनः साक्षिदोषेण व्यवहारस्यान्यथात्वं तदा साक्षिण एव दण्ड्याः । न सभ्यादय इत्यर्थः । यः पुनर्न्यायतो निर्णीतमपि व्यवहारमौद्धत्यादधर्म इति मन्यते तं प्रत्याह नारदः—

'तीरितं चानुशिष्टं च यो मन्येत विधर्मणा ।
द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत्' ॥
(ना. स्मृ. १. १६९.)

इति । वसिष्ठोऽपि—

'यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः ।
तमायान्तं पुनर्जित्वा दापयेत् द्विगुणं दमम्' ॥

इति । तीरितानुशिष्टयोर्भेदः कात्यायनेन स्पष्टीकृतः—

१. C. reads न राज्ञा, D. जय° for राग°. २. A. and B. read दण्डात् for °दर्शनात्. ३. C. reads ऽसत्यात्; while, D. मौढ्यात् for औद्धत्यात्. ४. C. omits this verse:—

'तीरीतं चानुशिष्टं च यो मन्येत विधर्मणा ।
द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत् ॥.

५. D. reads विधर्मवित् for विधर्मणा. ६. C. omits this. ७. C. mentions this to verse, but omits यो मन्येत in the first line in the beginning and पुनः in the second line after तमायान्तं. ८. D. reads this line thus:—

यस्तं पापमजित्वा च पातयेद्द्विगुणं दमम्' ॥.

‘ असत्सदिति यः पक्षः सभ्यै राज्ञो[1] ऽवधार्यते ।
तीरितः सोऽनुशिष्टस्तु साक्षिवाक्यात्प्रकीर्तितः’ ॥

इति । यत्पुनर्मनुनोक्तम्—

‘ तीरितं चानुशिष्टं च यत्र क्वचन यद्भवेत् ।
कृतं तद्धर्मतो विद्यात् न तद्भूयो [2]निवर्त्तयेत्’ ॥
( म. स्मृ. ९. २३३ )

इति तत् [3]स्त्रीकृतत्वादिनिवृत्तिहेत्वभावविषयम् । स्त्र्यादि-विषये पुनर्व्यवहारः प्रवर्तनीयः । तदाह नारदः—

‘ स्त्रीषु रात्रौ बहिर्ग्रामादन्तर्वेश्मस्वरातिषु ।
व्यवहारः कृतोऽप्येषु पुनः कर्तव्यतामियात्’ ॥
( ना. स्मृ. १. ४३ )

इति । बलात्कारादिना कृतोऽपि व्यवहारो निवर्तनीय इत्याह याज्ञवल्क्यः—

‘ [4]बलोपाधिविनिर्वृत्तान्व्यवहारान्निवर्तयेत् ।
स्त्री-नक्तमन्तरागारबहिःशत्रुकृतांस्तथा’ ॥
( या. स्मृ. २. ३१ )

इति । कर्तृवैगुण्येऽपि पुनर्व्यवहा[5]रमाह स एव—

---

१. D. reads वा योऽ for राज्ञा°. २. D. substitutes ऽपि for नि.° ३. D. reads स्वीकृत° for स्त्रीकृत.° ४. C. reads for बलोपधिनिवृत्तो व्यवहारः कृतोऽप्येषु पुनः कर्तव्यव्यवहारासिद्धिमाह स एव for the following—

‘बलोपाधिविनिर्वृत्तान्व्यवहारान्निवर्तयेत् ।
स्त्रीनक्तमन्तरागार-बहिःशत्रुकृतांस्तथा ॥
इति । कर्तृवैगुण्येऽपि पुनर्व्यवहारमाह स एव—

५. D. reads व्यवहारासिद्धिम् for व्यवहारम्.

'मत्तोन्मत्तार्त-व्यसनि-बाल[1]-भीतादियोजितः ।
असम्बद्धकृतश्चैव व्यवहारो न सिध्यति' ॥
(या. स्मृ. २. ३२)

इति । आदिशब्देन वृद्धादिप्रयुक्ता व्यवहारा गृह्यन्ते । तथाच मनुः—

'मत्तो-मत्तार्ता[2]ध्यधीनैर्बालेन स्थविरेण वा ।
असम्बद्धकृतश्चैव व्यवहारो न सिध्यति' ॥
(म. स्मृ. ८. १६३)

इति । नारदोऽपि—

'पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विवर्जितः ।
[3]अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः' ॥

इति । हारीतोऽपि—

'राज्ञा विवर्जितो यस्तु स्वयं पौरविरोधकृत् ।
राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च ॥
अन्ये वा ये पुनर्ग्राम-महाजनविरोधकाः ।
अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्तिताः' ॥

इति । स्ववाक्यजितस्य तु न पुनर्न्याय इत्याह नारदः—

'साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः ।
स्ववाचैव जितानां तु नोक्तः पौनर्भवो विधिः' ॥

इति । अन्यानपि निवर्तनीयव्यवहारानाह मनुः—

१. C. reads बालेन स्थविरेण वा for बाल-भीतादियोजितः. २. C. and D. read ऽऽर्त-व्यसनि° for ऽऽर्ताध्यधीनै.° ३. C. reads अभेद्ये यो and D. असंबद्धो for अनादेयो.

'योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र वाप्युपधिं पश्येत्तत्सर्वं विनिवर्त्तयेत्' ॥
( म. स्मृ. ८. १६९ )

इति । परकीयधनस्यात्मीयत्वहेत्वभावे याचितकादिना प्राप्तिर्योगः । आधमनमाधिः योगेनाधमनं योगाधमनम् । एवं विक्रीतमित्यत्रापि योज्यम् । यमोऽपि—

'बलाद्दत्तं बलाद्भुक्तं बलाच्चापि विलेखितम् ।
सर्वान्बलकृतानर्थानिवर्त्यानाह वै मनुः' ॥

इति । कात्यायनोऽपि ।

'उन्मत्तेनैव मत्तेन तथा वाचान्तरेण वा ।
यद्दत्तं यत्कृतं वाथ प्रमाणं नैव तद्भवेत्' ॥

इति । नारदोऽपि—

'यद्बालः कुरुते कार्यं अस्वतन्त्रस्तथैव च ।
अकृतं तदपि प्राहुः शास्त्रे शास्त्रविदो जनाः ॥ (३१)
गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः ।
बाल आषोडशाद्वर्षात्पौगण्ड इति कथ्यते ॥ (३८)
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ।
जीवतोर्न स्वतन्त्रः स्याज्जरयापि समन्वितः ॥ (३६)

---

१. C. and D. read योगे आधमनं for योगेनाधमनं. २. C. omits एवं and substitutes च; while D. reads क्रीत° for विक्रीत°. ३. B. originally reads बलात्कारेण लेखितम्; while C. बलाद्यच्चाभिलेखितम् for बलाच्चापि विलेखितम्. ४. B. originally reads भावांतरेण. ५. B. originally and C. reads यद्वृतं; while D. reads यद्वृत्तं. ६. D. omits this quotation. ७. C. reads जीवनार्णः for जीवतोर्न, but it seems जीवतोर्यत्.

तयोरपि पिता श्रेयान्बीजप्राधान्यदर्शनात् ।
अभावे बीजिनो माता तदभावे तु पूर्वजः' ॥ (३७)
( ना. स्मृ. ४. ३५–३९ )

इति । केषुचित्कार्यविशेषेषु स्त्रीणामस्वातन्त्र्यमित्याह हारीतः—

'दाने वाऽऽधमने वापि धर्मार्थे वा विशेषतः ।
आदाने वा विसर्गे वा न स्त्री स्वातन्त्र्यमर्हति' ॥

इति । नारदः—

'अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः ।
अस्वतन्त्रः स्मृतः शिष्यः आचार्ये तु स्वतन्त्रता' ॥
( ना. स्मृ. ४. ३३ )

इति । अत्रास्वतन्त्रकृतव्यवहारनिवर्तनं स्वतन्त्रानुमत्यभावविषये वेदितव्यम् । तथा च नारदः—

'एतान्येव प्रमाणानि भर्त्ता यद्यनुमन्यते ।
पुत्रः पत्युरभावे वा राजा वा पति-पुत्रयोः ॥ (२७)
तत्र दासकृतं कार्यं न कृतं परिचक्षते ।
अन्यत्र स्वामिसन्देशां[1] न दासः प्रभुरात्मनः ॥ (२९)
पुत्रेण चे[2] कृतं कार्यं यत्स्यादच्छन्दतः पितुः ।
तदप्यकृतमेवाहुर्दासः पुत्रश्च तौ समौ' ॥ (३०)
( ना. स्मृ. ४. २७–३० )

इति । कात्यायनोऽपि—

'न क्षेत्र-गृह-दासानां दाना-ऽऽधमन-विक्रयाः ।
अस्वतन्त्रकृतः सिद्धिं प्राप्नुयान्नानुवर्णिताम्[3] ॥

१. D. reads °संदेशात् for °संदेशां. २. D. substitutes वा for च. ३. C. प्राप्नुयारनुवर्णिताम् and D. प्राप्नुयुर्नानुवर्णिताः for प्राप्नुयान्नानुवर्णिताम्.

प्रमाणं सर्व एवैते पण्यानां क्रय-विक्रये ।
यदि स्वं व्यवहारं ते कुर्वन्तो ह्यनुमोदिताः ॥
क्षेत्रादीनि तथैव स्युर्भ्राता भ्रातृसुतः सुतः ।
निसृष्टाः कृत्यकरणे गुरुणा यदि गच्छतः' ॥

इति । बृहस्पतिरपि—

'यः स्वामिना नियुक्तस्तु धनायस्यापलापने ।
कुसीद-कृषि-वाणिज्ये निसृष्टार्थस्तु स स्मृतः ॥
प्रमाणं तत्कृतं सर्वं लाभालाभ-व्ययोदयम् ।
स्वदेशे वा विदेशे वा न स्वातन्त्र्यं विसंवदेत्' ॥

इति । अनुमत्यभावेऽपि कुटुम्बभरणार्थं अस्वतन्त्रकृतं स्वतन्त्रो नान्यथा कर्तुमर्हतीत्याह मनुः—

'कुटुम्बार्थेऽनधीनोऽपि व्यवहारं समाचरेत् ।
स्वदेशे वा विदेशे वा तं न्यायं न विचारयेत्' ॥
(म. स्मृ. ८. १६७.)

इति । प्रकृतिस्थस्वतन्त्रकृतं कार्यं सिद्ध्यति नाप्रकृतिस्थकृतम् । तथा च नारदः—

'कुलज्येष्ठस्तथा श्रेष्ठः प्रकृतिस्थश्च यो भवेत् ।
तत्कृतं स्यात्कृतं कार्यं न स्वतन्त्रकृतं कृतम्' ॥
(ना. स्मृ. ४. ४२.)

---

१. D. reads स व्यवहारान्ते for स्वं व्यवहारं ते. २. D. reads गच्छाति for गच्छतः. ३. D. reads धनमस्यापलापयेत् for धनायस्यापलापने. ४. D. reads वशांवदेत् for विसंवदेत्. ५. D. omits this word. ६. A. originally reads ऽध्यधीनोऽपि; while in margin ऽप्यधीनोऽपि. B. and C. too the same. ७. D. reads न्याय्यं स विचारयेत् for न्यायं न विचारयेत्. ८. D. substitutes ना for न.

इति । स्वतन्त्रप्रकृतिस्थकृतमपि कार्यं क्वचिन्न सिध्यतीत्याह कात्यायनः—

'सुतस्य सुतदाराणां वशित्वं[1] त्वनुशासने ।
विक्रये चैव दाने च वशित्वं[2] न सुते पितुः' ॥

इति । एवं शास्त्रोक्तमार्गेण निर्णयं कृतवतो[3] राज्ञः फलं दर्शयति बृहस्पतिः—

'एवं शास्त्रोदितं राजा कुर्वन्निर्णयपालनम् ।
वितत्येह यशो लोके महेन्द्रसदृशो भवेत् ॥
साक्षि-लेख्या-ऽनुमानेन[4] प्रकुर्वन्कार्यनिर्णयम् ।
वितत्येह यशो राजा ब्रध्नस्याप्नोति विष्टपम्' ॥

इति निर्णयपादः समाप्तः ।

---

अष्टादशपदोपयोगिनी व्यवहारमातृका निरूपिता । अथेदानीमष्टादशपदान्यनुक्रमशो[5] निरूप्यन्ते । तत्र बृहस्पतिः—

'पदांश[6]सहितस्त्वेष व्यवहारः प्रकीर्तितः ।
विवादकारणान्यस्य पदानि शृणुताधुना ॥
ऋणादान[7]प्रधानानि[8] द्यूताव्हानान्तिकानि[9] च[10] ।
क्रमशः सम्प्रवक्ष्यामि क्रियाभेदांश्च तत्वतः' ॥

इति । तत्र प्रथमोद्दिष्टत्वेन ऋणादानाख्यस्य पदस्य विधिरुच्यते । तच्च ऋणादानं सप्तविधम् । तदाह नारदः—

---

१. D. reads दासीत्वं for वशित्वं. २. D. reads स्वातन्त्र्यं for वशित्वं. ३. C. and D. read कुर्वतो for कृतवतो. ४. C. and D. read साक्षिणश्चानुमानेन for साक्षि-लेख्या-ऽनुमानेन. ५. D. reads ऽनुक्रमेण for ऽनुक्रमशः. ६. D. reads पदार्थ° for पदांश°. ७. A. originally and B., C., D. read ऋणाधान° for ऋणादान°. ८. C. reads °प्रदानानि for °प्रधानानि. ९. D. reads °दिकानि च for ऽन्तिकानि च. १०. A. and B. do not originally mention this word.

'ऋणं देयमदेयं च येन यत्र यथा च यत् ।
दानग्रहणधर्माश्च ऋणादानमिति स्मृतम्' ॥
( ना. स्मृ. ४. १. )

इति । तत्राधमर्णे[१] पञ्चविधम् । ईदृशमृणं देयम्, ईदृशमदेयं च, अनेनाधिकारिणा देयं, अस्मिन्समये देयमनेन प्रकारेण देयमिति । उत्तमर्णे द्विविधम् दानविधिरादानविधिश्चेति । तत्र दानविधिपूर्वकत्वादितरेषां[२]मादौ दानविधिरुच्यते । तत्र बृहस्पतिः—

'परिपूर्णं गृहीत्वाधि[३] बन्धं[४] वा साधुलग्नकम् ।
लेख्यारूढं साक्षिमद्वा ऋणं दद्याद्धनी सदा' ॥

इति । आधेः[५] परिपूर्णत्वं सवृद्धिकमूलद्रव्यपर्याप्तता । वृद्धिभेदाश्च बृहस्पतिना निरूपिताः—

'वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधाऽन्यैः प्रकीर्तिता ।
षड्विधाऽस्मिन्समाख्याता तत्वतस्तां[६] निबोधत ॥
कायिका कालिका चैव चक्रवृद्धिरतोऽपरा ।
कारिता च शिखावृद्धिर्भाग[७]लाभस्तथैव च ॥
[८]कायिका कर्मसंयुक्ता मासग्राह्या तु कालिका ।
वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता[९] त्वृणिना कृता ॥

---

१. D. reads ऽधमर्णं for ऽधमर्णे. २. C. and D. insert तत्र after इतरेषां. ३. A. in margin and B originally read गृहीत्वालं for गृहीत्वाधिं. ४. D. reads वृद्धेः for बन्धं. ५. C. and D. read वृद्धे; for आधेः. ६. D. reads ताः for तां. ७. D. reads भोग° for भाग°. ८. B. originally omits this line and the preceding line. And reads कालिका दार्शिका वृद्धिः कारितात्वृणिना कृता for वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता त्वृणिना कृता. ९. C. substitutes कारिका for कारिता.

प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा मता ।
गृहात्स्तोमः[1] शदः क्षेत्राद्भोगलाभः प्रकीर्तितः' ॥

इति । वृद्धेस्तु परिमाणं मनुनोक्तम्ः—

'अशीतिभागं गृण्हीयान्मासि वार्धुषिकः शते[2]' ।
(म. स्मृ. ८. १४०)

इति । वृद्ध्यर्थं निष्कशते प्रयुक्ते सपादनिष्कपरिमितां वृद्धिं मासि मासि गृण्हीयात् । एतत्संबन्धक[3]विषयम् तथा च याज्ञवल्क्यः—

'अशीतिभागो वृद्धिस्यान्मासि मासि सबन्धके ।
वर्णक्रमाच्छतं द्वि-त्रि-चतुष्पञ्चकमन्यथा[4]' ॥
(या. स्मृ. २. ३७)

इति । अन्यथा[5] बन्धरहितप्रयोगे अधमर्णब्राह्मणादिक्रमेण द्विकं त्रिकं चतुष्कं पञ्चकं शतं धर्म्यं भवतीत्यर्थः। तथा च मनुः—

'द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं तथा ।
मासस्य वृद्धिं गृण्हीयाद्वर्णानामनुपूर्वशः' ॥
( म. स्मृ. ८. १४२ )

इति । सलग्नकप्रयोगे व्यासः—

'सबन्धे भाग आशीतः षष्ठो भागः सलग्नके ।
निराधारे द्विकशतं मासलाभ उदाहृतः' ॥

इति । ग्रहीतृभेदेन[6] वृद्धेः परिमाणान्तरमाह याज्ञवल्क्यः—

---

१. A. B. and C. read तोषः for स्तोमः and D. substitutes सदः for शदः. २. A. reads शतम् for शते. ३. A. and C. read सम्बन्धक° for सबन्धक°. ४. C. reads पंचशतं तथा for पंचकमन्यथा. ५. C. omits wrongly the following—अन्यथा बन्धरहितप्रयोगे अधमर्णब्राह्मणादिक्रमेण द्विकं त्रिकं चतुष्कं पंचकं शतं धर्म्यं भवतीत्यर्थः ॥ तथा च मनुः—'द्विकं त्रिकं चतुष्कं च पंचकं च शतं तथा. ६. C. reads °भेदे. and D. °भेदैः for °भेदेन.

'कान्तारगास्तु दशकं सामुद्रा विंशकं शतम्' ।

( या. स्मृ. २. ३८ )

इति । कान्तारगाः दुर्गभववर्त्मगन्तारः ते प्रतिमासं दशकं शतं दद्युः । सामुद्राः[1] समुद्रगन्तारः विंशकं शतं दद्युरित्यर्थः । कारितायां तु न नियम इत्याह स एव—

'दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु' ।

( या. स्मृ. २. ३८ )

इति । सर्वे[2] ब्राह्मणादयोऽधमर्णाः । सबन्धकेऽबंधके सर्वासु जातिषू[3]त्तमर्णानुभूतासु स्वाभ्युपगतां वृद्धिं दद्युः । क्वचिदनङ्गीकृतापि वृद्धिर्भवति । तदाह विष्णुः—

'यो गृहीत्वा ऋणं पूर्वं श्वो दास्यामीति सामकम् ।
न दद्याल्लोभतः पश्चात्तदन्हां[4] वृद्धिमाप्नुयात्' ॥

( वि. स्मृ. ६. ४० )

इति । सममेव सामकम् । प्र[5]तिदानकालावधिमङ्गीकृत्य[6] गृहीतमुद्वृद्धिकं[7] धनं यदि ततः[8] प्राङ् न ददाति तदा अवधेरनन्तरकालादारभ्य वर्द्धत एवेत्यर्थः । कालावधिमनङ्गीकृत्य स्वीकृतस्य धनस्य षण्मासादूर्ध्वं वृद्धिर्भवतीत्याह नारदः—

'न वृद्धिः प्रीतिदत्तानां स्या[9]दनाकारिता क्वचित् ।
अनाकारितमप्यूर्ध्वं वत्सरार्द्धाद्विवर्द्धते' ॥

( ना. स्मृ. ४. १०८ )

१. B. reads समुद्राः. २. A. and B. omit this sentence. ३. C. reads उत्तमर्णसंभूतासु स्वाभ्युपगृहीतां or उत्तमर्णानुभूतासु स्वाभ्युपयाता. ४. D. reads स तस्मात् for तदन्हा. ५. C. and D. read प्रतिदिन° for प्रतिदान°. ६. C. reads °संग्रहं कृत्वा for अंगिकृत्य. ७. C. and D. read अवृद्धिकं for उद्वृद्धिकं. ८. D. omits this word. ९. D. reads या त्वनाकारिता for स्यादनाकारिता.

इति । याचितकं गृहीत्वा देशान्तरगमने कात्यायनः—

'यो याचितकमादाय तमदत्वा दिशं व्रजेत् ।
ऊर्ध्वं संवत्सरात्तस्य तद्धनं वृद्धिमाप्नुयात्' ॥

इति । एतच्चाप्रतियाचितविषयम् । प्रतियाचिते तु स एवाह—

'कृत्वोद्धारमदत्वा यो याचितस्तु दिशं व्रजेत् ।
ऊर्ध्वं मासप्रयातस्य तद्धनं वृद्धिमाप्नुयात्' ॥

इति । कृत्वोद्धारं याचितकमादायेत्यर्थः । यस्तु याचितकं गृहीत्वा स्वदेश[1] एव स्थितो याचितोऽपि याचितकं न प्रयच्छति तं प्रत्याह स एव—

'स्वदेशेऽपि स्थितो यस्तु न दद्याद्याचितः क्वचित् ।
[2]तं ततः कारितां वृद्धिमनिच्छन्तं च दापयेत्' ॥

इति । ततः प्रतियाचनकालादारभ्येत्यर्थः । [3]प्रीतिदत्ते प्रतियाचिते वृद्धिविशेषस्तेनैवोक्तः—

'[4]प्रीतिदत्तं न वर्द्धेत यावन्न प्रतियाचितम् ।
याच्यमानमदत्तं चेद्वर्द्धते पञ्चकं शतम्' ॥

इति । [5]दत्ते च प्रतियाचिते वृद्धिनिक्षेपादावपि स एव—

---

१. D. reads देशे for स्वदेशे. २. C. and D. read तां ततोऽकारितां for तं ततः कारितां. ३. D. omits this following sentence—प्रीतिदत्ते प्रतियाचिते वृद्धिविशेषस्तेनैवोक्तः and for this sentence the following first half of the verse, C. substitutes as :—

प्रीतिदत्ते च प्रयाचिते वृद्धि विशेषं च क्रयविक्रय एव च ।
याच्यमानं च दत्तं न वर्धते याचनं प्रतिकारितं ।.

४. D. reads याच्यमानं for प्रीतिदत्तं. ५. C. and D. omit दत्ते च प्रतियाचिते.

'निक्षिप्तं[1] वृद्धिशेषं च क्रयविक्रयमेव च ।
याच्यमानमदत्तं चेद्वर्द्धते पञ्चकं शतम्' ॥

इति । गृहीतपण्यस्य मूल्यानर्पणविषये तु स एव—

'पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत् ।
ऋतुत्रयस्योपरिष्टाद्धनं[2] वृद्धिमवाप्नुयात्' ॥

इति । एतच्च प्रतियाचितविषयम्[3] । अनाकारितवृद्धेरपवादो नारदेन दर्शितः—

'पण्यमूल्यं भृतिर्न्यासो दण्डो यश्च प्रकल्पितः ।
वृथादानाक्षिकपणा[4] वर्द्धन्ते नाऽविवक्षिताः' ॥
(ना. स्मृ. २. ३६)

इति । वृथादानं नटादिभ्यः प्रतिश्रुतम् । आक्षिकपणो द्यूतद्रव्यम् । अविवक्षिता अनाकारिताः । पण्यमूल्यस्य वृध्यभावः प्रवास[5]प्रतियाचनाभावे । न्यासस्य[6] तु वृध्यभावो यथावस्थाने प्रतियाचनाभावे च । अन्यथा कात्यायनवचनविरोधापत्तेः ।

संवर्त्तोऽपि—

'न वृद्धिः स्त्रीधने लाभे निक्षिप्ते च यथा[7]स्थिते ।
सन्दिग्धे प्रातिभाव्ये च यदि न स्यात्स्वयं कृता' ॥

इति । यथा[8]स्थिते निक्षिप्ते व्यक्त्यन्यथाकरणरहिते । दातुं[9] योग्यमयोग्यं चेति सन्दिग्धेऽर्थे[10] प्रातिभाव्ये ऋणिप्रत्यर्पणा[11]दौ । कात्यायनोऽपि—

१. A. and B. read निक्षेपं for निक्षिप्तं. २. D. reads तद्धनं वृद्धिमाप्नुयात्. ३. D. reads अप्रतियाचित° for प्रतियाचित° through mistake. ४. D. reads °पणं for °पणाः. ५. C. reads प्रवासं for प्रवास°. ६. C. omits न्यासस्य तु वृद्ध्यभावः. ७. C. reads तथा° for यथा°. ८. A. and B. add लाभो वृद्धिः before this word, and for the same C. has नातो वृद्धिः. ९ C. omits दातुं योग्यं. १०. C. D. omit ऽर्थे. ११. A. and B. read °द्रव्यार्पणादौ for °प्रत्यर्पणादौ.

'चर्मसस्यासवद्यूते पण्यमूल्ये च सर्वदा ।
स्त्री शुल्केषु न वृद्धिः स्यात्प्रातिभाव्यागतेषु च' ॥

इति । सर्वदेति प्रतियाचनादेः परस्तादप्यकृता वृद्धिर्नास्तीत्यर्थः । पण्यमूल्ये कात्यायनवचनविरोधः पूर्वमेव परिहृतः । व्यासोऽपि—

'प्रातिभाव्यं भुक्तबन्धमगृहीतं च दित्सतः ।
न वर्द्धते प्रयत्नस्य दमः शुल्कं प्रतिश्रुतम्' ॥

इति । भुक्तबन्धग्रहणं निक्षेपोपयोगे यथा वृद्धिर्देया तथा गोप्याधिभोगे वृद्धिर्न देयेत्येवमर्थम् ।

'भुक्ताधिर्न वर्द्धते वस्त्रालङ्कारादिः' ।

इति गौतमस्मरणात् ।

'अगृहीतं च दित्सतः' ।

इति कृतवृध्यपवादे अकृतवृध्यपवादप्रसंगोऽयुक्तः । कृतवृद्ध्यपवादश्च याज्ञवल्क्येन दर्शितः—

'दीयमानं न गृण्हाति प्रयुक्तं यः स्वकं धनम् ।
मध्यस्थस्थापितं तत्स्याद्वर्द्धते न ततः परम्' ॥
(या. स्मृ. २. ४४ ).

इति । प्रयुक्तस्य द्रव्यस्य वृद्धिग्रहणमन्तरेण चिरकालावस्थितस्य परम् । वृद्धिं द्रव्यभेदेनाह याज्ञवल्क्यः—

१. A. in margin and B. originally read कर्म° for चर्म°. २. A. and B. read °मूले for °मूल्ये. ३. A. in margin and B. originally read भुक्तबंधम्. ४. D. reads wrongly निक्षेपोपायेन for निक्षेपोपयोगे. ५. D. omits °आधि° and C. also. ६. D. omits वस्त्रालंकारादिः. ७. B. dose not insert this sentence. ८. C. and D. read नियुक्तं for प्रयुक्तं. ९. C. reads °कल्पितं for °स्थापितं. १०. D. reads वृद्धिद्रव्यभेदानाह for वृद्धिं द्रव्यभेदेनाह.

‘सन्ततिस्तु पशु-स्त्रीणां रसस्याऽष्टगुणा[1] परा।
वस्त्र-धान्य-हिरण्यानां चतुस्त्रि[2]-द्विगुणा परा’॥
( या. स्मृ. २. ३९. )

इति। पशुस्त्रीणां सन्ततिरेव वृद्धिः। रसस्य तैलघृतादेः स्वकृतया[3] वृद्ध्या वर्धमानस्याष्टगुणा[4] वृद्धिः परा। नातः परा[5] वृद्धिः। वस्त्र-धान्य-हिरण्यानां यथाक्रमं चतुर्गुणा त्रिगुणा द्विगुणा परा वृद्धिः। यत्तु वसिष्ठेनोक्तम्—

‘द्विगुणं हिरण्यं, त्रिगुणं धान्यं, धान्येनैव रसा व्याख्याताः।
पुष्प-मूल-फलादीनि च। तुला घृतमष्टगुणम्[6]’।

इति यत्तु मनुनोक्तम्—

‘धान्ये शदे[7] लवे वाह्ये नातिक्रामति पञ्चताम्’॥
( म. स्मृ. ८.१५१ )

इति शदः[8] क्षेत्रफलं पुष्प-मूल-फलादि। लवो मेषोर्णा चमरीकेशादिः। वाह्या[9] बलीवर्द-तुरगादयः। धान्य[10]-शद-लव-वाह्यविषया वृद्धिः पंचगुणत्वं नातिक्रामति यदपि बृहस्पतिनोक्तम्—

‘हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्र-कुप्यके।
धान्ये चतुर्गुणा प्रोक्ता शद-वाह्य-लवेषु च’॥

---

१. C. reads त्रिगुणा for ऽष्टगुणा. २. C. reads धातुस्त्री° for चतुस्त्रि°. ३. C. reads तृतीयया for स्वकृतया. ४. C. adds °साध्यगुणा रस° after वर्धमान°. ५. C. and D. read परं वर्द्धते for °परा वृद्धिः. ६. A. and B. read °धृत° for °घृत°. ७. C. reads लवे नवे वाह्ये for शदे लवे वाह्ये. ८. C. omits शदः क्षेत्रफलं पुष्प-मूल-फलादि. ९. B. omits बलीवर्द°; while C. वाह्या बलीवर्दतुरगादयः. १०. A. B. C. omit धान्य-शद-लव-वाह्यविषया वृद्धिः पंचगुणत्वं नातिक्रामति; while C. and D. omit the following portion also:— यदपि बृहस्पतिनोक्तम्—

‘हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके।
धान्ये चतुर्गुणा प्रोक्ता शद-वाह्य-लवेषु च॥.

उक्ता पञ्च[1]गुणा शाके बीजेऽक्षौ षड्गुणा स्मृता ।
लवण-स्वेद[2]-मद्येषु वृद्धिरष्टगुणा मता ॥
गुडे मधुनि चैवोक्ता प्रयुक्ते चिरकालिके' ।

इति । कुप्यं त्रपु सीसकम् । शदः[3] क्षेत्रफलं पुष्प-मूल-फलादि । तदेतत्सर्वमधमर्णयोग्यतानुसारेण दुर्भिक्षादिकालवशेन व्यवस्थापनीयम् । देशभेदेनापि परां वृद्धिं दर्शयति नारदः—

'द्विगुणं त्रिगुणं चैव तथान्यस्मिंश्चतुर्गुणम् ।
तथाष्टगुणमन्यस्मिन् देयं देशेऽवतिष्ठति' ॥
(ना. स्मृ. ४. १०६)

इति । देयमृणं वर्द्धमानं चिरकालावस्थितं क्वचिद्देशे[4] द्विगुणं क्वचिद्देशे[5] त्रिगुणं क्वचिच्चतुर्गुणं क्वचिदष्टगुणं भवतीत्यर्थः । वसिष्ठोऽपि—

'वज्र-शुक्ति[6]-प्रवालानां रत्नस्य[7] रजतस्य च ।
द्विगुणा दाप्यते[8] वृद्धिः कृता[9] कालानुसारिणी ॥
ताम्रा[10]-ऽयः-कांस्य-रीतीनां त्रपुणः सीसकस्य च ।
त्रिगुणा तिष्ठते वृद्धिः कालान्तरकृतस्य[11] तु' ॥

इति । शुक्तिमिति[12] मुक्ताफलं लक्ष्यते । वज्रसाहचर्यात् । व्यासोऽपि—

---

१. C. reads उक्तमेवंगुणा for उक्ता पंचगुणा; while D. ऽप्यष्टगुणा for पंचगुणा. २. B. originally reads °स्नेह°; while D. °कुप्यद° for °स्वेद°. ३. C. reads शदःक्षेत्रफालं for शदः क्षेत्रफलं; while D. omits शदः क्षेत्रफलं पुष्प-मूल-फलादि. ४. C. and D. omit क्वचिद्देशे द्विगुणं. ५. This word is also omitted in C. D.; ६. D. reads °मुक्ति° for °शुक्ति.° ७. A. in margin and B. originally read हेम्नश्च. ८. D. reads दीयते for दाप्यते. ९. D. reads कृतकालानुवर्तिनी for कृता कालानुसारिणी. १०. C. reads तत्राऽयः° for ताम्रा-ऽयः.° ११. D. reads काले स्वैरकृतस्य तु. १२. C. and D. read मुक्तिरिति for शुक्तिमिति.

'शाक-कार्पासबीजेक्षौ षड्गुणा परिकीर्तिता ।
वदन्त्यष्टगुणान् काले मद्य-स्नेह-रसा-ऽऽसवान्' ॥

इति । कात्यायनोऽपि—

'तैलानां च सर्वेषां मद्यानामथ सर्पिषाम् ।
वृद्धिरष्टगुणा ज्ञेया गुडस्य लवणस्य च' ॥

इति । यत्र वृद्धिविशेषो न श्रूयते तत्र द्विगुणैव । तथा च विष्णुः—

'अनुक्तानां द्विगुणा' ।

(वि. स्मृ. ६. १७)

इति । अयं च वृद्ध्युपरमः सकृत्प्रयोगे सकृदाहरणे च वेदितव्यः । तथा च मनुः—

'कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहिता' ।

( म. स्मृ. ८. १५१. )

इति । उपचयार्थं प्रयुक्तं द्रव्यं कुसीदं तस्य वृद्धिर्द्वैगुण्यं नात्येति नातिक्रामति । यदा सकृदाहिता सकृत्प्रयुक्ता पुरुषान्तरसंक्रमणेन प्रयोगान्तरकरणेन तस्मिन्नेव वा पुरुषे रेकसेकाभ्यां प्रयोगान्तरकरणे द्वैगुण्यमतिक्रम्य पूर्ववद्वर्द्धते । सकृदाहृतेति पाठे शनैः प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं वाऽधमर्णादाहृत्य द्वैगुण्यमतीत्य इति व्याख्येयम् । गौतमोऽपि—

'चिरस्थाने द्वैगुण्यं प्रयोगस्य' ।

( ग. गौ. स्मृ. १२. ६ )

१ C. reads °पक्रमः for °परमः. २. D. reads अनुगमे for पाठे. ३. D. reads अत्येति for अतीत्य.

इति । [१]प्रयोगस्येति एकवचननिर्देशात्प्रयोगान्तर[२]करणं द्वैगुण्यातिक्रमः[३] । चिरस्थान इति निर्देशाच्छनैः शनैर्वृद्धिग्रहणे द्वैगुण्यातिक्रमोऽभिमतः । उक्तस्य वृद्ध्युपरमस्य क्वचिद्द्रव्यविशेषेऽपवादमाह बृहस्पतिः—

'तृण-काष्ठेष्टका-सूत्र-किण्व-चर्मा-ऽस्थि-वर्मणाम् ।
हेति-पुष्प-फलानां च वृद्धिस्तु न निवर्तते' ॥

इति । किण्वः सुराद्रव्योपादानभूतो मलविशेषः । चर्म बा[४]णादिनिवारकः फलकः । वर्म तनुत्रम् । हेतिरायुधम् । पुष्पफलयोर्वृद्धि[५]निवृत्त्यभावोऽत्यन्तसमृद्धाधमर्णविषयः । अन्यथा त्रिगुणवृद्धिप्रतिपादकवसि[६]ष्ठवचनविरोधापत्तेः । विष्णुरपि—

'[७]किण्व-कार्पाससूत्र-चर्म-वर्मा-ऽऽयुधेष्टकाङ्गाराणामक्षया' ।
(वि. स्मृ. ६. १६.)

इति । अत्रापि कार्पासे तु षड्गुणप्रतिपादकव्यासवचनविरोधः पूर्ववद्विज्ञेयः । वासिष्ठोऽपि—

'दन्त[८]-चर्मास्थि-शृङ्गाणां [९]मृण्मयानां तथैव च ।
अक्षया वृद्धिरेतेषां पुष्प-मूल-फलस्य च' ॥

१. A. and B. omit this word. २. B. originally read °क्रमेण for °करणं; while D. reads °करणे for °करणं. ३. D. adds ऽभिप्रेतः after °क्रमः. ४. A. and B. originally read तृणार्तिनिधारकः which seems wrong. C. also like A. B.; ५. D. reads °वृद्ध्यानिवृत्तिरत्यन्त° for °वृद्धिनिवृत्त्यभावोत्यन्त°. ६. C. and D. read व्यासवचनविरोधः पूर्ववद्विज्ञेयः for वशिष्ठवचनविरोधापत्तेः. ७. C. and D. omit the following—

'किण्व-कार्पाससूत्र-चर्म-वर्मा-ऽऽयुधेष्टकांगाराणामक्षया' ।
इति । अत्रापि कार्पासे तु षड्गुणप्रतिपादकव्यासवचनविरोधः
पूर्ववद्विज्ञेयः ।.

८. D. reads दण्ड-वर्म° for दन्त-चर्म°. ९. C. and D. read मृत्तिकादीनां for मृण्मयानां.

इति । बृहस्पतिरपि—

‘शिखावृद्धिं कायिकां च भोगलाभं तथैव च ।
धनी तावत् समादद्याद्यावन्मूलं न शोधितम्’ ॥

इति । तदेवम्—‘परिपूर्णं गृहीत्वाऽऽधिम्’ इत्यत्राधेः परिपूर्णत्वनिरूपणप्रसङ्गात्सविशेषा[1] वृद्धिर्निरूपिता । इदानीमाधिर्निरूप्यते । तत्र नारदः—

‘अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः ।
कृतकालोऽपनेयश्च यावद्देयोऽद्यतस्तथा ॥
स[2] पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च’ ।

( ना. स्मृ. ४. १२४ )

इति । गृहीतस्य द्रव्यस्योपरि विश्वासार्थमधमर्णेनोत्तमर्णेऽधिक्रियते आधीयत इत्याधिः । कृतकाले आधानकाल एवामुष्मिन्दीपोत्सवे[3]ऽयमाधिर्मया मोक्ष्यते । अन्यथा तवैव भविष्यतीत्येवं निरूपिते काले । उपनेयो[4] मोचनीय इत्यर्थः । यावद्देयोद्यतः गृहीतधनप्रत्यर्पणावधि निरूपितकाल इत्यर्थः । गोप्यो रक्षणीयः । भोग्यः फलभोग्यादिः । बृहस्पतिरपि—

‘आधिर्बन्धः समाख्यातः स च प्रोक्तश्चतुर्विधः ।
जङ्गमः स्थावरश्चैव गोप्यो भोग्यस्तथैव च ॥
यादृच्छिकः सावधिश्च लेख्यारूढोऽथ साक्षिमान्’ ।

---

१. A. and B. in margin read °प्रसङ्गात् सङ्गत; while C. and D. read °प्रसंगागता विशेषाः for °प्रसंगात्सविशेषा. २. C. reads न for स. ३. D. reads एतद्दिवसावधि for ऽमुष्मिन् दीपोत्सवे. ४. C. reads उपनेयो सेवनीयः; while D. उपरिष्टात्सेवनीयः for उपनेयो मोचनीयः.

इति । आधिर्नाम बन्धः । स द्विविधः । गोप्यो भोग्यश्च । पुनश्चैकैकशो द्विविधः । जङ्गमः स्थावरश्चेत्येवं चतुर्विधः । पुनरपि प्रत्येकं द्विविधः । यादृच्छिकः सावधिश्चेति । यावदृणं तव न ददामि तावदर्थमाधिरित्येवं कालविशेषावधिशून्यतया कृतो यादृच्छिकः । सावधिः कृतकालोपनेयः । पुनश्च लेख्यावरूढः साक्षिमानिति द्विविधः । भरद्वाजः प्रकारान्तरेणाधेश्चातुर्विध्यमाह—

'आधिस्तु द्विविधः[१] प्रोक्तो गोप्यो भोग्यस्तथैव च ।
अर्थप्रत्ययहेतुश्च चतुर्थस्त्वाज्ञया कृतः' ॥

इति । मरीचिरपि—

'श्रावणात्पूर्वलिखितो भोग्याधिः श्रेष्ठ उच्यते ।
गोप्याधिस्तु परेभ्यस्तु[२] दत्वा यो गोप्यते गृहे[३] ॥
अर्थप्रत्ययहेतुर्यः प्रत्ययाधिः[४] स उच्यते ।
आज्ञाधिर्नाम यो राज्ञा संसदि त्वाज्ञया कृतः' ॥

इति । श्रावणं संसदि प्रकाशनम् । आधेर्ग्रहाणानन्तरं नाश-ऱ्हास[५]-विकारादयो यथा न भवन्ति तथासौ पालनीय इत्याह हारीतः—

'बन्धं यथा स्थापितं स्यात्तथैव परिपालयेत् ।
अन्यथा नश्यते लाभो मूलं वा तद्व्यतिक्रमात्' ॥

इति । बृहस्पतिरपि—

---

१. C. reads त्रिविधः and D. reads चतुर्विधः. २. A. in margin and B. incorrected and C. D. read स्वं for °स्तु. ३. C. reads रहः for गृहे. ४. D. reads अर्थहेतुः for प्रत्ययाधिः. ५. D. omits this word.

‘भुक्तं वाऽसारतां प्राप्ते मूलहानिः प्रजायते ।
बहुमूल्यं यत्र नष्टमृणिकं तत्र[1] तोषयेत् ॥
दैव-राजोपघाते च यत्राधिर्नाशमाप्नुयात् ।
न्यासवत्परिपाल्योऽसौ वृद्धिर्नश्येत दापिते[2] ॥
तत्राधिं दापयेद्द्यात्[3]सोदयं [4]धनमन्यथा’ ।

इति । दैवोपघातोऽभ्युदक-देशोपप्लवादिः । स्वापराधाभावेऽपि कृतो राजोपघातः । यदि ताभ्यामाधिर्नाशमाप्नुयात्तदाऽन्यमादध्यात् । सोदयं धनं वा दद्यात् । तथा च व्यासः—

‘दैव-राजोपघाते तु न दोषो धनिनां क्वचित् ।
अन्यथा नश्यते लाभो मूलं वा नाशमाप्नुयात् ॥
ऋणं दाप्यस्तु तन्नाशे [6]बन्धं वान्यमृणी तथा’ ।

इति । आधिरसारत्वेऽप्येवमनुसन्धेयम् । तथा च नारदः—

‘रक्ष्यमाणोऽपि [7]यत्राधिः [8]कालेनेयादसारताम् ।
आधिरन्योऽथ वा कार्यो देयं वा धनिने धनम्’ ॥
(ना. स्मृ. ४. १३०)

इति । याज्ञवल्क्योऽपि—

१. A. and C. read नत्र for तत्र. २. C. originally reads °त काचिति; while D. °त्तथाऽकृते for °त दापिते. ३. D. reads दृष्टान् for दद्यात्. ४. B. originally reads वा धनं ऋणम्, but corrects धनमन्यथा. ५. C. and D. omit the following prose—

दैवोपघातोऽभ्युदक-देशोपप्लवादिः ।
स्वापराधाभावेऽपि कृतो राजोपघातः ।
यदि ताभ्यामाधिर्नाशमाप्नुयात्तदाऽन्यमादध्यात् ।
सोदयं धनं वा दद्यात् ।

६. D. reads बन्धं नान्यमृणं for बंधं वान्यमृणी. ७. C. reads यद्यार्धिः; while D. reads यद्याधिः for यत्राधिः. ८. C. reads कामं for काले°.

'आधिः स्वीकरणात्सिद्धी रक्ष्यमाणोऽप्यसारताम्।
यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत्' ॥
(या. स्मृ. २. ६०)

इति। अयमर्थः—आधेर्गोप्यस्य भोग्यस्य च स्वीकरणाद्ग्रहणोपभोगाच्च[१] सिद्धिः। न साक्षिलेख्यमात्रेण। नाप्युद्देशमात्रेण। तदाह नारदः—

'आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा।
सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा' ॥
(ना. स्मृ. ४. ३९)

इति। एवं च सति या स्वीकारान्ता क्रिया सा पूर्वा बलवती। पूर्वापि स्वीकाररहिता सा न बलवतीत्युक्तं भवति। आधिः प्रयत्नेन रक्ष्यमाणोऽपि कालादिवशेन यद्यसारतां गतस्तदान्य आधेयः। अथ वा धनिने धनं देयम्। आधिसिद्धौ भोग एव प्रमाणमित्याह विष्णुः—

'ययोर्[२]निक्षिप्त[३] आधिः स्तौ[४] विवदेतां यदा नरौ।
यस्य भुक्तिर्जयस्तस्य बलात्कारं विना कृता' ॥

इति। द्वयोरपि तु[५] भुक्तियुक्तत्वे बृहस्पतिराह—

'क्षेत्रमेकं द्वयोर्बन्धे यद्दत्तं समकालिकम्।
येन भुक्तं भवेत्पूर्वं[६] तस्य तत्सिद्धिमाप्नुयात्' ॥

इति। वसिष्ठः—

१. D. adds आधिग्रहणं after उपभोगाच्च. २. B. originally and C. and D. read द्वयोः for ययोः. ३. D. reads निक्षिप्तयोराधिः, for निक्षिप्त आधिः. ४. C. and D. omit this word. ५. C. and D. omit तु, and read respectively भुक्तियुक्ते and भुक्तस्य for भुक्तियुक्तत्वे. ६. D. reads तस्य तत for पूर्वं तस्य.

‘तुल्यकाले निसृष्टानां[1] लेख्यानामाधिकर्मणि ।
येन भुक्तं भवेत्पूर्वं तस्याधिर्बलवत्तरा’[2] ॥

इति । भोगाविशेषेऽपि[3] स एवाह—

‘यदेक[4]दिवसे तौ तु भोक्तुकामा[5]वुपागतौ ।
विभज्याधिः समं तत्र[6] भोक्तव्य इति निश्चयः’ ॥

इति । द्वयोरेकमाधिं कुर्वतो दण्ड[7]माह कात्यायनः—

‘आधिमेकं द्वयोः कृत्वा[8] यद्येका प्रतिपद्भवेत् ।
तयोः पूर्वकृतं ग्राह्यं तत्कर्ता चोरदण्डभाक्[9]’ ॥

इति । [10]प्रतिपदिति प्रतिपत्तिरित्यर्थः । आधिविशेषे दण्डविशेषमाह विष्णुः—

‘गोचर्ममात्राधिकां भुवमन्यस्याधीकृतां[11]
तस्मादनिर्मोच्यान्यस्य यः प्रयच्छेत्स वध्यः ।
[12]ऊनां चेत् षोडशसुवर्णं दण्ड्यः’ ।
( वि. स्मृ. ५. १८१–१८२ )

इति । साक्षि-लेख्यसिद्ध्योर्लेख्यासिद्धं[13] बलवदित्याह कात्यायनः—

‘आधानं विक्रयो दानं लेख्य-साक्ष्यकृतं यदा ।
एकक्रियाविरुद्धं तु लेख्यं तत्रापहारकम्’ ॥

---

१. D. reads विमृष्टानां for निसृष्टानां; while C. विसृष्टानां. २. C. reads तस्य सिद्धिस्तदुत्तरम् for तस्याधिर्बलवत्तरा. ३. D. reads °धिशेषे for °ऽविशेषे and omits ऽपि after this word. ४. C. and D. read यद्येक° for यदेक°. ५. C. reads भोक्तुं सम्यक् for भोक्तुकामा°. ६. B. originally and D. read तेन for तत्र ७. C. omits दण्डम्. ८. A. in margin and B. originally read यत्न कुर्यात् सा प्रतिपद्भवेत् which seems incorrect. ९. D. reads दण्डभाग्भवेत् for चोरदण्डभाक्. १०. A. B. C. omit प्रतिपदिति प्रतिपत्तिरित्यर्थः ।. ११. D. reads आधिं कृत्वा for आधीकृतां. १२. C. reads ऊनाधेः for ऊनां चेत्. १३. D. reads लेख्यासिद्धिर्बलवती for लेख्यसिद्धं बलवत्.

इति। लेख्यसिद्धत्वाविशेषेऽपि स एवाह—

'अनिर्दिष्टाच्च[1] निर्दिष्टं एकत्र च विलेखितम्।

विशेषलिखितं[2] ज्याय इति कात्यायनोऽब्रवीत्'॥

इति। निर्दिष्टानिर्दिष्टयोः स्वरूपमाह स एव—

'यो विद्यमानं प्रथममनादिष्टस्वरूपकम्।

आकाशभूतमानेन[3] अनिर्दिष्टं च तद्भवेत्॥

यद्यद्यदास्य विद्येत तदादिष्टं विनिर्दिशेत्'।

इति। अयमर्थः—आधातुं आधानकाले यद्विद्यमानं धनं निरूपितस्वरूपं च तद्धनमाधित्वेनादिष्टं तन्निर्दिष्टमित्युच्यते। तद्विपरीतं तु धनमाधित्वेन कल्प्यमानमनिर्दिष्टमिति[4]। निर्दिष्टत्वाविशेषे[5] याज्ञवल्क्यः—

'आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा'।

(या. स्मृ. २. २३)

इति। एकमेव क्षेत्रमेकस्याधिं कृत्वा किमपि गृहीत्वा पुनरन्यस्याप्याधाय किमपि गृण्हाति। तत्र पूर्वस्यैव क्षेत्रं भवति नोत्तरस्य। एवं प्रतिग्रहे क्रये च योज्यम्। ऋणादिषु उत्तरक्रियाप्राबल्यमाह स एव—

---

१. D. reads अनिर्दिष्टं for अनिर्दिष्टात्. २. C. and D. omit the following—

विशेषलिखितं ज्याय इति कात्यायनोऽब्रवीत्'॥

इति। निर्दिष्टानिर्दिष्टयोः स्वरूपमाह स एव—

'यो विद्यमानं प्रथम मनादिष्टस्वरूपकम्।

३. A. in margin and B. originally read आदध्याऽनादिष्टं for °मानेन अनिर्दिष्टं; while C. substitutes अनादित्वं for अनिर्दिष्टं and D. reads आदाय अनादिष्टं for °मानेन अनिर्दिष्टं. ४. D. adds अनिर्दिशाति after अनिर्दिष्टमिति. ५. C. reads निर्दिष्टत्वाद्विशेषं for निर्दिष्टत्वाविशेषे.

'सर्वेष्वर्थविवादेषु बलवत्युत्तराक्रिया[1]' ॥

( या. स्मृ. २. २३ )

इति । यदैकं[2] क्षेत्रमेकस्याधिं कृत्वान्यस्य विक्रीयते[3] तत्राह वसिष्ठः—

'यं पूर्वतरमाधाय[4] विक्रीणीते तु तं पुनः ।
किमेतयोर्बलीयः स्यात्? प्राक्तनं[5] बलवत्तरम्' ॥

इति । आध्यादीनां यौगपद्येऽप्याह स एव—

'कृतं यत्रैकदिवसे दानमाधानविक्रयम् ।
त्रयाणामिति[6] सन्देहे कथं तत्र विचिन्तयेत्? ॥
त्रयोऽपि तद्धनं धर्म्यं[7] विभजेयुर्यथांशतः ।
उभौ क्रियानुसारेण त्रिभागोनं प्रतिग्रही' ॥

इति । अथ[8] धनिदोषेणाधिनाशे व्यासः—

'गृहीतदोषो नष्टश्च वृद्धौ देयाधिको भवेत् ।
ऋणं सलाभं संशोध्य तन्मूलं दाप्यते धनी' ॥

इति । एतदाधितोऽभ्यधिकसमलाभर्णि[10]विषयम् । ऋणपर्याप्ताधिनाशे[9] त्वाह नारदः—

'विनष्टे मूलनाशः स्याद्दैव-राजकृताद्दृते' ।

( ना. स्मृ. ४. १२६ )

---

१. B. C. D. read उत्तरा क्रिया for उत्तराक्रिया. २. D. reads यद्येकं for यदैकं. ३. D. reads विक्रीणीते for विक्रीयते. ४. D. reads यः पूर्वोत्तरम् for यं पूर्वतरम्. ५. D. wrongly reads प्रोक्तेन for प्राक्तनं. ६. D. reads ऽपि for इति. ७. C. reads धार्यं for धर्म्यं. ८. C. and D. omit the following—

अथ धनिदोषेणाधिनाशे व्यासः,—
'गृहीतदोषो नष्टश्च वृद्धौ देयाधिको भवेत् ।
ऋणं सलाभं संशोध्य तन्मूलं दाप्यते धनी' ॥ इति.

९. A. in margin and B. originally read °भावे for °नाशे. १०. C. reads ऽप्यधिकसमार्णे° and D. ऽप्यधिकार्णिक° for ऽभ्यधिकसमलाभर्णि°.

इति । बहुमूल्याधिनाशे धनिकं तोषयेदित्युक्तं तत्र विशेषमाह मनुः—

'मूल्येन तोषयेदेनमाधिस्तेनोऽन्यथा भवेत्' ।

(म. स्मृ. ८. १४४)

इति । गोप्याधिभोगे लाभहानिमाह याज्ञवल्क्यः—

'गोप्याधिभोगे नो वृद्धिः सोपकारेऽथ हापिते ।
नष्टो देयो विनष्टश्च दैव-राजकृताद‍ृते' ॥

(या. स्मृ. २.५९)

इति । अयमर्थः—गोप्यस्याधेः समयातिक्रमेण भोगे सति महत्यपि वृद्धिर्हातव्या । सोपकारे सवृद्धिके भोग्याधौ हापिते व्यवहाराक्षमत्वं प्रापिते सति न वृद्धिः । नष्टो विकारं प्रापितः पूर्ववत्कृत्वा देयः । विनष्टश्चेदात्यन्तिकनाशं प्राप्तश्चेन्मूल्यादिद्वारेण देयः । 'गोप्याधिभोगे नो वृद्धिः' इत्येतद्बलात्कारभोगविषयम् । अत एव मनुः—

'न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत्' ।

(म. स्मृ. ८. १४४)

इति । वंचनादिना आधिभोगे भोगानुसारेण भोगद्रव्यस्य नाशमाह स एव—

'यः स्वामिनाऽननुज्ञातमाधिं भुङ्क्ते ऽविचक्षणः ।
तेनार्द्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः' ॥

(म. स्मृ. ८. १५०).

१. D. reads समर्पयेत् for तोषयेत्. २. C. reads न सोदयो for नष्टो देयो. ३. C. wrongly reads न सो for नष्टो; while D. reads गोप्याधिः for नष्टो. ४. C. reads कृता for कृत्वा. ५. D. adds तत् after चेत्. ६. D. reads °द्वारेणैव निवेद्यः for °द्वारेण देयः. ७. C. reads तावता कार° for बलात्कार°. ८. C. and D. respectively read वचनादीनां and वंत्रनादित्वे for वंचनादिना.

इति। क्वचिद्विषये मूलद्रव्यनाशेन सह लाभनाशस्य विकल्पमाह कात्यायनः—

'आकाममननुज्ञातमाधिं यः कर्म कारयेत्।
भोक्ता कर्मफलं दाप्यो वृद्धिं वा लभते न सः' ॥

इति। दास्याद्याधौ कर्मफलं वेतनम्। आहितदास्यादिपीडने स एवाह—

'यस्त्वाधिं कर्म कुर्वाणं वाचा दण्डेन कर्मभिः।
पीडयेद्भर्त्सयेच्चैव प्राप्नुयात् पूर्वसाहसम्' ॥

इति। आहितस्य द्रव्यस्य स्वत्वनिवृत्तिकालमाह याज्ञवल्क्यः—

'आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते।
काले कालकृतो नश्येत्फलभोग्यो न नश्यति' ॥

(या. स्मृ. २. ५८)

इति। प्रयुक्ते धने स्वकृतया वृद्ध्या कालक्रमेण द्वैगुण्यं प्राप्ते सति यद्यकृतकालो गोप्याधिर्न मोक्ष्यते तदा नश्येदधमर्णस्य धनं प्रयोक्तुः स्वं भवति। कृतकालो गोप्यो भोग्यश्चाधिः संप्रतिपन्ने काले यदि न मोक्ष्यते तदाऽधमर्णस्य नश्येत्। अकृतकालः फलभोग्यः कदाचिदपि न नश्यति। द्वैगुण्यनिरूपितकालयोरुपरि चतुर्दशादिवसप्रतीक्षणं कर्त्तव्यमित्याह व्यासः—

१. C. reads °नाशस्याविकल्पं for °नाशस्य विकल्पं. २. C. reads भोक्तुः for भोक्ता. ३. C. reads वृद्धिः for वृद्धिं. ४. C. and D. read कर्मफलं वेतनादि for कर्मफलं वेतनं. ५. C. and D. read कुर्वाणः for कुर्वाणं. ६. D. reads बाल्या स्न्तेन for वाचा दण्डेन. ७. C. wrongly reads गोप्याधीनं for गोप्याधिर्न. ८. C. reads स्वयं and D. स for स्वं. ९. C. reads मोच्यते for मोक्ष्यते. १०. C. read °परीक्षणं for °प्रतीक्षणं. ११. VIDNYÁNESVARA reads बृहस्पतिः for व्यासः—

'हिरण्ये द्विगुणीभूते पूर्णे[1] काले कृतावधेः ।
बन्धकस्य धनी[2] स्वामी द्विसप्ताहं प्रतीक्ष्य तु[3] ॥
तदन्तरा धनं दत्वा ऋणी बन्धमवाप्नुयात्' ।

इति । ननु-आधेः[4] स्वत्वनिवृत्तिहेतोर्दान-विक्रयादेरभावात् उत्तमर्णस्यापि स्वत्वापत्तिरयुक्ता । प्रतिग्रहादेरभावात् आधीकरणमेव स्वत्वनिवृत्तिंप्रति कारणम्-इति चेत् तन्न । 'न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रय' इति मनुवचनविरोधात् । कालसंरोधाच्चिरकालावस्थानादेः । निसर्गोऽन्यत्राधीकरणं नास्ति । विक्रयोऽपि[5] नास्ति । मैवम्[6] । न केवलं दानादिरेव स्वत्वनिवृत्तिकारणम् । प्रतिग्रहादिरेव वा[7] स्वत्वापत्तिकारणम्[8] । किन्तु द्वैगुण्ये[9] निरूपितकालप्राप्तौ च द्रव्यादानमपि[10] । तस्य याज्ञवल्क्यवचनेनैव ऋणि-धनिनोरात्यन्तिकस्वत्वनिवृत्तिस्वत्वापत्त्योः[11] कारणत्वावगमात्[12] । न च मनुवचनविरोधः । तस्य कृतकालभोग्याधिविषयत्वेनाप्युपपत्तेः[13] । यत्तु बृहस्पतिना दशादिवसप्रतीक्षणमुक्तम्[14]—

१. B. and C. read पूर्णकाले for पूर्णे काले २. D. reads धनस्वामी for धनी स्वामी. ३. D. substitutes प्रतीक्षते for प्रतीक्ष्य तु. ४. C. and D. read तन्नाधेस्वत्वनिवृत्तिस्वत्वापत्तिकारणं नास्ति and नन्वाधेः स्वत्वानिवृत्तेः स्वत्वोत्पत्तेश्चकारणं नास्ति, respectively for the following portion.—

ननु—आधेः स्वत्वनिवृत्तिहेतोर्दान-विक्रयादेरभावात्
उत्तमर्णस्यापि स्वत्वापत्तिरयुक्ता। प्रतिग्रहादेरभावात्
आधीकरणमेव स्वत्वनिवृत्तिंप्रति कारणम्—इति चेत् तन्न ।
'नचाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः'
इति मनुवचनविरोधात् । कालसंरोधाच्चिरकालावस्थानादेः ।
निसर्गोऽन्यत्राधीकरणं नास्ति.

५. D. reads विषयोऽपि for विक्रयोऽपि. ६. C. reads नैवं for मैवम. ७. D. omits वा. ८. A. originally and B. read स्वत्वं प्रति for स्वत्वापत्ति°. ९, D. reads द्वैगुण्य° for द्वैगुण्ये. १०. D. reads द्रव्यादीनामपि for द्रव्यादानमपि. ११. D. reads स्वत्वोत्पत्ति° for स्वत्वापत्त्योः. १२. C. reads कारणत्वात् for कारणत्वावगमात्. १३. C. and D. read उक्तकाल° for कृतकाल°. १४. D. reads दशाह° for दशदिवस°.

‘ पूर्णे[1] विधौ सान्तलाभे[2] बन्धस्वामी धनी भवेत्।
अनिर्गते दशाहे तु ऋणी मोक्षितुमर्हति’ ॥

इति। तत्[3] द्वैगुण्यव्यातिरिक्तवस्त्वादिविषयम्।

‘हिरण्ये द्विगुणी भूते’ ।

इति व्यासेन विशेषोपादानात्। यत्पुनस्तेनैवोक्तम्—

‘ गोप्याधिर्द्विगुणादूर्ध्वं कृत[4]कालस्तथावधेः ।
आवेदयित्वर्णि[5]कुले भोक्तव्यस्तदनन्तरम्’ ॥

इति तद्भोगमात्रविधिपरम्। न पुनः स्वत्वापत्तिपरम्। यदा तु सान्त[6]लाभे धने बन्धकस्य[7] तथैवावस्थितस्य मोचनात्प्रागृणिकस्य मरणादिर्भवेत् तदा किङ्कार्यमित्यपेक्षिते आह बृहस्पतिः—

‘ हिरण्ये द्विगुणी भूते मृते नष्टेऽधमार्णिके ।
द्रव्यं तदीयं सङ्गृह्य विक्रीणीत ससाक्षिकम् ॥
रक्षेद्वा कृतमूल्यं तु दशाहं जनसंसदि ।
ऋणानुरूपं परतो गृण्हीतान्यत्तु वर्जयेत्’ ॥

इति। हिरण्ये द्विगुणीभूते पश्चादाधिमोक्षणादर्वाक् अधमर्णके मृते नष्टे कुत्रचिद्गते चिरकालमविज्ञाते सति आधी[8]कृतं द्रव्यं

१. C. reads पूर्णे वाधौ and D. पूर्णावधौ for पूर्णे विधौ. २. C. wrongly reads सान्तलोभे for सान्तलाभे and omits the following word बंध°. ३. For this whole sentence B. reads तत् द्वैगुण्यव्यातिरिक्तवस्त्रादिविषयम्, C. reads रक्तवस्त्रादिविषयम् and D. तद्वस्त्रादिविषयम्, but both the readings seem incorrect. ४. A. originally and B. read कृताकाल° for कृतकाल°. ५. D. reads °दयेद्दर्णि° for °दयित्वर्णि°. ६. A. originally and B. C. read शान्त° for सान्त°. ७. C. and D. read बन्धस्य for बंधकस्य. ८. C. reads साधी° for आधी°.

ससाक्षिकं विक्रीणीय[1] ऋणानुरूपं[2] द्विगुणीभूतद्रव्यपर्याप्तं[3] गृह्णीत । ततोऽवशिष्टं वर्जयेत् । राज्ञे समर्पयेदित्यर्थः । तथा च कात्यायनः--

'आधाता यत्र न[4] स्यात्तु धनी बन्धं[5] निवेदयेत् ।
राज्ञस्ततः[6] स विख्यातो[7] विक्रेय इति धारणा ॥
सवृद्धिकं गृहीत्वा तु शेषं राजन्यथार्पयेत्' ।

इति । राज्ञे समर्पणं च ज्ञात्याद्यभावविषयम् । तत्सद्भावे तत्रैव समर्पणस्य न्याय्यत्वात्[8] । अन्यत्तु वर्जयेदित्यनेन धनद्वैगुण्येऽप्यकृतकालावधिकाधौ[9] धनिकस्य[10] स्वामित्वमवगम्यते । धनद्वैगुण्ये स्वत्वप्रतिपादकं याज्ञवल्क्यवचनं समानाधि[11]विषयम् । अतएव न्यूने अधिके च बन्धे आधिनाशो नास्ति । किन्तु द्विगुणीभूतं द्रव्यमेव राज्ञा[12] दाप्य इत्याह याज्ञवल्क्यः--

'चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम् ।
सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिपादयेत्[13]' ॥

(या. स्मृ. २. ६१.)

इति । चरित्रं शोभनाचरितं स्वच्छाशयत्वं तेन यद्बन्धकं चरित्रबन्धकं । तेनाऽऽधिना[14]ऽधिकेन न्यूनेन[15] वा यद्द्रव्यमात्मसात्कृतं पराधीनं वा कृतं तच्चरित्रबन्धककृतम् । तत्सवृद्धिकमेव दाप-

१. C. and D. read विक्रीय for विक्रीणीय. २. D. reads चरितानुरूपं for ऋणानुरूपं. ३. D. reads °द्रव्यं पर्याप्तं for °द्रव्यपर्याप्तं. ४. D. reads नष्टः स्यात् for न स्यात्तु. ५. C. wrongly reads धनिबंधे for धनी बंधं. ६. D. reads राज्ञा for राज्ञः. ७. C. reads विख्याते for विख्यातो. ८. C. reads त्याज्यत्वात् for न्याय्यत्वात्. ९. C. reads °कालावधौ for °कालावधिकाधौ. १०. D. reads धनिकस्यास्वामित्वं for धनिकस्य स्वामित्वं. ११. C. reads समानावधि° for समानाधि°. १२. C. reads राज्ञे for राज्ञा. १३. D. reads दापयेत् ततः for प्रतिपादयेत्. १४. C. and D. omit आधिना. १५. D. omits this word.

येत् । अथवा[1] चरित्रमग्निहोत्रादिजनितमपूर्वम् । तदेव बन्धकं चरित्रबन्धकम् । तेन यद्द्रव्यमात्मसात्कृतम् तदेव द्विगुणीभूतमेव दातव्यम् । नाधिनाश इति । न तु[2] धनद्वैगुण्येऽप्याधिनाशः । सत्यस्य कारः सत्यङ्कारः तेन कृतं सत्यंकारकृतं तदपि द्विगुणमेव देयम् नाधिनाशः । अयमभिप्रायः—बन्धकार्यतासमय एव मया द्विगुणमेव द्रव्यं दातव्यम्, नाधिनाश इति समये[3] कृते[4] द्विगुणीभूतं[5] द्रव्यमेव[6] दातव्यं नाधिनाश इति । क्रय[7]-विक्रयादिव्यवस्थानिर्वाहाय यदङ्गुलीयकादि परहस्ते समर्पितं तत्सत्यङ्कारकृतम् । तत्राङ्गुलीयकादिर्गृहीता[8] व्यवस्थामतिक्रामन्[9] तदेवाङ्गुलीयकादि द्विगुणं प्रतिपादयेत् । इतरश्चेदङ्गुलीयकादिकमेव दद्यात् । अन्वाधौ[10] नियममाह प्रजापतिः—

‘ धनी[11] धनेन तेनैव परमाधिं नयेद्यदि ।
कृत्वा तदाधिलिखितं पूर्वं चास्य समर्पयेत्’ ॥

इति । यद्बन्धस्वामिनि[12] धनं प्रयुक्तं तत्तुल्येनैव धनेन[13] परंधनिकान्तरमाधिं नयेत् । न त्वधिकेन । अयं चान्वाधिर्धनस्य[14]

१. A. B. C. do not read the following—अथवा चरित्रमग्निहोत्रादिजनितमपूर्वम् । तदेव बंधकं चरित्रबन्धकम् । तेन यत् द्रव्यमात्मसात्कृतम् । तदेव द्विगुणीभूतमेव दातव्यम् । नाधिनाश इति. २. C. reads वादी न दण्ड्यः which seems wrong; while D. न तु लाभादिनाशः for नाधिनाशः. ३. D. reads नियमे for समये. ४. D. reads तदेव after कृते. ५. D. reads द्विगुण° for द्विगुणी°. ६. D. omits this word. ७. A. in margin and B. originally read क्रण° for क्रय°. ८. D. reads °गृहीत्वा for °गृहीता. ९. C. wrongly reads अभिकांक्षन्; while D. reads अभिक्रामन्. १०. C. reads अस्वातन्त्र्य° for अन्वाधौ; while D. वस्त्वाधौ for अन्वाधौ. ११. C. omits this word; while D. reads यो वै for धनी. १२. C. reads यद्बन्धं; while D. बंधक°. १३. A. and B. do not mention this word. १४. C. reads वा त्वाधिः D. वस्त्वाधिः for चान्वाधिः.

द्वैगुण्ये सति । सम्प्रतिपत्तौ तु द्वैगुण्यादर्वागपि द्रष्टव्यः ।

## ॥ अथाधिमोचनम् ॥

तत्र बृहस्पतिः—

‘धनं मूलीकृतं दत्त्वा यदाधिं प्रार्थयेदृणी ।
तदैव तस्य मोक्तव्यस्त्वन्यथा दोषभाग्धनी’ ॥

इति । मूलीकृतमधमर्णेन देयं धनम् । तच्च[2] भोग्याधौ मूलमात्रम् । गोप्याधौ तु सवृद्धिकं तद्दत्वा[3] ऋणी आधिं[1] प्रार्थयते तदा धनिना स मोक्तव्यः । अन्यथा दोषभाक् स्तेयदोष[4]-भाग्भवेदित्यर्थः । तदाह याज्ञवल्क्यः—

‘उपस्थितस्य मोक्तव्य आधिस्तेनोऽन्यथा भवेत् ।
प्रयोजकेऽसति धनं कुले न्यस्याधिमाप्नुयात्’ ॥
(या. स्मृ. २. ६२)

इति । धनप्रयोक्तरि असन्निहिते सति तदा आप्तहस्ते सवृद्धिकं धनं निवेद्य[5] स्वकीयमाधिं गृह्णीयात् । भोग्याधिस्तु मूलमात्रं दत्त्वा फलकालान्ते मोक्तव्य इत्याह व्यासः—

‘फलभोग्यं[6] पूर्णकालं दत्त्वा द्रव्यं तु सामकम्’ ।

इति । सममेव सामकम् । मूलमात्रं दत्त्वा ऋणी बन्धमाप्नुयादिति । आधिनाशन[7]-बन्धद्वैगुण्यादिकादर्वागेवाधिर्मोक्तव्यः । तथा च स एव—

१. C. and D, read ऽर्थं for आधिं. २. D. reads वस्तु° for तच्च. ३. D. adds यदा before तद्दत्वा. ४. C. and D. omit स्तेयदोषभाक्. ५. B. originally and D. read निधाय for निवेद्य. ६. C. reads उपभोग्यं for फलभोग्यं. ७. A. in margin and B. in correction read आधिनाशनिबंधनत्वे गोप्यादिकालात् for आधिनाशनबंधद्वैगुण्यादिकात्; while D. only substitutes वैगुण्यादि° for द्वैगुण्यादि°.

'अतोन्तरा धनं दत्वा ऋणी बन्धमवाप्नुयात्' ।

इति । यत्तु तेनैवोक्तम्—

'गोप्याधिं द्विगुणादूर्ध्वं मोचयेदधमर्णिके' ।

इति तद्वैगुण्यादूर्ध्वमर्वाग्द्विसप्ताहान्मोचयेदित्येवंपरम् । अन्यथा—

'आधिः प्रणश्येद्विगुणे धने' ।

(या. स्मृ. २. ६४.)

इति याज्ञवल्क्यवचनविरोधापत्तेः । यदि प्रयोक्तर्यसन्निहिते तत्कुले न [१]धनगृहीतारः सन्ति, यदि वा आधिविक्रयेण च[२] धनदित्साऽधमर्णस्य तत्र यत्कर्तव्यं तदाह याज्ञवल्क्यः—

'तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः' ।

(या. स्मृ. २. ६३)

इति । [३]ऋणदानेच्छाकाले यत्तस्याधेर्मूल्यं तत्परिकल्प्य तत्रैव धनिनि तमा[४]धिं वृद्धिरहितं स्थापयेत् । तदूर्ध्वं धनं न वर्द्धेत इति । भोग्याधिविषये क्वचिद्विशेषमाह बृहस्पतिः—

'क्षेत्रादिकं यदा भुक्तमु[५]त्पन्नमधिकं ततः ।
[६]मूलोदयं प्रविष्टं चेत्तदाधिं प्राप्नुयादृणी ॥
परिभाष्य यदा क्षेत्रं [७]दद्यात्तु धनिने ऋणी ।
[८]तदा [९]तच्छान्तलाभेऽर्थे मो[१०]क्तव्यमिति निश्चयः ॥
[११]आधिस्तु सोदये द्रव्ये प्रदातव्यं त्वया मम' ।

---

१. A. originally does not read धन॰. २. D. reads धनादित्सा for धनदित्सा. ३. C. and D. read ऋणादाने॰ for ऋणदाने॰. C. ऋणादानस्थानं for ऋणदानेच्छा॰. ४. C. reads आधिवृद्धि॰ for आधिं वृद्धि॰. ५. D. reads अत्यन्तम् for उत्पन्नम्. ६. A. and B. wrongly read मूलादयं for मूलोदयं. ७. C. and D. read तथा तु धनिके ऋणी for दद्यात्तु धनिने ऋणी. ८. B. originally reads तेन C. तथा and D. त्वया for तदा. ९. D. reads तद्वृत्त॰ for तच्छान्त॰. १०. C. and D. read भोक्तव्यं for मोक्तव्यं. ११. D. reads प्रविष्टे for आधिस्तु.

इति । ऋणग्रहणकाले धनद्वैगुण्यानन्तरं भोगे तत्प्रदिष्टे सोदये द्रव्ये त्वयैतन्मोक्तव्यमित्येवं परिभाष्य यदा क्षेत्रादिप्रवेशे क्रममादध्यात् तदा भोगेन क्षेत्रार्थव्ययसहितसवृद्धिकधने सति आधिं मुञ्चेदुत्तमर्ण इत्यर्थः । याज्ञवल्क्योऽपि--

'यदा तु द्विगुणीभूतमृणमाधौ तदा खलु ।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने' ॥

(या. स्मृ. २. ६४)

इति । अयमेव क्षयाधिरुच्यते लौकिकैः । यत्र तु वृद्ध्यर्थ एव भोग इति परिभाषा तत्र तद्भोगेनाधिकधनप्रवेशे यावन्मूल्यदानं तावदाधिर्न मोक्तव्यः । यत्र वृद्धेरप्यपर्याप्तो भोगः तत्र द्रव्यमूलदानेनापि नातिक्रामति भोग इत्याह बृहस्पतिः—

'यत्राधिकं गृहक्षेत्रं भोगेन प्रकर्षान्वितम् ।
तत्रर्णी चाप्नुयाद्बन्धं धनी चैव ऋणं तथा ॥

---

१. D. reads तेन प्रविष्टे for ऋणग्रहणकाले धनद्वैगुण्यानन्तरं भोगे तत्प्रदिष्टे. २. C. wrongly reads °प्रदेशे for °प्रवेशे. ३. D. reads आदध्यादधमर्णः for मुंचेदुत्तमर्णः. ४. C. and D. read प्रविशेत्. for प्रविष्टे. ५. D. reads लोकैः for लौकिकैः. ६ D. reads परिभाषिते for परिभाषा. ७. D. reads मूल° for मूल्य°. ८. C. and D. omit the following:—

यत्र वृद्धेरप्यपर्याप्तो भोगः तत्र द्रव्यमूलदानेनापि नातिक्रामति भोग इति आह बृहस्पतिः—

'यत्राधिकं गृहक्षेत्रं भोगेन प्रकर्षान्वितम् ।
तत्रर्णी चाप्नुयाद्बंधं धनी चैव ऋणं तथा ॥
पूर्णे प्रकर्षे तत्साम्यमुभयोः परिकीर्तितम् ।
अपूर्णे तु प्रकुर्यातां परस्परमतेन तौ' ॥

इति । क्षेत्रार्थाऽधिको भोगः प्रकर्षशब्दवाच्यः । तस्मिन्समग्रवृद्धिपर्याप्ते धनिनि प्रविष्टे सति.

पूर्णे प्रकर्षे तत्साम्यमुभयोः परिकीर्तितम् ।
अपूर्णे तु प्रकुर्यातां परस्परमतेन तौ' ॥

इति । क्षेत्रार्थादधिको भोगः प्रकर्षशब्दवाच्यः । तस्मिन्समग्रवृद्धिपर्याप्ते[1] धनिनि प्रविष्टे सति मूलमात्रं दत्वाऽधमर्णो बन्धमाप्नोति । धनी च ऋणं मूलमात्रमेव गृह्णीयात् । किन्तु पूर्णे प्रकर्षे[2] समग्रवृद्धिपर्याप्ते धने प्रविष्टे सति धनिने मूलमात्रं देयम् । ऋणिनो बन्धलाभ इति । एतच्च परस्परानुमत्यभावे[3] । परस्परानुमतौ तु वृद्धिपर्याप्तभोगे[4]ऽपि मूलमात्रदानेनैवाधिलाभ इत्यर्थः । परिभाषितकालैकदेशेनैव समग्रवृद्धिपर्याप्तप्रकर्षप्रवेशे[5] स एवाह—

'यदि प्रकर्षितं तत्स्यात्तदा न धनभाग्धनी ।
ऋणी[6] न लभते बन्धं परस्परमतंविना' ॥

इति । इत्याधिविधिः ।

॥ अथ प्रतिभूः ॥

तत्र बृहस्पतिः—

'दर्शने प्रत्यये दाने ऋणि[7]द्रव्यार्पणे तथा ।
चतुःप्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिः ॥
आहैको दर्शयामीति साधुरित्यपरोऽब्रवीत् ।
दाताहमेतद्द्रविणमर्पयामी[8]ति चापरः' ॥

---

१. C. reads वृद्ध्यपर्याप्ते धनि° for वृद्धिपर्याप्ते धनिनि. २. C. and D. read पूर्वे वर्षे for पूर्णे प्रकर्षे. ३. C. and D. omit this word. ४. C. and D. read वृद्ध्यपर्याप्त° for वृद्धिपर्याप्त°. ५. C. reads वर्षत्रयप्रवेशे and D. वर्षप्रवेशे for प्रकर्षप्रवेशे. ६. C. reads ऋणं for ऋणी. ७. D. reads ऋणे for ऋणि°. ८. C. reads अर्थयामी for अर्पयामी.

इति । अहमेनं पलायनप्रवृत्तं तव दर्शयिष्यामीति प्रातिभाव्यं भजन्नाह । अपरः प्रत्ययप्रतिभूः एष साधुरवञ्चको मम प्रत्ययनेनास्य धनं प्रयच्छेति ब्रूते । दानप्रतिभूरपरः यद्ययं न ददाति द्रविणं गृहीतं सवृद्धिकं तर्ह्यहमेव दास्यामीति वदति । अपरो ऋणिद्रव्यार्पणप्रतिभूः यदायं गृहीतं न ददाति तदाहमेतदीयं धनमर्पयामीति ब्रवीतीति चतुर्णां प्रतिभुवां भेदः । दर्शनप्रतिभुवः कृत्यमाह स एव—

'दर्शनप्रतिभूर्यस्तु देशे काले च दर्शयेत् ।
निबन्धं वाऽऽवहेत्तत्र दैव-राजकृतादृते' ॥

इति । निबन्धं देयं द्रव्यम् । आवहेद्धनिने प्रापयेत् । यस्तु न दर्शयति तं प्रत्याह मनुः—

'यो यस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः ।
अदर्शयन्स तं तस्य प्रयच्छेत्स्वधनादृणम्' ॥

( म. स्मृ. ८. १५८. )

इति । दर्शनाय कालं दद्यादित्याह बृहस्पतिः—

'नष्टस्यान्वेषणे कालं दद्यात्प्रतिभुवे धनी ।
देशानुरूपतः पक्षं मासं सार्द्धमथापि वा' ॥

इति । कात्यायनोऽपि—

---

१. C. and D. omit the following portion:—
अहमेनं पलायनप्रवृत्तं तव दर्शयिष्यामीति प्रातिभाव्यं भजन्नाह । अपरः प्रत्ययप्रतिभूः एष साधुरवंचको मम प्रत्ययनेनास्य धनं प्रयच्छेति ब्रूते । दानप्रतिभूरपरः यद्ययं न ददाति द्रविणं गृहीतं सवृद्धिकं तर्ह्यहमेव दास्यामीति वदति । अपरो ऋणिद्रव्यार्पणप्रतिभू : यदा.

२. D. omits चतुर्णां प्रतिभुवां भेदः. ३. B. originally reads °हृतात्, but corrects °कृतात्. ४. C. reads निबन्धे for निबंधं; while D. reads निबंधं ऋणं वाहयेत् धनिनं प्रापयेत् for this sentence. ५. C. reads आवेदयेत् for आवहेत्. ६. C. reads द्रव्यन्तु for यस्तु.

‘नष्टस्यान्वेषणार्थं तु देयं पक्षत्रयं परम्।
यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत्॥
काले [1]प्रतीते प्रतिभूर्यदि तं नैव दर्शयेत्।
स तमर्थं प्रदाप्यः स्यात्प्रेते चैवं विधीयते’॥

इति। दान-प्रत्ययप्रतिभुवोः कृत्यमाह नारदः—

‘ऋणिष्वप्रतिकुर्वत्सु प्रत्यये वाथ ह्रापिते।
प्रतिभूस्तु ऋणं दद्यादनुपस्थापयंस्तदा’॥

(ना. स्मृ. ४. ११९)

इति। अप्रतिकुर्वत्सु [2]वञ्चनया दारिद्र्येण वा ऋणमददत्सु प्रत्यये [3]ह्रापिते विश्वासे ऽपगते। धनार्पणप्रतिभुवः कृत्यमाह स एव—

‘विश्वासार्थं कृतस्त्वाधिर्न प्राप्तो धनिना यदा।
प्रापणीयस्तदा तेन देयं वा धनिने धनम्’॥

(ना. स्मृ. ४. १२०)

इति। आधिप्रत्यर्पणप्रतिभुवं [4]प्रत्याह स एव—

‘खादको वित्तहीनश्च लग्नको वित्तवान् यदि।
[5]मूल्यं तस्य भवेद्देयं न वृद्धिं दातुमर्हति’॥

(ना. स्मृ. ४. ११६)

इति। खादको [6]बन्धकभक्षकः। लग्नकः प्रतिभूः। स तु वृद्धिं दातुं नार्हतीति। [7]खादको दापयेत्।

---

१. D. reads ऽप्यतीते for प्रतीते. २. C. reads बंधनया for वंचनया; while D. बंधनदाढर्येन for वंचनया दारिद्र्येण वा ऋणम्. ३. C. reads ज्ञापितं तत्; while D. ज्ञापितं सत् for ह्रापिते. ४. C. reads तदाह for प्रत्याह. ५. D. reads मूलं for मूल्यं. ६. C. and D. read बन्ध° for बंधक°. ७. A. in margin, B. originally read wrong form खादकात्कमव्ययम° for खादको दापयेत; while D. खादकादप्यत्र for the same.

'मूल्येन तोषयेदेनम्'।

(म. स्मृ. ८. १४४.)

इति वचनान्मूलमात्रमेव देयम्। एवमितरेषां प्रतिभुवामपि देयद्रव्यविषये द्रष्टव्यम्। प्रतिभूग्रहणनिमित्तानि दर्शयति हारीतः—

'अभक्षणे प्रत्यये दाने उपस्थानेऽपि दर्शने।
पञ्चस्वेषु प्रकारेषु ग्राह्योऽपि प्रतिभूर्बुधैः'॥

इति। कात्यायनोऽपि—

'दानोपस्थानवादेषु विश्वासशपथाय च।
लग्नकं कारयेदेवं यथायोगविपर्यये'॥

इति। उपस्थानं दर्शनम्। व्यासोऽपि—

'लेख्ये कृते च दिव्ये च दानप्रत्ययदर्शने।
गृहीतबन्धोपस्थाने ऋणिद्रव्यार्पणे तथा'॥

इति। प्रतिभूर्ग्राह्य इति शेषः। गृहीतबन्धोपस्थानं याचितकत्वेन कर्तुर्दर्शनाद्यर्थं वा। प्रतिभूमरणे व्यवस्थामाह याज्ञवल्क्यः—

---

१. C. and D. do not mention this word एनं. २. C. reads एतद्देषां for इतरेषां. ३. D. °विषयो द्रष्टव्याः; while C. °विषयो द्रष्टव्यः for °विषये द्रष्टव्यम्. ४. D. omits the following portion:—

प्रतिभूग्रहणनिमित्तानि दर्शयति हारीतः—

'अभक्षणे प्रत्यये दाने उपस्थानेऽपि दर्शने।
पंचस्वेषु प्रकारेषु ग्राह्योऽपि प्रतिभूर्बुधैः'॥.

and read instead of the following प्रतिभूर्ग्राह्य इति। प्रकृतमाह कात्यायनोऽपि; while C. for to omitted portion substitute प्रतिभूर्बुधैः only. ५. B. C. D. read यथायोगं विपर्यये for यथायोगविपर्यये. ६. C. reads उपस्थान-दर्शन° for उपस्थानं दर्शनं. ७. D. omits the following portion:— गृहीतबंधोपस्थानं याचितकत्वेन कर्तुर्दर्शनाद्यर्थं वा.

'दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा।
न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय चेत्[1]स्थितः' ॥
( या. स्मृ. २–५४ )

इति। यदा दर्शनप्रतिभूः प्रात्ययिको[2] वा मृतः तदा तयोः पुत्राः प्रतिभाव्यायातं पितृकृतमृणं न दद्युः। यस्तु दानाय स्थितः प्रतिभूर्मृतस्तत्पुत्रा ऋणं दद्युः न[3] पौत्राः। पुत्रैरपि मूल्यमेव देयं न वृद्धिर्देया। तथा च व्यासः—

'ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं सुतः।
समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चयः' ॥

इति। तत्सुतौ पौत्र-प्रपौत्रौ। बृहस्पतिरपि—

'आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम्।
उत्तरौ तु विसंवादे तौ विना तत्सुतौ तथा' ॥

इति। आद्यौ दर्शन-प्रत्ययप्रतिभुवौ। वितथे अहमेनं दर्शयिष्यामि। असौ साधुरित्येवं विधयोर्वाक्ययोर्मिथ्यात्वे राज्ञा दाप्यौ[4]। उत्तरौ दानर्णिद्रव्यार्पणप्रतिभुवौ विसंवादि[5] दार्ढ्यादिना धने ऋणिकेनाप्रतिदत्ते दाप्यौ। तयोरभावे तत्सुतौ दाप्यौ। प्रत्ययप्रतिभूवत् प्रमाणप्रतिभूरेव दाप्यो न तत्पुत्रः। विवादप्रतिभूस्तु[6] साधितं धनं दण्डं वा दाप्यः। तदभावे तत्पुत्रोऽपि इत्याह व्यासः—

१. C. reads ये and D. यः for चेत्. २. C. and D read प्रत्ययिको for प्रात्ययिको. ३. D. reads तत्पौत्रपुत्रैरपि for न पौत्राः। पुत्रैरपि. ४. C. reads वृद्धौ for दाप्यौ. ५. C. and D. read विसंवादे for विसंवादि°. ६. D. reads °भुक्त° for °भूस्तु. D. substitutes न for वा.

'विप्रत्यये लेख्यदिव्यदर्शने वाऽकृते सति ।
ऋणं दाप्याः प्रतिभुवः पुत्रं तेषां न दापयेत् ॥
दान-वादप्रतिभुवौ दाप्यौ तत्पुत्रकौ तथा' ।

इति । यत्र दर्शन-प्रत्ययप्रतिभुवौ बन्धकं गृहीत्वा प्रातिभाव्यमङ्गीकृतवन्तौ तत्र विशेषमाह कात्यायनः—

'गृहीत्वा बन्धकं यत्र दर्शनेऽस्य स्थितो भवेत् ।
विना पित्रा धनं तस्माद्दाप्यः स्यात्तदृणं सुतः' ॥

इति । अनेकप्रतिभूदानप्रकारमाह याज्ञवल्क्यः—

'बहवस्तु यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ।
एकछायाश्रितेष्वेवं धनिकस्य यथा तथा' ॥

(या. स्मृ. २. ५५)

इति । एकछायानाश्रिताः प्रतिभुवः ऋणं विभज्य स्वांशेन दद्युः । एकछायाश्रितेषु तु यं धनिकः प्रार्थयति स एव कृत्स्नं दद्यात् । नांशतः । एकछायाश्रितेषु यदि कश्चिद्देशान्तरं गतः तदा तत्पुत्रोऽपि दद्यात् । मृते तु पितरि पुत्रः पित्रंशमेव दद्यात् । न कृत्स्नम् । तथा च कात्यायनः—

---

१. D. reads °दिव्ये for °दिव्य°. २. C. reads °कुरुतः for °कृतवन्तौ. ३. C. reads विरोधम् for विशेषम्. ४. C. reads यच्च for यत्र. ५. D. reads दर्शनस्य for दर्शनेऽस्य. ६. D. reads तस्य for स्यात्. ७. D. reads स्युर्यदि for °स्तु यदि. ८. A. in margin and D. read °षु for °च. ९. A. in margin and C. D. read °रुचि for तथा. १०. D. reads एकस्मिन् प्रयोगे द्वौ बहवो वा for एकच्छायानाश्रिताः. ११. D. adds तदा before ऋणं. १२. C. reads चांशेन for स्वांशेन. १३. D. adds पुरुषं after यं. १४. C. reads प्रार्थयते, D. प्रार्थयेत् for प्रार्थयति. १५. D. reads °ऽधिष्ठितेषु for °ऽऽश्रितेषु. १६. C. omits न कृत्स्नम्.

'ऐकच्छायां प्रविष्टानां दाप्यो यस्तत्र दृश्यते।
प्रोषिते तत्सुतः सर्वं पित्र्यंशं तु मृते सुतः' ॥

इति। प्रातिभाव्यापलापे दण्डमाह पितामहः—

'यो यस्य प्रतिभूर्भूत्वा मिथ्या चैव तु गच्छति।
धनिकस्य धनं दाप्यो राज्ञा दण्डेन तत्समम् ॥
कुर्याच्च प्रतिभूर्वादं ऋणिकार्थैरर्थिना सह।
सोपसर्गस्तदा दण्ड्यो विवादाद्द्विगुणं दमम्' ॥

इति।

अथ प्रतिभूदत्तप्रतिक्रियाविधिः।

तत्र याज्ञवल्क्यः—

'प्रतिभूर्दापितो यत्र प्रकाशं धनिने धनम्।
द्विगुणं प्रतिदातव्यं ऋणिकैस्तस्य तद्भवेत्' ॥

( या. स्मृ. २. ५६. )

इति। धनिकेन पीडितः सन्प्रतिभूस्तत्सुतो वा जनसमक्षं
[illegible]ा यद्धनं दापितः तद्द्विगुणमृणिकः प्रतिभुवे दद्यात्।
[illegible]ा च नारदः—

'यं चार्थं प्रतिभूर्दद्याद्धनिकेनोपपीडितः।
ऋणिकस्तु प्रतिभुवे द्विगुणं प्रतिपादयेत्' ॥

इति। कदा द्विगुणं दद्यादित्यपेक्षित आह कात्यायनः—

. C. and D. एकच्छायाप्रविष्टानां for एकच्छायां प्रविष्टानां. २. D. reads [illegible]ति for गच्छाति. ३. C. wrongly reads दोषो for दाप्यो. ४. D. reads [illegible]ं चार्थै for ऋणिकार्थै. ५. C. and D. read तत्र for अथ प्रतिभूदत्त°. C. wrongly reads गुणिकैकस्य for ऋणिकैस्तस्य. ७. C. reads तथाह; [illegible]le D. यदाह for तथा च. ८. C. and D. read स्वप्रतिभुवे for °स्तु [illegible]भुवे. ९. after कदा. C. and D. add हि.

'प्रातिभाव्यं तु यो दद्याद्दण्डितः[1] प्रतिभावितः ।
त्रिपक्षात्परतः सोऽर्थं द्विगुणं लब्धुमर्हति' ॥

इति । द्वैगुण्यं हिरण्यविषयम् । पश्वादौ तु विशेषो याज्ञवल्क्येनोक्तः—

'सन्ततिः[2] स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च ।
वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणः स्मृतः' ॥

( या. स्मृ. २. ५७ )

इति । सन्निहितमृणिकमपृष्ट्वैव[3] प्रतिभुवा दत्ते बृहस्पतिराह—

'प्रतिभुवा तु यद्दत्तमपृष्टं ऋणिके धनम् ।
द्विगुणं[4] न प्रतिभुवे प्रदेयमृणिकेन तु' ॥

इति । प्रातिभाव्ये निषेधमाह कात्यायनः—

'न स्वामी न च वै शत्रुः स्वामिनाऽधिकृतस्तथा[5] ।

---

१. C. and D. read पीडितः for दंडितः. २. C. omits—

संततिः स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च ।
वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणः स्मृतः ॥
इति । सन्निहितमृणिकमपृष्ट्वैव प्रतिभुवा दत्ते बृहस्पतिराह,

and for the following verse reads—

'संप्रतिस्त्री-पशुदत्तमपृच्छेदृणिकें धनम् ।
त्रिगुणं न प्रतिभुवे प्रदेयमृणिकेन तु इति'. ॥

३. D. does not mention the following—

सन्निहितमृणिकमपृष्ट्वैव प्रातिभुवा दत्ते बृहस्पतिराह—
'प्रतिभुवा तु यद्दत्तमपृष्टं ऋणिके धनं ।
द्विगुणं न प्रातिभुवे प्रदेयमृणिकेन तु' इति.

४. C. reads त्रिगुणं for द्विगुणं. ५. C. reads स्वामिने for स्वामिना.

निरुद्धो दण्डितश्चैव शिल्पिनश्चाब्रवीद्भृगुः ॥
देशाचारेण दाप्याः स्युर्दुष्टान् संपीड्य दापयेत्' ।

इति । दापने विशेषमाह कात्यायनः—

'साक्षित्वं प्रातिभाव्यं च सन्दिग्धश्चैव न क्वचित् ।
नैव रिक्थी न मित्रं च न चैवात्यन्तवासिनः ॥
राजकार्यनियुक्ताश्च ये च प्रव्रजिता नराः ।
न शक्तो धनिने दातुं दण्डं राज्ञे च तत्समम् ॥
न विज्ञातो गृहीतव्यः प्रतिभूत्वक्रियां प्रति' ।

इति । सन्दिग्धोऽभिशस्तः । अत्यन्तवासिनो नैष्ठिकब्रह्मचारिणः । याज्ञवल्क्योऽपि—

'भ्रातृणामपि दम्पत्योः पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम्' ॥
(या. स्मृ. २. ५२)

इति । नारदोऽपि—

---

. C. reads विरुद्धो दंडतश्चैव for निरुद्धो दंडितश्चैव. २. D. omits the wing—

'.......................शिल्पिनश्चाब्रवीद्भृगुः ।
देशाचारेण दाप्यास्युर्दुष्टान् संपीड्य दापयेत्' ॥
इति ॥ दापने विशेषमाह कात्यायनः—
साक्षित्वं प्रातिभाव्यं च.......... .....।.

D. reads रिक्तो for रिक्थी. ४. C. reads एतत्कार्य° for राजकार्य°. . reads न शक्यो for न शक्तो. ६. B. and C. read विज्ञाते for तो and D. नाविज्ञातो for न विज्ञातो. ७. C. reads तु क्रियां for यां; while D. स्वक्रियां for °त्वक्रियां. also before the line न विज्ञातो व्यः D. adds:—

जीवन्नापि पिता यस्य तथैवेच्छाप्रवर्तकः ।.

A, in margin B. in correction, C. and D. read °थ for °पि.

'साक्षित्वं [1]प्रातिभाव्यं च दानं ग्रहणमेव च ।
विभक्ता [2]भ्रातरः कुर्युर्नाविभक्ताः परस्परम्' ॥

इति । अस्वतन्त्रेषु धनप्रयोगनिषेधमाह कात्यायनः—

'न स्त्रीभ्यो दास-बालेभ्यः प्रयच्छेत्[3]क्वचिदुद्धृते ।
[4]दानं न लभते तत्तु तेभ्यो दत्तं तु [5]यद्वसु' ॥

इति ।

अथ ऋणग्र[6]हणधर्माः ।

तत्र याज्ञवल्क्यः—

'[7]प्रपन्नं साधयन्नर्थं न [8]वाच्यो नृपतेर्भवेत् ।
साध्यमानो नृपं गच्छेद्दण्ड्यो दाप्यश्च तद्धनम्' ॥

(या. स्मृ. २. ४०)

इति । अस्यार्थः—अधमर्णेनाभ्युपगतं साक्ष्यादिभिर्वि[9]भावितं [10]वा धर्मादिभिरुपायैः साधयन्नुत्तम[11]र्णो राज्ञा न निवारणीयः । [12]धर्मादीनुपायान् बृहस्पतिराह—

'धर्मोपधि-बलात्कारैर्गृहे[13]संरोधनेन च' ।

इति । धर्मादीन्स्वयमेवाह—

'सुहृत्सम्बन्धिसन्दिष्टैः सामोक्त्याऽनुगमेन च ।
[14]प्रायेण धनिने दाप्यो धर्म एष उदाहृतः ॥

---

१. B. and D. read प्रतिभाव्यं for प्रातिभाव्यं. २. C. reads न for भ्रन°. ३. C. reads क्वचिदुद्धृत्तं for क्वचिदुद्धृते; while D. चक्वचिद्धनम्. ४. C. reads दानान्न; while D. दत्तं न for दानं न. ५. D. reads यद्धनं for यद्वसु. ६. C. reads °ग्रहि° for °ग्रहण°. ७. C. and D. read प्रच्छन्नं for प्रपन्नं. ८. C. reads न चान्यो; while D. स वाच्यो for न वाच्यो. ९. D. reads भावितं for विभावितं. १०. C. omits वा. ११. C. and D. omit the word उत्तमर्णो. १२. C. omits धर्मादीन्; while D. reads यदि तु पापात्तदा for धर्मादीनुपायान्. १३. C. and D. read °संबोधनेन च for °संरोधनेन च. १४. C. and D. read प्रायेणाथ ऋणी for प्रायेण धनिने.

छद्मना याचितं चार्थमानीय ऋणिकाद्धनी ।
अन्वाहितादि[1] वाऽऽहृत्य दाप्यते यत्र सोपधिः ॥
यदा स्वगृहमानीय ताडनाद्यैरुपक्रमैः ।
ऋणिको दाप्यते[2] यत्र बलात्कारः स कीर्तितः ॥
दार-पुत्र-पशून्बध्वा कृत्वा द्वारोपवेशनम्[3] ।
यत्रर्णी[4] दाप्यतेऽर्थं स्वं[5] तदाचरितमुच्यते' ॥

इति । मनुरपि धर्मादीनुपायान्दर्शयति—

'धर्मेण व्यवहारेण छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन[6] च' ॥
(म. स्मृ. ८. ४९)

इति । धर्मादयश्चोपायाः पुरुषापेक्षया प्रयोक्तव्याः । तदाह कात्यायनः—

'राजा तु स्वामिनं विप्रं सान्त्वेनैव प्रदापयेत् ।
रिक्थिनं सुहृदं वापि छलेनैव प्रदापयेत् ॥
वणिजः[7] कर्षकाश्चापि[8] शिल्पिनश्चाब्रवीद्भृगुः ।
देशाचारेण दाप्याः स्युर्दुष्टान् सम्पीड्य दापयेत्' ॥

इति । दापने विशेषमाह याज्ञवल्क्यः—

'गृहीतानुक्रमाद्दाप्यो[9] धनिनामधमर्णिकः ।
दत्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम्' ॥
(या. स्मृ. २. ४१)

---

१. D. reads अन्वाहितं समाहृत्य for अन्वाहितादि वाऽऽहृत्य. २. C. reads प्राप्यते for दाप्यते. ३. D. reads. द्वारोपरोधनम् for द्वारोपवेशनम्. ४. D. reads यत्रर्णं for यत्रर्णी. ५. B. substitutes तु for स्वं. ६. C. wrongly reads पलेन च for बलेन च. ७. C. and D. read वर्णिकाः for वणिजः. ८. D. reads कार्षिकाश्चैव for कर्षकाश्चापि. ९. A. in marginal reading and B. originally read गृहीतानु समादाप्यो.

इति। समानजातीये[1]षु धनिषु युगपत्प्राप्तेषु गृहीतानुक्रमाद्धनं दाप्यः । भिन्नजातीयेषु तु ब्राह्मणादिक्रमेण । साधयितुमशक्तं [2]धनिनं प्रत्याह याज्ञवल्क्यः—

‘ राज्ञाऽधर्मणिको दाप्यः साधिताद्दशकं शतम् ।
पञ्चकं तु शतं दाप्यः प्राप्तार्थो[3]ऽप्युत्तमर्णकैः ’ ॥
( या. स्मृ. २. ४२ )

इति । प्रतिपन्नस्यार्थस्य राजा दशममंशमधम[4]र्णकाद्दण्डरूपेण गृह्णीयात् । उत्तमर्णाद्विंशतितमं भागं वृत्त्यर्थं गृह्णीयादित्यर्थः । अधनिकऋ[5]णदानप्रकारमाह याज्ञवल्क्यः—

‘ ही[6]नजातिं परिक्षीणमृणा[7]र्थे कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ’ ॥
( या. स्मृ. २. ४३ )

इति । [8]अत्र ब्राह्मणग्रहणमुत्कृष्टजात्युपलक्षणार्थं । तथा च मनुः—

‘ कर्मणापि समं कुर्या[9]द्धनिकं वाऽधमर्णिकैः[10] ।
समोपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः ’ ॥
( म. स्मृ. ८. १७७ )

इति । नारदोऽपि—

---

१. A. originally does not mention this sentence—
धनिषु युगपत्प्राप्तेषु गृहीतानुक्रमाद्धनं दाप्यः ।
भिन्नजातीयेषु तु. २. B. reads धानिनं for धनिकं. ३. C. D. read ह्युत्तमर्णिकः for ऽप्युत्तमर्णकः. ४. C. and D. read अधमर्णिकात् for अधमर्णकात्. ५. D. reads °ऋणादान° for °ऋणदान°. ६. C. reads हीनजातिपरिक्षीणं for हीनजातिं परिक्षीणं. ७. C. reads ऋणार्थं for ऋणार्थे. ८. C. reads यत्र. for अत्र; while D. omits this word. ९. D. reads कार्यं for कुर्यात्. १०. A. in margin and B. also in margin read धनिकायाधमर्णिकः for धनिकं वाऽधमर्णिकैः.

'अथ शक्तिविहीनः[1] स्यादृणी कालविपर्ययात् ।
शक्त्यपेक्षमृणं दाप्यः काले काले यथोदयम्' ॥
(ना. स्मृ. ३. १३१)

इति । दुष्टाधमर्णिकं प्रत्याह मनुः—

'ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्याद्गृहीत्वा द्विगुणं[2] दमम्' ॥

इति । सन्दिग्धेऽर्थे[3] धनग्रहणं कुर्वतोऽर्थहानिर्दण्डश्चेत्याह बृहस्पतिः—

'अनावेद्य[4] तु राज्ञे यः सन्दिग्धेऽर्थे[5] प्रवर्तते ।
प्रसह्य स विनेयः[6] स्यात्स[7] चाऽप्यर्थो न सिध्यति' ॥

इति । कात्यायनोऽपि—

'पीडयेत्तु धनी यत्र ऋणिकं न्यायवादिनम् ।
तस्मादर्थात्स हीयेत तत्समं चाप्नुयाद्दमम्' ॥

इति । यस्त्वधमर्णस्तूत्तमर्णसकाशाद्व्यवहारार्थं[8] धनं गृहीतवान् स[9] तस्यैव ऋणं दद्यात् । नान्येषाम् । तदाह कात्यायनः—

१. D. reads °विहीनश्चेत् for °विहीनः स्यात्. २. D. reads द्विगुणो दमः for द्विगुणं दमम्. ३. B. originally reads संदिग्धे वधनं कुर्वतो for संदिग्धेऽर्थे धनग्रहणं कुर्वतो; while D. reads ऋण° for धन°. ४. C. reads अज्ञाते यत्तु राज्ञा for अनावेद्य तु राज्ञे. ५. D. reads संदिग्धार्थे for संदिग्धेऽर्थे. ६. C. reads साधयेत् and D. प्रवेश्य: for विनेयः. ७. D. reads सर्वोऽपि for स चापि. ८. C. omits the following:

°सकाशाद्व्यवहारार्थं धनं गृहितवान् स तस्यैव धनं दद्यात् ।
नान्येषाम् । तदाह कात्यायनः–
°यस्य द्रव्येण यत्पण्यं साधितं यो विभावयेत् ।
तद्द्रव्यमृणि°.

९. In A. and B. स does not appear.

'यस्य द्रव्येण यत्पण्यं साधितं यो विभावयेत् ।
तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा' ॥

इति । निर्धनाधमर्णविषये ऋणप्रतिदानप्रकारमाह भारद्वाजः—

'ऋणिकस्य धनाभावे देयोऽन्योर्थस्तु तत्क्रमात् ।
धान्यं[1] हिरण्यं लोहं वा गो-माहिष्यादिकं तथा ॥
वस्त्रं[2] भूर्दासवर्गं च वाहनादि यथाक्रमम् ।
धनिकस्य तु विक्रीय प्रदेयमनुपूर्वशः[3] ॥
क्षेत्राभावे तथारामस्तस्याभावे गृहक्रयः[4] ।
द्विजातीनां गृहाभावे कालहारो विधीयते' ॥

इति । मनुरपि—

'ऋणं दातुमशक्तो यः कर्तुमिच्छेत् पुनः क्रियाम् ।
स दत्वा निर्जितां वृद्धिं करणं[5] परिवर्तयेत्' ॥

( म. स्मृ. ८. १५४ ).

इति । अयमर्थः— प्रतिदानकाले धनासंपात्तिवशात् सवृद्धिकमूलदानाशक्तोऽधमर्णः ऋणस्य चिरन्तनत्वं[6] परिहरतो धनिकस्य समानार्थक्रियां लेख्यादिरूपां पुनः कर्तुमिच्छेत् स निष्पन्नां वृद्धिं दत्वा करणं[7] परिवर्तयेत् । पुनर्लेख्यादिक्रियां वर्तमान-

१. C. reads अश्वं for धान्यं. २. A. and B. originally read रत्नं for वस्त्रं. ३. C. reads प्रदेयायानुपूर्वशः for प्रदेयमनुपूर्वशः. ४. A. and B. read तु विक्रयः and C. हयक्रयः for गृहक्रयः; while B. originally and D. read ऋणक्रयः for गृहक्रयः. ५. C. reads कारणं for करणं. ६. A. and B. read चिरंतनत्वपरिहारतो for चिरंतनत्वं परिहरतो. ७. A. B. and C. read हरणं for करणं; while C. substitutes परिकीर्तयेत् for परिवर्तयेत्.

वत्सरादिचिन्हितां[1] कुर्यादिति । यः पूर्वनिर्जितां वृद्धिं दातुमसमर्थः स तु तां मूलत्वेनारोपयेत् । तदाह स एव—

‘ अदर्शयित्वा तत्रैव हिरण्यं परिवर्तयेत् ।
यावती[2] संभवेद्वृद्धिस्तावतीं दातुमर्हति[3]’ ॥

( म. स्मृ. ८. १५५ )

इति । समग्रं[4] हिरण्यमदर्शयित्वा निर्मितां वृद्धिमदत्वा तत्रैव लेख्ये परिवर्तयेत् ।

यस्तु ऋणप्रतिदानकाले सवृद्धिकं समग्रं मूलं[5] न दातुं शक्नोति तं प्रत्याह याज्ञवल्क्यः—

‘ लेख्यस्य पृष्ठेऽभिलिखेद्[6]दत्वा दत्वर्णिको धनम् ’ ॥

( या. स्मृ. २. ९३ )

इति । लेख्यासन्निधाने विष्णुः—

‘ असमग्रदाने लेख्यासन्निधाने चोत्तमर्णः[7]
स्वलिखितं दद्यात्’ ।

( वि. स्मृ. ६. २६ )

इति । नारदोऽपि—

---

१. C. reads °विहितां for °चिन्हितां. २. A. and B. do not mention the following:

यावती संभवेद्वृद्धिस्तावतीं दातुमर्हति’ ॥.

३. D. reads तावतीं हातुमर्हति for तावतीं दातुमर्हति. ४. A. B. and D. omit समग्रं हिरण्यमदर्शयित्वा निर्जितां वृद्धिमदत्वा तत्रैव लेख्ये परिवर्तयेत् ।. ५. A. B. and C. substitute मूल्यं for मूलं; while A. and B. omit न. ६. A. and B. read विलिखेत् for ऽभिलिखेत्. ७. D. reads °मर्णस्य लिखित for °मर्णः स्वलिखितं.

'गृहीत्वोपगतं दद्यादृणिकाक्षे धनं धनी ।
अदद्याच्यमानस्तु दोषहानिमवाप्नुयात् '॥
( ना. स्मृ. ३. ११४ )

इति । धनप्रवेशमारभ्य यावल्लेखनं लेख्यदानं वा न करोति तावन्नाधमर्णात् वृद्धिमाप्नुयात् । तथा च नारदः—

'यदि वा नोपरिलिखेदृणिना चोदितोऽपि सन् ।
धनिकस्यैव वर्द्धेत तथैव ऋणिकस्य तत्' ॥
( ना. स्मृ. ३. ११९ )

इति । यस्तु ऋणापाकरणं न करोति तस्य प्रत्यवायः नारदेन दर्शितः—

'तपस्वी चाग्निहोत्री च ऋणवान्म्रियते यदि ।
तपश्चैवाग्निहोत्रं च सर्वं तद्धनिने भवेत्' ॥
( ना. स्मृ. ३. ९ )

इति । कात्यायनोऽपि—

'उद्धारादिकमादाय स्वामिने न ददाति यः ।
स तस्य दासो भृत्यः स्त्री पशुर्वा जायते गृहे ' ॥

इति । उद्धारादिकं दातुः यद्देयतया स्थितम् । नारदोऽपि—

१. D. omits—

'............. ............क्षे धनंधनी ।
अदद्याच्यमानस्तु दोषहानिमवाप्नुयात्' ॥
इति । धनप्रवेशमारभ्ययावल्लेखनं लेख्यदानं वा न करोति तावन्नाधमर्णा.

C. too omits the same portion. २. A. and B. read तावदधमर्णोत्पाद्यधनं. but it seems quite incorrect. ३. C. reads धनिकस्य न for धनिकस्यैव. ४. D. substitutes च for तत्. ५. D. reads पुराणे for नारदेन and adds अपि after पुराणे.

'याच्यमानं न देद्याद्यद्दृणं वाधिं प्रतिग्रहम्[1] ।
तद्रव्यं वर्द्धते तावद्यावत्कोटिशतं भवेत् ॥
ततः कोटिशते पूर्णे वेष्टितस्तेन[2] कर्मणा ।
अश्वः[3] खरो वृषो दासो भवेज्जन्मनि जन्मनि' ॥
(ना. स्मृ. ३. ७–८)

इति । प्रतिदातुः कर्तव्यमाह याज्ञवल्क्यः—

'दत्वर्णं पाटयेल्लेख्यं शुद्ध्यै[4] वा[5]ऽन्यत्तु कारयेत् ।
साक्षिणं[6] ख्यापयेद्यद्वा दातव्यं वा ससाक्षिकम्' ॥
( या. स्मृ. २. ९४ )

इति । ससाक्षिकं ऋणं पूर्वसाक्षिसमक्षमेव दातव्यम् । पूर्वसाक्षिणामसम्भवे साक्ष्यन्तरसमक्षमेव दातव्यमिति । नारदोऽपि—

'लेख्यं दत्वा ऋणी शुद्ध्येत्तदभावे[7] प्रतीश्वरम् ।
धनिकर्णिकयोरेवं विशुद्धिः स्यात् प्रतिश्रवम्' ॥
( ना. स्मृ. ३. ११६ )

इति । ऋणप्रतिदातृनाह बृहस्पतिः—

'याचमानाय दातव्यमल्पकालमृणं कृतम् ।
पूर्णेऽवधौ शान्तलाभमभावे च पितुः सुतैः' ॥

---

१. D. reads दद्यात्तु ऋणमाधिं प्रतिग्रहं for दद्याद्यद्दृणं वाधिं प्रतिग्रहं. २. C. reads विद्धि नष्टेन and D, दानन्नष्टेन for वेष्टितस्तेन. ३. C. reads अश्वसारो for अश्वः खरो. ४. A. and B. read शुद्धौ and D. शुद्धे for शुद्ध्यै. ५. D. substitutes च for वा. ६. B. originally reads साक्षिमच्च भवेद्यदा and in margin gives another reading साक्षिणं तान्निवेद्य वा. C. also read the same. ७. D. throughout is mistaken here by adding after शुद्ध्येत्तदभावे, the forthcoming word सुतैरिति, and then अल्पकालमदीर्घकालं &c., the commentator's explanation, whose proper place is after the quotations of बृहस्पति.

इति । अल्पकालमदीर्घकालमृणं याच्ञासमनन्तरमेव देयम् । सावधित्वेन कृतं तु पूर्णे त्ववधौ शान्तलाभं लभेत् । शान्त्यनन्तरं ऋणग्रस्तस्य पितुरभावे पितृकृतमृणं सुतैरवश्यं दातव्यम् । आवश्यकं दातव्यमित्यत्र हेतुमाह नारदः—

'इच्छन्ति पितरः पुत्रान् स्वार्थहेतोर्यतस्ततः ।
उत्तमर्णाधमर्णाभ्यां मामयं मोचयिष्यति ॥
अतः पुत्रेण जातेन[1] स्वार्थमुत्सृज्य यत्नतः ।
ऋणात् पिता मोचनीयो यथा न नरकं व्रजेत्' ॥

( ना. स्मृ. ३. ५–६ )

इति । उत्तममृणं—

'जायमानो[2] वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते' ।

इत्यादिश्रुतिपादितम्[3] । अधममृणं[4] परहस्तात् कुसीदविधिना गृहीतम् । कात्यायनोऽपि—

'पितॄणां[5] सूनुभिर्जातैर्दानेनैवाऽधमादृणात् ।
विमोक्षस्तु यतस्तस्मादिच्छन्ति पितरः सुतान्' ॥

इति । जातेनेत्यभिधानान्न[6] जातमात्रस्य ऋणमोचनेऽधिकारः । किन्तु प्राप्तव्यवहारस्येत्याह स एव—

'न[7] प्राप्तव्यवहारस्तु पितर्युपरते क्वचित् ।
काले तु विधिना देयं वसेयुर्[8]नरकेऽन्यथा' ॥

इति । क्वचिद्विद्यमानेऽपि पितरि सुतैर्देयमित्याह स एव—

---

१. C. reads शुक्लेन for जातेन. २. D. adds ह after जायमानो. ३. C. omits this word श्रुतिप्रतिपादितम्; while D. reads श्रुतिप्रतिपादितमृणम् for श्रुतिप्रतिपादितम्. ४. C. reads यत्तु प्रतिपादितमृणं for अधममृणं. ५. D. reads नृणां तु for पितॄणां. ६. C. reads अभिधानं न for अभिधानान्न. ७. D. reads नाऽप्राप्त° for न प्राप्त°. ८. C. reads वसेयं for वसेयुः.

'विद्यमानेऽपि रोगार्ते स्वदेशात् प्रोषिते तथा।
विंशात् संवत्सराद्देयमृणं पितृकृतं सुतैः'॥

इति। बृहस्पतिरपि—

'सान्निध्येऽपि पितुः पुत्रैर्ऋणं देयं विभावितम्।
जात्यन्ध-पतितोन्मत्त-क्षय-श्वित्रादिरोगिणः'॥

इति। ऋणादानेऽधिकारिणं पुत्रं दर्शयति कात्यायनः—

'ऋणं तु दापयेत् पुत्र यदि स्यान्निरुपद्रवः[1]।
द्रविणार्हश्च धुर्यश्च नान्यथा दापयेत् सुतम्'॥

इति। नारदोऽपि—

'पितर्युपरते पुत्राः ऋणं दद्युर्यथांशतः।
विभक्ता[2] ह्यविभक्ता वा यो वा तामुद्वहेद्धुरम्'॥
(ना. स्मृ. ३. २)

इति। विभागोत्तरकालं पित्रा यदृणं कृतं तत्केन देयमित्यपेक्षित आह कात्यायनः—

'पित्र्यर्णे[3] विद्यमाने तु न च पुत्रो धनं हरेत्।
देयं तद्धनिके द्रव्यं मृते गृण्हंस्तु दाप्यते'॥

इति। पित्रादिकृतर्णसमवाये दानक्रममाह बृहस्पतिः—

'पित्र्यमेवाग्रतो[4] देयं पश्चादात्मीयमेव च।
तयोः पैतामहं पूर्वं देयमेतदृणं[5] सदा'॥

इति। पैतामहं ऋणं सममेव देयम्। तथा च स एव—

१. C. and D. read निरुपद्रवम् for निरुपद्रवः. २. D. reads विभक्तो वा for विभक्ता ह्यविभक्ता वा. ३. D. reads पितॄणां for पित्र्यर्णे; while C. substitutes पित्रर्णे for पित्र्यर्णे. ४. C. reads पित्र्यमेव मृते and D. पित्र्यमादावृणं for पित्र्यमेवाग्रतो. ५. D. substitutes एवं for एतत्.

'ऋणमात्मीयवत्पित्र्यं पुत्रैर्देयं विभावितम्[1] ।
पैतामहं समं देयमदेयं तत्सुतस्य तु[2] ' ॥

इति । तत्सुतस्यागृहीतधनप्रपौत्रस्य[3] । एतदेवाभिप्रेत्याह नारदः—

'क्रमादव्याहृतं[4] प्राप्तं पुत्रैर्यदृणमुद्धृतम्[5] ।
दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्तते ' ॥
(ना. स्मृ. ३. ४ )

इति । कात्यायनोऽपि—

'पुत्राभावे[6] तु दातव्यमृणं पौत्रेण यत्नतः ।
चतुर्थेन न दातव्यं तस्मात्तद्विनिवर्तते ' ॥

इति । देयमृणं अनेन देयं एतस्मिन्[7]काले देयमित्येतत् त्रितयं याज्ञवल्क्योऽप्याह[8]—

'पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा ।
पुत्र-पौत्रैर्ऋणं देयं निन्हवे साक्षिभावितम् ' ॥
( या. स्मृ. २. ५० )

इति । अदेयमृणमाह बृहस्पतिः—

'सौराक्षिकं वृथा दानं कामक्रोधप्रतिश्रुतम् ।
प्रातिभाव्यं दण्डशुल्कशेषं पुत्रं[9] न दापयेत् ' ॥

---

१. D. reads च याचितम् for विभावितम्; while C. यच्छ्रावितम् for विभावितम्. २. D. substitutes च for तु. ३. C. reads प्रपौत्र एव for प्रपौत्रस्य । एतदे°. ४. A. in margin and B. originally read अभ्यागतं for अव्याहृतं. ५. A. in margin B. originally and D. read यत्नर्णम् for यदृणम्. ६. C. and D. wrongly read पित्रभावेऽपि for पुत्राभावे तु. ७. D. reads इत्यस्मिन् for एतस्मिन्. ८. D. omits ऽपि. ९. C. reads पत्रं for पुत्रं and D. °शुल्के शेषं अत्तत्र for °शुल्कशेषं पुत्रं न.

इति । सुरापानार्थं यत्कृतं तत्सौरं । द्यूतपराजयनिमित्तकमाक्षिकम् । वृथा दानं धूर्तादिभ्यो दत्तम्[1] । काम-क्रोधप्रतिश्रुतयोः स्वरूपं कात्यायनेन दर्शितम्—

'लिखितं मुक्तकं वापि देयं यत्तु प्रतिश्रुतम् ।
परपूर्वस्त्रियै दत्तं[2] विद्यात् कामकृतं ऋणम्[3] ॥
यत्र हिंसां समुत्पाद्य क्रोधाद्द्रव्यं[4] विनाश्य वा[5] ।
उक्तं तुष्टिकरं तत्तु विद्यात् क्रोधकृतं च[6] तत्' ॥

इति । मुक्तकं लेखनरहितं । प्रातिभाव्यं दर्शनप्रातिभाव्यागतम् । तथा च मनुः—

'प्रातिभाव्यं वृथा दानमाक्षिकं[7] सौरिकं तथा[8] ।
दण्ड-शुल्कावशिष्टं च न पुत्रो दातुमर्हति ॥ (१५२)
दर्शने[9]-प्रातिभाव्ये तु विधिः स्यात्पूर्वचोदितः' ॥
(म. स्मृ. ८. १५९–१६०.)

इति । याज्ञवल्क्योऽपि[10]—

---

१. D. adds यत्तु before दत्तम्. २. A. in margin and B. originally and C. read तत्तु for दत्तं. ३. D. reads नृणाम् for ऋणम्. ४. C. reads पण्यं for द्रव्यं. ५. D. substitutes च for वा. ६. D. substitutes तु for च. ७. C. reads °साक्षिकं for आक्षिकं. ८. C. substitutes यत् and D. तत् for तथा. ९. C. is mistaken here throughout and D. substitutes—

दर्शनप्रातिभाव्ये तु नैषविधिः स्यात्,

for this line—

दर्शनप्रातिभाव्ये तु विधिःस्यात्पूर्वचोदितः' ॥.

१०. D. and C. omit the following—

याज्ञवल्क्योऽपि—

'सुरा-काम-द्यूतकृतं दण्डशुल्कावशिष्टकम् ।
वृथादानं तथैवेह पुत्रोदद्यान्नपैतृकम्' ॥

इति । उशना अपि.

'सुरा-काम[1]-द्यूतकृतं दण्ड-शुल्कावशिष्टकम् ।
वृथा दानं तथैवेह पुत्रो दद्यान्न पैतृकम्' ॥

( या. स्मृ. २. ४७ )

इति । उशना अपि—

'दण्डं[2] वा दण्डशेषं वा शुल्कं तच्छेषमेव वा ।
न दातव्यं तु पुत्रेण यच्च न व्यावहारिकम्' ॥

इति । कुटुम्बार्थे पितृव्यादिना कृतमृणं गृही दद्यादित्याह बृहस्पतिः—

'पितृव्य-भ्रातृ-पुत्र-स्त्री दास-शिष्या-ऽनुजीविभिः ।
यद्गृहीतं कुटुम्बार्थे तद्गृही दातुमर्हति' ॥

इति । नारदोऽपि—

'शिष्या-ऽन्तेवासि-दास-स्त्री-प्रेष्य-कृत्यकरै[3]श्च यत् ।
कुटुम्बहेतोरुत्क्षिप्तं दातव्यं तत्कुटुम्बिना' ॥

( ना. स्मृ. ३. १२ )

इति । शिष्योऽत्र विद्यार्थी । शिल्पशास्त्रार्थी अन्तेवासी । उत्क्षिप्तमसन्निधानादिना स्वा[4]म्यनुज्ञां विनापि कृतमृणम् । कात्यायनोऽपि—

---

१. A. in margin and B. originally read °पान° for °काम°. २. D. reads दण्डो for दण्डं. ३. B. originally reads °परैः for °करैः. ४. D. reads स्वानुज्ञां for स्वाम्यनुज्ञां.

'प्रोषितस्यामतेनापि कुटुम्बार्थमृणं कृतम् ।
दास-स्त्री-भ्रातृ-शिष्यैर्वा दद्यात् पुत्रेण वा पिता' ॥

इति । कुटुम्बार्थव्यतिरिक्तऋणविषये याज्ञवल्क्यः—

'न योषित् पति-पुत्राभ्यां न पुत्रेण कृतं पिता ।
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा' ॥
( या. स्मृ. २. ४६ )

इति ।

'न पुत्रेण कृतं पिता' ।

इत्यस्य क्वचिदपवादमाह बृहस्पतिः—

'ऋणं पुत्रकृतं पित्रा शोध्यं यदनुमोदितम् ।
सुतस्नेहेन वा दद्यान्नान्यथा दातुमर्हति' ॥

इति । नारदोऽपि—

---

१. A., B. and C. read °मातृ° for °भ्रातृ°. २. A. and B. C. substitute पिता and add इति; while D. reads भृगुरपि and gives here—

'ऋणं पुत्रकृतं पित्रा शोध्यं यदनुमोदितम् ॥
सुतस्नेहेन वा दद्यान्नान्यथा दातुमर्हति' ॥

इति । नारदोऽपि

पितुरेव नियोगाद्वा कुटुम्बभरणाय वा ।

इति । this which is required after the quotation—

कुटुम्बव्यातीरिक्तर्णविषये याज्ञवल्क्यः—
'न योषितत्पति-पुत्राभ्यां न पुत्रेण कृतं पिता ।
दद्यादृणं कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा' ॥

इति.

३. C. and D. read ऋणं for ऋते. ४. C. and D. read कुटुम्बार्थां for कुटुम्बार्थं. ५. D. substitutes भृगुरपि for बृहस्पतिः. ६. C. D. read नान्यत्र for नान्यथा.

'पितुरेव नियोगाद्वा कुटुम्बभरणाय वा ।
कृतं तु[1] यदृणं कृच्छ्रे[2] दद्यात्पुत्रस्य[3] तत्[4] पिता' ॥
(ना. स्मृ. ३. ११)

इति । अत्र पुत्रग्रहणं कुटुम्बोपलक्षणार्थम् । पितृग्रहणं च प्रभोरुपलक्षणार्थम् । तथा च कात्यायनः—

'कुटुम्बार्थमशक्ते तु गृहीतं व्याधिना[5] तथा ।
उपप्लवनिमित्तं च विद्यादापत्कृतं तु तत् ॥
कन्यावैवाहिकं चैव प्रेतकार्येषु[6] यत् कृतम् ।
एतत्सर्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः' ॥

इति ।

'न पतिः स्त्रीकृतं तथा' ।
(या. स्मृ. २. ४६)

इत्यस्यापवादमाह याज्ञवल्क्यः—

'गोप-शौंडिक-शैलूष-रजक-व्याधयोषिताम् ।
ऋणं दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रया'* ॥
(या. स्मृ. २. ४८)

---

*गोपो गोपालकः । शौण्डिकः सुराकर्ता । शैलूषो नटः । रजकशब्देन वस्त्ररंजनकर्ता रंगारीति लोके प्रसिद्धः । व्याधो मृगादिहन्ता । एतेषां योषितः स्वयमेव गृहसम्बधि व्यवहारं कुर्वन्ति अतः ताभिः कृतमृणं तत्पतिभिर्देयम् । यस्मात्तेषां वृत्तिः स्त्र्यधीना भवति । एवमन्येऽपि ये योषिदधीनवृत्तयः तैरपि स्वयोषित्कृतमृणं देयमिति गम्यते । केरलदेशे तु स्त्रीणामेव सर्वाधिकारित्वात् तत्र स्त्रीकृतमृणं न भर्तृदेयं भवतीति अलं विस्तरेण ।

---

१. C. and D. substitute वा for तु. २. C. reads कृत्स्नं and D. कृच्छ्रं for कृच्छ्रे. ३. D. reads पुत्रेण for पुत्रस्य. ४. C. substitutes वा for तत्. ५. A reads व्याधिते for व्याधिना. ६. C. reads °कार्ये च for °कार्येषु.

इति । योषित् पत्या कृतं ऋणं न दद्यादित्यस्यापवादमाह नारदः—

'दद्यादपुत्रा विधवा नियुक्ता वा मुमूर्षुणा ।
यो सा तद्रिक्थमादद्याद्यतो रिक्थमृणं ततः' ॥
(ना. स्मृ. ३. १७)

इति । याज्ञवल्क्योऽपि—

'प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत् कृतम् ।
स्वयं कृतं वा यदृणं नान्यत् स्त्री दातुमर्हति' ॥
(या. स्मृ. २. ४९)

इति । अप्रतिपन्नमपि तद्रिक्थग्रहणे स्त्रिया देयमित्याह कात्यायनः—

'मर्तुकामेन या भर्त्रा उक्ता देयमृणं तथा ।
अप्रतिपन्नापि सा दाप्या धनं दद्यात् सुतो यथा' ॥

इति । अविभक्तभ्रात्रादिविषये याज्ञवल्क्यः—

'अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत् ।
दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि' ॥
(या. स्मृ. २. ४५)

---

१. C. wrongly reads यासां तद्रिक्र° for या सा तद्रिक्थ°. २. C. reads °रिक्थं for °रिक्थ.° ३. C. and D. omits this verse and the following sentence—

'मर्तुकामेन या भर्त्रा उक्ता देयमृणं तथा ।
अप्रतिपन्नापि सा दाप्या धनं दद्यात्सुतो यथा' ॥
इति । अविभक्तभ्रात्रादिविषये याज्ञवल्क्यः.

४. C. reads. मर्तुकामेन या भवेत् for 'अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत् ।; while D. ऋणे कृते for अविभक्तैः. ५. D. reads भर्तुः कामेन या भवेत् for यदृणं तु कृतं भवेत्.

इति । अविभक्तैः कुटुम्बार्थे कृतमृणं कुटुम्बी दद्यात् । तस्मिन्प्रेते प्रोषिते[1] वा तद्रिक्थिनः सर्वे[2] दद्युः । नारदोऽपि—

‘पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम् ।
मात्रा वा यत् कुटुम्बार्थे दद्युस्तत्सर्वरिक्थिनः’ ॥

(ना. स्मृ. ३. ३.)

इति । अनेकऋणदातृसमवाये याज्ञवल्क्यः—

‘रिक्थग्राह[3] ऋणं दाप्यो योषिद्ग्राहस्तथैव च ।
पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः’ ॥

(या. स्मृ. २. ५१)

इति । यो यदीयं द्रव्यं रिक्थरूपेण गृण्हाति स तत्कृतमृणं दाप्यः । तदभावे[4] यस्तु[5] रागादिवशात् यदीयां[6] भार्यां गृण्हाति स तत्कृतमृणं दाप्यः । तदभावेऽनन्याश्रितद्रव्यः पुत्रो ऋणं दाप्यः । पुत्रहीनस्य रिक्थिन ऋणं दाप्यः[7] । एतेषां समवाये पाठक्रमादेव दाप्याः[8] । नन्वेतेषां[9] समवाय एवानुपपन्नः[10] । पुत्रे सत्यन्यस्य रिक्थग्राहित्वासम्भवात्[11] । न च पुत्रे सत्यपि पितृ-भ्रात्रो रिक्थहारित्वमिति वाच्यम् ।

---

१. C. and D. omit प्रोषिते. २. D. reads सर्व. for सर्वे°. ३. A. B. C. read रिक्थग्राही. ४. C. reads यदभावे for तदभावे. ५. D. reads तु for यस्तु. ६. D. adds यो before यदीयां. ७. D. reads दाप्याः for दाप्यः. ८. D. reads दाप्यः for दाप्याः. ९. C. reads नत्वेतेषां for नन्वेतेषां १०. C. reads एकः पुरुषः पुनः and D. एकदाऽनुपपन्नः for एवानुपपन्नः. ११. C. adds सर्वस्व after रिक्थ°; while D. and C. almost read ऋक्थ for रिक्थ wherever this word occurs.

'न भ्रातरो न पितरः पुत्रो रिक्थहराः पितुः।
पिता हरेदपुत्रस्य रिक्थं भ्रातर एव च'॥
(म. स्मृ. ८. १८९)

इति मनुना पुत्राभाव एव द्वयो रिक्थग्राहित्वस्य स्मृतत्वात्[2]। योषिद्ग्राहोऽपि[3] न सम्भवति।

'न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते[4]'
(म. स्मृ. ९. १६९)

इति तेनैवोक्तत्वात्।

'पुत्रोऽनन्याश्रितद्रव्यः'।

इत्येतदप्यनर्थकम्।

---

१. D. reads.

'........................पुत्रेतद्रिक्थहारिणि।
यतो रिक्थहरा एते पुत्रहीनस्य, रिक्थिनः'॥

इति। पुत्रे सति for

'....................पुत्रा रिक्थहराः पितुः।
पिता हरेदपुत्रस्य रिक्थं भ्रातर एव च'॥

इति मनुना पुत्राभाव एव द्वयोः;

While C. from the following word रिक्थहरा, retaining the word रिक्थ° reads the following :

पुत्रहीनस्य रिक्थिन इत्येतदपि
सत्येतदपि पुत्रो रिक्थग्राही तस्य स्मृतः
नयोषिद्ग्राहितस्य स्मृतः त्रयोपि न संभवंति.

for '....................°हराः पितुः।
पिताहरेदपुत्रस्य रिक्थं भ्रातर एवच'॥

इति मनुना पुत्राभाव एव द्वयोरिक्थग्राहित्वस्य स्मृतत्वात्।
योषिद्ग्राहोऽपि न संभवति।.

२. D. reads °ग्राहित्वस्याऽस्मृतत्वात् for °ग्राहित्वस्य स्मृतत्वात्. ३. D. reads योषिद्ग्राहित्वं for योषिद्ग्राहो. ४. C. reads भर्ताऽपदिश्यते for भर्त्तोऽपदिश्यते.

'रिक्थग्राही ऋणं दाप्यः'।

इत्यनेनैकार्थत्वात्।

'पुत्रहीनस्य रिक्थिनः'।

इत्येतदपि व्यर्थम्। सत्यपि पुत्रे रिक्थग्राहिण एव ऋणापाकरणाधिकारित्वस्य 'रिक्थग्राही ऋणं दाप्य' इत्युक्तत्वादिति। तदेतदसङ्गतम्। सत्स्वपि क्लीबादिषु पुत्रेष्वन्यायवर्तिषु वा सवर्णापुत्रेषु पितृव्यादीनां रिक्थग्राहित्वसम्भवात्। क्लीबादीनां रिक्थग्राहित्वाभावं मनुराह—

'अनंशौ क्लीब-पतितौ जात्यन्ध-बधिरौ तथा।
उन्मत्त-जड-मूकाश्च ये च केचिन्निरिन्द्रियाः'॥
(म. स्मृ. ९. २०१.)

इति। सवर्णापुत्रस्यान्यायवृत्तस्य रिक्थायोग्यत्वं गौतम आह—

'तथा सवर्णापुत्रोऽप्यन्यायवृत्तो न लभेतैकेषाम्'*।
(गौ. स्मृ. २९. १८)

---

* एकेषां मुख्यानामाचार्याणां मते। अन्यायवृत्तः अधर्मवर्ती सवर्णस्त्रीपुत्रोऽपि रिक्थहरो न भवति किं पुनरसवर्णापुत्रः।

'सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनम्'।
(म. स्मृ. ९. २१४)

इति मनुना द्यूत-वेश्यासेवादिविकर्मासक्तानां रिक्थानधिकारित्वमुक्तम्।

---

१. C. reads इत्येतेन for इत्यनेन. २. C. and D. omit व्यर्थं; while C. reads च for व्यर्थं. ३. C. reads सत्यैतदपि पुत्र° and D. पुत्रस्य for सत्यपि पुत्रे. ४. D. reads °अधिकारस्य °for °अधिकारित्वस्य. ५. C. reads तदेतत् संगतं for तदेतदसंगतम्. ६. D. reads सवर्णपुत्रेषु for सवर्णापुत्रेषु. ७. C. reads °योग्यं and D. °योग्यतां for °योग्यत्वं.

इति । अतः पुत्रे सत्यपि रिक्थग्राह्यन्यः सम्भवति । योषिद्ग्राही[1] शास्त्रनिषिद्धोऽप्यतिक्रान्त[2]निषेधः सम्भवत्येव । योषिद्ग्राह[3]ः कीदृश ऋणं दद्यादित्यपेक्षिते नारदः—

'[4]परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् ।
पुनर्भूस्त्रिविधा तासां स्वैरिणी च चतुर्विधा ॥
कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।
पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा ॥
देशधर्मानवेक्ष्य[5] स्त्री गुरुभिर्या प्रदीयते ।
उत्पन्नसाहसाऽन्यस्मै सा द्वितीया प्रकीर्तिता ॥ ५२
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते ।
[6]सवर्णायाऽसपिण्डाय सा तृतीया प्रकीर्तिता ॥ ४८
स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति ।
कामात्समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा ॥ ४९
कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता ।
पुनः पत्युर्गृहं यायात्सा द्वितीया प्रकीर्तिता ॥ ४७
मृते भर्तरि तु [7]प्राप्तान् देवरादीनपास्य या ।
उपगच्छेत्परं कामात्सा तृतीया प्रकीर्तिता ॥ ५०

---

१. C. and D. read °ग्राही for °द्ग्राही. २. C. reads व्यतिक्रान्ते for °प्यतिक्रान्त°. ३. C. and D. omit योषिद्ग्राहःकीदृशं ऋणं दद्यादित्यपेक्षिते. ४. C. omits the following :—

'परपूर्वाःस्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् ।
पुनर्भूस्त्रिविधा तासां स्वैरिणी च चतुर्विधा ॥

५. C. and D. read अपेक्ष्य for अवेक्ष्य. ६. D. reads सवर्णा या सपिण्डा वा for सवर्णायाऽसपिण्डाय. ७. D. reads प्राप्ता for प्राप्तान्.

प्राप्ता[1] देशाद्धनक्रीता क्षुत्पिपासातुरा च या ।
तवाहमित्युपगता सा चतुर्थी प्रकीर्तिता ॥ ५१
अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम् ।
ऋणं तयोः पतिकृतं दद्याद्यस्ते उपाश्रितः[2]' ॥

(ना. स्मृ. १२. ४९–५२.)

इति यत्तु तेनैवोक्तम्–

' या तु स[3]प्रधनैव* स्त्री सापत्या वाऽन्यमाश्रयेत् ।
सो[4]ऽस्या दद्यादृणं भर्तुरुत्सृजेद्वा तथैव ताम्' ॥

(ना. स्मृ. ३. २१)

इति तत् आश्रितभर्त्रादिविषयम् । अत एव कात्यायनः–

' बालपुत्राधिका[5]र्या वा भयार्ता यान्यमाश्रिता ।
आ[6]श्रितस्तदृणं दद्याद्बालपुत्राविधिः स्मृतः' ॥

इति यदपि नारदेनै[7]वोक्तम्—

' अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम् ।
ऋ[8]णं वोढुः स भजते सैव चास्य धनं स्मृतम्' ॥

(ना. स्मृ. ३. २२.)

---

* प्रकृष्टेन धनेन सहवर्तत इति सप्रधना । अपत्यसहिता अन्यमाश्रयेदित्यादि ।

---

१. D. reads प्राप्तोदया; while C. प्राप्तादेया for प्राप्ता देशात्. २. B. originally and C. D. read उपासितः for उपाश्रितः. ३. C. reads न प्रधनैव and D. लब्धधनैव for सप्रधनैव. ४. C. reads यो for सो. ५. C. reads °कार्था for °कार्या. ६. C. reads नाश्रियस्तु for आश्रितस्तत्°. ७. C. and D. omit एव, in नारदेनैव. ८. C. wrongly reads this line thus :—

ऋणं वानु स्वभजते सौवध्या स्मृता श्रुतमिति ।.

इति तद्धनभागिपुत्र-योषिद्ग्राहयोरभावे यः कोपि योषि-[1]दुपभोक्ता [2]ऋणं दद्यादित्येवंप्रतिपादनार्थं[3] । पु[4]त्रस्य पुनर्वचनं क्रमार्थम् । 'अनन्याश्रितद्रव्य' इत्येतदप्यनर्थकं न भवति । पुत्राणां बहूनां समवाये रिक्थग्रहणयोग्य एव पुत्रो दद्यात् । नाऽयोग्यः षण्ड-क्लीबादिरित्येतत्प्रतिपादनार्थत्वात् । पुत्रहीनस्य रिक्थिन' इत्येतदपि न व्यर्थम् । पुत्र-पौत्रयोरभावे प्रपौत्रो रिक्थग्राही दद्यादित्येवंप्रतिपादनार्थत्वात् । यद्वा 'पुत्रहीनस्य रिक्थिन' इत्यनेन पुत्राभावे योषिद्ग्राहो[5] दाप्य इत्युच्यते । रिक्थशब्देन 'सैव चास्य धनं स्मृतम्' इति योषितो विवक्षितत्वात् । अयमभिप्रायः—स्वैरिणीनामन्तिमायाः पुनर्भुवां प्रथमायाश्च सप्रधन[6]—सापत्यस्त्रियाश्च ग्राहिणः अभावे पुत्रो दाप्यः । पुत्राभावे च[7] निर्धन-निरपत्ययोषिद्ग्राही दाप्य इति । अत एव नारदः—

'धन-स्त्रीहारि-पुत्राणामृणभाग्यो धनं हरेत् ।
पुत्रोऽसतोः[8] स्त्री-धनिनोः स्त्रीहारी धनि पुत्रयोः' ॥
( ना. स्मृ. ३. २३ )

---

१. D. reads तत् for योषिद्°. २. D. adds स before ऋणं. ३. C. reads प्रतिपादनार्थत्वात्; while D. प्रतिपादनार्थं. ४. C. and D. omit the following :—

पुत्रस्य पुनर्वचनं क्रमार्थम्।
अनन्याश्रितद्रव्य इत्येतदप्यनर्थकं न भवति ।
पुत्राणां बहूनां समवाये रिक्थग्रहणयोग्य एव पुत्रो दद्यात् ।
नाऽयोग्यः षण्डक्लीबादिरित्येत्प्रतिपादनार्थत्वात् ।
पुत्रहीनस्य रिक्थिन इत्येतदपि नव्यर्थम् ।
पुत्र पौत्रयोरभावे प्रपौत्रो रिक्थग्राही दद्यादित्येवंप्रतिपादनार्थत्वात् ।

५. D. reads °ग्राही for °ग्राहो. ६. D. reads स्वप्रधना for सप्रधन°. ७. D. omits च and substitutes धन° for निर्धन°. ८. C. and D. read धनस्त्रीधनिनोः for ऽसतोःस्त्री-धनिनोः.

इति । धन-स्त्रीहारि-पुत्राणां समवाये धनहारी ऋणं दद्यात् । धनहारि-स्त्रीहारिणोरभावे पुत्र एव दद्यात् । धनि[1]-पुत्रयोरसतोः स्त्रीहारी दद्यादिति । अथवा 'पुत्र[2]हीनस्य रिक्थिन' इत्यनेन पुत्र-हीनस्योत्तमर्णस्य यो रिक्थी तस्य धनहारी[3] पुत्र ऋणं दाप्य इत्युच्यते । तथा च नारदः—

'ब्राह्मणस्य तु यद्देयं सान्वयस्य न चास्ति चेत् ।
निर्वपेत्तत्सकुल्येषु तदभावेऽस्य बन्धुषु ॥
यदा तु न स[4]कुल्याः स्युर्न च सम्बन्धि-बान्धवाः ।
तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेत्' ॥
(ना. स्मृ. ३. ११२–११३)

इति ।

इत्यृणा[5]दानप्रकरणम् ॥

१. C. and D. omit, धनिपुत्रयोरसतोः स्त्रीहारी दद्यात् इति । अथवा. २. C. adds धनि and D. धन before पुत्र°. ३. C. and D. read धन-स्त्रीहारि° for धनहारी. ४. C. reads स्व° for स°. ५. C. reads इत्यर्णदानप्रकरणम् for इत्यृणादानप्रकरणम् ।.

APPENDIX

BEING

# BRIHAT PARÂŚARA SAMHITÂ

BY

SUVRATA MUNI

WITH

VARIOUS READINGS, TABLE OF CONTENTS, &c.



# पूरणिका

## बृहत्पराशरसंहिता

सुव्रतमुनिप्रोक्ता ।

भूमिका, पाठान्तराणि, विषयानुक्रमणिकेत्यैतैः सहिता ।

# PREFATORY REMARKS ON BRIHAT-PARÂŚARA DHARMA SAMHITÂ.

A.—This is an old manuscript of the Bṛihat-Parâśara Saṃhitâ. It belongs to the Government of Bengal, and is deposited in the library of the Asiatic Society of Bengal, at Calcutta. It was placed at my disposal by the order of the Government of Bengal. It contains 170 folios. There are 10 lines on a page, and each line contains about 35 letters. The last page is lost; in the absence of which the date and other particulars of the manuscript cannot be known. Its appearance is very old. Possibly it was written at least some 400 years ago. It is in old Devanâgarî character and is generally correct.

B.—This manuscript belongs to the Elphinstone College Library, Bombay. It is written on thick Portuguese paper. It consists of 65 folios, broad in size, with 18 lines on each side, and 45 letters in each line. It has no date; it has a neat appearance, and the copying is tolerably correct. It was placed at my disposal by Mr. Nârâyanrâv Dâsô Banahatti, B.A., then Fellow and Librarian of the said College.

C.—This is a lithograph compilation of 28 different Smṛitis, under the name of Dharmaśâstra Saṃgraha, published in the year 1805 of Śalivâhana era, by Mahâdeva Śâstri Amrâpurkar and Hariprasâda Bhagiratha. It is very incorrect, faulty, and carelessly printed.

NAMES OF THE AUTHORS AND OTHERS OCCURRING IN THE TEXT OF THE BṚIHATPARÂŚARA-SAMHITÂ.



श्री

# TABLE OF CONTENTS OF BRIHATPARÂSARA.

## अथ बृहत्पराशरसंहितायाः विषयानुक्रमणिका ।



## विषयानुक्रमणिका ।

# विषयानुक्रमणिका

## ॥ अथ षष्ठोऽध्यायः ॥

## ॥ अष्टमोऽध्यायः ॥

॥ अथ नवमोऽध्यायः ॥



॥ अथ दशमोऽध्यायः

## ॥ अथ एकादशोऽध्यायः ॥

॥ अथ द्वादशोऽध्यायः ॥

समाप्तयमनुक्रमणिका.

ओं नमः श्रीगणेशाय ।

# अथ बृहत्पराशरसंहिता प्रारभ्यते ।

## ॥ प्रथमोऽध्यायः ॥

व्यक्ताव्यक्ताय देवाय वेधसेऽनन्ततेजसे ।
नमस्कृत्य[1] प्रवक्ष्यामि धर्मान् पाराशरोदितान् ॥ १ ॥
अथातो हिमशैलाग्रे देवदारुवनाश्रये[2] ।
व्यासमेकाग्रमासीनं पर्यपृच्छन्मुनीश्वराः[3] ॥ २ ॥
मनुष्याणां[4] हितं धर्मं वर्तमाने कलौ युगे ।
वर्णानामाश्रमाणां च किञ्चित्[5]साधारणं वद ॥ ३ ॥
युगेषु[6] त्रिषु ये प्रोक्ता धर्मा मन्वादिभिर्मुने ।
शक्यन्ते नैव ते कर्तुं वर्णैराश्रमवासिभिः[7] ॥ ४ ॥
स पृष्टो मुनिभिर्व्यासो बहुभिः[8] परिवारितः ।
प्रष्टुं जगाम पितरं धर्मान्पराशरं ततः ॥ ५ ॥
सर्वेषामाश्रमाणां च वरे बदरिकाश्रमे ।
स[9] विवेशाश्रमे तस्मिन् तनुं[10] योगीव वेधसः ॥ ६ ॥
नानापुष्पलताकीर्णे फल-पुष्पैर[11]
नदी-प्रस्रवणानेक[12]पुण्यतीर्थोपशोभिते ॥ ७

१. A. C. and D. read नमस्कृत्वा for नमस्कृत्य. २. C. and D. read °वनाश्रमे for °वनाश्रये. ३. C. and D. read ऋषयः प्रष्टुमागताः, B. E. and F. द्विजाः पृच्छन्ति धार्मिकाः both for पर्यपृच्छन्मुनीश्वराः. ४. A. C. and D. read मानुषाणां for मनुष्याणां. ५. B. reads काञ्चित् for किञ्चित्. ६. D. reads युगे-युगेषु for युगेषु त्रिषु. ७. F. reads आश्रमचारिभिः for आश्रमवासिभिः. ८. A. C. and D. substitute मुनिभिः for बहुभिः; while A. C. D. E. and F. substitute परिवेष्टितः for परिवारितः. ९. B. C. E. and F. read संविवेश for स विवेश. १०. B. E. and F. read योगीव वेधसस्तनुम् and C. महायोगी च वेधसः both for तनुं योगीव वेधसः. ११. F. reads अलङ्कृतैः; while B. and E. फलैः पुष्पैः for अलङ्कृते and फल-पुष्पैः respectively. १२. B. C. D. E. and F. read प्रस्रवणानेकैः for °प्रश्रवणानेक°.

मृग-पक्षिभिरासेव्ये[1] देवतायतनावृते ।
यक्ष-गन्धर्व-सिद्धानां[2] नृत्य-गीतसमाकुले ॥ ८ ॥
तस्मिन्नृषिसभामध्ये शक्तिपुत्रः[3] पराशरः ।
सुखासीनो महातेजा मुनिमुख्यगणावृतः ॥ ९ ॥
कृताञ्जलिपुटो भूत्वा व्यासस्तु मुनिभिः सह ।
प्रदक्षिणाभिवादैश्च[4] मुनिभिः प्रतिपूजितः ॥ १० ॥
ततः सन्तुष्टमनसा पराशरमहामुनिः[5] ।
व्यासस्य स्वागतं ब्रूयादासीनो मुनिपुङ्गवः[6] ॥ ११ ॥
वत्स सुस्वागतं[7] तेऽस्तु महर्षीणां[8] समन्ततः ।
कुशलं कुशलेत्युक्त्वा[9] व्यासोऽपृच्छदतःपरम्[10] ॥ १२ ॥
यदि जानासि मां भक्तं स्नेहोऽस्ति[11] यदि वा मयि ।
धर्मं कथय[12] मे तात अनुग्राह्योऽस्म्यहं[13] यदि ॥ १३ ॥
श्रुतास्ते[14] मानवा धर्मा गार्गेया गौतमास्तथा ।
वासिष्ठाः काश्यपाश्चैव तथा गोपालकस्य च ॥ १४ ॥
[15]अत्रेर्विष्णोश्च सांवर्ता दाक्षाश्चाङ्गिरसास्तथा[16] ।

---

१. We follow here only A.; while all others substitute आकीर्णे for आसेव्ये. २. C. D. and F. read °सिद्धैश्च for °सिद्धानां. ३. E. reads सक्थिपुत्रः for शक्तिपुत्रः, but it seems incorrect. ४. A. B. and E. read °ऽभिवाद्यैश्च for °ऽभिवादैश्च ; while B. and E. परिपूजितः for प्रतिपूजितः. ५. A. and D. substitute पाराशर°for पराशर°. ६. A. reads मुनिसत्तमः for मुनिपुङ्गवः. ७. B. E. and F. read वत्साद्य स्वागतं. C. वत्सस्य स्वागतं and D. वशस्य स्वागतं all for वत्स सुस्वागतं. ८. A. C. D. and F. substitute आसीनानां समन्ततः; while A. adds हि before आसीनानां and C. and D. substitute तेन for तेऽस्तु. ९. A. reads कुशलेन for कुशले इति १०. A. B. and E. read पृच्छत्यत: परम्, D. and F. पृच्छत्ततः परम् both for ऽपृच्छदतः परम्. ११. A. reads स्नेहो वा यदि वा मयि, C. D. and F. स्नेहो वा यदि वत्सल both for स्नेहोऽस्ति यदि वा मयि. १२. E. reads ब्रूह्यथ for कथय. १३. A. reads अनुग्राह्योस्तु, C. and D. अनुग्राह्योऽहि both for अनुग्राह्योऽस्मि; while F. कुरुष्वानुग्रहं मम for अनुग्राह्योऽस्म्यहं यदि. १४. A. and D. substitute तु and F. च both for ते. १५. A. C. D. and F. read आत्रेया विष्णुसांवर्ता; while C. and D. substitute °संवर्ताः for °सांवर्ताः. १६. C. substitutes दृक्षाः for दाक्षाः and A. C. D. and F. आङ्गिरसः for आङ्गिरसाः.

शातातपाश्च हारीता याज्ञवल्क्यकृतास्तथा ॥ १५ ॥
आपस्तम्बकृता धर्माः शङ्खस्य लिखितस्य च ।
कात्यायनकृताश्चैव प्रचेतोगदितास्तथा ॥ १६ ॥
श्रुतिरात्मोद्भवा तात श्रुत्यर्था मानवाः स्मृताः ।
मन्वर्थः सर्वधर्माणां कृतादित्रियुगेषु च ॥ १७ ॥
धर्मं तु त्रियुगाचारं न शक्यं हि कलौ युगे ।
वर्णानामाश्रमाणां च किंचित्साधारणं वद ॥ १८ ॥
व्यासवाक्यावसाने तु मुनिमुख्यः पराशरः ।
सुखासीनो महातेजा इदं वचनमब्रवीत् ॥ १९ ॥
क्रियन्ते नैव वेदाश्च न चापि प्रभवन्ति ते ।
न कश्चिद्वेदकर्ताऽस्ति वेदस्मर्ता चतुर्मुखः ॥ २० ॥
तथा स धर्मं स्मरति मनुः कल्पान्तरान्तरे ।
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ॥ २१ ॥
अन्ये कलियुगे नृणां युगह्रासानुरूपतः ।
तपः परं कृतयुगे त्रेतायां ज्ञानमेव च ॥ २२ ॥

१. D. reads हारीत-याज्ञवल्क्यकृताः for हारीता याज्ञवल्क्यकृताः. २. A. reads शङ्खा लैखितिकाः, D. सशङ्खलिखिताः; while F. reads this line.—

आपस्तम्बाश्च ते धर्माः शंख-लिखितकास्तथा ।.

३. C. प्राचेतसकृताः, D. प्रचेतसकृताः and F. प्रचेतःकृतकाः all for प्रचेतोगदिताः. ४. B. reads श्रुतेरात्मोद्भवाः for श्रुतिरात्मोद्भवा. ५. C. reads श्रुत्यर्थाः, but corrects श्रुत्यर्थमानवाः; while B. E. and F. substitute तथा for स्मृताः. ६. C. and D. read मन्वर्थसर्वधर्माणां for मन्वर्थः सर्वधर्माणां. ७. D. reads स शक्यं for न शक्यं; while C. D. A. F. substitute तु for हि. ८. F. reads °ऽवसानेषु for °ऽवसाने तु. ९. D. reads नैवाति° for न चापि. १०. E. reads वेदकर्ता for वेदस्मर्ता. ११. B. and E. read स्मरन्ति ते धर्मं कल्पे and A. and D. स धर्मं स्मरति कल्पे both for स धर्मं स्मरति मनुः; while F. reads नित्यं स्मरति तद्धर्मं कल्पे for तथा स धर्मं स्मरति मनुः. १२. C. reads कल्पान्तरे ततः for कल्पान्तरान्तरे. १३. B. reads युगभासानुरूपतः, C. युगमासानुरूपतः and E. युगहासानुरूपतः all for युगह्रासानुरूपतः; while F. substitutes °ऽनुसारतः for °ऽनुरूपतः. १४. B. and E. read ज्ञानमुत्तमम्, C. D. and F. ज्ञानमुच्यते for ज्ञानमेव च.

द्वापरे यज्ञमेवाहुर्[१]दानमेकं कलौ युगे ।
कृते तु मानवा धर्मास्त्रेतायां [२]गौतमस्य च ॥ २३ ॥
द्वापरे [३]शाङ्ख-लिखिताः कलौ पाराशराः स्मृताः ।
त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ॥ २४ ॥
द्वापरे कुलमेकं तु कर्तारं [४]च कलौ युगे ।
[५]कृते तु लिप्यते देशस्त्रेतायां ग्राम एव च ॥
द्वापरे कुलमेकं तु कलौ कर्ता विलिप्यते ॥ २५ ॥
कृते[६] सम्भाष्य पतति त्रेतायां स्पर्शनेन [७]च ।
द्वापरे भक्षणे[८]ऽन्नस्य कलौ पतति कर्मणा ॥ २६ ॥
अभिगम्य कृते दानं [९]त्रेतायामभिमन्त्र्य च ।
द्वापरे [१०]याच्यमानं तु [११]सेवया दीयते कलौ ॥ २७ ॥
अभिगम्योत्तमं दानं [१२]मध्यमं साभिमन्त्रणम् ।
अधमं याच्यमानं स्यात्[१३]सेवादानं तु निष्फलम् ॥ २८ ॥
कृते [१४]त्वस्थिगताः प्राणास्त्रेतायां [१५]मांससंश्रिताः ।

१. B. reads दानमेव and C. दानमेवं for दानमेकं. २. F. reads गौतमाः स्मृताः for गौतमस्य च. ३. B. D. and F. read शंख-लिखिताः and C. शंख-लिखितौ both for शाङ्ख-लिखिताः. ४. A. and F. substitute तु for च. ५. This and the following one line are omitted by A. D. and F.; C. also omits the same, but it appears in marginal correction. ६. B. reads कुले पतति सम्भाष्य, C. and D. कृते सम्भाष्य पतितैः and E. कृते पतति सङ्गातात् all for कृते सम्भाष्य पतति. ७. B. E. and F. substitute तु for च. ८. E. substitutes तस्य for ऽन्नस्य; while C. reads पतितकर्मणा for पततिकर्मणा. ९. A. C. and E. read साभिमन्त्रणं and B. अभिमन्त्रणम् for अभिमन्त्र्य च; while D. त्रेतामाहूय दीयते for त्रेतायामभिमन्त्र्य च. १०. A. reads याचमानस्य and F. याच्यमानस्य for याच्यमान तु. ११. A. reads कलौ सेवाय दीयते, B. and E. कलौ दीयेत सेवया and F. सेवकाय कलौ युगे all for सेवया दीयते कलौ. १२. A. C. D. and F. read आहूतं चैव मध्यमम् for मध्यमं साभिमन्त्रणम्. १३. A. reads दानं सेवाय निःफलम् and F. सेवायां निष्फलं स्मृतम् both for सेवादानं तु निष्फलम्; while C. and D. substitute च for तु. १४. A. B. and C. read धातुगताः for त्वस्थिगताः. १५. A. and D. read मांसमेव च and F. मांसमाश्रिताः for मांससंश्रिताः

द्वापरे रुधिरं यावत् कलावन्नाद्यमेव[1] च ॥ २९ ॥
कृते तात्क्षणिकः[2] शापस्त्रेतायां दशभिर्दिनैः ।
मासेन द्वापरे ज्ञेयः कलौ संवत्सरेण तु ॥ ३० ॥
युगेयुगेषु[3] ये धर्मास्तेषु धर्मेषु ये[4] द्विजाः ।
तेषां[5] निन्दा न कर्तव्या युगरूपा द्विजोत्तमाः ॥ ३१ ॥
धर्मश्च[6] सत्यमायुश्च तुर्यांशेन कलौ युगे[7] ।
अदनात्तदनाद्यस्य[8] तुच्छमायुरकार्यतः ॥ ३२ ॥
धर्मश्च लोकदम्भार्थं पाषण्डार्थं तपस्विता[9] ।
विविधा वाग्वञ्चनार्थं[10] कलौ सत्यानुकारिणी[11] ॥ ३३ ॥
अल्पक्षीर-घृता[12] गावो ह्यल्पसस्या[13] च मेदिनी ।
स्त्रोजनन्यः स्त्रियः सर्वाः सुखार्थं[14] कृतमैथुनाः ॥ ३४ ॥
पुरुषाश्च जिताः[15] स्त्रीभी राजानो दस्युभिर्जिताः ।
जितो धर्मश्च पापेन अनृतेन[16] तथा ऋतम् ॥ ३५ ॥
शूद्राश्च ब्राह्मणाचाराः शूद्राचारास्तथा द्विजाः ।
अन्त्यानुयायिनश्चाद्या[17] वर्णास्तदुपजीविनः ॥ ३६ ॥
कृतं तु ब्राह्मणयुगं त्रेता तु क्षत्त्रियं युगम् ।

---

१. B. and C. read कलावन्ननिषेविणः, D. कलौ त्वन्नाद्यमेव च, and F. कलौ चान्नाद्यमेव च all for कलावन्नाद्यमेव च. E. also follows to B. and C., but adds तु before अन्न°. २. B. C. and F. read तत्क्षणिकः for तात्क्षणिकः. ३. A. and F. read °युगे च for °युगेषु. ४. F. substitutes ते for ये. ५. A. D. and F. read ते द्विजा नावमन्तव्याः for तेषां निन्दा न कर्तव्या. ६. B. reads धर्मः सत्यं सत्यसाधुश्चतुर्थांशे for धर्मश्च सत्यमायुश्च तुर्यांशेन. ७. B. and E. read स्थितः for युगे. ८. D. reads this line—

अदानात्तदनाद्यस्य तुच्छमासुरकार्यतः ॥;

while C. अज्ञानात्तदनाद्यत्वं and B. अदनात्तद्दनाद्यत्वं for अदनात्तदनाद्यस्य
९. D. reads तपस्विनः for तपस्विता. १०. B. C. E. and F. read धनार्थं स्यात् for वञ्चनार्थं. ११. C. and D. read सत्यानुसारिणी for सत्यानुकारिणी. १२. B. substitutes °क्षीरास्तथा and E. °क्षीरकृता for °क्षीर-घृताः. १३. B. and D. substitute स्वल्प° for ह्यल्प°. १४. C. and D. read रत्यर्थं for सुखार्थं. १५. B. and E. read निर्जिताः स्त्रीभिर्भूपाला for च जिताः स्त्रीभी राजानो. १६. B. and E. read सत्यं च वितथैर्जितम्; while A. adds हि before ऋतम्. १७. D. reads आढ्या for आद्या and F. आद्यवर्णाः for आद्या वर्णाः.

वैश्यं तु द्वापरयुगं कलि[1]ः शूद्रयुगं स्मृतम् ॥ ३७ ॥
चातुर्वर्णिकनारीणां तथा तुरीयजन्मनाम्[2] ।
प[3]ति-द्विजात्युपास्त्यापि धर्मवृद्धिर्महती कलौ ॥ ३८ ॥
श[4]तेन या कृते दत्ते फलाप्तिः पुरुषस्य च[5] ।
स्या[6]द्दत्तैर्दशभिर्नॄणां फलाप्तिः सा कलौ युगे ॥ ३९ ॥
कृ[7]ते यत् कोटिदस्य स्यात् त्रेतायां लक्षदस्य तत् ।
द्वापरेऽयुतदस्य स्यात् शतदस्य कलौ फलम् ॥ ४० ॥
यु[8]गस्वरूपमाख्यातमन्यच्च[9] गदतः शृणु ।
वर्णानामाश्रमाणां च सर्वेषां धर्मसाधनम् ॥ ४१ ॥
मृ[10]गः कृष्णश्चरेद्यत्र स्वभावेन महीतले ।
वसेत्तत्र द्विजातिस्तु शूद्रो यत्र तु[11] तत्र तु ॥ ४२ ॥
हिमपर्वत-विन्ध्याद्र्यो[12]र्विनशन-प्रयागयोः ।
मध्ये तु पावनो देशो म्लेच्छदेशस्ततः परम् ॥ ४३ ॥
देशेष्वन्येषु या नद्यो धन्याः सागरगाः शुभाः ।
तीर्थानि यानि पुण्यानि मुनिभिः[13] सेवितानि च ॥ ४४ ॥
वसेयुस्तदु[14]पान्तेऽपि शमिच्छन्तो द्विजातयः ।

---

१. B. reads कलिं for कलिः. २. D. reads °जन्मनी for °जन्मनाम्; while C. reads चातुर्वर्णक° for चातुर्वर्णिक°. ३. C. substitutes उपास्त्यादि for उपास्त्यापि; while D. reads यति-द्विजाभ्युपास्त्यादि for पति-द्विजात्युपास्त्यापि. ४. This verse does not appear in B. and E. ५. C. and D. substitute सा for च. ६. C. and D. read दत्तेषु दशभिर्नॄणां फलाप्तिः स्यात् for स्याद्दत्तैर्दशभिर्नॄणां फलाप्तिः सा. ७. This verse does not appear in A. and D., C. also omits it, but gives in marginal correction and interchanges the place and puts before शतेन या कृते, &c. ८. This and the following two lines are omitted in A., but they appear in marginal correction. ९. A. C. and D. read अन्यन्निगदतः शृणु for अन्यच गदतः शृणु. १० B. reads कृष्णो मृगो and E. कृष्णा मृगा both for मृगः कृष्णः. ११. B. reads तु तत्र नु for तु तत्र तु. १२. A. reads हिमवान-प्रयागयोः, C. हिमांशेन प्रयागयोः, F. कुरुक्षेत्र-प्रयागयोः all for विनशन-प्रयागयोः; while D. °विन्ध्याद्रौ विनाशेन प्रयागयोः for °विन्ध्याद्र्योर्विनशन-प्रयागयोः through mistake. १३. A. reads पुण्यान्यायतनानि for मुनिभिः सेवितानि. १४. A. omits this whole line; while B. C. E. and F. read तदुपान्तेषु for तदुपान्तेऽपि; while D. शमिच्छन्नाः for शमिच्छन्तो.

मुनिभिः सेवितत्वाच्च[1] पुण्यदेशः प्रकीर्तितः ॥ ४५ ॥
यत्र पानमपेयस्य[2] देशेऽभक्ष्यस्य भक्षणम् ।
अगम्यागामिता[3] यत्र तं देशं परिवर्जयेत् ॥ ४६ ॥
एवं देशः समाख्यातो यज्ञियस्तु[4] द्विजन्मनाम् ।
एवमेवानुवर्त्तेरन् देशं धर्माभिकाङ्क्षिणः[5] ॥ ४७ ॥
वसन्[6] वा यत्र तत्रापि स्वाचारं न विवर्जयेत् ।
षट्कर्माणि च[7] कुर्वीरन्निति धर्मस्य निश्चयः ॥ ४८ ॥
पराशरश्च[8] यत् प्राह शास्त्रं पुत्रस्य[9] वत्सलः ।
अथ[10] तत्सम्प्रवक्ष्यामि द्विजकर्मादिकं द्विजाः ॥ ४९ ॥
षट्कर्म-वर्णधर्माश्च प्रशंसा गोवृषस्य च ।
अदोह्य-वाह्यौ यौ तत्र[11] सीरं सीरप्रयोगिणाम् ॥ ५० ॥
अमावास्यानिषिद्धानि ततश्च[12] पशुपालनम् ।
अन्न-तोयप्रशंसा च वाह्याऽवाह्या[13] वसुन्धरा ॥ ५१ ॥
अयथार्थकृषौ[14] पापं तदघस्यापि शोधनम् ।
बलिं[15] सीतामखं चापि विवाहाः कन्यकावराः ॥ ५२ ॥
स्त्री-पुन्धर्मो[16] मखाः पञ्च द्विजातिस्वर्गसाधनाः ।
विधिः प्राणाऽग्निहोत्रस्य आधानादिकसंस्कृतिः[17] ॥ ५३ ॥

---

१. B. and F. read सेवितत्वेन for सेवितत्वाच्च. २. A. adds तु before अपेयस्य. ३. A. reads अगम्यागमिनो, B. and E. अगम्यागमनं both for अगम्यागामिता. ४. A. B. and E. read याज्ञिको हि for यज्ञियस्तु. ५. B. C. D. E. and F. read धर्मानुकाङ्क्षिणः for धर्माभिकाङ्क्षिणः. ६. A. B. E. and F. read उषित्वा for वसन् वा. ७. B. and E. read प्रकुर्वीरन् for च कुर्वीरन्. ८. C. and D. read स्वयं प्राह for च यत् प्राह. ९. B. reads स्वसुतवत्सलः for पुत्रस्य वत्सलः. १०. C. and D. read अथातः for अथ तत्. ११. A. B. E. and F. substitute तौ तु for तत्र and B. अदोह्य-वाह्यो for अदोह्य-वाह्यौ; while C. क्षीरं क्षीरप्रयोक्तिणः and D. क्षीरं क्षीरप्रयोक्तिणा both for सीरं सीरप्रयोगिणाम्. १२. B. substitutes तपश्च for ततश्च. १३. C. reads वाप्या वा स्वा for वाह्याऽवाह्या. १४. C. and D. read अथार्थकृषतो पापं तदस्यापि for अयथार्थकृषौ पापं तदस्यापि. १५. D. reads बर्हि for बलिं and विवाहः for विवाहाः. १६. D. reads स्त्रीषु धर्मो for स्त्री-पुन्धर्मो; while F. स्त्री-पुन्धर्मौ. १७. B. E. and F. read निषेकादिकसंस्कृतिः for आधानादिकसंस्कृतिः.

व्रतचर्यादि[1]तद्धर्मः प्रशंसा पुत्रजन्मनः ।
कृत्स्नो[2] गृहस्थधर्मश्च भक्ष्या[3]ऽभक्ष्यं तथैव च ॥ ५४ ॥
निषिद्धवस्तुकथनं पात्रशुद्धिस्तत[4]ः परम् ।
द्रव्या[5]णां च तथा शुद्धिरुपा[6]कर्मादिकर्म च ॥ ५५ ॥
अनध्यायास्तथा श्राद्धं विप्र[7]-काल-हविर्युतम् ।
बलिर्नारायणीयश्च सूत[8]काशौचमेव च ॥ ५६ ॥
परिषत्प्रायश्चित्तानि तद्धृतानि द्विजो[9]त्तमाः ।
विधिवत्सर्वदानानि तेषां चैव फलानि च ॥ ५७ ॥
भूमिदानप्रशंसा च विशेषो विप्र-कालयोः ।
इष्टापूर्त्तौ तथा विद्वन् त[10]योर्भिन्नफलानि च ॥ ५८ ॥
[11]प्रतिग्रहविधिस्तद्वद्यथा य[12]स्य प्रतिग्रहः ।
विनायकादिशान्तीनां विधयो[13]ऽथ द्विजोत्तमाः ॥ ५९ ॥
वानप्रस्थस्य धर्मो[14]ऽथ तथा धर्मो यतेरपि ।
चतुराश्रमभेदोऽपि वपुर्निन्दा तथैव च ॥ ६० ॥
[15]योगोऽर्चिर्धूममार्गौ च कालं रुद्रा[16]न्तमेव च ।
दृष्टा[17]तीतं परं ध्येयं सर्वमेतत्पराशरः ॥ ६१ ॥

---

१. B. reads °व्रतधर्मः for °दितद्धर्मः; while A. and E. substitute च for °दि°; F. reads ब्रह्मचर्या च for व्रतचर्यादि° ; while D. substitutes °तद्धर्माः for °तद्धर्मः. २. C. reads कृत्स्ना गृहस्थधर्माः. ३. E. reads भक्ष्याऽभक्ष्या तथैव for भक्ष्याऽभक्ष्यं तथैव. ४. A. C. D. and F. read तथा पुनः for ततः परम्. ५. C. reads द्रव्याणि for द्रव्याणां. ६. D. reads उपाकर्माणि for उपाकर्मादि°; while F. substitutes वा for the latter च. ७. D. reads विप्राः for विप्र°. ८. E. reads स्नातकाशौचम् for सूतकाशौचम्. ९. C. reads यथा द्विज and A. and D. यथा द्विजाः for द्विजोत्तमाः. १०. C. reads तयोः पृथक्, D. and F. पृथक् तयोः for तयोर्भिन्न°. ११. A. reads परिग्रह° and परिग्रहः for प्रतिग्रह° and प्रतिग्रहः respectively. १२. D. substitutes तस्य for यस्य; while B. and E. तत्र for तद्वत्. १३. C. and D. read विधयश्च for विधयोऽथ. १४. This verse is omitted in B.; while C. D. and F. substitute ऽपि for ऽथ. १५. B. and E. read विधूममार्गौ for ऽर्चिर्धूममार्गौ. १६. B. and E. read भद्रान्त्रमेव and C. भद्रान्तमेव both for रुद्रान्तमेव; while A. कलिशूद्रान्त्रमेव for कालं रुद्रान्तमेव and F. कालरुद्रान्त° for कालं रुद्रान्त°. १७. B. and E. दिष्टातीतं परं, C. and D. दृष्टं च तत्परं and F. दिष्टातीतपरं all for दिष्ट्यातीतं परं.

प्रोक्तवान् व्यासमुख्यानां शेषं मुनिविभाषितम् ।
नियुक्तः सुव्रतः शेषख्यापनाय द्विजन्मनाम्[1] ॥ ६२ ॥

पराशरो व्यासवचो निशम्य[2]
यदाह शास्त्रं चतुराश्रमार्थम् ।
युगानुरूपं च समस्तवर्ण-[3]
हिताय वक्ष्यत्यथ सुव्रतस्तत् ॥ ६३ ॥

शक्तिसूनोरनुज्ञातः सुतपाः सुव्रतस्त्विदम् ।
[4]चतुर्वर्णाश्रमाणां च हितं शास्त्रमथाब्रवीत् ॥ ६४ ॥

इति श्रीबृहत्पाराशरीये[5] धर्मशास्त्रे [6]व्यासप्रश्ने सुव्रतप्रोक्तायां संहितायां शा[7]स्त्रसङ्क्षेपोद्देशकथनं नाम प्रथमोऽध्यायः ॥ १ ॥

१. A. C. D. and F. read शेषं विप्राणां ख्यापनाय च for शेषख्यापनाय द्विजन्मनाम्; while B. शेषं ख्यापनाय द्विजन्मनाम् for the same. २. B. reads ऽवगम्य and C. ऽधिगम्य for निशम्य. ३. D. °वर्णा हिताय for °वर्ण-हिताय. ४. A. B. C. E. and F. read चतुर्णामाश्रमाणां for चतुर्वर्णाश्रमाणां. ५. A. and F. read पाराशरे for पाराशरीये. ६. A. omits व्यासप्रश्ने; while A. C. D. E. and F. omit सुव्रतप्रोक्तायां संहितायां. ७. A. omits शास्त्र°; while B. reads शास्त्रे for the same.

# बृहत्पराशरसंहिता ।

## द्वितीयो ऽध्यायः ।

[1]पराशरमतं पुण्यं पवित्रं पापनाशनम् ।
[2]विहितं ब्राह्मणार्थाय धर्मसंस्थापनाय च ॥ १ ॥
चतुर्णामपि वर्णानामाचारो धर्मपालनम् ।
आचारभ्रष्ट[3]देहानां भवेद्धर्मः पराङ्मुखः ॥ २ ॥
षट्कर्माभिरतो नित्यं देवता-ऽतिथिपूजकः ।
हुतशेषं च[4] भुञ्जानो ब्राह्मणो नावसीदति ॥ ३ ॥

( [5]व्यास उवाच ) ।

कर्माणि कानीह कथं च तानि
कार्याणि वर्णैश्च किमाद्यकानि[6] ।
तेषामनेहा[7]करणे विधिश्च
सर्वं प्रसादात् प्रतनुष्व मह्यम् ॥ ४ ॥

( [8]पराशर उवाच ) ।

कर्मषट्कं[9] प्रवक्ष्यामि यत् कुर्वन्तो द्विजातयः ।
गृहस्था अपि मुच्यन्ते संसारै[10]र्बन्धहेतुभिः ॥ ५ ॥
[11]अथोद्देशक्रमं शास्त्रं यच्छ्रुतं [12]श्रुतिदृष्टिकृत् ॥
[13]तदुक्तं कर्म यत् पुंसां शृणुध्वं पापनाशनम् ॥ ६ ॥

---

१. C. adds श्री before पराशरमतं. २. A. C. and D. read चिन्तितं for विहितं. ३. B. E. and F. read आचारहीन° for आचारभ्रष्ट°. ४. B. C. D. E. substitute तु for च. ५. व्यास उवाच does not appear in any of the manuscripts, but the following verse plainly contains questions, and as the preceding verses belong to Parâśara, these questions must be of Vyâsa. ६. E. and. F. read किमादिकानि for किमाद्यकानि; while B. कर्माणि कानि च कथं हि for कर्माणि कानीह कथं च. ७. F. reads अनेहाः for अनेहा°. ८. This also does not appear in any of the MS., but the nature of following verses seems to be of Parâśara. ९. B. E. and F. read तत्षट्कर्म for कर्मषट्कं. १०. B. and. E. read °र्दृढबन्धनैः, F. °र्गृहबन्धनः both for °र्बन्धहेतुभिः. ११. D. reads यथो° for अथो°. १२. D. reads श्रुतिहर्षकृत् for श्रुतिदृष्टिकृत्. १३. B. C. E. and F. read तदुक्तकर्मकृत् for तदुक्तं कर्म यत्; while D. substitutes तत् for यत्.

संध्या स्नानं जपश्चैव देवतानां च पूजनम् ।
वैश्वदेवं[1] तथाऽऽतिथ्यं षट्कर्माणि दिने दिने ॥ ७ ॥
प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।
वैश्वदेवे तु सम्प्राप्तः सो ऽतिथिः स्वर्गसङ्क्रमः ॥ ८ ॥
सन्ध्यामथ[2] प्रवक्ष्यामि देवता-काल-नामभिः ।
वर्णार्षि-च्छन्दसा युक्ता यद्विधा[3] च प्रकीर्तिता ॥ ९ ॥
यावन्मन्त्रा[4] यथोपास्तिरुपस्पर्शनमेव च ।
आवाहनं विसर्गं च यावन्मन्त्र[5]क्रमेण तु ॥ १० ॥
दिवसस्य च रात्रेश्च सन्धिः[6] सन्ध्येति कीर्तिता ।
सोपास्या सद्विजैर्यत्नात्[7] स्यात्तैर्विश्वमुपासितम् ॥ ११ ॥
मध्याह्ने[8] ऽपि च सन्धिः स्यात् पूर्वस्याह्नः परस्य च ।
पूर्वाह्णो[9] ह्यपराह्णस्तु क्षपा[10] चेति श्रुतिक्रमः ॥ १२ ॥
पूर्वा[11] सन्ध्या तु गायत्री ब्रह्माणी[12] हंसवाहना ।
रक्तपद्मारुणा देवी रक्तपद्मासनास्थिता ॥ १३ ॥
रक्ताभरणभासाङ्गा[13] रक्तमाल्याम्बरा तथा ।

---

१. C. reads वैश्वदेवम् for वैश्वदेवं. २. B. C. and E. read अथ सन्ध्यां for सन्ध्यामथ. ३. A. reads यावद्विचार्य यथार्चनम्, but gives the marginal reading यद्विधा च प्रकीर्तिता. B. reads युक्ता याद्विधा च यथोचिता, C. and D. युक्तं याद्विधानं यथार्चनम्; F. also reads the same, but differs युक्तां for युक्तं and E. युक्तां यद्विधां च यथार्चिताम् all for युक्ता यद्विधा च प्रकीर्तिता. ४. B. and. C. read यावन्मंत्रं for यावन्मंत्रा, E. यावन्मन्त्रान्यथोपास्ति° for यावन्मन्त्रा यथोपास्ति°; while A. B. E. and. F. read °रूपंस्पर्शनं for °रुपस्पर्शन°. ५. B. C. E. and F. read यावन्मात्रं, D. यावन्मानं both for यावन्मन्त्र°. ६. D. reads सन्ध्यः for सन्धिः; while B. substitutes गीयते for कीर्तिता. ७. C. and F. read स द्विजैः for सद्विजैः. ८. C. reads मध्याह्नोऽपि for मध्याह्ने ऽपि; while A. B. C. and F. read पूर्वस्याह्नोऽपरस्य and D. पूर्वस्याऽह्नः परस्परम् both for पूर्वस्याह्नः परस्य च. ९. A. B. C. and E. पूर्वाह्णोऽ पराह्णः for पूर्वाह्णो ह्यपराह्णः; while B. and E. substitute च for तु. १०. C. reads क्षिपा चेति श्रुतिक्रमात्, E. क्षिया चेति श्रुतिक्रमः and D. क्षये चेति श्रुतिक्रमात् all for क्षपा चेति श्रुतिक्रमः. ११. D. and F. read पूर्वसन्ध्या for पूर्वा सन्ध्या. १२. A. C. ब्राह्मणी and D. reads ब्रह्मणः for ब्रह्माणी; while C. हंसवाहिनी for हंसवाहना. १३. A. reads °भारसाङ्गा for °भासाङ्गा; while B. रक्ताभरणरक्ताङ्गी for रक्ताभरणभासाङ्गा and E. रक्ताभ्रणभराङ्गा for the same.

अक्षमाला स्रग्धरा[1] च वरहस्ता ऽमरार्चिता ॥ १४ ॥
प्रागा[2]दित्योदयाद् विद्वान् मुहूर्ते वैधसे[3] सति ।
उत्थायोपासयेत् सन्ध्यां यावत् स्यादर्कदर्शनम् ॥ १५ ॥
'विश्वमातः सुराभ्यर्च्ये पुण्ये गायत्रि वैधसि ।
आवाहयाम्युपास्त्यर्थं एह्येनोघ्नि[4] पुनीहि माम्' ॥ १६ ॥
सन्ध्या माध्याह्निकी श्वेता सावित्री रुद्रदेवता[5] ।
वृषेन्द्रवाहना देवी ज्वलत्त्रिशिख[6]धारिणी ॥ १७ ॥
श्वेताम्बरधरा श्वेता नागा[7]भरणभूषिता ।
श्वेतस्रगक्षमाला च[8] कृतानुरक्तिशङ्करा[9] ॥ १८ ॥
जला[10]धारा धरा धात्री धरेन्द्राङ्कभवा तथा[11] ।
स्व[12]भाविभातभूराद्या सुरौघनुतपाद्दया ॥ १९ ॥
'मातर्भवानि विश्वेशि[13] विश्वे विश्वजनार्चिते ।
शुभे वरे वरेण्यैहि[14] आहूतासि पुनीहि माम्' ॥ २० ॥

---

१. A. reads स्रग्वरा for स्रग्धरा and C. and D. स्रुवाधारा चारुहस्ता for स्रग्धरा च वरहस्ता. २. Before this verse B. inserts the following verse:—

प्रातः सन्ध्यां सनक्षत्रामुपासीत यथाविधि ।
सादित्यां पश्चिमां सन्ध्यामर्धास्तमितभास्कराम् ॥.

३. B. reads वैधसि स्थिते and D. वैधवे सति for वैधसे सति. ४. A. reads अंहो जहि, D. एनोऽस्ति, and F. अंहोघ्नि for एनोघ्नि. ५. A. B. E. and F. read शम्भुदेवता for रुद्रदेवता. ६. A. reads° त्रिशूल° for °त्रिशिख°; while D. बालत्रिशिख° for ज्वलत्त्रिशिख°. ७. D. reads नानाभरणभूषिता for नागाभरणभूषिता. ८. F. reads °माल्या च for °माला च; while A. C. and D. substitute ऽपि for च. ९. A. C. and D. read °रक्तशङ्करा for °रक्तिशङ्करा; while B. E. °रक्तिशाङ्करा for the same. १०. B. C. E. and F. read जलाधारधरा धात्री for जलाधारा धरा धात्री; while A. जलाधारा वीरजटा for the same. ११. A. B. E. and F. read धरेन्द्राद्रिभवा for धरेन्द्राङ्कभवा; while D. substitutes ऽभवा for तथा. १२. B. reads this line thus:—

स्वभावभूरिभूषाढ्या स्वराढ्याऽनुत्तमाऽद्वया ।
स्वभावभावभूराद्या स्वराद्यनुतपाद्दया ॥.

A. E. स्वराद्यनुत° and F. स्वरादिनुत°. for सुरौघनुत°. १३. A. E. and F. read विश्वेशे for विश्वेशि. १४. A. reads ऽह्नि आहूतैः B. E. and F. एहि आहूतैः for एहि आहूतासि; while D. reads वरेण्याहि आहूता हि for वरेण्यैहि आहूतासि.

सन्ध्या सायन्तनी कृष्णा विष्णुदेवी[1] सरस्वती ।
खगगा[2] कृष्णवस्त्रा तु[3] शङ्खचक्रगदाधरा ॥ २१ ॥
कृष्णस्रग्भूषणैर्[4]युक्ता सर्वज्ञानमया[5] वरा ।
सर्ववाग्देवता[6] सर्वा ब्रह्मादिवचसि स्थिता ॥ २२ ॥
वीणा-ऽक्षमालिका-चाप[7]हस्ता स्मित[8]वरानना ।
चतुर्दशजनाभ्यर्च्या कल्याणी शुभ[9]वाक्प्रदा ॥ २३ ॥
मात[10]र्वाग्देवि वरदे वरेण्ये वचन[11]प्रदे ।
सर्वा[12]मरगणस्तुत्ये आहूतै[13]हि पुनीहि माम् ॥ २४ ॥
ब्रह्मेशार्क-हरीणां तु संग[14]मस्तूभयोर्भवेत् ।
माध्याह्निकायां सन्ध्यायां सर्व[15]देवसमागमः ॥ २५ ॥
पूजाभिकाङ्क्षिणो ये च ये च केचि[16]ज्जलार्थिनः ।
श्राद्धा[17]न्नभागधेया ये ये चाग्निहुतभागिनः ॥ २६ ॥
अन्यान्युच्चावचानीह स्थावराणि चराणि च ।
माध्याह्निकी[18]मपेक्षन्ते तेषामाप्यायनी हि सा ॥ २७ ॥
यस्तस्यां नार्चयेद्देवांस्तर्पये[19]न्न पितॄंस्तथा ।
भूतान्युच्चावचानीह सोऽन्धतामिस्रमृच्छति ॥ २८ ॥
ईशा[20]न्याभिमुखो भूत्वा द्विजः पूर्वमुखोऽपि वा ।

---

१. A. and D. read विष्णुदेवा for विष्णुदेवी. २. D. स्वर्गगा and F. खे माया: for खगगा. ३. B. and E. substitute च for तु. ४. D. reads कृष्णभ्रूभूषणैर् for कृष्णस्रग्भूषणैर्. ५. B. and E. read °मया च सा, F. °मया ऽभया, and C. °मयि परा all for °मया वरा. ६. B. and E. read °देवताः for °देवता. ७. We follow here only A.; while B. reads °चार° and C. D. °चारु° for° चाप°; and E. and F. quite mistaken. ८. A. reads °हस्ता स्मितचारुजनानना for °चापहस्ता स्मितवरानना; while D. reads स्मिता for स्मित°. ९. D. reads शुभकप्रदा for शुभवाक्प्रदा. १०. A. C. D. and F. read मातर्वाग्देवते देवि for मातर्वाग्देवि वरदे. ११. D. reads च वरप्रदे for वचनप्रदे. १२. D. सर्वमरुद्गणस्तुत्ये for सर्वामरगणस्तुत्ये. १३. D. reads आहूते हि पुनाहि for आहूतैहि पुनीहि. १४. D. reads सङ्गमोऽस्तूभयोः for सङ्गमस्तूभयोः. १५. B. C. and E. read सर्वे देवाः समागताः for सर्वदेवसमागमः. १६. D. reads किंचित् for केचित्. १७. D. substitutes आज्य° for श्राद्ध°. १८. B. C. D. E. and F. read माध्याह्निकाम् and आप्यायना for माध्याह्निकीम् and आप्यायनी, but C. and D. read आप्यायिका for आप्यायनी. १९. D. reads तर्पयेत for तर्पयेन्न. २०. B. reads ईशानाभिमुखः C. and D. ईशान्यभिमुखो for ईशान्याभिमुखो.

सन्ध्यामुपासये[1]द्विद्वान्यथावत्तन्निबोधत ॥ २९ ॥
आ म[2]णेर्बन्धनाद्धस्तौ पादौ चाऽऽजानुतः शुचिः ।
प्रक्षाल्याऽऽ[3]चामयेद्विद्वानन्तर्जानुकरो द्विजः ॥ ३० ॥
निर्मला[4]फेनपूताभिर्मनोज्ञाभिः प्रयत्नवान् ।
आचा[5]मेद्ब्रह्मतीर्थेन पुनराचमनाच्छुचिः ॥ ३१ ॥
मु[6]खनिर्मार्जनं कृत्वा द्विस्तेनैवाधरान्[7] यथा ।
अद्भिश्च संस्पृशेत् खानि सर्वाण्यपि विशुद्धये ॥ ३२ ॥
अङ्गुष्ठेन प्रदेशिन्या सव्यपाणिस्थवारिणा ।
घ्राणं संस्पृश्य नेत्रे च तेना[8]नामिकया श्रुती ॥ ३३ ॥
नाभिं च तत्कनिष्ठाभ्यां वक्षः करतलेन च ।
शिरः सर्वाभिरंसौ च ह्यङ्गुल्यग्रैश्च संस्पृशेत् ॥ ३४ ॥
आच[10]म्य प्राणसंरोधं कृत्वा चोपस्पृशेत् पुनः ।
अत्रोपस्प[11]र्शने मन्त्रं प्रातः केचित् पठन्ति हि[9] ॥ ३५ ॥
सूर्यश्चमेति मन्त्रेण प्रातराचमनं स्मृतम् ।
‘आपः पुनन्तु’ मध्याह्ने[12] सायमग्निश्चमेति च ॥ ३६ ॥
मन्त्राभिमन्त्रितं कृत्वा कुशपूतं च[13] तज्जलम् ।
आचम्य विधिवद्धीमान् सन्ध्योपासनमाचरेत्[14] ॥ ३७ ॥

---

१. B. C. D. and E. read यद्वत्तथावत् for विद्वान्यथावत् ; while C. substitutes उपासते for उपासयेत्. २. B. and E. read आमणिबन्धनात् for आ मणेर्बन्धनात्. ३. A. B. C. read आचमयेत् for आचामयेत् ; while D. ह्याचमेत् for the same. ४. D. reads निर्मलात् for निर्मला°. ५. C. D. read आचमेत् for आचामेत्. ६. A. C. D. and F. read वस्त्र° for मुख°. ७. A. ऽपरानया, B. and E. ऽपराण्यपि, C. and F. ऽपराण्यथ and D. ऽपराण्यथा for ऽधरान् यथा ; while F. substitutes तथैव for तेनैव. ८. D. reads नासिकया for ऽनामिकया. ९. B. C. D. and E. omit हि. १०. D. reads अनम्य for आचम्य. ११. B. and E. read उपसर्जने for उपस्पर्शने. १२. A. and D. read मध्याह्ने पुनन्त्वापो विपर्ययम् and omit the following whole line—

मन्त्राभिमन्त्रितं कृत्वा कुशपूतं च तज्जलम् ।,

but D. reads मध्याह्नं पुनस्त्वापो ; while F. does not insert the whole verse. १३. B. reads जलं तथा and A. C. E. and F. तथा जलम् both for च तज्जलम्. १४. A. C. and F. read आरभेत् for आचरेत् ; while F. substitutes धर्मान् for धीमान्.

सोङ्कारां चैव गायत्रीं जप्त्वा व्याहृतिपूर्व्विकाम्[1] ।
आपोहिष्ठादि जल्पन्ति च्छन्दो-देवर्षिपूर्वकम्[2] ॥ ३८ ॥
छन्दोभिर्विनियोगैश्च मन्त्र-ब्राह्मणसंयुतम् ।
एतद्धीनं न कुर्वीत कुर्याच्चेत् स्यात्तदासुरम्[3] ॥ ३९ ॥
मृत्युभीतैः पुरा देवैरात्मनश्छादनाय च ।
छन्दांसि संस्मृतानीह च्छादितास्तैस्ततो[4] ऽमराः ॥ ४० ॥
छादनाच्छन्द उद्दिष्टं वाससीवाथ[5] वाऽऽकृतेः ।
छन्दोभिरावृतं सर्वं विद्यात् सर्वत्र नान्यथा[6] ॥ ४१ ॥
यस्मिन्मन्त्रे[7] तु यो देवस्तेन देवेन चिह्नितम् ।
मन्त्रं[8] तद्दैवतं विद्यात् सैवं[9] तस्य तु देवता ॥ ४२ ॥
येन यदृषिणा दृष्टं सिद्धिः प्राप्ता तु येन वै ।
मन्त्रेण तस्य स प्रोक्तो[10] मुनेर्भावस्तदात्मकः ॥ ४३ ॥
यत्र कर्मणि चारब्धे जप-होमार्चनादिके[11] ।
क्रियते येन मन्त्रेण विनियोगस्तु[12] स स्मृतः ॥ ४४ ॥
अस्य मन्त्रस्य चाऽर्थोऽयमयं[13] मन्त्रोऽत्र वर्तते ।
तत्तस्य ब्राह्मणं[14] ज्ञेयं मन्त्रस्येति श्रुतिक्रमः ॥ ४५ ॥
एतद्धि पञ्चकं ज्ञात्वा क्रियते कर्म यद्द्विजैः ।
तदनन्तफलं तेषां भवेद्वेदनिदर्शनात्[15] ॥ ४६ ॥
एकांशेनापि[16] यन्न्यूनं कुर्यात् कर्म द्विजोत्तमाः[17] ।

---

१. C. and F. read °पूर्वकाम् and D. °पूर्वक्रम्. २. B. E. and F. read °देवता-ऋषिपूर्वकम् for °देवर्षिपूर्वकम्. ३. D. reads ह्येतत् for चेत् स्यात् ४. D. reads अतः for ततः. ५. A. and F. वाससी कृतिरेव वा, B. C. E. वाससी वाथ वा कृते and D. वाससी कृतिरेव च all for वाससी वाथ वा ऽऽकृतेः. ६. B. C. D. and E. read नान्यतः for नान्यथा. ७. B. substitutes सत्रे for मन्त्रे; while E. substitutes च for तु and D. ये देवास्तेन मन्त्रेण for यो देवस्तेन देवेन. ८. B. and E. read तद्देवतं for तद्दैवतं; while D. substitutes यत् for तत्. ९. B. and E. substitute सेति for सैव; while C. reads सन्ति तत्र तु देवता and D. सवितस्तत्र देवता for सैव तत्र तु देवता. १०. D. reads संप्रोक्ते for स प्रोक्तो. ११. B. reads °दिकैः for °दिके. १२. B. and E. read नियोगस्तस्य संस्मृतः A. also reads the same, but corrects स स्मृतः for संस्मृतः; while F. विनियोगश्च तस्य सः for विनियोगस्तु स स्मृतः १३. D. reads अधः for अर्थः and ऽनुवर्तते for ऽत्र वर्तते. १४. D. reads ब्रह्मणा for ब्राह्मणे. १५. F. reads वेदे for वेद° १६. D. reads अकामेनापि for एकांशेनापि. १७. A. E. and F. read ऽद्विजो मतिः, C. and D. द्विजोऽपि यः for द्विजोत्तमाः.

तेनासौ हन्यते कर्ताऽमृतो गर्ह्यत्वमृच्छति ॥ ४७ ॥
कुर्वन्नज्ञो द्विजः कर्म जप-होमादि किञ्चन।
नासौऽ तस्य फलं विन्देत् क्लेशमात्रं हि तस्य तत् ॥ ४९
आपद्यते स्थाणु गर्तं स्वयं वापि प्रलीयते।
यातयामानि च्छन्दांसि भवन्त्यफलदान्यपि ॥ ५० ॥
सिन्धुद्वीप ऋषिश्छन्दो गायत्री ऋक्षु तिसृषु।
आपो हि दैवतं प्राहुरापोहिष्ठादिषु द्विजाः॥ ५१ ॥
गाधिजो राजपुत्रस्तु द्रुपदायामृषिर्भवेत्।
आनुष्टुभं भवेच्छन्द आपश्चैव तु दैवतम् ॥ ५२ ॥
अघमर्षणसूक्तस्य ऋषिरेवाघमर्षणः
छन्दोस्यानुष्टुभं प्राहुरापश्चैव तु दैवतम् ॥ ५३ ॥
सौत्रामण्यावभृतके विनियोगोऽस्य कल्पितः।
उदुत्यमृषिः प्रस्कण्वो गायत्रं सूर्यदेवता ॥ ५४ ॥
चित्रमित्यत्र कुत्सस्तु शक्करी सूर्यदैवतम्।
प्रणवो भूर्भुवः स्वश्च गायत्र्यापो ऋचां त्रयम् ॥ ५५ ॥
द्रुपदाघमर्षणं सूक्तं मार्जने व्याहरेदिति।
स्मृतिभिः परिशिष्टैश्च विशेषस्तोयसेचने । ५६ ॥
उक्तोऽधोर्ध्वविभागेन कर्तव्यः सोऽपि सद्द्विजैः।
आपोहिष्ठेति च ऋचामष्टाक्षरपदेन च ॥ ५७ ॥

---

१. A. B. and E. read गर्तत्वम्, D. गन्ताऽन्धम् for गर्ह्यत्वम्, C. also reads the same as D., but corrects गर्ह्यत्वम्. २. D. reads कञ्चन for किञ्चन. ३. A. reads कर्मफलाप्तः स्यात् तस्य for फलं विन्देत्; while D. substitutes कर्ममात्रं for क्लेशमात्रं. ४. A. substitutes च for वा. ५. B. and E. read फलदानि for ऽफलदानि. ६. B. and E. read °द्वीपर्षिश्छन्दो वै for °द्वीप ऋषिश्छन्दो. C. also follows this, but adds वै in the marginal correction after च्छन्दो. ७. A. B. E. and F. read कोकिलो and D. गोभिलो for गाधिजो. ८. B. and E. read द्रुपदायामघं उच्यते, A. द्रुपदायार्षमुच्यते and F. द्रुपदा ऋषिरुच्यते all for द्रुपदायामृषिर्भवेत्. ९. D. gives this verse after प्रणवो भूर्भुवः स्वश्च, &c. C. also omits it, but gives in marginal correction. १०. A. E. and F. read अघमर्षणम् for अघमर्षणः. ११. B. C. E. read उदुत्यमिति for उदुत्यमृषिः. १२. C. D. E. and F. read सूर्यदेवता for सूर्यदैवतम्. १३. A. reads गायत्र्यापो ह्यृचां, D. गायत्र्याप ऋचा both for गायत्र्यापो ऋचां. १४ A. and E. read °सेवने for °सेचने. १५. D. reads उल्का ऽयोर्द्ध° for उक्तोधोऽर्ध्व°. १६. B. C. D. F. read स for सद्. १७. A. and D. read त्र्यृचमष्टाक्षरपदं न च for ऋचामष्टाक्षरपदेन च. E. also reads the same; while C. substitutes त्रिऋचा° for च ऋचा°.

पादान्ते तु क्षिपेद्वारि पादमध्ये न च क्षिपेत्।
भूमौ मूर्ध्नि तथाऽकाशे मूर्ध्न्याकाशे पुनर्भुवि ॥ ५८ ॥
एवं वारि द्विजः सिञ्चन् तर्पयेत् सर्वदेवताः।
ऋगन्ते मार्जनं कुर्यात् पादान्ते वा समाहितः ॥ ५९ ॥
ऋगर्धे वा प्रकुर्वीत शिष्टानां मतमीदृशम्।
उदुत्यं, चित्रं देवानामुपस्थाने नियोजयेत्।
हंसः शुचि षदित्यादि केचिदिच्छन्ति सूरयः ॥ ६० ॥
अव्याकृतमिदं ह्यासीत् सदेवासुर-मानुषम्।
संक्षोभायासृजद्ब्रह्मा सप्तेमा व्याहृतीः पुरा ॥ ६१ ॥
भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च।
आद्यास्तिस्रो महाप्रोक्ताः सर्वत्रैव नियोजनात् ॥ ६२ ॥
अग्निर्वायुस्तथा सूर्यो बृहस्पत्याप एव च।
इन्द्रश्च विश्वेदेवाश्च देवताः समुदाहृताः ॥ ६३ ॥
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च।
त्रिष्टुप् च जगती चैव च्छन्दांस्येतान्यनुक्रमात् ॥ ६४ ॥
भरद्वाजः कश्यपश्च गौतमोऽत्रिस्तथैव च।
विश्वामित्रो जमदग्निर्वसिष्ठश्चर्षयः क्रमात् ॥ ६५ ॥
एताभिः सकलं व्याप्तमेताभ्यो नास्ति चापरम्।
सप्तैते स्वर्गलोका वै सत्यादूर्ध्वं न विद्यते ॥ ६६ ॥

---

१. A. B. C. E. and F. read this line thus :—

पदान्ते प्रक्षिपेद्वापि पदमध्ये तु न क्षिपेत्।

२. C. and D. substitute तथा for पुनः. ३. A. C. and D. omit this verse :—

एवं वारि द्विजः सिञ्चन् तर्पयेत् सर्वदेवताः।
ऋगन्ते मार्जनं कुर्यात् पादान्ते वा समाहितः ॥;

while C. gives in the marginal correction the following one line which is an additional one :—

पुनर्मूर्ध्नि पुनर्मूर्ध्नि आकाशे च पुनर्भुवि।.

४. B. and C. read संक्षेपेण and E. F. संक्षेपाय for संक्षोभाय; while C. reads सृजन् for ऽसृजद्. ५ D. reads सप्तमा for सप्तेमाः. ६. A. सर्वत्र तानि योजयेत्, B. E. and F. तासां सर्वत्र योजना, both for सर्वत्रैव नियोजनात्. ७. A. B. E. and F. read आदित्यो for सूर्यो. ८. B. and E. omit च; while C. D. substitute ऋषिः for ऋषयः. ९. A. सत्यस्योर्ध्वं च for सत्यादूर्ध्वं न.

तस्माल्लोकात् परा मुक्तिरर्वाचीनादपेक्षया[1]।
प्राणसंयमनेष्वेता अभ्यस्या[2]: पूरकादिभिः ॥ ६७ ॥
ओमा[3]पोज्योतिरित्येतच्छिरः पश्चात् प्रयुज्यते।
प्रत्योङ्कारसमायुक्तो मन्त्रोऽयं तैत्तिरीयके ॥ ६८ ॥
अत्रोङ्कारवदार्षादि विदुर्ब्रह्मविदो जनाः।
प्रणवाद्यन्तगायत्री प्राणायामेष्वयं विधिः ॥ ७० ॥
गायत्र्यादिकचित्रान्तैर्मन्त्रैश्च प्रागुदीरतैः।
उपासीरन्द्विजास्तावद्यावन्नो[4]देति भास्करः ॥ ७१ ॥
गवां वालपवित्रेण यस्[5]तु सन्ध्यामुपासते।
सर्वतीर्थाभिषेकं तु लभंते[6] नात्र संशयः ॥ ७२ ॥
गोवालं[7] दर्भसारं च खड्गं कनकमेव च।
दर्भ-ताम्र-तिलै[8]र्वापि एतै[9]स्तर्पणकृद्- द्विजाः ॥ ७३ ॥
स सन्तर्प्य पितृन्देवानात्मानं त्रिदिवं नयेत्।
त्रिंशत्कोट्य[10]स्तु विख्याता मन्देहा नाम राक्षसाः ॥ ७४ ॥
उद्यन्[11]तं ते विवस्वन्तं बलादिच्छन्ति खादितुम्।
दिने दिने सहस्रांशुरलक्ष्यैस्तैरभिद्रुतः ॥ ७५ ॥
भानु[12]हीनः कृतस्तूर्णं तद्भयत्वमिवागत ः।
अतस्तस्य च तेषां च ह्य[13]भूद्युद्धं सुदारुणम् ॥ ७६ ॥
किं भविष्यति युद्धेस्मिन्नित्यभूत्सुरविस्मयः।
अरुणस्य च ये बाणा ज्व[14]लन्तो ये च भास्वतः ॥ ७७ ॥
विलक्ष्यास्[15]ते निवर्तन्ते मन्देहानामदर्शनात् ॥ ७८ ॥

---

१. A. reads °द्यपेक्षया and D. °परेक्षया both for °दपेक्षया. २. A. B. and E. read अभ्यस्ता for अभ्यस्याः. ३. F. omits ओम्. ४. B. C. and E. substitute च for न. ५. A. and B. read ये तु for यस्तु. ६. A. reads लभन्ते. for लभते ७. D. and E. read गोवालदर्भसारं च for गोवालं दर्भसारं च. ८. C. दर्भं ताम्र-तिलम् and D. दर्भ-ताम्र-तिलं both for दर्भ-ताम्र-तिलैः. ९. A. reads तर्पणकैः for तर्पणकृद् ; while A. and B. substitute एभिः for एतैः. १०. B. reads अशक्तो यस्तु for त्रिंशत्कोटयस्तु. ११. B. reads उत्पतन्ते for उद्यन्तं ते. १२. B. C. D. E. read भानुर्हीनः for भानुहीनः; while B. and E. substitute नित्यं for तूर्णं. १३. B. and E. read भवेद् for ह्यभूद्. १४. A. C. and F. read ये ज्वलन्तो विवस्वतः for ज्वलन्तो ये च भास्वतः. १५. C. reads विलक्षाः for विलक्ष्याः and F. विलक्षणाः for the same.

रवेरप्यंशवो ह्यस्माद्यातायाता ह्यशक्तितः ।
अप्राप्त्या च शरीराणां स्वामिन्येव लयं गताः ॥ ७९ ॥
हेषाशब्दमकुर्वाणाः शफस्फुरणवर्जिताः ।
स्तब्धाङ्गा निर्जवा जाताः सूर्यस्यन्दनवाजिनः ॥ ८० ॥
ततो देवगणाः सर्वे ऋषयश्च तपोधनाः ।
यत् सन्ध्यां ते उपासन्तः क्षिपन्त्येतज्जलं महत् ॥ ८१ ॥
ओङ्कारब्रह्मसंयुक्तं गायत्र्याचाभिमन्त्रितम् ।
दह्यन्ते तेन ते दैत्या वज्रीभूतेन वारिणा ॥ ८२ ॥
सहस्रांशो रथे तिष्ठन् योऽधीयानश्चतुः श्रुतीः ।
याज्ञवल्क्यः समास्यैतत्त्रिदशाननुक्तवांस्तथा ॥ ८३ ॥
मत्वेत्यनुदितादित्ये सन्ध्योपास्तिकरो भवेत् ।
उदिते सति या सन्ध्या बालक्रीडोपमा हि सा ॥ ८४ ॥
सन्ध्या येन न विज्ञाता ज्ञात्वा नैव ह्युपासिता ।
स जीवन्नेव शूद्रत्वमवगच्छति सान्वयः ॥ ८५ ॥

---

१. B. and E. read °यातो for °याता.; while A. °ह्यशक्तितः and B. स्वशक्तितः for ह्यशक्तितः. २. B. and C. आप्राप्ताश्च and E. and D. अप्राप्ताव° for अप्राप्त्या च. ३. B. reads स्वात्मन्येव and D. स्वामिनैव both for स्वामिन्येव. ४. B. substitutes शब्द° for शफ°. ५. C. reads निर्जया जाताः, D. निर्जयाज्जाता both for निर्जवा जाताः. ६. B. and E. read मुनयः for ऋषयः. ७. B. and E. read this line as follows:—

ते सन्ध्यां यदुपासन्तः क्षिपन्ति तज्जलं महत् ।;

while C. D. read उपासीत and C. D. and F. substitute प्रक्षिपन्ति for क्षिपन्त्येतत्. ८. C. and D. read दह्येरन् for दह्यन्ते. ९. D. reads सहस्रांशुरथे for सहस्रांशो रथे. १०. B. E. read ऽधीयाय for ऽधीयानः. ११. A. reads विबुधान्, B. तद्दशान् and C. ऋषीशान् all for त्रिदशान्; while E. and F. are quite mistaken. D. reads ततः for तथा. १२. B. reads ममेति, C. and D. सत्वे तु for मत्वेति; while D. substitutes अनुदिवा° for अनुदिता° and E. अनुदिना° for the same. १३. Before this line C. inserts in the marginal correction the following verse :—

सन्ध्याहीनो शुचिर्नित्यमनर्हः सर्वकर्मसु ।
यत्किञ्चित्कुरुते कर्म न तस्य फलभाग्भवेत् ॥.

It appears to occur in other Smritis. १४. C. and D. substitute च for हि. १५. A. सन्ध्यायैर्न, B. and E. नच सन्ध्या both for ज्ञात्वा नैव. १६. A. B. E. and F. read जीवन्नपि for जीवन्नेव. A. and F. शूद्रःस्यान्महापातकसंयुतः, B. and E. शूद्रःस्यात्सरापातकसंयुतः and D. शूद्रश्च ह्याशु गच्छति सान्वयः all for शूद्रत्वमवगच्छति सान्वयः.

मान्त्रं पार्थिवमाग्नेयं वायव्यं दिव्यमेव च ।
वारुणं मानसं चेति सप्त स्नानान्यनुक्रमात् ॥ ८६ ॥
शं न आपस्तु वै मान्त्रं मृदालम्भं तु पार्थिवम् ।
भस्मना स्नानमाग्नेयं गवां रेणुभिरानिलम् ॥ ८७ ॥
आतपे सति या वृष्टिर्दिव्यं स्नानं तदुच्यते ।
बहिर्नद्यादिके स्नानं वारुणं प्रोच्यते बुधैः ॥ ८८ ॥
यद्ध्यानं मनसा विष्णोर्मानसं तत् प्रकीर्तितम् ।
असामर्थ्येन कायस्य कालशक्त्याद्यपेक्षया ॥ ८९ ॥
तुल्यफलानि सर्वाणि स्युरित्याह पराशरः ।
स्नानानां मानसं स्नानं मन्वाद्यैः परमं स्मृतम् ॥ ९० ॥
कृतेन येन मुच्यन्ते गृहस्था अपि तु द्विजाः ।
दिव्यादीनां त्रयाणां तु स्नानानामौषसं परम् ॥ ९१ ॥
सर्वैः पापहरं प्राहुः प्राजापत्यव्रताधिकम् ।
उषस्युषसि यत् स्नानं क्रियतेऽनुदिते रवौ ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥ ९२ ॥
प्रातरुत्थाय यो विप्रः प्रातःस्नायी सदा भवेत् ।
सर्वपापविनिर्मुक्तः परं ब्रह्माधिगच्छति ॥ ९३ ॥
अस्नातो नाचरेत् कर्म जप-होमादि किंचन ।
क्लिद्यन्ते हि सुगुप्तानि इन्द्रियाणि क्षरन्ति च ॥ ९४ ॥
अङ्गानि समतां यान्ति उत्तमान्यधमैः सह ।
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ॥ ९५ ॥

---

१. A. D. and F. read गोरेणुनाऽऽनिलं स्मृतम् for गवां रेणुभिरानिलम्. २. I. reads आदित्ये for आतपे. ३. B. and E. read तद्दिव्यं स्नानमेकधा for दिव्यं स्नानं तदुच्यते. B. and E. read °नद्योदकम् for °नद्यादिके. ५. B. and E. read तत् कीर्तितम् for प्रोच्यते बुधैः. ६. B. and E. read कथ्यते बुधैः and A. प्रोच्यते बुधैः for तत् कीर्तितम्. ७. B. and E. read सर्वाणि फलतुल्यानि, C. and D. तुल्यफलानि सर्वाणि. ८. B. omits this line. ९. C. reads सदा द्विजाः for तु द्विजाः. १०. E. omits this line. ११. C. reads °शताधिकम् for °व्रताधिकम्. १२. A. omits this and the following six lines. १३. B. E. and F. read अस्नात्वा for अस्नातो. १४. D. wrongly reads this line thus :—

विद्यन्ते च सुदृप्तानि द्रविणानि क्षरन्ति च ।

स्रवत्येष[1] दिवा रात्रौ प्रातःस्नानेन शुद्ध्यति[2] ।
उषःस्नानं प्रशंसन्ति सर्वे च[3] पितरोऽमराः ॥ ९६ ॥

दृष्टादृष्टकरं पुण्यं शंसन्ति ऋषयो[4]ऽपि हि ।
प्रातःस्नायी हि यो विप्रः सोऽर्हः स्यात्सर्वकर्मसु ॥ ९७ ॥

तत्कृतं[5] कर्म यत्किञ्चित्तत्सर्वं स्याद्यथार्थवत् ।
अविद्वान् स्नानकाले तु यः कुर्याद्दन्तधावनम् ॥ ९८ ॥

पापीयान् रौरवं याति पितृशापहतो[6] ध्रुवम् ।
यच्च श्मश्रुषु केशेषु यज्जलं[7] देहलोमसु ॥ ९९ ॥

हस्ताभ्यां न तु वस्त्रेण जलं विद्वान् प्रमार्जयेत्[8] ।
मार्जिते पितरः सर्वे सर्वा अपि हि[9] देवताः ॥ १०० ॥

तथा सर्वे मनुष्याश्च त्यजन्त्यह्नाय तं[10] द्विजम् ।
स्नातृसंचिन्तितं सर्वे[11] तीर्थं पितृदिवौकसः ॥ १०१ ॥

ततोन्यद्यद्यसौ[12] गच्छेन्निराशास्ते शपन्ति हि ।
ये तु[13] स्नानार्थिनस्तीर्थं चिन्तितं तज्जलाश्रयम्[14] ॥ १०२ ॥

१. C. and D. read स्रवते च for स्रवत्येष. २. B. E. F. and D. read °स्नानं विशोधनम् for °स्नानेन शुद्ध्यति. ३. A. B. C. E. and F. read ऽपि for च. ४. D. reads पितरः, B. and E. मुनयः both for ऋषयः. ५. B. and E. read प्राप्नोति तत्कृतं पुण्यं सर्वे च for तत्कृतं कर्म यत्किञ्चित्तत्सर्वं; while A. omits तत्. ६. B. C. E. D. and F. read °पादहतो for शापहतः; while B. E. and F. substitute द्विजः for ध्रुवम्. ७. D. reads यद्वा देहे च for यज्जलं देह°. ८. B. and D. substitute हि मार्जयेत् for प्रमार्जयेत्. ९. D. reads च for हि; while E. and F. read तोये for सर्वे. १०. D. reads त्यजेरन्नियतं for त्यजन्त्यह्नाय तं. ११. B. and E. read स्नातुः सेवन्ति तत्सर्वं, C. स्नानं सेचन्ति ते सर्वे, D. स्नानं सञ्चिततं सर्वे and F. स्नातुः सिञ्चति तत्सर्वं all for स्नातृसंचिन्तितं सर्वे. १२. C. reads ऽन्यद्यद्यधो, D. नद्याद्यसौ for ऽन्यद्यद्यसौ; while D. reads गच्छन् for गच्छेत्. १३. D. reads this line thus :—

ये तु स्नानार्थिनस्तीर्थं सञ्चिन्तन्ति जलाश्रयान् ॥ १०२ ॥.

१४. B. and E. read °जलाशयम् for °जलाश्रयम्.

तद्देहमुपतिष्ठन्ति [1]तृप्त्यै पितृ-दिवौकसः ।
अतो न चिन्तयेत्तीर्थं [2]व्रजेदेव त्वाचिन्तितम् ॥ १०३ ॥
देवखात-नदी-स्रोतस्-सरस्सु स्नानमाचरेत् ।
स्नानं नद्यादिबन्धेषु सद्भिः कार्यं सदम्बुषु ॥ १०४ ॥
कृत्रिमं [3]तोयकूपस्थं तोयं तत्र त्वकृत्रिमम् ।
न तीर्थे [4]स्त्र्याकुले स्नायान्नासज्जनसमा[5]वृते ॥ १०५ ॥
दर्भहीनोऽन्यचित्त[6]श्च न नग्नो न शिरोविना ।
कदाचिद्विदुषा [7]मत्या न स्नातव्यं पराम्भसा ॥ १०६ ॥
अ[8]म्भःकृद्दुष्कृतांशेन स्नानकर्तापि [9]लिप्यते ।
पञ्च वा सप्त वा पिण्डान् स्ना[10]यादुद्धृत्य तत्र तु ॥ १०७ ॥
[11]वृथास्नानादिकानीह विशेषेण विवर्जयेत् ।
वृथा [12]ह्युष्णोदकस्नानं वृथा [13]जप्यमवैदिकम् ॥ १०८ ॥
वृथा चाश्रोत्रिये दानं वृथा भुक्तम[14]साक्षिकम् ।
मासे नभसि न स्नायात् कदाचिन्निम्नगा[15]सु च ॥ १०९ ॥
रजस्वला भवन्त्येता वर्जयित्वा समुद्रगाः ।
नापो मूत्र-पुरीषाभ्यां नाग्निर्दहति कर्मणा ॥ ११० ॥
न स्त्री दुष्यति जारेण [16]न विप्रो वेदकर्मणा ।
न स्नायात् क्षोभितास्व[17]प्सु स्वयं न क्षोभयेच्च ताः ॥ १११ ॥

---

१. A. and C. read तृप्तये पितृ-देवताः, E. तृप्ता ये पितृ-देवताः for तृप्त्यै पितृ-दिवौकसः. २. B. व्रजेद्देवं न चिन्तितम्, C. D. and F. व्रजेदेव तु चिन्तितम् for व्रजेदेव त्वचिन्तितम्. ३. A. B. and E. read तोयबन्धस्थम् for तोयकूपस्थं and B. and E. च कृत्रिमम् and D. तु कृत्रिमम् for त्वकृत्रिमम्. ४. B. reads आकरे for स्त्र्याकुले. ५. B. and E. read समाकुले and D. समाश्रिते for समावृते. ६. B. and E. read ऽन्यवित्तस्तु; while A. substitutes तु for च. ७. D. reads मिथ्या for मत्या. ८. A. B. E. and F. read अम्बुकृत° for अम्भःकृत°. ९. A. B. E. read विलिप्यते for ऽपि लिप्यते. १०. B. and E. read स्नानात् and C. यावत् both for स्नायात्. ११. A. क्रिया° for वृथा°. १२. B. and E. substitute एव and C. and D. च for हि. १३. B. C. E. read जाप्यम् for जप्यम्. १४. F. reads असाक्षिके for असाक्षिकम्. १५. H. reads निम्नगाजले for निम्नगासु च. १६. A. B. E. and F. read ब्राह्मणो for न विप्रो. १७. D. reads आप्सु for अप्सु.

न निर्गतासु तीर्थाच्च[1] पतन्तीष्वाहतासु च।
रविसंक्रान्तिवारेषु[2] ग्रहणेषु[3] शशिक्षये ॥ ११२ ॥
व्रतेषु चैव षष्ठीषु न स्नायादुष्णवारिणा।
न स्नायाच्छूद्रहस्तेन नैकहस्तेन वा पुनः[4] ॥ ११३
उद्धृताभिरपि स्नायादाहृताभिर्द्विजातिभिः।
स्वभावाभिरनुष्णाभिरद्भिः[5] सहेमभिर्द्विजः ॥ ११४ ॥
नवाभिर्निर्दशाहाभि[6]रसंस्पृष्टाभिरन्त्यजैः।
यः[7] स्नानमाचरेन्नित्यं तं प्रशंसन्ति देवताः ॥ ११५ ॥
तस्माद्बहुगुणं स्नानं सदा कार्यं द्विजातिभिः।
उत्साहाप्यायनं स्वान्त[8]प्रशान्ति-शक्ति-वृद्धिदम् ॥ ११६ ॥
कीर्ति[9]-कान्ति-वपुःपुष्टि-सौभाग्या-ऽऽयुःप्रवर्धनम्।
स्वर्ग्यं च दश[10]भिर्युक्तं गुणैः स्नानं प्रशस्यते ॥ ११७ ॥
सूर्यादिदिनवारोक्त[11]तैलाभ्यञ्जनपूर्वकम्।
हृत्ताप-कीर्ति-मरण-लक्ष्मी-स्थाना[12]प्ति-मृत्यवः ॥ ११८ ॥
आयुश्चार्कादिवारेषु तैलाभ्यङ्गे फलं क्रमात्।
जलावगाहनं नित्यं स्नानं सर्वेषु वर्णिषु ॥ ११९ ॥

---

१. B. reads तीर्थासु for तीर्थाच्च, but it seems incorrect. २. F. omits this verse. ३. B. and E. read ग्रहणे च or ग्रहणेषु. ४. A. F. C. and D. read तथा for पुनः. ५. A. and F. read °स्सहेमभिस्तया द्विजाः, D. °स्सहसाभिस्तथा द्विजः for °रद्भिः सहेमभिर्द्विजः; while C. reads °स्सहैमाभिः and B. द्विजाः for सहेमाभिः and द्विजः respectively. ६. F. reads निर्दशाहोभिः for निर्दशाहाभिः. ७. F. does not insert this verse. ८. A. and F. read स्यात्तप्रसत्ति° B. शान्तप्रसक्ति° and E. स्वान्तप्रसत्ति° for स्वान्तप्रशान्ति°; while B. C. and E. °वृद्धिकम् for °वृद्धिदम्. ९. B. and C. कीर्तिः कान्तिर्वपुःपुष्टिः for कीर्ति-कान्ति-वपुःपुष्टि°; while E. and F. °वपुः पुष्टि for °वपुः पुष्टि°. १०. C. reads द्वादशभिः for च दशभिः. ११. B. C. E. D. and F. read दिनवारोक्तं for दिनवारोक्त°. १२. A. reads °मरणसुतास्वानाप्ति° and D. °मरण-सुत-स्थानाप्ति° for °मरण-लक्ष्मी-स्थानाप्ति°. E. follows this reading, but reads °स्वानाप्तमृत्यवम् for °स्थानाप्ति-मृत्यवः; while B. °सुतः स्नानाप्ति° and C. °सुतेः स्नानाप्त° for °लक्ष्मी-स्थानाप्ति°.

शक्तैरहरहः कार्यं तस्याथ[1] विधिरुच्यते।
गोशकृन्मृत्कुशांश्चैव पुष्पाणि पत्रिकां[2] तथा।
स्नानार्थी प्रयतो नित्यं स्नानकाले समाहरेत्[3] ॥ ११९ ॥
स्वमनोऽभिमतं[4] तीर्थं गत्वा प्रक्षाल्य पद्द्वयम्[5]।
हस्तौ चाचम्य विधिवच्छिखां बद्ध्वैकचेतसा ॥ १२० ॥
मृदम्बुभिः स्वगात्राणि[6] क्रमात् प्रक्षालयेद्यथा[7]।
पादौ जङ्घे कटिं चैव क्रमात् प्रागम्बुभिः[8] स्त्रिभिः ॥ १२१ ॥
प्रक्षाल्य हस्तावाचम्य नमस्कृत्य च तज्जलम्।
गुह्याय गुह्य[9]मित्येतद्यजुषा प्रयताञ्जलिः ॥ १२२ ॥
ऊरू्ँ हीति च मन्त्रेण कुर्यादापोभिमन्त्रणम्[10]।
विधिज्ञाः कवयः केचिमन्त्रतत्त्वार्थवेदिनः ॥ १२३ ॥
यत्र स्थाने तु[11] यत्तीर्थं नदी पुण्यतमा[12] तथा।
[13]तद्ध्यायेन्मनसा नित्यमन्यतीर्थं न चिन्तयेत् ॥ १२४ ॥
गङ्गादिपुण्यतीर्थानि कृत्रिमादिषु संस्मरेत्।
[14]महाव्याहृतिभिः पश्चादाचामेत्[15] प्रयतोऽपि सन् ॥ १२५ ॥
उदुत्तममिति ह्यप्सु मन्त्रेण प्राङ्मुखो विशेत्।
ये ऽग्नयो दिवि चेत्येतत्कुर्यादालम्भनं ततः ॥ १२६ ॥
सूर्यं पश्यञ्जलं[16] मुक्त्वा समुत्तीर्य ततः[17] स्थलम्।
आचम्याथ हरेन्मृत्स्नां तथा कायं समालभेत् ॥ १२७ ॥

---

१. C. substitutes अयं for अथ and E. अर्थ° for the same. २. A. reads पत्रकं for पत्रिकां. ३. C. and D. read सदा° for समा°. ३. A. reads °ऽभिहितं and F. °ऽभिहतं. for °ऽभिमतं. ५. E. and F. read पाद्द्वयम् and C. and E. पदयोः both for पद्द्वयम्. ६. B. and D. substitute च for स्व°. ७. A. B. and D. read अथ for यथा. ८. D. reads प्राणं for प्राक्°. ९. C. and D. read गुह्योपगुह्य° for गुह्याय गुह्य°. १०. D. reads अभिमान्त्रिताः for अभिमन्त्रणम्. ११. B. C. D. and E. read स्थानेषु for स्थाने तु. १२. A. reads पुण्यतटा for पुण्यतमा, C. नदीं पुण्यतरां and D. नदी पुण्यतरा all for नदी पुण्यतमा. १३. A. D. E. and F. interchange this line for the next one; while D. reads ताम् for तत्. १४. Before this line D. inserts the following line which is the same as the preceding one; but reads वापि for नित्यं. १५. B. C. E. and F. read आचमेत् for आचामेत्. १६. A. and F. read जले for जलं. १७. B. स च, C. तु तत् for ततः.

अश्वक्रान्ते रथक्रान्ते[1] इत्याद्यपि पठन्ति हि ।
मृत्तिके[2] हर मे पापं यन्मया पूर्वसञ्चितम् ॥ १२८ ॥

मृत्तिकाहरणे मन्त्रमिति[3] वासिष्ठजोऽब्रवीत् ।
समालभेत्त्रिभिर्मन्त्रैरिदं[4] विष्ण्वादिभिर्द्विजः ॥ १२९ ॥

शिरश्चांसावुरश्चोरू पादौ जङ्घे क्रमेण तु ।
भास्कराभिमुखो मज्जेदापो ह्यस्मानिति त्रिभिः[5] ॥ १३० ॥

उन्मृज्य[6] सर्वगात्राणि निमज्जेच्च[7] पुनः पुनः ।
उत्तीर्याऽऽचम्य गात्राणि गोमयेनाथ लेपयेत्[8] ॥ १३१ ॥

मानस्तोक इति ह्युक्त्वा प्राग्वदङ्गक्रमेण[9] तु ।
इमं मे वरुण, त्वन्नः, सत्यं नय, उदुत्तमम् ॥ १३२ ॥

मुञ्चन्त्ववभृथेत्येतैरात्मानमभिषेचयेत् ।
निमज्ज्याऽऽचम्य चाऽऽत्मानं दर्भैर्मन्त्रैश्च पावयेत् ॥ १३३ ॥

सर्वपापापनोदार्थं[10] प्राग्वदङ्गक्रमेण तु ।
आपोहिष्ठादिकैर्मन्त्रैस्त्रिभिरन्यैश्च पावयेत् ॥ १३४ ॥

हविष्मतीरिमा आप, इदमापस्तथैव च ।
देवीराप इति द्वाभ्यामापो देवीरिति त्र्यृचा[11] ॥ १३५ ॥

संस्मृत्य द्रुपदां देवीं शन्नो देवीरपां रसम् ।
प्रत्यङ्गं[12] मन्त्रनवकमापोदेवी पुनन्तु माम् ॥ १३६ ॥

चित्पतिं मां पुनात्वेतन्मन्त्रेणापि च पावयेत् ।
हिरण्यवर्णा इति च पावमान्यस्तथा परम् ॥ १३७ ॥

तरत्समन्दोधावति पवित्राण्यपि शक्तितः ।
स्नानकर्मोत्तमकैर्मन्त्रैरन्यैरप्यम्बुदैवतैः ॥ १३८ ॥

१. B. and E. read विष्णुक्रान्ते वसुन्धरे for इत्याद्यपि पठन्ति हि. २. A. D. and F. do not insert this line. ३. C. and D. substitute चैवम् for मन्त्रम्. ४. A. reads समालंभादिभिर् for समालभेत्त्रिभिर्. ५. A. reads तिसृभिः for त्रिभिः. ६. C. and E. read उद्घृष्य and D. उद्धृत्य both for उन्मृज्य. ७. C. reads निमज्ज्य for निमज्जेत् and D. निमज्ज्याथ for निमज्जेच्च. ८. A. B. C. and E. read उपलेपयेत् for ऽथ लेपयेत्. ९. B. E. and F. read प्राग्वोदग्वा for प्राग्वदङ्ग°. १०. D. omits this and the following one line. A. also omits the same, but gives in the marginal correction. ११. A. reads त्र्यृचा and C. इत्यृचम् both for त्र्यृचा. १२. B. C. E. and F. read प्रत्येकं for प्रत्यङ्गं.

[1]प्लाव्यात्मानं निमज्ज्याथ आचान्तस्त्वन्यदा[2]चरेत् ।
काल-काय-प्रदेशानां तथा चैवोदकस्य च ॥ १३९ ॥
[3]प्राकृत्ये सति चैवायं विधिरन्यो विपर्यये ।
सोंकारां चैव गायत्रीं महाव्याहृतिभिः सह ॥ १४० ॥
[4]त्रिषण्णवैकधाऽऽवर्त्य स्नायाद्विद्वानपि द्विजः ।
छन्दो-मुन्य[5]मरैर्युक्तं स्वशाखा[6]स्वरसंयुतम् ॥ १४१ ॥
आवर्त्य प्रणवं स्नायाच्छ[7]तमर्धशतं दश ।
[8]चिद्रूपं परमं ज्योतिर्निरालम्बमनामयम् ॥ १४२ ॥
अव्यक्तमव्ययं शान्तं स्नायाद्वापि हरिं स्मरन्[9] ।
गायत्रीवारिसंस्नातः प्रणवैर्निर्मलीकृतः ॥ १४३ ॥
विष्णुस्मरणसंशुद्धो योग्यः[10] सर्वेषु कर्मसु ।
योऽधीत[11]वेदवेदार्थः स स्नातः सर्ववारिषु ॥ १४४ ॥
शुद्धयेदशुचिनः स्वान्तस्ते[12]च्छुद्धस्तु शुचिर्यतः ।
मन्त्रैश्च मनसा स्नानं न गोम[13]य मृदम्बुभिः ॥ १४५ ॥

१. H. substitutes पाव्य for प्लाव्य. २. A. and F. read आरभेत् for आचरेत्. ३. C. corrects प्राकृते for प्राकृत्ये; while F. प्राकृत्वा सरिते for प्राकृत्ये सति. ४. B. reads त्रिषवणं चैकधावृत्त्या स्नाति, C. त्रिषट् चैकधावर्त्य स्नायात्, E. त्रिषवणैकधावृत्त्या स्नायेत् and D. त्रिसप्ते वैकधावर्त्मा स्नानात् all for त्रिषण्णवैकधा ऽऽवर्त्य स्नायात्; while F. substitutes मर्त्यः for °वर्त्य. ५. B. and E. read °परैर् for °मरैर् and D. °मन्त्रं परैर् for °मुन्यमरैर्. ६. D. reads °क्षर° for °स्वर°. ७. B. reads शतशोर्धशतं for शतमर्धशतं; while E. शतसार्धशतं for the same. ८. E. and F. read विद्रूपं for चिद्रूपं. ९. C. and D. स्मरेत् for स्मरन्. १०. A. and F. read अर्हः for योग्यः; while D. reads °संशुद्धिस्त्वर्ह for °संशुद्धो योग्यः. ११. This and the following two lines do not appear in E., and D. reads योऽधीते वेदवेदार्थं सुस्नातः for योऽधीतवेदवेदार्थः स स्नातः; while A. स्नातः सन् for स स्नातः. १२. A. B. and F. read न शुद्धेदशुचिः for शुद्धयेदशुचिनः. C. follows our reading, but corrects न शुद्धेदशुचिः. १३. C. reads गोमयं मृदमम्बुभिः for न गोमय-मृदम्बुभिः; while A. B. D. E. and F. substitute नो for न.

तैश्चेन्द्रो[1]-खर-मत्स्याश्च स्नानस्य[2] फलमाप्नुयुः ।
भावपूतः[3] पवित्रः स्यान्मन्त्रपूतस्तथा नरः ॥१४६॥
उभयेन पवित्रस्तु नित्यस्नायी शुचिर्नरः ।
विधिदृष्टं तु यत् कर्म करोत्यविधिना तु यः ॥ १४७ ॥
न किंचित् फलमाप्नोति क्लेशमात्रं हि तस्य तत् ।
उत्पद्यन्ते जले मत्स्या विपद्यन्ते तु तत्र च ॥ १४८ ॥
तिष्ठन्तोऽपि च ते स्नानफलं नैवाप्नुयुर्यतः[4] ।
विधिहीनं भावदुष्टं[5] कृतमश्रद्धयापि च[6] ॥ १४९ ॥
तद्धरन्त्यसुरास्तस्य मूढत्वादकृतात्मनः ।
श्रद्धा-विधिसमायुक्तं यत् कर्म क्रियते नृभिः ।
शुचिभीरैकचित्तैश्च[7] तदानन्त्याय कल्पते ॥ १५० ॥
उदात्तमनुदात्तं च स्वरितं[8] प्लुतमेव च ।
द्रुतं च स्वरितोदात्तं स्वरं विद्यात्तथा प्लुतम् ॥ १५१ ॥
स्वरान्तं व्यञ्जनान्तं च विसर्गान्तं तथैव च ।
सानुस्वारं पृथक्त्वं च ज्ञातव्यमपरं[9] च यत् ॥ १५२ ॥
वृत्रं शतक्रतुर्हन्ति वज्रेण शतपर्वणा ।
यथा तथा प्रवक्तारं मन्त्रो हीनः[10] स्वरादिभिः ॥ १५३ ॥
स्वरतो वर्णतः सम्यक् सन्ध्या-ध्यान[11]-जपादिषु ।
सर्वे मन्त्राः प्रयोक्तव्या हीनाः स्युरफला नृणाम् ॥ १५४ ॥
नाभेरधस्तादङ्गानि क्षालयित्वा मृदम्भसा ।
उपरिष्टात्[12] सिक्तवस्त्रो मन्त्रैः प्रोक्ष्य शुचिर्भवेत् ॥ १५५ ॥

---

१. B. C. and E. read तैर्हीनाः for तैश्चेन्द्रो°. २. B. and E. read स्नातात्, A. स्नाने and F. स्नाताः all for स्नानस्य and अवाप्नुयुः for आप्नुयुः. ३. C. reads भावपूतं पवित्रं for भावपूतः पवित्रः. ४. B. E. and F. substitute मृताः, A. हताः for यतः. ५. D. reads भवेद्दुष्ट for भावदुष्टं; while C. follows our reading, but the correction of the same rectifies दुष्टं कृतमश्रद्धया and strikes off पि च. ६. E. substitutes यत् for च. ७. D. reads °र्ह्रीकचित्तैः for °रैकचित्तैः; while A. and D. substitute तु for च. ८. D. reads विसर्गान्तं तथैव च for स्वरितं प्लुतमेव च. ९. B. C. and F. read ज्ञातव्यं परमं ; while E. ज्ञातव्यपरमं and D. ज्ञातमन्यपरं all for ज्ञातव्यमपरं. १०. B. C. D. E. and F. read मन्त्रहीनं for मंत्रो हीनः. ११. B. reads °स्नान° for °ध्यान°. १२. B. reads तु तन्मंत्रैस्तन्मोक्ष्याथ, A. सिक्तवस्त्रमन्त्रैर्वापि, C. सिक्तवस्त्रैर्मन्त्रैः प्रोक्ष्य, and E. सिक्तं मंत्रैः प्रोक्ष्य all for सिक्तवस्त्रो मन्त्रैः प्रोक्ष्य; while D. reads उपविष्टः; for उपरिष्टात्.

चतुरश्चतुरस्त्वेवङ्घ्र्योर्द्वौद्वौ च जङ्घयोस्तथा।
द्वौद्वौ च जानुनोर्न्यस्य ऊर्वोः पञ्च च पञ्च च ॥ १५६ ॥
द्वावप्येवं तथा गुह्ये दशदशोदर-वक्षसोः।
द्वौद्वौ गले च बाह्वोश्च द्वौद्वावंस मुखेषु च ॥ १५७ ॥
द्वौद्वौ च चक्षुषोः श्रुत्योः सप्तोङ्कारांश्च मूर्धनि।
न्यस्तप्रणवसर्वाङ्गः स्नातः स्यात् सर्ववारिषु ॥ १५८ ॥
अकारं मूर्ध्नि विन्यस्य उकारं नेत्रमध्यतः।
मकारं कण्ठदेशे तु ब्रह्मीभवति वै द्विजः ॥ १५९ ॥
अव्यङ्गाक्लिष्टधौते तु विद्वाञ्छुक्ले च वाससी।
परिधाय मृदम्बुभ्यां करौ पादौ च मार्जयेत् ॥ १६० ॥
तद्वाससोरसम्पत्तौ शाण-क्षौमा-ऽऽविकानि च।
कुतपं योगपट्टं वा द्विवासास्तु यथा भवेत् ॥ १६१ ॥
न जीर्ण-नील-काषाय-माञ्जिष्ठेन तु वाससा।
मूत्राद्युपगतेनैव शुचिः स्यान्नैकवाससा ॥ १६२ ॥
एकं वासो यथाप्राप्तं परिधाय मनःशुचिः।
अन्यत् कृत्वोत्तरासङ्गमाचम्य प्राङ्मुखः स्थितः ॥ १६३ ॥

---

द्वौद्वौ च गलबाहुभ्यां द्वौद्वावंसे मुखेऽपि च।
* समानार्थकमिदं श्लोकार्धं सर्वेष्वप्यादर्शपुस्तकेषूपलभ्यते। शतोपरिसप्तपञ्चाशत्तमश्लोकोत्तरार्धस्य पाठान्तरभूतमिदं स्यादिति प्रतिभाति।

---

१. F. reads पद्भ्यो for अंघ्र्योर् and C. त्वङ्गे for the same. २. E. reads द्वौद्वौ च गल-बाहुभ्यां; which is proper in the next third line. ३. A. B. E. F. read द्वावपि च for द्वावप्येवं. ४. A. reads दशदशोर° and D. दश द्वादश° both for °दशदशोदर°. ५. D. reads सुमुखेषु for अंसे मुखे. ६. B. reads ससोङ्कारांश्च for सप्तोङ्कारांश्च. ७. D. reads न रक्तवासी for शुक्ले च वाससी. ८. B. and E. read ऊरू for करौ. ९. B. and E. substitute तु for च. १०. C. and D. read कुन्तपं for कुतपं, but it seems incorrect. ११. A. substitutes °मल° for °नील°. १२. C. and D. read तु for च. १३. B. omits this line; while A. substitutes शूद्राद्यु° for मूत्राद्यु°. १४. B. and E. substitute एवं for एकं. १५. D. reads अन्ये for अन्यत्.

प्रत्योङ्कारसमायुक्ताः प्रणवाद्यन्तकास्तथा[1] ।
महाव्याहृतयः सप्त दैवतार्षादिसंयुताः[2] ॥ १६४ ॥
प्रणवान्ता च गायत्री[3] शिरस्तस्यास्तथैव च ।
त्रिरावर्तनमेतस्याः प्राणायामो विधीयते ॥ १६५ ॥
शक्त्याऽसुसंयमं[4] कृत्वा तथाचम्य विधानतः ।
उपास्य विधिवत् सन्ध्यामुपस्थाय च भास्करम् ॥ १६६ ॥
गायत्रीं शक्तितो जप्त्वा तर्पयेद्देवताः पितॄन् ।
[5]अन्वारब्धेन सव्येन[5] पाणिना दक्षिणेन तु ॥ १६७ ॥
तृप्यतामिति सेक्तव्यं[6] नाम्ना तु प्रणवादिना ।
ब्रह्मेश-केशवान् पूर्वं प्रजापतिमथो[7] श्रुतीः ॥ १६८ ॥
छन्दो यज्ञानृषीन्[8] सिद्धानाचार्यांस्तनयानपि[9] ।
गन्धर्व-वत्सरर्तूंश्च मासान् दिन-निशास्तथा[10] ॥ १६९ ॥
देवान् देवानुगांश्चैव[11] नागान्नागकुलानि च ।
सरितः सागरांस्तीर्थान् पर्वतान् कुलपर्वतान् ॥ १७० ॥
किन्नरान् खेचरान् यक्षान् मनुष्यानथ[12] तर्पयेत् ।
सनकश्च सनन्दश्च[13] तृतीयश्च सनातनः ॥ १७१ ॥
आसुरिः कापिलश्चैव वोढुः[14] पञ्चशिखस्तथा ।
[15]मानुषान् यातुधानांश्च तेषां चैव कुलान्यपि ॥ १७२ ॥
सुपर्णांश्च पिशाचांश्च भूतान्यथ पशूंस्तथा ।
[16]वनस्पतीनोषधींश्च भूतग्रामं चतुर्विधम् ॥ १७३ ॥

---

१. D. reads प्रणवाद्युतका: for प्रणवाद्यन्तकाः. २. A. C. and D. read देवतार्षादि°, B. and E. दैवतर्ष्यादि° for दैवतार्षादि°. ३. C. and D. read गायत्र्याः for गायत्री. ४. B. reads शक्त्याऽप्सु for शक्त्याऽसु°. ५. A. omits this and the following one line. ५. D. substitutes तोयेन for सव्येन. ६. D. reads वक्तव्यं for सेक्तव्यं. ७. A. and D. substitute अथ for अथो. C. and D. श्रुतिम् for श्रुतीः; while B. and E. read अथाब्रवीत् for अथ श्रुतीः. ८. B. E. and F. substitute यक्षान् for यज्ञान्, but the name appears in the fifth line next including this. ९. D. reads स्तनपायिनः for तनयानपि. १०. F. substitutes पुनः for तथा. ११. C. substitutes अपि for एव. १२. B. and E. read अप्यतर्पयेत् for अथ तर्पयेत्, but it seems incorrect. १३. B. and E. read ततः पश्चात्सनन्दकसनातनः for सनन्दश्च तृतीयश्च सनातनः. १४. E. and D. substitute वोढः for वोढुः; while C. वोढ° for the same. D. reads °शिखिः for °शिखः. १५. B. and E. read मनुष्यान् for मानुषान्. १६. D. adds च after वनस्पतीन्.

ब्रह्मादयो मयाहूता आगच्छन्त्वाददन्त्वपः[1]।
अनृणं मां प्रकुर्वन्तु प्रसीदन्तु ममोपरि ॥ १७४ ॥
ततः पूर्वाग्रदर्भेषु साग्रेषु सकुशेषु[2] च।
प्रादेशिकेषु[3] शुद्धेषु ब्रह्मादिभ्योऽम्बु सेचयेत्[4] ॥ १७५ ।
अन्वारब्धापसव्येन[5] पाणिना दक्षिणे न तु।
भूस्थदक्षिणजानुः[6] सन् देवेभ्यः सेचयेज्जलम् ॥ १७६ ॥
देवेभ्यश्च नमः स्वाहा पितृभ्यश्च नमः स्वधा।
मन्यन्ते कवयः केचिदित्ययं[7] तर्पणक्रमः ॥ १७७ ॥
तर्प्यमाणेषु कर्मत्वं णिजन्तं[8] च क्रियापदम्।
तर्पयामि पितॄन् देवानित्याहुरपरे पुनः ॥ १७८ ॥
सिच्यमानेन[9] तोयेन मन्यन्ते मुनयो परे।
देवास्तृप्यन्तु पितरस्[10]तृप्यन्त्विति निदर्शनम् ॥ १७९ ॥
उदीरतामाङ्गिरस आयन्तु नोर्जमित्यपि।
पितृभ्यश्च स्वधायिभ्यो ये चेह पितरस्तथा ॥ १८० ॥
अग्निष्वात्तोपहूताश्च[11] तथा बर्हिषदोऽपि च[12][13]।
येन पूर्वे[14] च पितरः सोमपानामुदीरयेत् ॥ १८१ ॥
आवाह्य च पितॄनेतैरपसव्योपवीतिना[15]।
दक्षिणाभिमुखो द्वाभ्यां कराभ्यामम्बु सेचयेत् ॥ १८२

१. D. reads आगत्य ददतु त्वपः for आगच्छन्त्वाददन्त्वपः. २. A. reads च कुशेषु for सकुशेषु; while F. substitutes सकुलेषु for the same ३. B. and E. read प्रादेशकेषु for प्रादेशिकेषु. ४. C. and D. read निःक्षिपेत् for सेचयेत्. ५. A. reads अथातश्चापसव्येन, D. अन्वारभ्यापसव्येन both for अन्वारब्धापसव्येन. ६. C. reads दक्षिणो जानु भूलग्नो, D. दक्षिणे जानु भूलग्नो and B. E. F. दक्षिणजानु भूलग्नो भूस्थदक्षिणजानुः सन्; while C. सिञ्चयेत् for सेचयेत्. ७ B. reads इत्येव तर्पणे क्रमम्, E. इत्येवं तर्पणे क्रमम् and D. इत्येव तर्पणक्रमः all for इत्ययं तर्पणक्रमः. ८. B. and E. read त्यजन्तं and C. and D. निजत्वं for णिजन्तं; while F. त्यजतं for the same. ९. D. reads सिञ्चमानेन for सिच्यमानेन. १०. D. reads नियताः for पितरः. ११. D. reads अपहूताः for उपहूताः. १२. F. substitutes वा for च. १३. F. does not insert this and the following one line. १४. A. omits च. C. reads पितॄनथ तैरपसव्योपवीतिनः, E. पितॄन् तैर्मन्त्रैरपसव्योपवीतितः, D. पितॄनेतैरद्य सव्योपवीतिना, all for पितॄनेतैरपसव्योपवीतिना.

भूलग्नसव्यजानुश्च दक्षिणाग्रकुशेषु[1] च ।
रुक्म-रौप्य-तिलैस्ताम्र-दर्भ-मन्त्रैः क्षिपेत् पयः ॥ १८३ ॥
विना रौप्य-सुवर्णाभ्यां विना ताम्र-तिलैरपि ।
विना दर्भैश्च मन्त्रैश्च पितृणां नोपतिष्ठति ॥ १८४ ॥
दर्भैर्लोहितदर्भैश्च काश-वीरण-बल्वजैः[2] ।
शूकधान्य-तृणैर्वापि दर्भकार्यं श्रयेद् द्विजः ॥ १८५ ॥
न तर्पयेत् पतन्तीभिर्विद्वानद्भिः कथंचन[3] ।
पात्रस्थाभिः सदर्भाभिः सतिलाभिश्च तर्पयेत् ॥ १८६ ॥
वसून् रुद्रांस्तथाऽऽदित्यान्नमस्कारसमन्वितान्[4] ।
एते च दिव्याः पितर एतदायत्तमानुषाः[5] ॥ १८७ ॥
ध्रुवो धरश्च[6] सोमश्च आपश्चैवानलोऽनिलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ १८८ ॥
अजैकपादहिर्बुध्न्यो[7] विरूपाक्षोऽथ रैवतः[8] ।
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥ १८९ ॥
सावित्रश्च जयन्तश्च[9] पिनाकी चापराजितः ।
एते रुद्राः समाख्याता एकादश सुरोत्तमाः[10] ॥ १९० ॥
इन्द्रो धाता भगः पूषा मित्रोऽथ वरुणोऽर्यमा ।
अंशुर्विवस्वांस्त्वष्टा च सविता विष्णुरेव च ॥ १९१ ॥
एते वै द्वादशादित्या देवानां परमाः[11] स्मृताः ।
एवं हि[12] दिव्याः[13] पितरः पूज्याः सर्वे प्रयत्नतः ॥ १९२ ॥
कव्यवाहो[14] नलः सोमो यमश्चैव तथार्यमा ।
अग्निष्वात्ताः सोमपाश्च तथा बर्हिषदोऽपि च ॥ १९३ ॥

---

१. A. substitutes °कुशेन for °कुशेषु. २. F reads °बिल्वजैः for °बल्वजैः. ३. C. reads कदाचन for कथंचन. ४. D. substitutes स्वधा° for सम°. ५. B. and E. read एतदायान्तु मानुषम् and C. एते दायात्तु मानुषम् both for एतदायत्तमानुषाः. ६. A. B. C. and D. read ऽध्वरश्च for धरश्च, but the name धर appears, in several Purânâs. ७. A. B. E. and F. substitute अजैकपादो for अजैकपाद् and except A. C. and D. others read अहिर्बुध्नो. ८. C. and E. interchange places of त्र्यंबकः and रैवतः. ९. G. reads जयन्त्यश्च for जयन्तश्च; while C. D. °त्यप°, E. वाप° and F. ह्यप° all for चाप°. १०. G. reads सुरोत्तम for सुरोत्तमाः. ११. C. reads परमं for परमाः. १२. C. and D. read च for हि. १३. B. E. and G. read दिव्यपितरः for दिव्याः पितरः. १४. A. B. D. E. F. and G. read कव्यवालो for कव्यवाहो.

एते चान्ये च पितरः पूज्याः सर्वे प्रयत्नतः ।
एतैस्तु तर्पितैः सर्वैः पुरुषास्तर्पिता नृभिः ॥ १९४ ॥
यमश्च धर्मराजश्च मृत्युश्चैव तथान्तकः ।
वैवस्वतश्च कालश्च सर्वभूतक्षयस्तथा ॥ १९५ ॥
औदुम्बरश्च नीलश्च दध्नश्च[१] परमेष्ठ्यपि[२] ।
चित्रश्च चित्रगुप्तश्च वृकोदरस्तथार्यमाः ॥ १९६ ॥
एतैस्तु तर्पितैः सद्भिर्विश्वं स्यात्तर्पितं[३] नृभिः ।
तस्मात् प्राक्तर्पयित्वैतान् पित्रादीन्[४] तर्पयेत्ततः ॥ १९७
मातामहान् मातुलांश्च सखि-सम्बन्धि-बान्धवान् ।
स्वजनान् ज्ञातिवर्गीयानुपाध्यायान् गुरूनपि ॥ १९८ ॥
मित्रान् भृत्यान[५]पत्यांश्च ये भवन्ति तदाश्रिताः ।
तान् सर्वांस्तर्पयेद्विद्वानीहन्ते ते यतो जलम् ॥ १९९ ॥
जलस्थश्च जले सिंचेत्[६] स्थलस्थश्च तथा स्थले ।
पादौ स्थाप्योऽभयोश्चैव[७] प्रक्षाल्योभयतः शुचिः ॥ २०० ।
यज्जले[८] शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ।
कुर्याद्धोमं जपं दानं तत्सर्वं निष्फलं भवेत् ॥ २०१ ॥
नार्द्रवासाःस्थलस्थस्तु बुधस्तर्पणमाचरेत् ।
जानुदघ्नजलस्थो[९] वा विगलत्[१०]स्नानवस्त्रकः ॥ २०२

१. D. reads ब्रह्मश्च for दध्नश्च; while C. बुध्नश्च for the same. २. D. and others read परमेष्ठिना or परमेष्ठिनः for परमेष्ठ्यपि. ३. D. reads विवस्वांस्तर्पितो for विश्वं स्यात्तर्पितं. ४. D. reads त्रिशतीन् for पित्रादीन्. ५. A. reads पितृ-भृत्यान् for मित्रान् भृत्यान्. ६. B. E. and G. read सिञ्चन् for सिञ्चेत्. ७. B. E. F. and G. read उभयत्रापि and C. उभयत्रैव for उभयोश्चैव; while B. reads भवेत्तूभयतः and C. शुची for प्रक्षाल्योभयतः and शुचिः respectively. ८. A. and D. do not insert these two s'lokâs:—

यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ।
कुर्याद्धोमं जपं दानं तत्सर्वं निष्फलं भवेत् ॥ २०१ ॥
नार्द्रवासाः स्थलस्थस्तु बुधस्तर्पणमाचरेत् ।
जानुदघ्नजलस्थो वा विगलत्स्नानवस्त्रकः ॥ २०२ ॥.

९. B. and E. read जानूदघ्नः स्थल° and C. and G. जानुदघ्नस्थल°. १०. B. C. and F. read विगत° for विगलत्°.

गोश्रृङ्गमात्रमुद्धृत्य करौ विप्रो जले स्थितः ।
अम्बरे तु क्षिपेद्वारि पितॄणां तृप्तिमावहन् ॥ २०३ ॥

उभाभ्यां सेचयेद्वारि आकाशे दक्षिणामुखः ।
पितॄणां स्थानमाकाशं दक्षिणा दिक् तथैव च ॥ २०४ ॥

स्थलगो नार्द्रवासास्तु कुर्याद्वै तर्पणादिकम् ।
प्रेतादृते नार्द्रवासा नैकवासा समाचरेत् ॥ २०५ ॥

एवं हि तर्पणं कृत्वा सर्वेषां विधिवद्द्विजाः ।
निष्पीडयेत् स्नानवस्त्रं येन स्नातो भवेद्द्विजः ॥ २०६ ॥

निष्पीडयति यः पूर्वं स्नानवस्त्रमबुद्धिमान् ।
निराशाः पितरस्तस्य यान्ति देवाः सहर्षिभिः ॥ १०७ ॥

निष्पीडयेत् स्नानवस्त्रं तिल-दर्भसमन्वितम् ।
न पूर्वं तर्पणाद्वस्त्रं नैवाम्भसि न पादयोः ॥ २०८ ॥

एषु चेत् पीडयेत् द्वस्त्रं राक्षसं तदतिक्रमात् ।
वस्त्रनिष्पीडने विप्र इमं श्लोकमुदाहरेत् ॥ २०९ ॥

'ये मे कुले लुप्तपिण्डा पुत्र-दार-विवर्जिताः ।
तेषां प्रदत्तमक्षय्यमिदमस्तु तिलोदकम्' ॥ २१० ॥

---

१. A. C. and D. read °मुत्क्षिप्य for °मुद्धृत्य. २. D. omits the following portion :—

– – – – – – – – – पितॄणां तृप्तिमावहन् ॥ २०३ ॥
उभाभ्यां सेचयेद्वारि – – – – – – – – ।

३. B. C. E. F. and G. read कराभ्यां for उभाभ्यां. ४. Except D. all others read प्रता° for प्रेता°. ५. C. reads द्विज for द्विजाः. ६. A. and C. read अजानतः and D. अजानता for अबुद्धिमान्. ७. A. reads नवा° for नैका° and B. E. and G. नचा° for the same. ८. B. C. E. F. and G. read राक्षसानां फलं भवेत् for राक्षसं तदतिक्रमात्. ९. C. D. and F. read मन्त्रं for विप्र. १०. B. E. and G. read उदीरयेत् for उदाहरेत्; while D. and F. insert the following line after this sloka :—

तिलदर्भसमायुक्तं कुमृत्युर्नष्टदेहिनाम् ॥.

In A. this line is visible in the marginal correction and reads कुमृत्योः for कुमृत्युः.

पितृवंशे मृता ये च मातृवंशे कुमृत्युना[1]।
तेषां तृप्तिर्भवत्त्वेषा तिलमिश्रेण वारिणा[2] ॥ २११ ॥
जलमध्ये[3] च यः कश्चित् ब्राह्मणो ज्ञानदुर्बलः।
निष्पीडयति चेद् वस्त्रं स्नानं तस्य वृथा भवेत् ॥ २१२ ॥
यदप्सु मलनिक्षेपः शौच-स्नानादि कुर्वताम्।
तत्पापस्य[4] व्यपोहार्थमिमं मन्त्रमुदीरयेत् ॥ २१३ ॥
'यन्मया दूषितं तोयं मलैः शारीरसम्भवैः।
तस्य पापस्य निष्कृत्यै यक्ष्मणस्तव तर्पणम्[5] ॥ २१४ ॥
असुपेभ्यो ऽथ यक्ष्मभ्यो[6] ददामीदं जलाञ्जलिम्।
अन्यथा घ्नन्ति ते सर्वं[7] दुष्कृतं पूर्वसञ्चितम् ॥ २१५ ॥
अपुत्रा ये मृताः केचित् पुमांसो योषितो ऽपि वा।
अस्मद्वंशे[8]ऽपि तेभ्यो वै दत्तं वस्त्रजलं मया' ॥ २१६ ॥
नास्तिक्येनापि यो विप्रस्तर्पयेत् पितृ-देवताः।
स तत्तृप्तिकृतो[9] धर्मान् प्राप्नुयात् परमां गतिम् ॥ २१७ ॥
नास्तिक्यावस्थितो[10] यस्तु तर्पयेन्न पितॄन् द्विजः।
पिबन्ति देहनि[11]ःस्रावं पितरस्तज्जलार्थिनः ॥ २१८ ॥
पितॄणां पितृतीर्थेन देवानां दैविकेन[12] तु।
इति मत्वा[13] प्रकुर्वाणा मुच्यन्ते गृहमेधिनः ॥ २१९ ॥

---

१. A. C. D. and F. read तथैव च for कुमृत्युना. २. A. reads this line:—

एषा तृप्तिर्भवेत्तेषां तिलैस्तु सह वारिणा ॥

and F. reads:—

एवं तृप्तिर्भवेत्तेषां तिलैस्तु सह वारिभिः ॥.

३. C. and D. do not insert this śloka. ४. B. reads तस्य पाप° for तत्पापस्य. ५. A. reads यक्ष्माणं तर्पयाम्यहम् for यक्ष्मणस्तव तर्पणम्. ६. G. reads उष्मपेभ्यो and E. युष्मणेभ्यो both for ऽथ यक्ष्मभ्यो; while A. B. E. F. and G. read दद्यादेताञ्जलाञ्जलीन्. A. differs from °देवा° for °देता°. ७. D. reads सर्वे for सर्वं. ८. C. and D. read अस्मिन् for अस्मद्°. ९. D. reads °करो for °कृतो. १०. C. reads नास्तिक्ये, D. नास्तिक्याद्वस्तुतो for नास्तिक्या° and नास्तिक्यावस्थितो respectively. ११. A. reads देहिनः°; for देहनि°; while B. also reads the same. १२. Except A. all others read दैवकेन; while D. देवकेन for दैविकेन. १३. A. substitutes मत्या for मत्वा; while C. and D. read तु for प्र°.

पञ्च तीर्थानि विप्रस्य करे तिष्ठन्ति[1] दक्षिणे ।
ब्राह्मं दैवं तथा पित्र्यं प्राजापत्यं तु सौमिकम् ॥ २२० ॥

ब्राह्मं पश्चिमलेखायां दैवं ह्यङ्गुलिमूर्धनि[2] ।
प्राजापत्यं कनिष्ठादौ मध्ये सौम्यं विजानतः[3] ॥ २२१ ॥

अङ्गुष्ठस्य प्रदेशिन्या मध्ये पित्र्यं प्रतिष्ठितम् ।
कुर्याद्यो ऽहरहश्चैवं[4] सम्यग्ज्ञात्वा विधानतः ॥ २२२ ॥

स प्राप्नुयाद्गृहस्थो ऽपि ब्रह्मणः पदमव्ययम् ।
स्नात्वा जप्त्वा च हुत्वा च दत्वा[5] चैव तु योऽश्नुते ॥ २२३ ॥

सो ऽमृतं[6] नित्यमश्नाति तस्य स्थानमनामयम् ।
अस्नात्वाऽश्नन्[7] मलं भुङ्क्ते अजप्त्वा पूय-शोणितम् ।

अजुह्वंश्च कृमीन् कीटानदद्‌ंश्च शकृत्तथा ॥ २२४ ॥
आह्लादकारणं[8] स्नानं दुःख-शोकापहं तथा ।

दुःस्वप्ननाशनं चैव कार्यं स्नानमतः सदा ॥ २२५ ॥
चित्तप्रसाद-बल-रूप-तपांसि-मेधाम्
आयुष्य-शौच[9]-सुभगत्वमरोगितां च ।
ओ[10]जस्वितां त्विषमदात् पुरुषस्य चीर्णं
स्नानं यशो-विभव-सौख्य[11]मलोलुपत्वम् ॥ २२६ ॥

---

१. A. reads सन्ति च for तिष्ठन्ति and D. सन्नाथ for the same. २. B. and G. do not insert हि. ३. B. E. read विजानता and F. न जानता both for विजानतः. ४. A. C. D. E. and F. read अहरहश्चैवं for योऽहरहश्चैवं; while B. and G. read धर्मतः for विधानतः. ५. B. E. F. and G. read शक्त्या दत्वा च for दत्वा चैव तु. ६. A. and F. read अमृतं सोऽश्नुयान्नित्यं, C. and D. अमृतं सोऽश्नुते नित्यं both for सोऽमृतं नित्यमश्नाति. ७. C. अस्नातासि and D. अस्नात्वा श्नु° both for अस्नात्वाऽश्नन्. ८. C. and D. read °करणं for °कारणं. ९. B. and G. read °सौख्य° for °शौच°. १०. A. E. F. G. read ऊर्जस्विताम्; while C. substitutes ॐ° for ओ°. ११. B. E. and G. read °पुण्य° for °सौख्य°.

गीर्वाणवृन्दद्विजसत्तमस्तुतः[1]
प्राप्तो मया यस्तु वसिष्ठपौत्रतः ।
पापप्रणाशं वितनोति यः श्रुतः
प्रोदीरितः[2] स्नानविधिः स लेशतः ॥ २२७ ॥

उद्देशतो मया प्रोक्तः स्नानस्य परमो विधिः
द्विजन्मनां हितार्थं तु[3] जपस्यातः परो विधिः ॥ २२८ ॥

इति श्रीबृहत्पराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां संहितायां[4] [5]स्नानविधिर्नाम[6] द्वितीयोऽध्यायः ॥ २ ॥

---

१. B. E. and G. read °मः स्तुतः for °मस्तुतः and F. °मस्ततत: for the same. २. D. reads प्रचोदितः for प्रोदीरितः. ३. B. and G. read च for तु; while D. परं for परो and F. अथ for अतः. ४. A. adds धर्म° before संहितायां ५. B. reads षट्कर्माणि, C. E. F. and G. षट्कर्मणि and D. षट्कर्म°. before स्नान°. ६. A. C. E. and F. omit नाम द्वितीयो ऽध्यायः; while D. wrongly reads तृतीयोऽध्यायः.

# बृहत्पराशरसंहिता ।

## अथ तृतीयोऽध्यायः ।

जपस्याथ[१] प्रवक्ष्यामि विधिं पाराशरोदितम् ।
यावद्विधो जपो यस्तु यथा कार्यो द्विजातिभिः ॥ १ ॥
जप्यानि ब्रह्मसूक्तानि शिवसूक्तानि चैव हि ।
वैष्णवानि च सूक्तानि तया सौराण्यनेकधा ॥ २ ॥
सारस्वतानि दौर्गाणि वारुणान्या[२]निलानि च ।
पौराणिकानि चान्यानि तथा सिद्धान्तिकानि च ॥ ३ ॥
सर्वेषां जप्य[३]सूक्तानामृचां च यजुषां तथा ।
साम्नां वै[४]काक्षरादीनां गायत्री परमो जपः ॥ ४ ॥
तस्याश्चैव तु ॐकारो ब्राह्मणा यमुपासते[५] ।
आभ्यां तु परमं जप्यं त्रैलोक्येऽपि न विद्यते ॥ ५ ॥
तयोस्तु[६] देवतार्षादि समासेनाभिधीयते ।
येन विज्ञात[७]मात्रेण द्विजो ब्रह्मत्वमाप्नुयात् ॥ ६ ॥
आसीन्नैव[८] यदा किंचित् सदेवाऽसुर-मानुषम् ।
तदेका[९]क्षर एवासीदात्मविन्यस्तविश्वकः ॥ ७ ॥
गतभीरद्वितीयोऽपि एकाकी स[१०] न मोदते ।
चिन्तयामास गायत्रीं प्रत्यक्षा साऽभवत्तदा ॥ ८ ॥

---

१. C. and D. read ऽतः for ऽथ. २. B. C. D. E. F. and G. read वारुण्या° for वारुणा°. ३. D. reads जप° for जप्य°. ४. A. substitutes तु- and D. च for वा. ५. A. C. D. and F. read °थ उपासितः, B. E. and G. °यमुपासितः for °यमुपासते. ६. A. C. and D. read च for तु. ७. B. C. D. and G. read विज्ञान° for विज्ञात°; while D. अश्नुते for आप्नुयात्. ८. D. reads च for एव. ९. C. D. and F. read एव for एक°. and B. D. E. and G. °क्षरं for °क्षर. १०. C. and D. read दिवि for स न.

गायत्री साऽभवत् पत्नी प्रणवोऽभूत् पतिस्तदा[1]।
पुनरन्यौ च दम्पत्याविति ताभ्यामभूज्जगत्[2] ॥ ९ ॥
प्रणवो हि परं तत्त्वं त्रिवेदं त्रिगुणात्मकम्।
त्रिदैवतं त्रिधामं च त्रिप्रज्ञं त्रिरवस्थितम्[3]॥ १० ॥
त्रिमात्रं च[4] त्रिकालं च त्रिलिङ्गं कवयो विदुः।
सर्वमेतत्त्रिरूपेण व्याप्तं तु प्रणवेन हि[5] ॥ ११ ॥
ऋग्यजुः-सामवेदाश्च[6] त्रिवेद इति कीर्तितः।
सत्त्वं रजस्तमश्चैव त्रिगुणस्तेन[7] चोच्यते ॥ १२ ॥
ब्रह्मा विष्णुस्तथेशानस्त्रिदैवत[8] इतीष्यते।
अग्निः सोमश्च सूर्यश्च त्रिधामेति प्रकीर्तितः[9] ॥ १३ ॥
अन्तःप्रज्ञं बहिःप्रज्ञं घनप्रज्ञमुदाहृतम्।
हृत्कण्ठ-तालुकं चेति त्रिस्थान इति कीर्त्यते ॥ १४ ॥
अकारोकारौ[10] मश्चेति त्रिमात्रः प्रोच्यते बुधैः।
भूतं भव्यं भविष्यं च त्रिकाल इति स स्मृतः ॥ १५ ॥
स्त्री-पुंन्नपुसकं चेति त्रिलिङ्ग इति कीर्तितः[11]।
त्रिस्वभावः स्थितो देवो[12] मन्तव्यो ब्रह्मवादिभिः ॥ १६ ॥
पर्यवस्यति यत्रैतद्[13] विश्वमुत्पद्यते यतः।
निर्मात्रकः समात्रोऽपि सादिरेवं[14] निरादिकः ॥ १७ ॥

---

१. A. C. and D. read तथा for तदा. २. B. F. and G. read पुनरन्योन्यदाम्पत्यात् for पुनरन्यौ च दम्पत्यौ. ३. A. reads च त्र्यव-स्थितम् for त्रिरवस्थितम्. ४. D. reads त्रिमानं and E. त्रैमात्रं both for त्रिमात्रं. ५. D. reads तु for हि; while A. reads ह for the same. ६. A. C. E. read त्रिवेदीति निगद्यते and D. substitutes °वेदश्च for °वेदाश्च. ७. B. E. and G. read परिकीर्तिते for तेन चोच्यते. ८. Some MSS. read °दैवतं for °दैवतः. ९. B. E. and G. read प्रकीर्त्यते and D. प्रकीर्तिता for प्रकीर्तितः. १० We follow here only A.; while all others read अ-कारोकारमश्चेति for अकारोकारौ मश्चेति. B. reads त्रिमात्र उच्यते स तु and D. त्रिमात्रा उच्यते स्तुत for त्रिमात्रः प्रोच्यते बुधैः. ११. B. E. and G. read संस्मृतः for कीर्तितः. १२. D. reads वेदो for देवो. १३. A. B. E. F. and G. read एव for एतद्. १४. A. and D. read अपि for एव.

स जप्यः सर्वदा सद्भिर्ध्यातव्यश्च विधानतः ।
वेदेषु चैव शास्त्रेषु बहुधा स व्यवस्थितः[1] ॥ १८ ॥
तथा सत्यपि चैकोऽयं घटाकाश इव स्थितः[2] ।
कर्मारम्भेषु सर्वेषु त्रिमात्रः[3] सम्प्रकीर्तितः ॥ १९ ॥
स्थितो यत्र यथोक्तश्च[4] स्मर्तव्यः स तथैव हि[5] ।
ऋग्वेदे स्वरितोदात्त उदात्तस्तु[6] यजुःश्रुतौ ॥ २० ॥
सामवेदे[7] स विज्ञेयो दीर्घः स प्लुत एव च ।
सनत्कुमारसिद्धान्ते प्रणवो विष्णुरुच्यते ॥ २१ ॥
यस्मिंस्तस्य[8] च विश्रान्तिस्तत् परं ब्रह्मसंज्ञितम् ।
उच्चारितस्य तस्याथ विश्रान्तौ[9] च यदक्षरम् ॥ २२ ॥
तदक्षरं सदा ध्यायेद्यस्[10]तत्रैव[11] प्रलीयते ।
घण्टास्वनित[12]वत्तस्य विश्रान्तिः शब्दवेधसः ॥ २३ ॥
कुर्वीत ब्रह्मविद्विप्रो यदीच्छेद्योगमात्मनः ॥
सर्वस्यापि च शब्दस्य ह्यन्त[13] उच्चारितस्य यत् ॥ २४ ॥
[14]तद्ध्यायेद्यस्तु स ज्ञानी शब्दब्रह्मविदुच्यते ।
याज्ञवल्क्यो मुनीनां प्रागब्रवीज्जनकस्य च ॥ २५ ॥
वासिष्ठ[15]जोऽपि तं ब्रूयात् स्वभावं शब्दवेधसः ।
तैलधारामिवाच्छिन्नं[16] दीर्घं घण्टानिनादवत् ॥ २६ ॥

---

१. A. and F. read प्रकीर्त्यते, C. and D. प्रकीर्तितः for व्यवस्थितः, but in the margin of C. there appears the reading व्यवस्थितः. २. E. reads घटकोश इव स्थितः, C घटाकाशवदास्थितः and D. षट्काराद्यस्तदास्थितः all for घटाकाश इव स्थितः. ३. C. reads त्रिमात्रं सत् प्रकीर्तितम् for त्रिमात्रः सम्प्रकीर्तितः; while D. त्रिमात्रं and A. B. E. F. and G. स for त्रिमात्रः and सम् respectively. ४. D. and F. read तथोङ्कारः for यथोक्तश्च. ५. Except C. and D. all others read च for हि. ६. C. reads यजुः स्मृतः for यजुःश्रुतौ; while A. B. E. F. and G. substitute च for तु; and C. and D. read ऋग्वेदः for ऋग्वेदे. ७. C. and D. read सामवेदः for सामवेदे. ८. A. and F. read यस्मिन्नस्य for यस्मिंस्तस्य. ९. C. and D. read विश्रान्तं for विश्रान्तौ. १०. B. E. and G. substitute यत् for यः. ११. A. and D. read स for प्र०. १२. C. D. and F. read °स्तनित° for °स्वनित°. १३. C. F. A. and D. read अन्ते for ह्यन्ते and C. and D. substitute च for यत्. १४. D. B. substitute स and C. तं for तत्. १५. D. reads वसिष्ठ° for वासिष्ठ°; while A. reads तत् for तं. १६. C. and D. read °छन्न° for छिन्नं.

अवाग्जं[1] प्रणवस्यायं यस्तं वेद स वेदवित् ।
स्थित्वा सर्वेषु शब्देषु सर्वं व्याप्तमनेन हि[2] ।
न तेन हि विना किंचिद्वक्तुं याति गिरा यतः[3] ॥ २७ ॥
उद्गीथं[4]मक्षरं ह्येतदुद्गीथं च उपासते ।
उपास्यो मध्यतस्त्वेष नादं विश्रामयेद्धृदि[5] ॥ २८ ॥
प्रणवाद्याः स्मृता वेदाः प्रणवे पर्यवा[6]स्थिताः ।
वाङ्मयं प्रणवे सर्वं तस्मात् प्रणवमभ्यसेत् ॥ २९ ॥
ब्रह्मार्षं तत्र विज्ञेयमग्निर्श्च दैवतं महत् ।
आद्यं छन्दः स्मरेत्तत्र नियोगो ह्यादिकर्मणि ॥ ३० ॥
उत्पन्नमेतत्तु यतः समस्तं व्यावृत्त्य तिष्ठेत् प्रलये ऽपि यत्र ।
एकाक्षेरणापि जगन्ति येन व्याप्तानि कोऽन्यः परमोऽस्ति तस्मात् ॥ ३१ ॥
ध्येयं[9] न जप्यं नच पूजनीयं तस्मान्न देवाद्वरणीयमन्यत्[10] ।
दुस्तारसंसारपयोधिमग्नताराय विष्णुः प्रणवः स पूज्यः ॥ ३२ ॥
उक्तमुद्देशतो ह्येतद् रूपमेकाक्षरस्य च ।
जप्या च सततं देवी गायत्री साऽधुनोच्यते ॥ ३३ ॥

इति श्रीबृहत्पराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां संहितायां[11] षट्कर्मनिरूपणे प्रणवस्वरूपवर्णनं नाम तृतीयोऽध्यायः ॥३॥

१. A. and F. read अवासं, B. E. and G. अपास्तं all for अवाग्जं. २. B. E. and G. substitute वै for हि. ३. B. E. and G. read गिरापि यत् for गिरा यतः. ४. B. C. and D. read उद्गीत° for उद्गीथ°. ५. B. E. and G. read उद्गीथः स उपास्यते for उद्गीथं च उपासते. ६. B. E. and G. read विश्रावयेद्यदि for विश्रामयेद्धृदि. ७. D. reads तर्पणे for पर्यव°. ८. C. reads ब्रह्मर्षिः for ब्रह्मार्षं and विज्ञेय; for विज्ञेयं; while B. E. G. substitute तत् for च. ९. B. C. and G. read ध्यानं for ध्येयं. १०. F. reads एतद् for अन्यत्. ११. A. D. and F. omit धर्मशास्त्रे सुव्रतप्रोक्तायां संहितायां. Except B. and D. all others omit तृतीयोऽध्यायः; while D. omits प्रणव°.

# बृहत्पराशरसंहिता ।

## अथ चतुर्थोऽध्यायः ।

गायत्र्याः संप्रवक्ष्यामि देवर्ष्यादि क्रमेण तु ।
अक्षराणां च विन्यासं तेषां चैव तु देवताः ॥ १ ॥
जप्ये यथाविधा कार्या [1]यथारूपा च साऽर्चने ।
होमे यथा च कर्तव्या यथा [2]वा चाऽऽभिचारिके ॥ २ ॥
यत् फलं जपहोमादौ [3]यदर्थं जप्यते तु सा ।
ध्यातव्या च यथा देवी यथावत्तन्निबोधत ॥ ३ ॥
गायत्री तु परं तत्त्वं गायत्री परमा गतिः ।
सर्वाऽमरैरियं ध्याता [4]सर्वं व्याप्तं तया जगत् ॥ ४ ॥
उत्पद्यते त्रिपादायाः पुनस्तस्यां [5]विशेदिदम् ।
गायत्री प्रकृतिर्ज्ञेया ॐकारः पुरुषः स्मृतः ॥ ५ ॥
[6]एतयोरेव संयोगाज्जगत् सर्वं प्रवर्तते ।
पादास्त्रयस्त्रयो वेदास्तेषु [7]तत्त्वाक्षराणि च ॥ ६ ॥
चतुर्विंशतिरेवास्यां तैर्हि[8] व्याप्तमिदं जगत् ।
आदाय चैकं प्रथमं तु पादमृग्भ्यो द्वितीयं तु तथा यजुर्भ्यः ।
साम्नस्तृतीयं तु ततोऽभवत् सा सावित्रिदेवी स्वयमेव [9]सर्गे ॥ ७ ॥

---

१. A. C. D. and F. read यथाविधा for यथारूपा; while D. B. C. E. and G. जपे and A. जाप्ये for जप्ये and D. अर्चयेत् for अर्चने. २. A. B. E. and G. read यथार्थं चा° for यथा वा चा°. ३. B. E. D. C. and G. read यथावत् for यदर्थं; while C. and D. substitute च for तु. ४. D. reads सत्यं for सर्वं. ५. A. substitutes वसेत् for विशेत्; while D. reads नितवांशिम् for विशेदिदम्. ६. A. reads तस्यां पुरुष°, C. and D. ताभ्यामुभय° for एतयोरेव. ७. B. E. and G. read दत्वा for तत्वा°. ८. C. and D. read व्याप्तमखिलं जगत् for हि व्याप्तमिदं जगत्. ९. Except A. and D. others read स्वर्गे for सर्गे.

दैवत्यमस्यां सविता सुरार्च्यश्छन्दोऽपि गायत्रमभूच्च[1] तस्याः ।
विश्वस्य मित्रो द्विजराज[2]पूज्यो मुनिर्नियोगस्तु जपादिकेषु[3] ॥ ८ ॥
अस्यां तु तत्त्वाक्षरविंशतिस्तु चत्वारि पादत्रितयं तु देव्याम्[4] ।
भूरादिभिस्तिसृभिः संप्रयुक्तं सोङ्कारमेतद्वदनं च तस्याः[5] ॥ ९ ॥
केचिद्धुताशं वदनं वदन्ति सावित्रिदेव्योः श्रुतितत्त्वविज्ञाः ।
इदं[6] च वक्त्रं सकलामराणामित्येतया व्याप्तमशेषमेतत् ॥ १० ॥
भूरादिकेन त्रितयेन पादं पादं च वेदत्रितयेन चास्याः ।
प्राणादिकेन त्रितयेन पादं पादैस्त्रिभिर्व्याप्तमशेषमस्याः ॥ ११ ॥
यस्तुर्यमस्या द्विज वेत्ति पादं स वेत्ति विद्वन् परमं पदं तु ।
व्याप्तिःपराऽस्याः[7]सकलापि चैषा यो वेत्ति चैनां स तु वित्तमः स्यात् ॥१२॥

गायत्रीं यो न जानाति ज्ञात्वा नैव उपासयेत्[8] ।
नामधारकमात्रोऽसौ न विप्रो वृषलो हि सः ॥ १३ ॥
किं वेदैः पठितैः सर्वैः सेतिहास-पुराणकैः ।
साङ्गैः सावित्रिहीनेन न विप्रत्वमवाप्यते ॥ १४ ॥
गायत्रीमेवं यो ज्ञात्वा सम्यगभ्यसते[9] पुनः ।
इहामुत्र च पूज्योऽसौ ब्रह्मलोकमवाप्नुयात् ॥ १५ ॥
गायत्री च[10] तथा वेदा ब्रह्मणा तुलिताः[11] पुरा ।
वेदेभ्योऽपि षडङ्गेभ्यो[12] गायत्र्यतिगरीयसी ॥ १६ ॥
यदक्षरेषु[13] दैवत्यं चतुर्विंशतिषूच्यते ।
संन्यासं यद्विबोधेन कुर्वन् ब्रह्मत्वमाप्नुयात् ॥ १७ ॥

---

१. B. E. and G. read परस्याः and A. परस्यां for च तस्याः. २. C. substitutes °वृन्द° for °राज°. ३. A. substitutes तु for °षु. ४. B. and G. read च तस्याम्, D. तु तस्याम् for तु देव्याम् and C. तु यस्याम् for the same. ५. B. E. and G. read परस्याः and A. परस्याम्. ६. B. D. E. and G. read इमां for इदं and D. वक्तुं for वक्त्रं. ७. A. C. and D. read परस्याः for पराऽस्याः. ८. B. E. and G. read ज्ञात्वोपास्ते न यो द्विजः for ज्ञात्वा नैव उपासयेत्; while A. substitutes उपासते for उपासयेत्. ९. B. E. G. read °भ्यर्च्यते for °भ्यसते. १०. D. reads गायत्री चैव वेदाश्च for गायत्री च तथा वेदाः. ११. Some manuscripts read तोलिताः for तुलिताः. १२. D. reads सहस्रेभ्यो and C. and F. सशास्त्रेभ्यो for षडङ्गेभ्यो; while D. substitutes च for ऽपि. १३. D. reads तद° for यद° and चतुर्विंशतिर् for चतुर्विंशतिषु.

जानीयादक्षरं देव्याः प्रथमं त्वाशुशुक्षणम् ।
प्राभञ्जनं द्वितीयं तु तृतीयं शशिदैवतम् ॥ १८ ॥
विद्युतश्च[1] तुरीयं तु पञ्चमं तु यमस्य च ।
षष्ठं तु वारुणं तत्त्वं सप्तमं तु बृहस्पतेः ॥ १९ ॥
पार्जन्यमष्टमं तत्त्वं नवमं चेन्द्रदैवतम् ।
गान्धर्वं दशमं विद्यात्त्वाष्ट्रमेकादशं तथा ॥ २० ॥
मैत्रावरुणमन्यद्वै तथा पूष्णस्त्रयोदशम् ।
चतुर्दशं सुरेशस्य प्रागिदं ब्रह्मणः[2] स्मृतम् ॥ २१ ॥
मरुद्दैवतकं ज्ञेयं पञ्चदशं यदक्षरम् ।
सौम्यं च षोडशं तत्त्वं तथा[3] चाङ्गिरसं परम् ॥ २२ ॥
विश्वेषां चैव देवानामष्टादशमथाक्षरम् ।
अश्विनोश्चोनविंशं तु विंशं प्रजापतेर्विदुः ॥ २३ ॥
एकविंशं कुबेरस्य द्वाविंशं शंकरस्य च ।
त्रयोविंशं तथा ब्राह्मं चतुर्विंशं तु[4] वैष्णवम् ॥ २४ ॥
इति ज्ञात्वा द्विजः सम्यक्सर्वाश्चाक्षरदेवताः[5] ।
कुर्वन् जपादिकं विप्रः[6] परं श्रेयोऽधिगच्छति ॥ २५ ॥
पादाङ्गुष्ठादिमूर्द्धान्तमात्मनो वपुषि न्यसेत् ।
अक्षराणि च सर्वाणि वाँछन्[7] ब्रह्मत्वमात्मनः ॥ २६ ॥
पादाङ्गुष्ठयुगे त्वेकमेकैकं गुल्फयोर्द्वयोः ।
जानुनोश्च द्वयोरेकमेकमूरुकयोर्द्वयोः[8] ॥ २७ ॥
गुह्ये कट्यां तथैकैकमेकैकं जठरोरसोः ।
स्तनद्वये तथैकं तु न्यसेदेकं गले तथा ॥ २८ ॥
वक्त्रे तालुनि दृक्-श्रुत्योश्चतुर्ष्वेकैकमेव च[9] ।
भ्रुवोर्मध्ये तथैकं[10] तु ललाटे चैकमेव हि ॥ २९ ॥

---

१. A. reads वैद्युतं for विद्युतः. २. A. and C. read ब्रह्मणा for ब्रह्मणः. ३. A. आङ्गिरसस्तथा परं, C. and D. आङ्गिरसमथापरम्, E. तत्तु अङ्गिरसं परम् and F. तत् आङ्गिरसः परम् all for तथा चाङ्गिरसं परम्. ४. B. E. and G. read च for तु. ५. B. E. and G. do not insert च; while C. and D. read स सर्वाक्षर° for सर्वाश्चाक्षर°. ६. C. and D. read कर्म for विप्रः. ७. A. reads प्रेच्छन्, D. पृच्छन् both for वांच्छन्. ८. B. E. and G. read °नूरुद्वयोर्द्वयोः, C. तूरुद्वये द्वयोः for °मूरुकयोर्द्वयोः. ९. A. substitutes तु for च. १०. A. and F. read तथैकैकं for तथैकं तु; while B. E. G. तथैवैकं for the same and A. substitutes च for हि.

याम्य-पश्चिम-सौम्येषु एकैकमेकमूर्धनि ।
गायत्रीन्यस्तसर्वाङ्गो गायत्रो विप्र उच्यते ॥ ३० ॥
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।
प्रोक्तः प्रणवविन्यासो व्याहृतीनामथोच्यते ॥ ३१ ॥
सप्तापि व्याहृतीर्न्य[1]स्याः सर्वदेहे जपादिषु ।
भूर्लोकं पादयोर्न्यस्य भुवर्लोकं तु जानुनोः ॥ ३२ ॥
स्वर्लोकं कटिदेशे तु नाभिदेशे महस्तथा ।
जनलोकं तु हृदये कण्ठदेशे तपस्तथा ॥ ३३ ॥
भ्रुवोर्ललाटसन्ध्योस्तु सत्यलोकः प्रतिष्ठितः ।
हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ॥ ३४ ॥
तच्छु[2]द्धं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ।
देवस्य सवितुर्भर्गो वरे[3]ण्यं चैव धीमहि ॥ ३५ ॥
तदस्माकं धियो यस्तु ब्रह्मत्वे च प्रचोदयात् ।
च्छन्दोदेवतमा[4]र्षं च विनियोगं च ब्राह्मणम् ॥ ४० ॥
मन्त्रं पञ्चविधं ज्ञात्वा द्विजः कर्म [5]समाचरेत् ।
स्वरतो वर्णतश्चैव परिपूर्णं भवेद्यथा ॥ ४१ ॥
हीनं न विनियुञ्जीत मन्त्रं तु मात्रयापि च ।
देवतायतने कुर्याज्जपं नद्यादिकेषु च ॥ ४२ ॥
आश्रमेषु यतीनां वा गोष्ठे वा स्वगृहेऽपि वा ।
चतु[6]र्ष्वन्तिमपूर्वेषु ह्यु[7]त्तमादिक्रमेण तु ॥ ४३ ॥
दशगुणं सहस्रं स्यात् फलं वि[8]ष्णावनन्तकम् ।
अ[9]प्समीपे जपं कुर्यात् ससङ्ख्यं तद्भवेद्यथा ॥ ४४ ॥

---

१. B. C. E. G. read सप्तभिर्व्याहृतीन्र्यस्य भवेदर्हो, D. and F. follow this reading, but differ in सप्तापि for सप्तभि°. २. D. reads शुभ्रं for शुद्धं. ३. A. B. and G. वरेगीयं च, D. and E. वरगीयं च all for वरेण्यं चैव. ४. D. reads °दैवं तर्पणं for °दैवतमार्षं. ५. A. C. and F. read समारभेत् for समाचरेत्. ६. B. and G. read चतुर्ष्वन्त्यमपूर्वेषु, C. चतुर्षूत्तमपूर्वेषु, D. चतर्षु मतिपूर्वेषु, E. चतुर्थन्त्यमपूर्वेषु, and F. चतुर्थ्यन्तमपूर्वेषु all for चतुर्ष्वन्तिमपूर्वेषु. ७. A. ह्यन्ति वा°, C. ह्युक्तमा°, D. ह्येनमा° all for ह्युत्तमा°. ८. D. reads निष्काममनन्तकम् for विष्णावनन्तकम्. ९. A. reads अप्सु तीरे and D. असमीपे both for अप्समीपे.

असङ्ख्यमातुरं यस्मात्तस्मात्तद्गणयेद्ध्रुवम्।
[1]स्फाटिकेन्द्राक्ष-रुद्राक्षैः पुत्रजीवसमुद्भवैः॥ ४५॥
अक्षमाला प्रकर्तव्या प्रशस्ता चोत्तरोत्तरा।
अभावे त्वक्षमालाया कुशग्रन्थ्याऽथ पाणिना॥ ४६॥
यथा कथंचिद्गणयेत् ससङ्ख्यं तद्भवेद्यथा।
प्रणवो भूर्भुवः स्वश्च पुनः प्रणवसंयुतम्॥ ४७॥
[2]अन्त्योऽङ्कारसमायुक्तां मन्यन्ते [3]मुनयोऽपरे।
प्रणवोऽन्ते तथा चादावाहुरन्ये [4]जपे क्रमम्॥ ४८॥
आदावेव तु चोङ्कार आवृत्तावादिकोऽन्ततः।
[5]तदाद्यं च तदन्तं च कुर्यात् प्रवणसम्पुटम्॥ ४९॥
आद्यन्तराक्षितां कुर्यादिति पाराशरोऽब्रवीत्।
[6]यो न वाञ्छति सन्तानं मोक्षमिच्छति केवलम्॥ ५०॥
प्रत्योङ्कारमसौ कुर्वन्नक्षरं मोक्षमाप्नुयात्।
अक्षरप्रातिलोम्येन सोङ्कारेण क्रमेण तु॥ ५१॥
फट्कारान्तां च कुर्वीत प्रेच्छन्नारिवधं बुधः।
होमे चापि [7]पठन् कुर्यात् प्रणवा[8]वर्तनं द्विजः।
[9]अभिप्रेतार्थहोमादौ स्वाहान्तां तामुदीरयेत्॥ ५२॥
संकीर्णतां यदा पश्येद्[1]रोगाद्वा द्विषतोऽपि वा।
तदा जपेच्च गायत्रीं सर्वदोषापनुत्तये॥ ५३॥
रुद्रजाप्यानि कार्याणि सूक्तं च पुरुषस्य च।
शिवसंकल्पजाप्यं च सर्वं कुर्याद्विधानतः॥ ५४॥

---

१. C. E. and G. read स्फाटिकाब्जाक्ष°, D. स्फाटिकैर्द्राक्ष° for स्फाटिकेन्द्राक्ष°. २. A. reads अथोङ्कार°. for अन्त्योङ्कार°. ३. A. C. and D. read कवयो for मुनयो. ४. A. B. E. F. and G. read जपक्रमम् for जपे क्रमम्. ५. A. reads तदाद्यां च तदन्तां च कुर्यात् प्रणवसम्पुटाम् and F. also reads the same. E. too follows this reading, but differs in तदाद्यं for तदाद्य. ६. D. does not insert the following two lines:—

यो न वाञ्छति सन्तानं मोक्षमिच्छति केवलम्॥ ५०॥
प्रत्योऽकारमसौ कुर्वन्नक्षरं मोक्षमाप्नुयात्।.

७. B. C. D. E. F. and G. read जपन् for पठन्. ८. C. and D. read °वर्जनं for °वर्तनं, but C. reads in the margin °वर्तनं. ९. B. E. and G. read °प्रेताय, F. °प्रेताद्य° both for °प्रेतार्थ°. १. C. and D. read रागात् for रोगात्.

जप्यानि[1] घ्नन्ति पापानि श्रेयो दद्युस्तदर्थिनाम् ।
अतो जपं सदा कुर्याद्यदीच्छेच्छुभमात्मनः ॥ ५५ ॥
द्रुपदां वा जपेद्देवीमजपां जम्बुकां[2] तथा ।
प्रणवं च सदाभ्यस्येद्यदि[3] ब्रह्मत्वमिच्छति ॥ ५६ ॥
प्राणानामयुताभ्यां[4] च तथा षोडशभिः शतैः ।
पुंसो गच्छत्यहोरात्रं तत्संख्यामजपां विदुः ॥ ५७ ॥
रविमण्डलमध्यस्थे पुरुषे लोकसाक्षिणि[5] ।
समर्पितं मया चेदं सूर्याख्ये ब्रह्मणः पदे ॥ ५८ ॥
न जप्यं[6] प्रसभं कुर्यात् प्रसभं घ्नन्ति राक्षसाः ।
ब्राह्मणा[7] भागधेयास्तु तेषां देवो[8] विधिक्रमः ॥ ५९ ॥
उपांशु तु जपं कुर्यात् ब्राह्मणो[9] वाथ मानसम् ।
विवृतोष्ठमुपांशुः स्यादचलोष्ठं तु मानसम् ॥ ५० ॥
द्विविधस्तु जपः प्रोक्तं[10] उपांशुर्मानसस्तथा ।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥ ६१ ॥
उपांशुजपयुक्तस्तु[11] मानसे च रतस्तथा ।
इहैव याति वैधस्त्वमिति[12] पाराशरोऽब्रवीत्[13] ॥ ६२ ॥
विधियज्ञाः पाकयज्ञा ये चान्ये बहवो मखाः ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥ ६३ ॥
जप्येनैकेन सिद्धेन किं न[14] सिद्धं भवेदिह ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ ६४ ॥

---

१. A. and D. read घ्नन्ति जप्तानि° and तदर्थिनः for जप्यानि घ्नन्ति and तदर्थिनाम् respectively. २. B. reads जम्बुकं for जम्बुकां and E. जम्बुकीं for the same. ३. D. reads यातिः for यदि. ४. B. and D. read प्रणवा° for प्राणाना°. ५. A. reads °विश्रुते for °साक्षिणि. ६. B. C. D. E. and G. read जपं and F. जपे for जप्यं. ७. A. reads ब्रह्मणे भागधेयस्तु, B. E. and G. read ब्रह्मणा भागधेयस्तु and F. and D. ब्राह्मणा भागधेयस्तु, all for ब्राह्मणा भागधेयास्तु. ८ B. C. E. and G. read चैव विधिः कृतः, D. reads चैवावधीकृताः and F. चैवावधिः कृतः all for देवो विधिक्रमः. ९. A. and C. read कुर्याच्चैव तु, D. reads कार्यं चैव तु for ब्राह्मणो वाथ. १०. D reads कुर्यात् for प्रोक्तः and उपांशुं मानसं and द्विविधं तु जपं. ११. A. C. and D. read °यज्ञस्य and रतस्य च for °युक्तस्तु And रतस्तथा. १२. B. and G. read विविध° for वैधस्त्व°. १३. B. E. G. and F. read ऽवदत् for ऽब्रवीत्. १४. D. reads जपे for जप्ये and किल for किं न.

शतेन जन्मजनितं सहस्रेण पुराकृतम् ।
अयुतेन त्रिजन्मोत्थं गायत्री हन्ति पातकम् ॥ ६५ ॥
दशभिर्जन्मजनितं शतेन तु पुराकृतम् ।
सहस्रेण त्रिजन्मोत्थं गायत्री हन्ति पातकम् ॥ ६६ ॥
[1]अस्मिन् कलौ च विदुषा विधिवत् कर्म यत् कृतम् ।
भवेद्दशगुणं तद्धि कृतादेर्युगतो ध्रुवम् ॥ ६७ ॥
न च तच्छक्यते कर्तुं मन्त्राम्नायेऽस्य दूषणात्[2] ।
अयथार्थकृतात् पाठात्[3] मन्त्रसिद्धिर्गरीयसी ॥ ६८ ॥
न च [4]क्रमन्न च हसन्न पार्श्वमवलोयन् ।
नान्यसक्तो न जल्पंश्च न चैवोर्ध्व[5]शिरास्तथा ॥ ६९ ॥
नाङ्घ्रिणा पीडयेत् पादं न चैव हि तथा करम् ।
नैवंविधं जपं कुर्यान्न च संचालयेत् करम् ॥ ७० ॥
प्रच्छन्नानि च दानानि ज्ञानं च निरहंकृतम् ।
जप्यानि च सुगुप्तानि तेषां फलमनन्तकम् ॥ ७१ ॥
य एवमभ्यसेन्नित्यं ब्राह्मणः संयतेन्द्रियः ॥
स ब्रह्मलोकमाप्नोति तथा ध्यानार्चनाद[6]पि ॥ ७२ ॥
अथान्यत् सम्प्रवक्ष्यामि यथा तातं[7] पितामहः ।
लब्धवान् वेधसः पृष्टाद्गायत्रीध्यानमुत्तमम् ॥ ७३ ॥
यद[8]क्षरेषु यद्वर्णं यत्र यत्र च यः स्मरेत् ॥
यत्फलं लभते कृत्वा यथा तस्याः समर्चनम् ॥ ७४ ॥
तत् प्रकृतिः स स्वातं विकारो बुद्धिरेव च ।
तुरित्येतदहंकारं वशब्दं विद्धि[9] पापहम् ॥ ७५ ॥

---

१. A. reads अतः for अस्मिन्; while C. कलौ युगे विद्वान् and D. कलियुगे विद्वान् for कलौ च विदुषा. २. D. reads भूषणात् for दूषणात्. Except F. all read मन्त्राम्नायस्य. ३. F. and G. read पापात् for पाठात्. ४. C. and D. read मन्त्रोपहसनं for क्रमन्न च हसन्. ५. C. reads प्रावृत° for चैवोर्ध्व° and D. चैवार्द्ध° for the same. ६. B. E. F. G. read ध्यानाद्दे-षार्चना° for तथा ध्यानार्चना°. ७. A. reads यथामाऽऽह पितामहः and D. विशेषन्तु पितामहे both for यथा तात पितामहः. ८. A. C. and F. read तद-क्षरेषु, B. and G. अक्षरेषु च and D. तदक्षरे तु all for यदक्षरेषु. ९. D. reads विद्विषा° for विद्धि पा°.

रे स्पर्शं तु णि रूपं च यं रसं गधमत्र भम् ।
गों श्रोत्रं दे त्वचं वा व चक्षुः स्य रसना तथा ॥ ७६ ॥
धी नासा च म वाचा च हि हस्तौ धि च पाद्वयम् ।
यो उपस्थं मुखं यो ऽन्यो नः खं प्रकारमारुतम् ॥ ७७ ॥
चो तेजो द् जलं यात् क्ष्मा गायत्र्यास्तत्त्वचिंतनम् ।
चतुर्विंशतितत्त्वानि प्रत्येकमक्षरेषु यः ॥ ७८ ॥
गायत्र्याः संस्मरेद्योगी स याति ब्रह्मणः पदम् ।
तत्कारं पादयोर्न्यस्य ब्रह्म-विष्णु-शिवाकृतिम् ॥ ७९ ॥
शान्तं पद्मासनारूढं ध्यानाद्दहति किल्बिषम् ।
सकारं गुल्फयोर्न्यस्येदतसीपुष्पसन्निभम् ॥ ८० ॥[1]
पद्ममध्यस्थितं सौम्यं दहते चोपपातकम् ।[2]
विकारं जङ्घयोर्दीप्तं ध्यायेदेतद्विचक्षणः ॥ ८१ ॥[3]
ब्रह्महत्याकृतं पापं हन्यात्तद्धि[4] स्मृतं क्षणात् ।
तुर्कारं जानुदेशे तु इन्द्रनीलसमप्रभम् ॥ ८२ ॥
निर्दहेत् सर्वपापानि ग्रहंरोगमुपद्रवम् ।[5]
ऊर्वोर्वं विमलं ध्यायेच्छुद्धस्फटिकविद्युतिम्[6] ॥ ८३ ॥
विज्ञातं हन्ति तत्पापमगम्यागमनात् कृतम् ।
रेकारं वृषणे प्रोक्तं विद्युत्स्फुरिततैजसम्[7] ॥ ८४ ॥
मित्रद्रोहकृतं पापं स्मरणादेव नाशयेत् ।
णि गुह्यं श्वेतवर्णं तु जातिपुष्पसमद्युतिम् ॥ ८५ ॥

---

१. D. reads पादयोर्न्यस्त्वा for गुल्फयोर्न्यस्य. २. G. omits the following verse :—

पद्ममध्यस्थितं सौम्यं दहते चोपपातकम् ।
विकारं जङ्घयोर्दीप्तं ध्यायेदेतद्विचक्षणः ॥ ८० ॥.

३. B. E. and F. read द्विजोत्तमः for विचक्षणः. ४. B. C. E. F. and G. read °देतत् for °त्तद्धि. ५. B. E. F. and G. read °दोषानुपद्रवं for °रोगमुपद्रवम्. ६. B. E. F. G. read °स° A. °व° for °वि° and C. °सन्निभम् for °विद्युतिम्. ७. B. E. F. and G. read संस्मरन्नाशयेद् द्विज.

गुरुहत्याकृतं पापं शोधयेद्ध्यानचिन्तनात् ॥ ८५ ॥
थं कट्यां तारकावर्णं चन्द्रवद्धिष्ण्यभूषितम्।
योगिनां वरदं प्राहुर्ब्रह्महत्याविशोधनम् ॥ ८६ ॥
भं नभोवालिवर्णाभं मेघोन्नतिसमद्युतिम्।
ध्यात्वा कमलमध्यस्थं महद् दहति पातकम् ॥ ८७ ॥
जठरे रक्तवर्णं तु मात्राद्वयविभूषितम्।
गोहत्यादिकृतं पापं गौंकारस्तु विशोधयेत् ॥ ८८ ॥
श्यामरक्तं च दंकारं ध्यानं तद्देशयेद्धृदि।
हिम-कुन्देन्दुवर्णाभं वकारममृतं स्रवत् ॥ ८९ ॥
पितृ-मातृ-वधोद्भूतं मित्रावरुणदैवतम्।
गुरुहत्याकृतं पापं वकारेण प्रणश्यति ॥ ९० ॥
स्य कारं विन्यसेत् कण्ठे त्वाष्ट्रं स्फटिकसन्निभम्।
मनसोपार्जितं पापं स्यकारेण प्रणश्यति ॥ ९१ ॥
धीकारं वसुदैवत्यं वदन्ति स्वर्णसन्निभम्।

---

१. B. E. and G. read नाशयेच्चिन्तनादपि for शोधयेद्ध्यानचिन्तनात्. F. reads the same, but differs in शोधयेत् for नाशयेत्. २. B. and G. read °दिव्य° and D. °वर्णात् for °वर्णं; while A. °विश्व° for °धिष्ण्य°. ३. B. and C. read भकारं चालि°, G. भकारं चारु°, E. भकारं वारि°, F. भकारं भालि° all for भं नभोवलि;° while D. omits this and the following two lines. ४. B. °न्नतमहाद्युतिम्, C. °न्नतमहद्दः द्युतिम्, E. F. and G. °न्नतमहद्युति. ५. A. B. . F. and G. substitute भृङ्ग° for रक्त°. ६. C. and D. read °विहितं for °दिकृतं. ७. B. reads दिशयेत् for देशयेत्, and D. ध्यानकृद्देशमाश्रयेत् and C. ध्यानकृद्दर्शयेत् for ध्यानं तद्देशयेत्; while A. ध्यातं for ध्यानं. ८. B. C. D. F. and G. read हृदि, E. हरि both for हिम°. ९. B. reads स्रवन्, D. स्रवेत् and F. स्रुवन् all for स्रवत्. १०. D. does not insert this line:—

पितृ-मातृवधोऽद्भूतं मित्रावरुणदैवतम् ॥.

११. C. and D. read प्रशाम्यति for प्रणश्यति. १२. C. and D. read वदन्त for वदन्ति.

प्रतिग्रहकृतं[1] पापं तत्क्षणादेव नश्यति ॥९२॥

मकारं पद्मरागाभं[2] शिरस्थं दीप्ततेजसम्।

पूर्वजन्मकृतं पापं मकारेण प्रणश्यति[3] ॥ ९३ ॥

ह्रिकारं नासिकाग्रे तु पूर्णचन्द्रसमप्रभम्।

पूर्वात्पूर्वतरं पापं स्मरणादेव नश्यति ॥ ९४ ॥

धिकारं[4] शान्तमक्ष्णोश्च पीतवर्णं सुधांशुवत्।

मनो-वाक्कायजं पापं चिन्तनादेव[5] नश्यति ॥ ९५॥

योकारौ[6] द्वौ धूम्र-नीलौ भ्रू-ललाटे च संस्थितौ।

---

१. A. reads प्रतिशब्द° for प्रतिग्रह°. B. E. F. G. read this line thus:—

प्राणिहत्याकृतं पापं धीकारेण प्रणश्यति।

and C. धीकारेण विनश्यति for तत्क्षणादेव नश्यति. २. A. B. E. F. and G. read पद्मनाभं तं स्फुरन्तं for पद्मरागाभं शिरस्थं. ३. C. reads प्रशाम्यति. ४. E. and F. omit this verse:—

धिकारं शान्तमक्ष्णोश्च पीतवर्णं सुधांशुवत्।
मनो-वाक्कायजं पापं चिन्तनादेव नश्यति॥;

while A. reads:—

धिकारं चन्द्र-सूर्याभं नेत्रयोर्विन्यसेद्बुधः।,

C. and D. follow the reading of A., but read धिकारं तमाङ्गिरसं. ५. A. reads चिन्तितं संप्रणश्यति for चिन्तनादेव नश्यति. C. and D. °कायिकं for °कायजं and C. स्मरणात् for चिन्तनात्. ६. I am unable to find out the original reading here. A. reads:—

योकारौ द्वौ दक्षिणे वक्त्रे ध्यायन्पापैर्न लिप्यते।;

for the whole verse. E. F. and G. read:—

योकारौ वह्निग्निणे वक्त्रे कालानलसमद्युति।

for the first line of this verse, and C. and D. read the following four lines for this one verse:—

योकारं रक्तवर्णाभमिन्द्रनीलसमप्रभम्।
प्राणिहत्याकृतं पापं योकारेण विनश्यति।
द्वितीयस्तु तथा प्रोक्तो योकारो रुक्मसन्निभः।
निर्दहेद्दुष्टपापानि अपेयापेयका(जा)नि च॥.

ध्यायन्नित्यं द्विजो नूनं सर्वपापैः प्रमुच्यते ॥ ९६ ॥
नकारं तु मुखे पूर्वे द्वादशादित्यसन्निभम् ।
सकृद्ध्यात्वा द्विजश्रेष्ठः प्राप्नोति ब्रह्मणःपदम् ॥ ९७ ॥
प्रकारं दक्षिणे वक्त्रे कालाग्नि-रुद्रसन्निभम् ।
सकृद्ध्यात्वा द्विजश्रेष्ठ ऐश्वरं पदमाप्नुयात् ॥ ९८ ॥
चोकारं पश्चिमे वक्त्रे विद्युद्दीप्तिसमप्रभम् ।
एकवारं द्विजो ध्यात्वा वैष्णवं पदमाप्नुयात् ॥ ९९ ॥
दकारमुत्तरे वक्त्रे शुक्लवर्णसमद्युतिम् ।
सकृद्ध्यानात् द्विजश्रेष्ठ प्राप्नुयात् पदमव्ययम् ॥ १०० ॥
याकारस्तु शिरः प्रोक्तं चतुर्वदनसंयुतम् ।
स एष त्रिगुणः प्रोक्तश्चतुर्विंशतिमः स्मृतः ॥ १०१ ॥
यं यं पश्यति चक्षुर्भ्यां यं यं स्पृशति पाणिना ।
यं यं च भाषते किञ्चिंत्तत्सर्वं पूतमेव च ॥ १०२ ॥

---

१. C. reads नकारस्तु मुखे पूर्वे आदित्योदयसन्निभम्. D. also follows this reading, but differs in नकारे सुमुखे; while A. F. substitute पूर्वे for पूर्वे. २. A. C. and D. read स गच्छेत् for प्राप्नोति; while C. and D. substitute ऐन्दवं for ब्रह्मणः. ३. C. and D. read this and the following five lines:—

नीलोत्पलदलश्यामं प्रकारं दक्षिणामुखम् ।
सकृद्ध्यात्वा द्विजश्रेष्ठ स गच्छेद्वैष्णवं पदम् ॥
सौम्यं गोरोचनापीतं चोकारं पश्चिमामुखम् ।
सकृद्ध्यात्वा द्विजश्रेष्ठ सगच्छेद्ब्रह्मणः पदम् ॥
शङ्ख-कुन्देन्दुधवलं दकारं चोत्तरामुखम् ।
सकृद्ध्यात्वा द्विजश्रेष्ठ स गच्छेद् ब्रह्म शाश्वतम् ॥.

४. A. reads:—

.........दीप्तस्वर्णस्य भिन्नसम् ॥.
सकृद्ध्यात्वा द्विजश्रेष्ठः स गच्छेद् ब्रह्मणः पदम् ॥

५. A. reads ध्यात्वा द्विजश्रेष्ठः स गच्छेद् ब्रह्मणः पदम्. ६. A. reads याकारं त्रिगुणं प्रोक्तं चतुर्विंशतिमं स्मृतम्, C. and D. follow this reading, but D. differs in सगुणं and both in संस्मृतम् for त्रिगुणं and °मं स्मृतम्; while B. E. F. and G. स्फुटम् for स्मृतः. ७. C. and D. read चित्ते for किञ्चित्.

जाप्ये तु त्रिपदा ज्ञेया पूजने तु चतुष्पदा ।
न्यासे जप्ये तथा ध्याने अग्निकार्ये तथार्चने ॥ १०३ ॥
सर्वत्र त्रिपदा ज्ञेया ब्राह्मणैस्तत्त्वचिन्तकैः ।
जम्बुका नाम सा देवी यजुर्वेदे प्रतिष्ठिता ॥ १०४ ॥
सा देवी द्रुपदा नाम मन्त्रे वाजसनेयके ।
अन्तर्जले त्रिरावर्त्य मुच्यते ब्रह्महत्यया ॥ १०५ ॥
सोऽपनीय समस्तानि महैनांसि द्विजोत्तमः ।
ब्रह्मणः पदमाप्नोति यद्गत्वा न निवर्तते ॥ १०६ ॥
विना श्रद्धां प्रमादाद्वा जपं कुर्वंश्चयवेद्यदि ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति स्मृतिः ॥ १०७
तद्विष्णोरिति मन्त्रोयं स्मर्तव्यः सर्वकर्मसु ।
आवर्त्यः प्रणवो वापि सर्वस्यादिर्यतो हि सः ॥ १०८ ॥
अभ्यसेत् प्रणवं नित्यमेकचित्तः समाहितः ।
गायत्रीं च तथा देवीमभ्यस्यन् मुक्तिमाप्नुयात् ॥ १०९ ॥
वैदिकं तु जपं कुर्यात् पौराणं पाञ्चरात्रिकम् ।
यो वेदस्तानि चैतानि यान्येतानि च सा श्रुतिः ॥ ११० ॥

---

१. D. omits the following portion :-

. . . . . . . पूजने तु चतुष्पदा ।
न्यासे जप्ये तथा ध्याने अग्निकार्ये तथार्चने ।
सर्वत्र त्रिपदा ज्ञेया . . . . . . . ।.

C. also omits the same, but it appears in the marginal correction and reads सा ज्ञाने for पूजने. २. D. reads यज्ञवेद° for यजुर्वेदे. ३. C. and D. read वेदे for मंत्रे. ४. A. reads मलिनानि, B. E. and G. read महीनां स and C. and D. महतां स all for महैनांसि. ५. C. and D. read for this verse the following line :—

प्रमादेन कथञ्चिद्वा जपं कुर्वन् भवेद्यदि ।.

A. reads प्रमादेन कथंचिद्वा for विना श्रद्धां प्रमादाद्वा; while B. E. and G. substitute श्राद्धं for श्रद्धां and कुर्य्यादिमं यदि for कुर्वंश्चयवेद्यदि. ६. D. reads समावृतः for समाहितः. ७. C. and D. read:—

. . . . . . . . . वैदिकं तु जपं हि यत् ।
पौराणं पाञ्चरात्रं च ह्यभ्यस्यन् मुक्तिमाप्नुयात् ॥.

Here D. differs from C. in having तु for हि and योऽभ्यसेत् for ह्यभ्यस्यन्.
८. B. C. E. F. and G. read वेत्ति for वेदस्.

जपेन येनेह कृतेन पुंसो ददाति मार्गं सवितापि कर्तुः।
अयं हि सर्वेष्टिकृतां वरिष्ठो विधेः पदं यास्यति निर्विकल्पम् ॥ १११ ॥
यदुक्तं सर्वशास्त्रेषु तथा सर्वश्रुतिष्वपि।
उपनिषन्मतं तद्धो विप्रा ह्येतत् प्रकीर्तितम् ॥ ११२ ॥
न्यासं तनुत्रं न बबन्ध देहे जग्राह नोङ्कारमसिं च तीक्ष्णम्।
विप्रो वशे यस्त्रिपदां न चक्रे लोके स रुष्टः किमु कस्य कुर्यात् ॥ ११३ ॥
उद्देशेन मया प्रोक्तो विधिर्जप्यस्य पावनः।
देवार्चनविधानं तु सम्प्रवक्ष्याम्यतःपरम् ॥ ११४ ॥

इति श्रीबृहत्पराशरीये धर्मशास्त्रे जपनिर्णयः।

देवार्चनं प्रवक्ष्यामि यदुक्तमृषिभिः पुरा।
वैदिकैरेव तन्मन्त्रैर्यस्य ये तस्य तैरिति ॥ ११५ ॥
अर्चयन् वैदिकैर्मन्त्रैर्नानुग्रहमपेक्षते।
वैदिकोऽनुग्रहस्तस्य वेदस्वीकरणेन तु ॥ ११६ ॥
ब्रह्माणं वैधसैर्मन्त्रैर्विष्णुं स्वैः शंकरं स्वकैः।
अन्यानपि तथा देवानर्चयेत् स्वीयमन्त्रकैः ॥ ११७ ॥

---

१. C. and D. read सर्वेष्ट° for सर्वेष्टि°; while D. निर्विकल्पः for निर्विकल्पम्. २. A.. and D. read धर्म°. for सर्व° ३. A. reads °समं for °मतं and हितं for ह्येतत्; while C. and D. are mistaken here. ४. B. E. F. and G. read सु° for च; while C. and D. are mistaken throughout in this verse. ५. D. and F. omit this whole verse; while A. B. C. E. read तस्योद्देशो for उद्देशेन. ६. Some manuscripts read °विधिः for °निर्णयः. ७. Before this line C. has the following two verses in the margin :—

समित्-पुष्प-कुशादीनि श्रोत्रियात् स्वयमाहरेत्।
शूद्रानीतैः स्वयंक्रीतैः कर्म कुर्वन् व्रजत्यधः॥
तुलसी-बिल्वपत्राणि सुवर्णकुसुमानि च।
प्रक्षाल्य सर्वदेवानां पुनः पूजां समाचरेत् ॥;

while B. E. F. and G. read °नमहं वक्ष्ये for °नं प्रवक्ष्यामि and substitute मुनिभिः for ऋषिभिः. ८. B. C. E. and G. substitute यैः for ये and अपि for इति; while F. omits the following :—

वैदिकैरेव तन्मन्त्रैर्यस्य ये तस्य तैरिति ॥
अर्चयन् वैदिकैर्मन्त्रैर्नानुग्रहमपेक्षते ।.

९. B. E. F. and G. read किं वेदाराधिकं परम्. १०. B. E. and G. read निज°, and F. द्विज for स्वीय°.

मन्त्रन्यासं पुरा कृत्वा स्वदेहे देवतासु च ।
गायत्र्यौकारन्यस्ताङ्गः[1] पूजयेद्विष्णुमव्ययम् ॥ ११८ ॥
न्यस्त्वा[2] तु व्याहृतीः सर्वाः प्रोक्तस्थानक्रमेण तु ।
ब्रह्मभूतः[3] शुचिः शान्तो देवयागमुपक्रमेत्[4] ॥ ११९ ॥
विष्णुरादिरयं देवः सर्वामरगणार्चितः ।
नामग्रहणमात्रेण पापपांशं[5] छिनत्ति यः ॥ १२० ॥
तदर्चनं प्रवक्ष्यामि विष्णोरमिततेजसः ।
यत् कृत्वा[6] मुनयः सर्वे परं सायुज्यमाप्नुयुः ॥ १२१ ॥
षट्स्वेतेषु[7] हरेः सम्यगर्चनं मुनिभिः स्मृतम् ।
अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ॥ १२२ ॥
अग्नौ क्रियावतां देवो[8] दिवि देवो मनीषिणाम् ।
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः ॥ १२३ ॥
आपो ह्यायतनं तस्य तस्मात्तासु सदा हरिः ।
सर्वगत्वेन विष्णोस्तु स्थण्डिले भावितात्मनाम् ॥ १२४ ॥
दद्यात् पुरुषसूक्तेन आपः पुष्पाणि[9] चैव हि ।
अर्चितं स्यादिदं तेन नित्यं[10] भुवनसप्तकम् ॥ १२५ ॥
आनुष्टुभस्य सूक्तस्य त्रैष्टुभस्य[11] च दैवतम् ।
पुरुषो यो[12] जगद्बीजमृषिर्नारायणः स्मृतः ॥ १२६ ॥
तस्य[13] सूक्तस्य सर्वस्य ऋचां[14] न्यासं यथाक्रमम् ।
देवे चैवात्मनि[15] तथा सम्प्रवक्ष्याम्यतः परम् ॥ १२७ ॥

---

१. A. reads °न्यस्ताङ्गः for °न्यस्ताङ्गः. २. A. reads न्यस्य, B. E. F. and G. read विन्यस्य for न्यस्त्वा; while A. °स्थाने for °स्थान°. ३. Except A. others read ब्रह्मी° for ब्रह्म°. ४. D. F. and G. read उपाचरेत् for उपक्रमेत्. ५. C. and E. read °राशिं, D. °योगं, G. °शङ्कां for °पाशं. ६. A. and D. read यज्ज्ञात्वा, B. तज्ज्ञात्वा, E. संज्ञानात्, F. यं ज्ञात्वा and G. स संज्ञा all for यत् कृत्वा; while some substitute विष्णोः for परं. ७. B. E. F. and G. read °स्वमेषु for °स्वेतेषु; while, except A., all others read कृतम् for स्मृतम्. ८. D. substitutes येषां for देवो. ९. B. reads पुण्यानि for पुष्पाणि. १०. Except C. and D. all read विश्वं for नित्यं. ११. A. B. E. F. and G. read त्रिष्टुभं तस्य and C. and D. त्रिविधं तस्य for त्रैष्टुभस्य च. १२. C. substitutes हि for यो. १३. D. reads अस्य for तस्य. १४. B. and D. read ऋचा for ऋचां and B. E. and G. read °विधिम् for °क्रमम्. १५. A. reads °ष्वात्मनि for चैवात्म°.

हस्तन्यासं पुरा[1] कृत्वा स्मृत्वा विष्णुं तथाऽव्ययम् ।
शिखाबन्धं च दिग्बन्धं सञ्चिन्त्य[2] विष्णुमात्मनि ॥ १२८ ॥
प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे ।
तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत् ॥ १२९ ॥
पञ्चमीं वामजानौ तु षष्ठीं च दक्षिणे[3] न्यसेत् ।
सप्तमीं वामकट्यां च दक्षिणायां तथाष्टमीम् ॥ १३० ॥
नवमीं नाभिमध्ये तु दशमीं हृदि विन्यसेत् ।
एकादशीं वामपादे द्वादशीं दक्षिणे न्यसेत् ॥ १३१ ॥
कण्ठे त्रयोदशीं न्यस्य तथा वक्त्रे चतुर्दशीम् ।
अक्ष्णोः पञ्चदशीं न्यस्य षोडशीं मूर्ध्नि विन्यसेत् ॥ १३२ ॥
एवं न्यासविधिं कृत्वा पश्चाद्यागं समाचरेत् ।
आसनं[4] चिन्तयेन्मेरुमष्टपत्रं[5] सकर्णिकम् ॥ १३३ ॥
व्याहृतीनामथ न्यासं कुर्याच्च[6] विधिवद् द्विजः ।
भूर्लोकं पादयोर्न्यस्य[7] भुवर्लोकं तु जानुनोः ॥ १३४ ॥
स्वर्लोकं कटिदेशे तु नाभिदेशे महस्तथा ।
जनोलोकं तु हृदये कण्ठदेशे तपस्तथा ॥ १३५ ॥
भ्रुवोर्ललाटसन्ध्योस्तु सत्यलोकः प्रतिष्ठितः ।
हिरण्मये परे कोशे[8] विरजं ब्रह्म निष्कलम् ॥ १३६ ॥
तच्छुभ्रं[9] ज्योतिषां ज्योतिस्तं[10]यदात्मविदो विदुः ।
आवाहनमथ प्राहु[11]र्विष्णोरमिततेजसः ॥ १३७ ॥
[12]यथार्चा क्रियते तस्य स्वदेहे चिन्तयेत्तथा ।
आद्ययाऽऽवाहयेद्देवमृचा तु[13] पुरुषोत्तमम् ॥ १३८ ॥

---

१. B. E. and G. read तथा for पुरा. २. D. reads °न्धशोऽर्चयेत् for °न्धं सञ्चिन्त्य. ३. B. E. F. and G. read दक्षिणतो for दक्षिणे. ४. D. reads आसने for आसनं. ५. Except A. all others substitute °दलं for °पत्रं. ६. B. E. F. and G. omit च and add तं before कुर्यात्. C. reads the same, but adds तं after कुर्यात्; while D. substitutes तत् for the same. ७. D. reads न्यस्त्वा for न्यस्य. ८. B. and G. read नित्ये for कोशे. ९. A. reads शुभं for शुभ्रं. १०. D. reads सत् for यत्. ११. Except B. all read प्राह for प्राहुर्. १२. C. and D. read यस्र्चाकृतये, E. यथा वा क्रियते both for यथार्चा क्रियते and A. B. E. F. and G. substitute तत्र for तस्य; while D. substitutes यथा for तथा. १३. B. E. F. and G. substitute ऽत्र, C. and D. च for तु.

यथा[1] देवे तथा देहे न्यासं कुर्याद्विधानतः ।
द्वितीययाऽऽसनं दद्यात् पाद्यं चैव तृतीयया ॥ १३९ ॥
चतुर्थ्यार्घ्यः प्रदातव्यः पञ्चम्याऽऽचमनं तथा ।
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वसनं[2] तथा ॥ १४० ॥
यज्ञोपवीतं चाष्टम्या नवम्या गन्धमेव च ।
पुष्पं देयं दशम्या तु एकादश्या च धूपकम् ॥ १४१ ॥
द्वादश्या दीपकं दद्यात्त्रयोदश्या नैवेद्यकम्[3] ।
चतुर्दश्याञ्जलिं कुर्यात् पञ्चदश्या प्रदक्षिणम् ॥ १४२ ॥
षोडश्योद्वासनं कुर्याच्छेषकर्माणि[4] पूर्ववत् ।
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनं हरेः ।
षण्मासात्[5] सिद्धिमाप्नोति एवमेव हि योऽर्चयेत् ॥ १४३ ॥
आदित्यमण्डले देवं ध्यात्वा विष्णुं मनोमयम्[6] ।
स याति ब्रह्मणः स्थानं नात्र कार्या विचारणा ॥ १४४ ॥

ध्येयो[7] दिनेशपरिमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी[8] हिरणमयवपुर्धृतशङ्ख-चक्रः ॥ १४५ ॥

---

१. B. reads देहे तथा देवे for देवे तथा देहे and A. C. and D. substitute कृत्वा for कुर्यात्; while G. reads this line:—

यथा देहं तथा न्यासं कुर्याद्विप्रो विधानतः ।

and E.—

यथा देहं तथा न्यासं सर्वं कुर्याद्विधानतः ।.

२. C. and D. read वस्त्रधौतकम् for वसनं तथा. ३. B. C. and G. read निवेद्यकं, E. निवेधकं, D. निवेदनम् and F. निचेष्टकाम् all for नैवेद्यकम्. ४. B. E. and G. read °कार्याणि for °कर्माणि. ५. Before this line C. has the following three lines in the margin, *viz.*:—

पुनः षोडशभिर्मन्त्रैर्दद्यात् पुष्पाणि षोडश ।
तच्च सर्वं जपेद्भूयः पौरुषं सूक्तमुत्तमम् ॥
ततः षोडशभिर्मन्त्रैर्जुहुयादन्नआहुतीः ।.

६. A. C. D. read °मुपैति यः for °मनोमयम्, but C. gives in the margin °मनोमयम्. ७. Some read ध्येयः सदा सवितृ° for ध्येयो दिनेशपरि°. ८. D. reads हरिर्मुनिजनैः for हिरण्मयवपुः.

सूक्तेन विष्णुविधिना समुदीरितेन
[1]योऽनेन नित्यमजमादिमनन्तमूर्तिम् ।
भक्त्याऽर्चयेत् पठति यश्च स विष्णुदेहं
विप्रो विशेद्धरिवरेण कृतार्थदेहः ॥ १४६ ॥
पञ्चरात्रविधानेन स्थण्डिले वा[2]पि पूजयेत् ।
जलमध्यगतो वापि पूजयेज्जलमध्यतः ॥ १४७ ॥
द्वादशारं नवव्यूहं पञ्चरात्र[3]क्रमेण तु ।
अभावे धौतवस्त्रस्य पत्रिकायास्तथा द्विजः ॥ १४८ ॥
जलेऽपि हि जलेनैव मन्त्रैरेवार्चयेद्धरिम् ।
विष्णु[4]र्विष्णुरित्यजस्रं चिन्तयेद्धरिमेव तु ॥ १४९ ॥
तिष्ठन् व्रजंस्तथाऽऽसीनः शयानोऽपि हरिं सदा ।
सं[5]स्मरन्ना ऽशुभं पश्येदिहाऽमुत्र च वै द्विजः ॥ १५० ॥
रुद्रं रुद्रविधानेन ब्रह्माणं च विधानतः ।
सूर्यं संहितमन्त्रैश्च तदीरितविधानतः ॥ १५१ ॥
दुर्गां कात्यायनीं चैव तथा वाग्देवतामपि ।
स्कन्दं विनायकं चैव योगिनीं क्षेत्रपालकान् ॥ १५२ ॥
वि[6]धिवदर्चयेत् सर्वान्यो विप्रो भक्तितत्परः ।
विष्णुना सु[7]प्रसन्नेन विष्णुलोकमवाप्नुयात् ॥ १५३ ॥
ग्रहांश्च पूजये[8]द्विद्वान् ब्राह्मणः शान्तितत्परः ।
आरोग्य-पुष्टिसंयुक्तो दीर्घमायुरवाप्नुयात् ॥ १५४ ॥
गृहा गावो नृपा विप्राः सद्भिः पूज्याः सदा न[9]रैः ।
पूजिताः पूजयन्त्येते निर्द[10]हन्त्यपमानिताः ॥ १५५ ॥
यो हितः सर्वसत्त्वेषु नृप-गो-ब्राह्मणेषु च ।
इहाऽमुत्र च पूज्योऽसौ विष्णुलोकमवाप्नुयात् ॥ १५६ ॥

---

१. D. substitutes योगेन for योऽनेन. २. A. substitutes ऽथ for ऽपि. ३. B. E. F. and G. substitute °तत्त्व° for °रात्र° and D. reads द्वादशारार्चनव्यूहपञ्चतत्त्व° for द्वादशारं नवव्यूहं पञ्चरात्र°. ४. Except C. all are mistaken here. ५. B. omits this line; while E. F. and G. read किञ्चिदिहामुत्र भवेन्नृणाम् for पश्येद्विहामुत्र च वै द्विजः and संस्मरेत् for संस्मरन्. ६. D. reads विधानेन for विधिवत् and B. C. E. F. and G. पूजयेत् for अर्चयेत्. ७. Except A., all others read सु° for स. ८. B. E. and G. read पश्चात् for विद्वान्. ९. A. C. and D. substitute द्विजैः for नरैः. १०. C. reads °दहन्ति चात्र° and D. °दहन्ति चाप° for °निर्दहन्त्यप°.

उक्तो गृहस्थस्य सुरार्चनस्य धन्यो विधिर्विष्णुपदोपलब्ध्यै[१] ।
कार्यो द्विजातेः प्रतिवासरं यो वेदोक्तमन्त्रैः स मया[२] हिताय ॥ १५७ ॥

देवपूजाविधिः प्रोक्त एष उद्देशतो यथा ।
वैश्वदेवस्य वक्तव्यो विधिर्विप्रा[३] मयाधुना ॥ ५१८ ॥

इति देवपूजाविधिः ।

वैश्वदेवं प्रवक्ष्यामि यथाकार्यं द्विजातिभिः ।
स्वगृह्योक्तविधानेन जुहुयाद्वैश्वदैविकम् ॥ १५९ ॥
हविष्यस्य द्विजोऽभावे यथालाभं शृतं हविः ।
जुहुयाद्विधिवद्भक्त्या यथा स्याच्चित्तनिर्वृतिः ॥ १६० ॥
यद्वा तद्वापि होतव्यमग्नौ किंचिद् द्विजातिभिः ।
फलं वा यदि वा मूलं घासं वा[४] यदि वा पयः ॥ १६१ ॥
अहुत्वा च द्विजोऽश्नीयाद्यत्किंचित् स्वयमश्नुते ।
अश्नीयाच्चेदहुत्वापि नरकं स[५] समाविशेत् ॥ १६२ ॥
जुहुयाद्व्यञ्जन-क्षा[६]रवर्ज्यमन्नं हुताशने ।
अनुज्ञातो द्विजैस्तैस्तु त्रिःकृत्वा पुरुषर्षभः ॥ १६३ ॥
यँ[७]त्त्वग्नौ हूयते नैव यस्य चाऽग्रं न दीयते ।
अभोज्यं तद् द्विजातीनां भुक्त्वा चान्द्रायणं चरेत् ॥ १६४ ॥
लौकिके वैदिके चैव[८] वैश्वदेवो हि नित्यशः ।
लौकिके पापनाशाय वैदिके स्वर्गमाप्नुयात् ॥ १६५ ॥
अभावादग्निहोत्रस्य आ[९]वसथ्यस्य वा तथा ।
यस्मिन्नग्नौ पचेदन्नं तत्र होमो विधीयते ॥ १६६ ॥

---

१. B. C. and G. read °लब्धौ for °लब्ध्यै and D. °जनस्य for °पदोप°. २. D. reads समये हि° for स मया हि°; while E. and G. substitute याम् for °य at the end of this verse. ३. B. E. and G. read पुण्यो विधिर्म° and F. पुरुषो विधिर्म° for विधिर्विप्रा म°. ४. B. E. F. G. read दारु तथा for वा यदि वा; while C. substitutes मासं for घासं. ५. B. E. F. G. read प्रतिपद्यते for स समाविशेत्. C. also reads the same in the margin. ६. B. G. and F. read °क्षीर° for °क्षार°, but it is useless here. ७. C. and D. read यत्त and यद्वा° for यत्तु; while C. मासं, D. मासः B. E. and G. वान्नं all for चाऽग्रं. ८. B. E. F. and G. read वापि and D. नैव for चैव. ९. A. B. C. F. and G. तथा चावसथस्य च for आवसथ्यस्य वा तथा, but it seems incorrect.

अग्निःसोमस्समस्तौ तौ विश्वेदेवास्तथैव च ।
धन्वन्तरिः कुहूस्तद्वदनुमतिः प्रजापतिः ॥ १६७ ॥
द्यावाभूम्योः स्विष्टकृते हुत्वैतेभ्यः पुनस्ततः[1] ।
कुर्याद्बलिहृतिं पश्चात् सर्वदिक्षु प्रदक्षिणम् ॥ १६८ ॥
सुत्राम्णे तस्य पुंभ्यश्च यमाय च सहानुगैः ।
[2]वरुणाय सहैतैश्च सोमाय च सहानुगैः ॥ १६९ ॥
मरुद्भिश्च क्षिपेद्द्वारि अश्विभ्यां[3] च तथा हरेत् ।
वनस्पतिभ्यः सर्वेभ्यो मुसलोलूखले हरेत् ॥ १७० ॥
श्रियै च भद्रकाल्यै च उच्छीर्षे[4] पादयोः क्रमात् ।
ब्रह्मणे सानुगायेति मध्ये चैव बलिं हरेत् ॥ १७१ ॥
वास्तवे सानुगायेति वास्तुमध्ये बलिं हरेत् ।
विश्वेभ्यश्चैव देवेभ्यो बलिमाकाश[5] उत्क्षिपेत् ॥ १७२ ॥
द्युचरेभ्यश्च भूतेभ्यो नक्तंचारिभ्य एव च ।
वास्तोः पृष्ठे च कुर्वीत बलिं[6] सर्वानुतृप्तये ॥ १७३ ॥
पितृभ्यो बलिशेषं तु सर्वं दक्षिणतो हरेत् ।
पतितेभ्यः श्वपाकेभ्यः पापानां पापरोगिणाम् ॥ १७४ ॥
कृमि-कीट-पतङ्गानां सर्वेभ्योऽपि बलिं हरेत् ।
एवं सर्वाणि भूतानि यो विप्रो नित्यमर्चयेत् ॥ १७५ ॥
तत् स्थानं परमाप्नोति यज्ज्योतिः परवेधसः ।
गृह्ये ऽग्नौ वैश्वदेवं तु प्रोक्तमेतन्मनीषिभिः ॥ १७६ ॥
अनग्निकस्तु कुर्वीत वैश्वदेवं कथं त्विति[7] ? ।
महाव्याहृतिभिस्तिस्रः समस्ताभिस्तथाऽपरा[8] ॥ १७७ ॥
इत्याहुतीश्चतस्रस्तु तथा देवकृते ऽपि च ।
त्रियम्बकं यजामह इत्यादि चाहुतिद्वयम् ॥ १७८ ॥

---

१. A. B. E. and G. read पुनस्त्वतः, C. and D. पुनः पुनः both for पुनस्ततः. २. D. omits this line. ३. C. and D. read अप्सरेभ्यः and हरे for अश्विभ्यां च and हरेत् respectively. ४. D. meaninglessly reads उष्णीषे for उच्छीर्षे. ५. A. reads आकाशतो हरेत्, D. आकाशमुत्क्षिपेत् both for आकाश उत्क्षिपेत्. ६. B. E. G. read बलिः and C. बलीन् for बलिं. ७. C. reads इह for इति. ८. A. B. and F. read ऽपरे, C. and G. ऽपराः for ऽपरा; while G. सुर्या चैव for समस्ताभिस्.

वैश्वदेवेन जुहुयाद्विशेषोऽन्यत्र वै पुनः ।
अपमृत्युनिवृत्त्यर्थमायुः-पुष्टिविवृद्धये ॥ १७९ ॥
जुहुयात् त्र्यम्बकं देवं बिल्वपत्रैस्तिलैस्तथा ।
विनायकाय होतव्या घृतस्याहु[3]तयस्तथा ॥ १८० ॥
सर्वविघ्नोपशान्त्यर्थं पूजयेद्यत्न[4]तस्तु तम् ॥
गणानां त्वेति मन्त्रेण स्वाहाकारान्तमादृतः ॥ १८१ ॥
चतस्रो जुहुयात्तस्मै गणेशाय तथाऽऽहुतीः ।
तद्विष्णोरिति जुहुयाद्वि[6]धिसम्पूर्णताकृते ॥ १८२ ॥
प्रणवेन च गायत्र्यां केचिज्जुह्वति तद् द्विजाः ।
एतौ वै सर्वदैवत्यौ एतत्परं न किंचन ॥ १८३ ॥
एताभ्यां तु हुतेनैव सर्वेभ्योऽपि हुतं भवेत् ।
जुहुयात् सर्पि[10]षाऽभ्यक्तं गव्येन पयसाऽथ वा ॥ १८४ ॥
क्रीतेन गोविकारेण तिलतैलेन वा पुनः ।
सम्प्रोक्ष्य पाथ[11]सा वाऽन्नं नाभ्यक्तं चाश्नुयादपि ॥ १८५ ॥
अस्ने[12]हा यव-गोधूमाः शालयो हवनीयकाः ।
हविस्तु हविरभ्यक्तमहविस्तु हविर्यतः ॥ १८६ ॥
अभ्यक्तमेव होतव्यमतो रूक्षं विवर्जयेत् ।
दारिद्र्यं [13]श्वित्रितामेके रूक्षान्नहवने विदुः ॥ १८७ ॥
जठराग्नेः[14] क्षयं चैके रूक्षमन्नं न हूयते ।
ओंकारपूर्विकाः सर्वाः स्वाहाकारान्तिकास्तथा ॥ १८८ ॥

---

१. A. reads °देवं च, B. D. E. F. and G. च. २. B. D. E. and G. read अल्प° for अप°. ३. A. reads तथाष्टौ तस्य चाहुतीः, D. तथा घृतस्य चाहुतिः for घृतस्याहुतयस्तथा. ४. B. reads च ततस्तु, C. यत्र तंस्तु, D. सन्ततस्तु and E. यत्ततस्तु° all for यत्नतस्तु°. ५. A. D. and E. read पादतः for °मादृतः. ६. B. E. F. and G. read विधेः for विधि°. ७. A. B. E. read गायत्र्याः for गायत्र्या; while C. A. D. and F. read स द्विजाः for तद्द्विजाः. ८. B. E. F. and G. read तत्परन्न तु for एतत्परं न. ९. B. reads हुतेनैव सर्वेभ्योऽपि हुतं for हुतेनैव सर्वेभ्योऽपि हुतं. १०. B. E. and G. read सर्षपाभक्तं and D. सर्पिषा युक्तं for सर्पिषाभ्यक्तं, but the former reading is an incorrect one. ११. Except A. all others read पयसा for पाथसा; while B. E. and G. read न for च. १२. B. E. F. and G. read निःस्नेहाः and D. चापि गोधूमाः for अस्नेहाः and यवगोधूमाः. १३. All others except A. read चित्रताम् for श्वित्रिताम्. १४. B. E. F. and G. read जठराग्नौ for जठराग्नेः. १५. A. रूक्षासनं न हूयते, C. रूक्षान्नं सम्प्रदीयते for रूक्षमन्नं न हूयते.

जुहुयादग्निको विप्रो गृहमेधी हि[1] नित्यशः ।
बलिं चोपान्तभूतेभ्यः सर्वेभ्योऽप्यविशेषतः[2] ॥ १८९ ॥

हुत्वाऽथ[3] कृष्णवर्त्मानं कृताञ्जलिः प्रसादयेत् ।
त्वमग्ने द्युभिरेतेन मन्त्रेण भक्तिमान् द्विजः ॥ १९० ॥

आब्रह्मन्निति मन्त्रं[4] तु जपेद्वै सार्वकामिकम् ।
आहाव्यग्न इति होत्रं मन्त्रं च प्रयतो जपेत्[5] ॥ १९१ ॥

[6]अन्यं हौताशनं मन्त्रं जपित्वाथ क्षमापयेत् ।
अन्यानि चैव सूक्तानि[7] पवित्राणि ततो जपेत् ।
सर्वशान्तिककृत्यर्थं[8] तथाग्निर्देवतेति च ॥ १९२ ॥

ज्ञानं धनमरोगित्वं गतिमिच्छं[9]स्तथा द्विजः ।
शम्भुमग्निं रविं विष्णुमर्चयेद्भक्तितः क्रमात् ॥ १९३ ॥

अजानन् यो द्विजो नित्यमहुत्वाऽत्ति श्रृतं हविः ।
पितृ-देव-मनुष्याणामृणयुक्तः स यात्यधः[10] ॥ १९४ ॥

शाकं वा[11]ऽपि तृणं वापि हुत्वाग्नावश्नुते द्विजः ।
सर्वकामसमायुक्तः सोऽत्रैव[12] सुखमश्नुते ॥ १९५ ॥

स्वरेण वर्णेन च यद्विहीनं तथैव हीनं क्रियया[13]पि यच्च ।
तथातिरिक्तं मम तत् क्षमस्व तदस्तु चाग्ने[14] परिपूर्णमेतत् ॥ १९६ ॥

सर्वपापापनोदाय[15] सर्वकामाय वै द्विजाः ।
द्विजन्मनां हितार्थाय वैश्वदेव उदाहृतः ॥ १९७ ॥

---

१. A. substitutes तु for हि and B. and G. read गृहमेधो for गृहमेधी. २. B. C. and E. read विशेषतः for अविशेषतः. ३. B. E. and F. read तु for ऽथ. ४. A. reads मन्त्रे for मन्त्रं. ५. A. reads यतः for जपेत्. ६. D. does not insert the following line :—

अन्यानि चैव सूक्तानि पवित्राणि ततो जपेत् ।.

C. also omits the same, but gives in the margin. ७. A. and F. read मन्त्राणि for सूक्तानि. ८. F. inserts this line before the two preceding lines. ९. C. reads इष्टं for इच्छन्. १०. C. and D. read प्रयात्यधः for स यात्यधः. ११. D. substitutes च for वा. १२. B. E. F. and G. read ऽपि for एव. १३. D. reads कृपया for क्रियया. १४. B. E. and G. read चास्ते and C. and D. चाग्नेः for चाग्ने. १५. B. E. F. and G. read सर्वकामफलाय च for सर्वकामाय वै द्विजाः; while C. and D. read °प्रणोदाय for °पनोदाय.

## इति वैश्वदेवविधिः ।

आतिथ्यं सम्प्रवक्ष्यामि चातुर्वर्ण्यफलप्रदम् ।
चातुर्वर्ण्योऽतिथिः प्रोक्तः काले प्राप्तोऽध्वगोऽश्रुतः ॥ १९८ ॥
अदृष्टोऽपृष्टगोत्रादिरज्ञाताचार-विद्यकः ।
सन्ध्यामात्रकृताचारस्तज्ज्ञैः सोऽतिथिरुच्यते ॥ १९९ ॥
क्षुत्तृष्णा-ऽध्वश्रमश्रान्तः प्राणत्राणाश्रयाचकः ।
गृहीतपात्रमात्रः सन् गृहद्वारमुपागतः ॥ २०० ॥
विष्णुरूपोऽतिथिः सोयमुत्तरार्थमुपागतः ।
इति मत्वा महाभक्त्या वृणुयाद्भोजनाय तम् ॥ २०१ ॥
एष स्वर्ग्यः समायातः सर्वदेवमयोऽतिथिः ।
निर्दह्य सर्वपापानि ममायं सम्प्रयास्यति ॥ २०२ ॥
ब्राह्मणैः सह भोक्तव्यो भक्त्या प्रक्षाल्य पाद्द्वयम् ।
आसनार्घ्यादिकं दत्वा कृत्वा स्रक्-चन्दनादिकम् ॥ २०३ ॥
योगिनो विविधै रूपैर्भ्रमान्ति धरणीतले ।
नराणामुपकाराय ते चाज्ञातस्वरूपिणः ॥ २०४ ॥
तस्मादभ्यर्चयेत् प्राप्तं श्राद्धकालेऽतिथिं द्विजः ।
श्राद्धक्रियाफलं हन्ति तत्रैवापूजितोऽतिथिः ॥ २०५ ॥
तस्मादपूर्वमेवात्र पूजयेदागताऽतिथिम् ।
कदाचित् कश्चिदागच्छेत्तारयेद्यस्तु पूर्वजान् ॥ २०६ ॥
यतिर्ब्रत्यग्निहोत्री च तथा च मखकृद् द्विजः ।
सदैतेऽतिथयः प्रोक्ता अपूर्वाश्च दिने दिने ॥ २०७ ॥

---

१. B. E. F. and G. read अथातिथ्यं for आतिथ्यं सं०. २. D. reads बहुश्रुतेः for ऽध्वगोऽश्रुतः. ३. B. E. and G. read ऽश्रुतपूर्वादि°, F. ऽदृष्टगोत्रादि° for ऽपृष्टगोत्रादि°. ४. B. E. and G. read °परि° for °श्रम°; while B. substitutes °च° for °ऽध्व°. ५. B. E. F. and G. read गृहीतयात्रामात्रः सन् and C. and D. गृहिणो वैश्वदेवान्ते. ६. B. reads °म्प्रद्वारार्थे°, C. D. E. F. and G. read °म्प्रत्तारार्थ° for °मुत्तरार्थ°; while C. and D. इहा° for उपा°. ७. A. reads च भक्त्या थ, D. च भक्त्या च both for महाभक्त्या. ८ B. C. E. F. and G. read स्वं पुण्येन म°, D. स्वं शुभने म° for एषः स्वर्ग्यः स.° ९. B. E. F. and G. read भोज्योऽसौ for भोक्तव्यो. १०. B. C. D. and G. read °र्चादिकं for °र्घ्यादिकं. ११. C. and D. read वेषै° for रूपै°. १२. B. E. F. and G. read क्वापि कदाचिदागच्छेत् for कदाचित् कश्चिदागच्छेत्. १३. B. reads ब्रह्माग्निहोत्री and D. ब्राह्माग्निहोत्री for ब्रत्यग्निहोत्री.

अतिथेऽमरदेहस्त्वं मत्तारार्थमिहागतः।
संसारपङ्कमग्नं मामुद्धरस्वाऽघनाशन ॥ २०८ ॥
नैकाश्रमे[1] वसन् विप्रो मुनीन्द्रैरुच्यतेऽतिथिः।
अन्यत्र दृष्टपूर्वो यो[2] नासावतिथिरुच्यते ॥ २०९ ॥
क्षत्रियो यदि वा[3] गच्छेदातिथित्वेन[4] वेश्मनि।
भुक्तेषु सत्सु विप्रेषु कामतस्तु तमाशयेत् ॥ २१० ॥
वैश्यो वा यदि वा शूद्रो विप्रगेहं समाव्रजेत् ॥
तौ भृत्यैः सह भोक्तव्याविति पाराशरोऽब्रवीत्[5] ॥ २११ ॥
क्लीबो वा यदि वा काणः कुष्ठी वा व्याधितोऽपि वा।
आगतो वैश्वदेवान्ते द्रष्टव्यः सर्वदेववत्[7] ॥ २१२ ॥
क्षत्रियेणापि वैश्येन तथैव वृषलेन च।
आतिथ्यं सर्ववर्णानां कर्तव्यं स्यादसंशयम् ॥ २१३ ॥
योऽतिथिं पूजयेद्भक्त्या अन्याभ्यागतमेव च[8]।
बाल-वृद्धादिकं चैव तस्य विष्णुः प्रसीदति ॥ २१४ ॥
देवा मनुष्याः पितरश्च सर्वे स्युर्येन तृप्तेन च भूरि दिष्टम्।
तस्या[9]न्नदातुस्त्वमराङ्गनाभिस्तस्यातिथेः केन समत्वमस्ति ॥ २१५ ॥

इति आतिथ्यविधिः।

वर्णधर्मान् प्रवक्ष्यामि यत् कृत्यं ब्राह्मणादिभिः।
निबोधध्वं[10] द्विजास्तद्वै संक्षेपेण पृथक् पृथक् ॥ २१६ ॥
यजनं याजनं विप्रे तथा दान-प्रतिग्रहौ।
अध्यापनमध्ययनं कर्माण्येतानि षट् तथा ॥ २१७ ॥
प्रजानां रक्षणं दानमरीणां निग्रहस्तथा।
यजना-ऽध्ययने राज्ञि विषयासक्तिवर्जनम् ॥ २१८ ॥

---

१. D. reads नैकग्रामे for नैकाश्रमे. २. D. reads ऽपि for यो. ३. B. ऽपि यथा for यदि वा. E. and G. also read the same; while F. reads ऽपि यदा for the same. ४. D. reads अतिथिस्तस्य for अतिथित्वेन. ५. B. C. E. F. and G. read ते and भोक्तव्या इति for तौ and भोक्तव्याविति respectively. ६. B. C. F. and G. read ऽवदत् for ऽब्रवीत्. ७. C. reads °दैवतः and D. °देवताः both for °देववत्. ८. B. E. F. and G. read पूर्वमभ्यागतं तथा for अन्याभ्यागतमेव च; while C. substitutes तथा° for अन्या°. ९. B. and D. read तस्मा° for तस्या°. F. also reads the same. १०. D. reads निबोद्धव्यं for निबोधध्वं.

यजना-ऽध्ययने दानं पाशुपाल्यं तथा विशि[1] ।
वाणिज्यं च कुसीदं च कर्मषट्कं प्रकीर्तितम् ॥ २१९ ॥
शुश्रूषा ब्राह्मणादीनां तदाज्ञापालनं तथा ।
एष धर्मः स्मृतः शूद्रे वाणिज्येन च जीवनम् ॥ २२० ॥
सर्वेषां जीवनं प्रोक्तं धर्मेणैव च कर्षणम् ।
भिन्नवृत्तिर्यथा न स्यात् कुर्याद्विप्रस्तथा च तत् ॥ २२१ ॥
कुर्वन्नुक्तानि कर्माणि वृत्त्या वा क्षत्रियस्य च ।
वृत्त्यभावे द्विजो जीवेद्भिन्नवृत्तिं विवर्जयेत्[2] ॥ २२२ ॥
प्रजानां पालनं दानं शस्त्रभृत्त्वं[3] प्रचण्डता ।
निर्जयः परसैन्यानामेष धर्मः स्मृतो नृपे[4] ॥ २२३ ॥
पुष्पं पुष्पं विचिनुयान्[5] मूलच्छेदं न कारयेत् ।
मालाकार इवाऽऽरामे प्रजासु स्यात्तथा नृपः ॥ २२४ ॥
लोहकर्मरथानां च गवां च प्रतिपालनम्[6] ।
गोरक्षा कृषि-वाणिज्यं वैश्यवृत्तिरुदाहृता ॥ २२५ ॥
शूद्रस्य द्विजशुश्रूषा परो धर्मः प्रकीर्तितः ।
अन्यथा[7] कुरुते यत्तु तद्भवेत्तस्य निष्फलम् ॥ २२६ ॥
लवणं मधु तैलं च दधि तक्रं घृतं पयः ।
न दुष्येच्छूद्रजातीनां कुर्यात् सर्वस्य विक्रयम् ॥ २२७ ॥
विक्रयं मद्य-मांसानामभक्ष्यस्य च भक्षणम् ।
अगम्यागामिता चौर्यं शूद्रे स्युः पातहेतवः[8] ॥ २२८ ॥
कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ।
वेदाक्षरविचारेण शूद्रस्य नरको[9] ध्रुवम् ॥ २२९ ॥

इति श्रीबृहत्पराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां संहितायां चतुर्थो ऽध्यायः[10] ॥ ४ ॥

---

१. D. reads कृषिः for विशि. २. G. reads जीवेत् for विवर्जयेत्. ३. B. C. D. E. and G. read °वृत्ति and F. °वृत्तं for °भृत्त्वं. ४. D. reads प्रकीर्तितः for स्मृतो नृपे. ५. B. C. F. and G. read विचिन्वीत for विचिनुयात. ६. B. E. F. and G. read परि° for प्रति°. ७. B. E. F. and G. read यदन्यत् कुरुते पुण्यं. C. also reads the same, but substitutes अथ for यत्. ८. A. C. and D. read पाप° for पात°. ९. A. C. and D. read नरकं for नरको. १०. C. does not insert धर्मशास्त्रे सुव्रतप्रोक्तायां संहितायां चतुर्थोऽध्यायः for it, it substitutes only वर्णधर्मविधिः; while D. omits संहितायां others read द्वितीयो for चतुर्थो.

## पंचमोऽध्यायः ।

अतः परं गृहस्थस्य कर्मा[१]चारं कलौ युगे ।
वर्ण[२]साधारणं साक्षाच्चातुर्वर्ण्यक्रमेण तु[३] ॥ १ ॥
युष्माकं सम्प्रवक्ष्यामि पराशरवचोदितम्[४] ।
षट्कर्मसहितो विप्रः कृषिवृत्तिं समाश्रयेत् ॥
हीनाङ्गं व्याधिसंयुक्तं प्राणहीनं च दुर्बलम् ।
क्षुद्युक्तं तृषितं श्रान्तमनड्वाहं न वाहयेत् ॥ ३ ॥
स्थिराङ्गं नीरुजं तृप्तं साण्डं षण्ढविवर्जितम् ।
अ[५]धृष्यं सबलप्राणमनड्वाहं तु वाहयेत् ॥ ४ ॥
वाहयेद् दिवसस्यार्धं त[६]तः स्नानं समाचरेत् ।
कुगवैर्न कृषिं कुर्यात् सर्वथा धेनुसंग्रहम् ॥ ५ ॥
बन्धनं पालनं रक्षां द्विजः कुर्याद्गृही गवाम् ।
वत्साश्च यत्नतो रक्ष्या व[७]र्धन्ते ते यथा क्रमात् ॥ ६ ॥
न दूरे तास्तु नेतव्यां[८]श्चारणाय कदाचन ।
दू[९]रे गावश्चरन्त्यो हि न भवन्ति शुभावहाः ॥ ७ ॥
प्रातरेव हि दोग्धव्या दुह्यात् सायं न ता गृ[१०]ही ।
दोग्धु[११]र्द्विःपयसो नैव वर्धन्ते ताः कदाचन ॥ ८ ॥

---

१. B. E. F. and G. substitute धर्मा° for कर्मा°. २. B. C. F. G. धर्म and D. and E. धर्मे° for वर्ण°. ३. B. C. and G. °मागमम् E. D. and F. °मागतम् for °मेण तु. ४. B. E. F. and G. read °मुखाच्छ्रुतम्, C. °प्रचोदितम् for °वचोदितम्. ५. B. E. and C. read this line as follows :—

शान्तं च सबलं तृप्तं वाहयेद्वृषभं कृषी ॥.

F. also reads the same, but it differs in having दृप्तं for तृप्तं and कृषौ for कृषी. ६. C. and D. read पश्चात् for ततः. ७. B. E. F. and G. read वर्धनीया यथाक्रमम् and C. वर्धन्त्येते यथाक्रमम्; while D. reads यथाक्रमम् for यथा क्रमात्. ८. C. and D. read मोक्तव्या° for नेतव्या°. ९. A. reads दूरे गावो विचरन्त्यो, B. E. F. and G. गावो दूरेण चरन्त्यो for दूरे गावश्चरन्त्यो हि. C. omits this and the following two lines, but they appear in the margin; while D. reads शुभायनाः and others except A. शुभा यतः for शुभावहाः. १०. A. B. read ततो, E. and G. °तना and C. °तनं and D. तथा all for न ता. ११. B. C. E. F. and G. substitute हि for द्विः; while D. reads विःपर्ययेनैव for द्विः पयसो नैव.

अनादेयंतृणान्यत्त्वा स्त्रवन्त्यनुदिनं पयः ।
तुष्टिदा देवतादीनां पूज्या गावः कथं न ताः ॥ ९ ॥

स्पृष्टाश्च गावः शमयन्ति पापं
संसेविताश्चोपनयन्ति वित्तम् ।
ता एव दत्तास्त्रिदिवं नयन्ति
गोभिर्न तुल्यं धनमास्ति किंचित् ॥ १० ॥

यस्याः शिरसि ब्रह्माऽऽस्ते स्कन्धदेशे शिवःस्थितः ।
पृष्ठे नारायणस्तस्थौ श्रुतयश्चरणेषु च ॥ ११ ॥
या अन्या देवताः काश्चित्तस्या लोमसु ताः स्थिताः ।
सर्वदेवमया गावस्तुष्येत्तद्भक्तितो हरिः ॥ १२ ॥
हरन्ति स्पर्शनात् पापं पयसा पोषयन्ति याः ।
प्रापयन्ति दिवं दत्ताः पूज्या गावः कथं न ताः ॥ १३ ॥
यत्खुराहतभूमेर्ये उत्पद्यन्ते रजःकणाः ।
प्रलीनं पातकं तैस्तु पूज्या गावः कथं न ताः ॥ १४ ॥
शकृन्मूत्रं हि यस्यास्तु पीतं दहति पातकम् ।
किमपूज्यं हि तस्या गोरिति पाराशरो ऽब्रवीत् ॥ १५ ॥
गौरवत्सा न दोग्धव्या न चैवं गर्भसान्धिनी ।
प्रसूता च दशाहार्वाग्दोग्धि चेन्नरकं व्रजेत् ॥ १६ ॥

---

१. B. reads °तृणान्त्यक्त्वा, C. °तृणास्त्यक्त्वा, D. °तृणस्त्यक्त्वा, E. °तृणा त्यक्त्वा, F. °तृणान्यचा and G. °तृणास्त्यक्त्वा all for तृणान्यत्त्वा. २. D. reads तुष्टिकृत् for तुष्टिदा. ३. C. and D. do not insert this whole verse, but it appears in the margin of C. ४. B. reads चित्तम् and G. चित्रम् both for वित्तम्. ५. C. and D. read स्मृतः for स्थितः. ६. A. C. and D. read विष्णुस्तथा for नारायणः. ७. B. reads दहति and E. F. and G. read दहन्ति, D. हरतिं all for हरन्ति. ८. D. reads °च्छपा° for °त्खुरा° and B. E. F. and G. substitute तु for ये and C. and D. उद्यताः पांसुसंस्पृशः for उत्पद्यन्ते रजःकणाः; while A. omits this and the following one line, namely:—

यत्खुराहतभूमेर्ये उत्पद्यन्ते रजःकणाः ।
प्रलीनं पातकं तैस्तु पूज्या गावः कथं न ताः ॥.

९. D. reads प्रीणयेत् पुरुषस्यैनो वन्द्या for प्रलीनं पातकं तैस्तु पूज्या. १०. A. reads पीतं पुनाति पातकात् for पीतं दहति पातकम्; while E. reads सकृत् for शकृत्. ११. B. C. E. F. and G. read तथा for चैवं.

दुर्बला व्याधिसंयुक्ता पुष्पिता या द्विवत्सका[1]।
साधुभिर्न च दोग्धव्या धार्मिकैर्[2]धन[3]मीप्सुभिः ॥ १७ ॥

कुलान्ते पुष्पिता गावः कुलान्ते बहवस्तिलाः।
कुलान्ते चलचित्ता स्त्री कुलान्ते बन्धुविग्रहः ॥ १८ ॥

एकत्र पृथिवी सर्वा सशैल-वन-कानना।
त[3]स्या गौर्ज्यायसी साक्षादेकत्रोभयतोमुखी ॥ १९ ॥

यथोक्तविधिना चैता वर्णैः पाल्याः सुपूजिताः।
पालयन् पूजयन्नेताः स प्रेत्येह च मोदते ॥ २० ॥

दक्षिणाभिमुखा गाव उत्तराभिमुखा अपि।
बन्धनीयास्तथैताः स्युर्न प्राक्-पश्चिमतोमुखाः ॥ २१ ॥

वा[4]जि-गो-वृषशालायां सुतीक्ष्णं लोहदा[5]त्रकम्।
स्थाप्यं तु सर्वदा त[6]त् स्यादवलुप्तविमोक्षकृत् ॥ २२ ॥

गावो देयाः सदा रक्ष्याः पाल्याः पोष्याश्च सर्वदा।
ताडयन्ति च ये पापा ये चाक्रो[7]शन्ति ता नराः ॥ २३ ॥

नरकाग्नौ प्र[8]पच्यन्ते गोनिःश्वासप्रपीडिताः।
स[9]पलाशेन शुष्केण ता दण्डेन निर्वर्तयेत् ॥ २४ ॥

गच्छ गच्छेति तां ब्रूयान् मा मा भैरिति वारयेत्।
सं[10]स्पृशन् गां नमस्कृत्य कुर्यात्तां च प्रदक्षिणम् ॥ २५ ॥

प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा।
तृणोदकादिसंयुक्तं यः प्रदद्याद्गवाह्निकम् ॥ २६ ॥

---

१. Except A. all others read °भूः for °का. २. A. and D. read वर्णिभिर् for धार्मिकैर्; while D. substitutes सुख° for धन°. ३. D. reads तथा for तस्या. ४. A. and D. read गो-वृषा-वाजि° and C. गो-वृष-वाजि° for वाजि-गो-वृष°. ५. B. and G. read °यन्त्रकम् for °दात्रकम्. ६. B. C. and G. read तस्या and D. तस्यां for तत् स्यात्; while B. and G. दुःखलब्ध-विमोक्षकृत्, C. अविलुप्तविमोक्षणात् and D. गवि लुप्तविमोक्षणात् all for अवलुप्तविमोक्षकृत्. ७. D. reads °कर्ष° for °क्रोश°. ८. B. and G. substitute च for प्र°. B. and G. read गोभिः श्वासप्र°. C. गोभिः श्वासेन for गोनिःश्वासप्र°; while D. reads this whole line as follows:—

नरके पच्यते ऽङ्गानि श्वासेन च प्रपीडिताः ।.

९. C. reads स पशुश्चर्मदण्डेन मृदुनैनां, D. स पशुच्चर्मदण्डेन मृदु तासां for सपलाशेन शुष्केण ता दण्डेन; while B. ताडणेन for ता दण्डेन. १०. A. reads संस्पृश्य गां, B. E. F. and G. यां संस्पृश्य for संस्पृशन् गां.

सोऽश्वमेधसमं पुण्यं लभते नात्र संशयः ।
गवां कण्डूयनं स्नानं गवां दानसमं भवेत् ॥ २७ ॥
तुल्यं गोशतदानस्य भयतो गां प्रपाति यः ।
पृथिव्यां यानि तीर्थानि आसमुद्रं सरांसि च ॥ २८ ॥
गवां शृङ्गोदकस्नानकलां नार्हन्ति षोडशीम् ।
पातकानि कुतस्तेषां येषां गृहमलंकृतम् ॥ २९ ॥
सततं बालवत्साभिर्गोभिः श्रीभिरिव स्वयम् ।
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् ॥ ३० ॥
तिष्ठन्त्येकत्र मन्त्रास्तु हविरेकत्र तिष्ठति ।
गोभिर्यज्ञाः प्रवर्तन्ते गोभिर्देवाः प्रतिष्ठिताः ॥ ३१ ॥
गोभिर्वेदाः समुद्गीर्णाः षडङ्गाः सपद-क्रमाः ।
सौरभेयास्तु यस्याग्रे पृष्ठतो यस्य ताः स्थिताः ॥ ३२ ॥
वसन्ति हृदये नित्यं तासां मध्ये वसन्ति ये ।
ते पुण्यपुरुषाः क्षोण्यां नाकेऽपि दुर्लभाश्च ते ॥ ३३ ॥
ये गोभक्तिकरा नित्यं भवन्ते ये च गोप्रदाः ।
शृङ्गमूले स्थितो ब्रह्मा शृङ्गमध्ये तु केशवः ।
शृङ्गाग्रे शंकरं विद्यात्त्रयो देवाः प्रतिष्ठिताः ॥ ३४ ॥
शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च ।

---

१. A. and B. read धूमं, E. धर्मं and F. धूम° for स्नानं; while A. B. E. F. and G. read गोप्रदानसमं for गवां दानसमं and D. omits this whole verse. २. This and the preceding one line is omitted in C., but they appear in the marginal correction. ३. D. reads समुद्राश्च for आसमुद्रं. ४. B. F. and G. read °स्यापि for °स्नाने. ५. B. E. F. and G. read गोभिस्तु बालवत्साभिः सदा. C. also reads the same, but differs in सततं for गोभिस्तु; while D. substitutes स्त्रीभिः for श्रीभिः. ६. B. E. F. and G. read ब्राह्मणानां गवां चैव. ७. B. E. and G. read यत्र मन्त्राश्च यत्र सन्ति हवींषि च for एकत्र मन्त्रास्तु हविरेकत्र तिष्ठति; while D. substitutes हरि° for हवि.° ८. B. E. and G. read वेदाः प्रवर्तिताः for देवाः प्रतिष्ठिताः; while C. वसन्ति ते and F. प्रवर्तिताः for प्रतिष्ठिताः. ९. A. reads सौरभेयस्य, B. सौरभ्यो यस्य and E. F. G. स्युरेता यस्य for सौरभेयास्तु; while D. तस्याग्रे for यस्याग्रे. १०. C. and D. do not insert this line; while B. E. F. and G. वर्षान्ते for भवान्ते. ११. F. omits the following :—

शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च ।
सर्वे देवाः स्थिता देहे सर्वदेवमयी हि गौः ॥

सर्वे देवाःस्थिता देहे सर्वदेवमयी हि गौः ॥ ३५ ॥
ललाटाग्रे स्थिता देवी नासामध्ये तु षण्मुखः ।
कम्बलाऽश्वतरौ नागौ तत्कर्णाभ्यां व्यवस्थितौ ॥ ३६ ॥
स्थितौ तस्याश्च सौरभ्याश्चक्षुषोः शशि-भास्करौ ।
दन्तेषु वसवश्चाष्टौ जिह्वायां वरुणः स्थितः ॥ ३७ ॥
सरस्वती च हुंकारे यम-यक्षौ[1] च गण्डयोः ।
ऋषयो रोमकूपेषु प्रस्रावे जाह्नवीजलम् ॥ ३८ ॥
कालिन्दी गोमये तस्या अपरा देवतास्तथा ।
अष्टाविंशतिदेवानां कोट्यो लोमसु ताः स्थिताः ॥ ३९ ॥
उदरे गार्हपत्योऽग्निर्हृदये दक्षिणस्तथा ।
मुखे चाहवनीयस्तु सभ्याऽऽवसथ्यौ[2] च कुक्षिषु ॥ ४० ॥
एवं यो वर्तते गोषु ताडन-क्रोधवर्जितः ।
महतीं श्रियमाप्नोति स्वर्गलोके महीयते ॥ ४१ ॥
[3]कुलं तस्या न शङ्केत पूतिगन्धं न वर्जयेत् ।
यावत् पिबति तद्दु[4]र्गन्धं तावत् पुण्यं प्रवर्धते ॥ ४२ ॥
यो[5] गां पयस्विनीं दद्यात्तरुणां वत्ससंयुताम् ।
शिवस्यायतने दत्त्वा दत्तं तेन तु विश्वकम् ॥ ४३ ॥

[6]इति गोमहिमा ।

[7]उक्षाणो वेधसा सृष्टाः सस्यस्योत्पादनाय च ।
तैरुत्पादितसस्येन सर्वमेतद्वि[8]धार्यते ॥ ४४ ॥
यश्चैतान् पालयेद्यत्नाद्वर्धयेच्चैव यत्नतः ।
जगन्ति तेन सर्वाणि साक्षात् स्युः पालितानि[9] च ॥ ४५ ॥
यावद्गोपालने पुण्यमुक्तं[10] पूर्वमनीषिभिः ।

---

१. A. reads यमौ कुक्षौ for यम-यक्षौ. २. B. E. F. and G. read कुक्षौ सभ्यावसथ्यकौ, and D. चावसथ्यौ च कुक्षिषु. ३. A. reads कुल्यं तस्य for कुलं तस्या ; while B. C. D. E. G. read लङ्घेत for शङ्केत. ४. Except A. all others read °दुग्धं for °गन्धं. ५. B. E. F. and G. read thus :—

पयस्विनीं सवत्सां यः सुशीलां तरुणीं तथा ।
गां शिवस्यालये दद्यात्तेन दत्तं जगत्त्रयम् ॥.

६. A. and D. do not insert this line. ७. D. reads thus :—

उक्षा गौर्वेधसा सृष्टा तस्य ह्युत्पादनाय च ।.

८. D. reads हि for वि°. ९. B. E. F. and G. read पालितानि न संशयः for साक्षात् स्युः पालितानि च. १०. B. and G. read पूर्वं for पूर्व°; while C. °ण्यं युक्तं, E. and F. °ण्यं प्रोक्तं for °ण्यमुक्तं.

उक्षणोऽपि पालने तेषां फलं दशगुणं भवेत् ।
जगदेतद्धृतं सर्वमनडुद्भिश्चराचरम् ॥ ४७ ॥
[2]वृषं एव ततो रक्ष्यः पालनीयश्च सर्वदा ।
धर्मोऽयं भूतले साक्षाद् ब्रह्मणा ह्यवतारितः ॥ ४८ ॥
त्रैलोक्यधारणायालमन्नानां च प्रसूतये ।
अना[3]देयानि घासानि विघसन्ति स्वकामतः ॥ ४९ ॥
भ्रमित्वा भूतलं दूरमुक्षाणं को[4] न पूजयेत् ।
उत्पादयन्ति सस्यानि मर्दयन्ति वहन्ति[5] च ।
आनयन्ति दवीयस्त[6]दुक्षतः कोऽधिको भुवि ॥ ५०
न्धेन दूराच्च वहन्ति [illegible]
[illegible] रक्षन्ति च वर्धयन्ति ॥५१॥
[9]पुंण्यास्तु गावो वसुधातले या बिभ्रत्यमुं गोवृषगर्भभारम् ।
भारःपृथिव्यां[10] दशताडिताया एकस्य चोक्षणो ह्यपि साधुवाचः[11]॥५२॥
एकेन दत्तेन वृषेण येन भवन्ति दत्ता दश सौरभेय्यः ।
माहेय्यपीयं धरणीसमाना तस्माद्वृषात् पूज्यतमोऽस्ति नान्यः॥५३॥
उत्पाद्य सस्यानि तृणं चरन्ति[12] तदेव भूयः सततं वहन्ति ।
न भारखिन्नाः प्रवदन्ति किंचिदहो वृषैर्जीवति[13] जीवलोकः ॥ ५४ ॥

---

१. B. E. F. and G. read पुंसां for तेषां and उक्ष्णां च for उक्षणोऽपि. २. E. F. and G. read वृषा एव ततो रक्ष्याः पालनीयाः प्रयत्नतः. B. also reads the same, but it differs in स्वतो for ततो. ३. E. F. and G. अनायत्तानि for अनादेयानि and B. C. E. F. and G. भक्षयन्ति, D. विध्वंसन्ति for विघसन्ति; while C. स° for स्व°. ४. B. E. F. and G. read कैर्न पूजिताः. ५. From the letters वहं G. omits the following :—

. . . . . . . . . . . . . . ति च ।
आनयन्ति दवीयस्तदुक्षतः कोऽधिको भुवि ॥
स्कन्धेन दूराच्च वहन्ति भारं नार्दन्ति किं . . . . . . . ॥.

६. C. reads दवीयस्थमुक्षाणं and F. दवीयस्तात् for दवीयस्तदुक्षतः and दवीयस्तत् respectively. F. substitutes ऽवनौ for भुवि. ७. B. C. E. and G. read नाक्षन्ति किञ्चिद्धनिकस्य दुःखम्. F. reads also the same, but it differs in माख्याति for नाक्षन्ति; while E. and F. substitute दृष्ट्या च for दूराच्च. ८. A. and D. read जीवेन for देहेन. ९. B. C. E. F. and G. read धन्याः for पुण्याः and except A. and F. others read ऽस्मिन् for या. १०. A. and B. read पृथिव्यां. ११. A. reads वाऽथ for °वाचः. १२. E. F. and G. read तृणान्यदन्ति तान्येव for तृणं चरन्ति तदेव; while A. C. and D. read सकलं for सततं. १३. C. and D. read धारयति for जीवति.

तृतीयेऽब्दे चतुर्थे वा यदा वत्सो दृढो भवेत् ।
तदा नासाऽस्य[1] भेत्तव्या नैव प्राग्, दुर्बलस्य च ॥ ५५ ॥
नासावेधनकीलं[2] तु खादिरं वाथ शैंशपम् ।
द्वादशाङ्गुलकं कार्यं तज्ज्ञैस्तैश्च[3] समं च वा ॥ ५६ ॥

शालां[4] द्विजेन्द्रा वृष-गो- हयानां
तां याम्यदिग्द्वारवतीं विदध्यात् ।
सौम्याककुब्द्वारवतीं सुशोभां
तेषां शमिच्छन् ध्रुवमात्मनश्च[5] ॥ ५७ ॥
गावो वृषा वा हय-हस्तिनो वा
अन्येऽपि सर्वे पशवो द्विजेन्द्राः ।
याम्यामुखा[6] वोत्तरदिङ्मुखा वा
नान्याशकास्ते खलु बन्धनीयाः ॥ ५८ ॥
शालाप्रवेशे वृष-गो-पशूनां
राजाऽपि यत्नाद्धय-कुञ्जराणाम् ।
होमं च सप्तार्चिषि शास्त्रयुक्तं[7]
कुर्याद्विधिज्ञो द्विजपूजनं च ॥ ५९ ॥

## इति[8] वृषभप्रशंसा ।

लाङ्गलं सं[9]प्रवक्ष्यामि यत्काष्ठं यत्प्रमाणतः ।
हलेषायां[10]स्तथोन्मानं प्रतोदस्य युगस्य च ॥ ६० ॥

---

१. A. B. C. and D. read तु for ऽस्य; while E. substitutes न for च. २. B. E. F. and G. read °भेदनकीलः, C. °वेधनकालः for °वेधनकीलं and B. G. शैशवः, C. सैशियं, D. सैशिवं, E. सैशवः and F. सैंशयः all for शैंशपम्. ३. B. E. and G. त्रैणस एव स, C. D. त्रीणि समे च वा, F. त्रैणं तमेव सः for °स्तैश्च समं च वा. ४. B. C. D. E. and G. read शाला for शालां and F. सोलो (?) for the same. ५. D. reads धृत° for ध्रुव°. ६. D. reads दिङ्मुखमुत्तरादिङ्मुखाशकाः. ७. B. C. F. and G. read शास्त्रयुक्त्या for शास्त्रयुक्तं. ८. A. and D. do not insert this. ९. B. E. F. and G. substitute च and C. and D. यत् for सं°. १०. A. and G. read हलीषा° and some read हलीशा° for हलेषा°

चत्वारिंशत्तथा चाष्टावङ्गुलानि कुथः[1] स्मृतः।
अर्धार्धमङ्गुलैर्भाज्यो[2] हलेषावेधतश्च यः ॥ ६१ ॥
षोडशैव तु तस्याधः षड्विंशति[3] तथोपरि।
वेधस्तस्याश्च कर्तव्यः प्रमाणेन षडङ्गुलः ॥ ६२ ॥
अङ्गुलैश्चाष्टभिस्तस्माद्वेधः स्यात् प्रातिहारिकः[4]।
तस्याधस्ताच्च चत्वारि वेधश्चं[5] चतुरङ्गुलः ॥ ६३ ॥
अष्टाङ्गुलमुरस्तस्य[6] वेधादूर्ध्वं प्रकल्पयेत्।
ग्रीवा दशाङ्गुला[7] चोर्ध्वं हस्तग्राही ततः स्मृता ॥ ६४ ॥
साऽपि तज्ज्ञैः[8] शुभा कार्या तद्वेधस्त्र्यङ्गुलो भवेत्।
पञ्चाङ्गुलं पुरस्तस्य[9] शिरसोऽपि विभावनम् ॥ ६५ ॥
पृथुत्वं शिरसो धार्यं हस्तंतल[10]प्रमाणकम्।
अङ्गुलानि तथा चाष्टौ उरसः पृथुता भवेत्[11] ॥ ६६ ॥
वेधाद्बहिः[12] प्रतीकारी षट्त्रिंश[13]दङ्गुला भवेत्।
सुतीक्ष्णलोहफलका[14] मृत्काष्ठादिविदारकृत् ॥ ६७ ॥
न सीरं क्षीरवृक्षस्य न बिल्व-पिचुमन्दयोः।
इत्यादीनां हि कुर्वाणो न नन्दति चिरं गृही ॥ ६८ ॥

---

१. B. and F. read कुठः, C. कुहः and D. कुहुः all for कुथः. २. B. and G. read ऊर्ध्वोऽधमङ्गुलैर्भेद्या, E. and F. अर्धार्धमङ्गुलैर्भेद्या, A. अर्धोऽधमङ्गुलीर्भाज्या and D. अथार्द्धामङ्गुलैर्भोज्यः for अर्धार्धमङ्गुलैर्भाज्यो and here some read हलीषा and हलीशा for हलेषा. ३. B. F. and G. read षट्त्रिंशति for षड्विंशति. ४. B. and G. read स्यान्मानि° for स्यात्प्राति°; while D. interchanges place of this verse for the next one. ५. Except A. all others omit this च and read स वेधः for वेधश्च. ६. A. reads °गुलः मुर° for °गुलमुर°. ७. B. E. and G. read देशगुणा for दशाङ्गुला. C. दशाङ्गुली for the same and B. स्मृताः, C. and E. स्मृतः for स्मृता; while G. reads ऊर्ध्वं-हस्तग्राही for ऊर्ध्वं हस्तग्राही. ८. D. reads सार्वत्रज्ञैः for साऽपि तज्ज्ञैः. ९. B. E. F. and G. read मुरस्तस्य शिरसीति. C. reads the same, but substitutes शिरस्येति for शिरसीति; while D. reads तस्याः for तस्य. १०. A. reads °ताल° for °तल°. ११. D. reads स्मृता for भवेत्. १२. D. reads बन्धाद्बहिः प्रतीहारी for वेधाद्बहिः प्रतीकारी. १३. A. reads षड्विंशत्यं° for षट्त्रिंशदं.° १४. B. reads सुतीक्ष्णो लोहफला स्यात्, C. E. and F. सुतीक्ष्णा लोहफाला स्यात्, G. सुतीक्ष्णे लोहफला स्यात् for सुतीक्ष्णलोहफलका and B. E. and G. substitute °विकार° for °विदार°; while D. reads this line as follows:—

सुतीक्ष्णे लोहपाल्यस्य सुक्तावामादिदारकृत् ॥.

प्लक्षाक्षयोर्न तत् कुर्यात् [1]कीर्तिघ्नौ तौ प्रकीर्तितौ ॥
तयोः [2]कोष्ठस्य तत् कुर्वन्ससस्यो नश्यति [3]ध्रुवम् ॥ ६९ ॥
प्राञ्जला सप्तहस्ता च चतुरस्राऽग्रवर्तुला ॥
[4]सालादिशुभकाष्ठानां [5]हलीषा विदुषां मता ॥ ७० ॥
अस्या वेधः सकर्णायाः कार्यो नववितस्तिभिः ॥
नीचोच्चवृषमानेन तद्ज्ञा एवं वदन्ति हि ॥ ७१ ॥
चतुर्हस्तं युगं कार्यं स्कन्धस्थानेऽर्द्ध[6]चन्द्रवत् ॥
मेषशृङ्ग्याः कदम्बस्य [7]सालाद्यन्यतमस्य वा ॥ ७२ ॥
शम्या वेधाद्बहिः कार्या दशाङ्गुलप्रमाणिका ॥
तन्मानेन [8]प्रणाली च तदन्तरदशाङ्गुलम् ॥ ७३ ॥
प्रतोदश्च समग्रन्थिर्वैणवश्च चतुष्करः ॥
तदग्रे चापि कर्तव्यो [9]यवाकारस्तु लोहजः ॥ ७४ ॥
हीनातिरिक्तं कर्तव्यं नैव किञ्चित् प्रमाणतः ॥
कुर्यादनडुहोऽदैन्या[10]द्दैन्यात्तु नरकं व्रजेत् ॥ ७५ ॥
यथा दृढं यथाशोभं वाहकस्य प्रमाणतः ॥
भूमेश्च कर्षणायालं तज्ज्ञाः [11]सीरं वदन्ति हि ॥ ७६ ॥
योजनं तु हलस्याथ प्रवक्ष्यामि यथा तथा ॥
[12]ज्येष्ठानक्षत्रसंयुक्ते [13]पुण्येऽन्हि तद्विधीयते ॥ ७७ ॥
अन्यत्र वा शुभे भे च तत्र कार्यं विपश्चिता ॥
यत्तु कृत्यं हितं वापि पुण्यं वा मनसि स्फुरेत् ॥ ७८ ॥
मातृश्राद्धं द्विजः [14]कुर्याद्यथोक्तविधिना गृही ॥

---

* तत्र विद्वान् द्विजश्रेष्ठः पुण्येऽन्हि तद्विधीयते ॥

उपलभ्यत इदमर्धं सर्वेष्वप्यादर्शपुस्तकेषु । तथापीदं प्रक्षिप्तमिव प्रतिभाति । न कमप्यर्थविशेषं दर्शयति । अत उपेक्षितमिति सुधियो विदां कुर्वन्तु ।

१. B. D. E. F. read राक्षसौ, २. C. प्रमादतस्तु तत्कुर्वन् ३. A. B. C. D. and F. read °ते गृही. ४. B. D. and F. शालादि°. ५. E. हलीशा. ६. B. D. E. °चन्द्रकम्. ७. B. C. D. E. F. read शालाद्य°. ८. B. C. D. E. F. read प्रवाली. ९. All others except A. read यवाकारा तु लोहवत्. १०. A. reads अनडुहां दैन्याद्दैन्यात्तु for अनडुहोऽदैन्याद्दैन्यात्तु. ११. C. reads सर्वं for सीरं. १२. only C. reads श्रेष्ठनक्षत्र° for ज्येष्ठानक्षत्र°. १३. All others except A. and C. read पुण्येऽहनि for पुण्येऽन्हि. १४. C. reads कृत्वा for कुर्यात्.

द्रव्य-कालानुसारेण[1] कुर्वाणो धर्मतः कृषिम् ॥ ७९ ॥
प्रोल्लिख्य मण्डलं पुष्प-धूप-दीपैः समर्च्य तत् ॥
इन्द्राय च तथाऽश्विभ्यां मरुद्भ्यश्च तथा द्विजः ॥ ८० ॥
कुर्याद्बलिहृतिं[2] विद्वान् उदग्वै[3] कश्यपाय च ॥
तथा कुमार्यै सीतायै अनुमत्यै तथा बलिः ॥ ८१ ॥
नमःस्वाहेति मन्त्रेण स चेच्छन्नात्मनो हितम्[4] ॥
दधि-गन्धा-ऽक्षतैः पुष्पैः शमीपत्रैस्तिलैस्तथा ॥ ८२ ॥
दद्याद्बलिं वृषाणां च मध्वाज्यप्राशनं तथा ॥
सङ्घृष्य सीरफालाग्रं हेम्ना वा रजतेन वा ॥ ८३ ॥
प्रलिप्य[5] मधु-सर्पिर्भ्यां कुर्याच्च[6] तत्प्रदक्षिणम् ॥
अग्न्युक्षणोर्मण्डलं[7] कृत्वा कुर्यात्सीरप्रवाहणम् ॥ ८४ ॥
पुण्य लाङ्गल कल्याण कल्याणाय नमोऽस्त्विति ॥
सीतायाः स्थापनं कृत्वा पराशरमृषिं स्मरन् ॥ ८५ ॥
सीरा युञ्जन्ति इत्याद्यैर्मन्त्रैः सीरं प्रवाहयेत् ॥
दधि-दूर्वा-ऽक्षतैः पुष्पैः शमीपत्रैश्च पुण्यदैः ॥ ८६ ॥
सीतां पूज्य वृषौ भक्त्या रक्तवस्त्रविषाणकौ ॥
सप्तधान्यानि चादाय प्रोक्ष्य पूर्वामुखो हली ॥
तानि[8] कृत्वोक्ष्णोः क्षेत्रे च किरन् भूमिं कृषेद्द्विजः ॥ ८७ ॥
न तिलैर्न यवैर्हीनं द्विजः कुर्वीत कर्षणम् ॥
तद्विहीनं तु कुर्वाणं न प्रशंसन्ति देवताः ॥ ८८ ॥
तिलपात्रच्युतं तोयं दक्षिणस्यां पतेद्दिशि ॥
तेन तृप्यन्ति पितरो यावन्न तिलविक्रयः ॥ ८९ ॥

---

१. A. C. and F. read °कालानुरोधेन; while B. E. read °कालानुमानेन for °कालानुसारेण. २. Only B. reads बालिहतिं for बलिहृतिं. ३. Except A. and F. all others read दुग्धान्नं for उदग्वै. ४. In all others except A. शुभम् is substituted for हितम्. ५. C. only substitutes प्रलेप्य for प्रलिप्य. ६. B. D. and E. read कुर्वीत. ७. A. reads उक्ष्णोश्च; while B. reads मंगलं and F. reads मण्डनं. ८. A. B. and F. read दत्वा for कृत्वा.

विक्रीणीते तिलान्यस्तु मुक्त्वाऽन्यद्धान्यसामकान्[1] ॥
विमुच्य पितरस्तं तु प्रयान्ति हि तिलैः सह ॥ ९० ॥

तुषाज्जलं यवस्थं च पत्रेभ्यो भूतले पतत् ॥
पयो-दधि-घृताद्यैस्तु तर्पयेत्सर्वदेवताः ॥ ९१ ॥

दैव-पर्जन्य-भू-सीरयोगात् कृषिः प्रजायते ॥
व्यापारात्पुरुषस्यापि तस्मात्तत्रोद्यतो भवेत् ॥ ९२ ॥

शालीक्षु-शण-कार्पास-वार्ताकप्रभृतीनि च ॥
वापयेत् सस्यबीजानि सर्वं वापि न सीदति ॥ ९३ ॥

चन्द्रक्षये ऽमतिर्विप्रो[2] यो युनक्ति वृषं क्वचित् ॥
तं पञ्चदशवर्षाणि त्यजन्ति पितरो हितम् ॥ ९४ ॥

चन्द्रक्षये तु योऽविद्वान् द्विजो भुङ्क्ते पराशनम् ॥
भोक्तुर्मासार्जितं पुण्यं भवेदशनदस्य वै ॥ ९५ ॥

चन्द्रार्कयोस्तु संयोगे कुर्याद्यः स्त्रीनिषेवणम् ॥
स्युरेतोभोजनास्तस्य तन्मासं पितरो हताः ॥ ९६ ॥

चन्द्रक्षये तु यः कुर्यात्तरुस्तम्भनिकृन्तनम्[3] ॥
तत्पर्णसंख्यया तस्य भवन्ति[4] भ्रूणहत्यकाः ॥ ९७ ॥

वनस्पतिगते सोमे योऽध्वानं तु व्रजेद्[5]द्विजः ॥
प्रभ्रष्टद्विजकर्माणं तं त्यजन्त्यमरादयः ॥ ९८ ॥

वासांसीन्दुप्रणाशे यो[6] रजकस्याग्रतः क्षिपेत् ॥
पिबन्ति पितरस्तस्य मासं वस्त्रमलाम्बु तत् ॥ ९९ ॥

सोमक्षये द्विजो याति त्यक्त्वा[7] यस्तु हुताशनम् ॥
स देव-पितृशापाग्निदग्धो नरकमा[8]विशेत् ॥ १०० ॥

---

१. A. reads °स्तोमकान्; and all others except C. read °वामकान्; while C. substitutes तर्पयेत्सार्षिदेवताः for मुक्त्वान्यद्धान्यसामकान्. २. Except A. all others read तिथौ for ऽमतिः. ३. C. reads नरस्तरुनिकृन्तनम्; and F. reads तरुस्तम्बनिकृन्तनम्. ४ B. E. F read भ्रूणहत्या न संशयः; while A. and C. read °हत्यजाः. ५. B. D. and E. substitute गच्छति for व्रजेत्. and F. reads गच्छते. ६. B. C. and E. substitute तु for यो. ७. D. reads त्यक्त्वाग्न्यं यस्तु वाशनम् for त्यक्त्वा यस्तु हुताशनम्. ८. A. and C. read आदिशेत्; while others read आवसेत् for आविशेत्.

अष्टमी कामभोगेन षष्ठी तैलोपभोगतः ॥
कुहूश्च दन्तकाष्ठेन हिनस्त्यासप्तमं कुलम् ॥ १०१ ॥
चन्द्राप्रतीतौ पुरुषस्तु दैवादद्यादमत्या यदि दन्तकाष्ठम् ॥
ताराधिराजः स्वदितस्तु तेन घातः कृतः स्यात्पितृ-देवतानाम् ॥१०२॥
तत्राभ्यज्य विषाणानि गावश्चैव तथा वृषाः ॥
चरणाय विसृज्यन्ते आगतान् निशि भोजयेत् ॥ १०३ ॥
य उत्पाद्येह सस्यानि सर्वाणि तृणचारिणः ॥
जगत् सर्वं धृतं यैस्तु पुज्यन्ते किन ते वृषाः ॥ १०४॥
चरणाय विसृष्टं तु यस्य गोदशकं भवेत् ॥
यद्रूपेण स्थितो धर्मः पूज्यन्ते किं न ते वृषाः ॥ १०५ ॥
स्युः पाल्या यत्नतस्ते वै वाहनीया यथाविधि ॥
स याति नरकं घोरं यो वाहयत्यपालयन् ॥ १०६ ॥
नाऽधिकाङ्गो न हीनाङ्गः पुष्पिताङ्गो न दूषितः॥
वाहनीयो हि शूद्रेण वाहयन्क्षयमश्नुते ॥ १०७ ॥
वर्जयेद्दुष्टदोषांश्च वाहने दोहने नरः ॥
पाल्या वैयत्नतः सर्वे पालयन्च्छुभमाप्नुयात् ॥ १०८ ॥
अन्नार्थमेतानुक्षाणः ससर्ज परमेश्वरः ॥
अन्नेनाप्यायते सर्वं त्रैलोक्यं सचराचरम् ॥ १०९ ॥
अग्निर्ज्वलति चान्नार्थं वाति चान्नाय मारुतः ॥
गृह्णाति चाम्भसां सूर्यो रसानन्नायं रश्मिभिः ॥ ११० ॥
अन्नं प्राणो बलं चान्नमन्नाज्जीवितमुच्यते ॥
अन्नं च जगदाधारं सर्वमन्ने प्रतिष्ठितम् ॥ १११ ॥
सर्वेषां देवतादीनामन्नं जीवः प्रकीर्तितः ॥
तस्मादन्नात्परं तत्वं न भूतं न भविष्यति ॥ ११२ ॥

---

१. All others except A. read येनैकेन प्रदत्तेन for चरणाय विसृष्टं तु. २. only F. reads वाहयेत् for वाहयति. ३. A. C. F. read हि; while B. D. E. read न. ४. C. only reads आप्नुयात् for अश्नुते. ५. A. B. and C. substitute ते for वै. ६. B. reads अन्नार्थमृषभान्सृष्ट्वा; while F. reads अन्नार्थं वृषभान्सृष्ट्वा for अन्नार्थमेतानुक्षाणः. ७. C. reads आनीय for अन्नाय. ८. A. reads अन्नं सर्वस्य धातारः and C. reads अन्नं सर्वस्य चाऽऽधारः for अन्नं च जगदाधारं. ९. A. reads the whole line thus भूरादीनां हि सर्वेषामन्नं बीजं परं स्थितः; and C. reads सुरादीनां हि सर्वेषामन्नं बीजं परं स्मृतम्.

द्यौः पुमान्धरणी नारी अम्भो बीजं दिवश्च्युतम् ॥
द्यु-धात्री-तोयसंयोगादन्नादीनां हि सम्भवः ॥ ११३ ॥

आपो मूलं हि सर्वस्य सर्वमप्सु प्रतिष्ठितम् ॥
आपोऽमृतरसो ह्याप आपः शुक्रं बलं महः ॥ ११४ ॥

सर्वस्य बीजमापो हि सर्वमद्भिः समावृतम् ॥
सद्य[2] आप्यायना ह्याप[3] आपो ज्येष्ठतरा ह्यतः ॥ ११५ ॥

किञ्चित्कालं विनाऽन्नाद्यैर्जीवन्ति मनुजादयः ॥
न जीवन्ति विना ताभि[4]स्तस्मादापोऽमृतं स्मृताः ॥ ११६ ॥

दत्ताभिरद्भिरेतस्यां[5] किं न दत्तं कलौ[6] युगे ॥
यथान्नेन प्रदत्तेन सर्वं दत्तं भवेदिह ॥ ११७ ॥

अतोऽप्यन्नार्थभावेन कर्तव्यं कर्षणं द्विजैः ॥
यथोक्तेन विधानेन लाङ्गलादि प्रयोजनम् ॥ ११८ ॥

सीते सौम्ये कुमारि त्वं देवि देवार्चिते श्रिये ॥
शक्तिसूनोर्[7]यथा सिद्धा तथा मे सिद्धिदा भव ॥ ११९ ॥

शक्तिसूनोर्विना नाम्ना सीतायाः स्थापनं विना ॥
विनाऽभ्युक्षणरक्षार्थं सर्वं हरति राक्षसः ॥ १२० ॥

वापने लवने क्षेत्रे[8] खले गन्त्री[9]प्रवाहणे ॥
एष एव विधिर्ज्ञेयो धान्यानां च प्रवेशने ॥ १२१ ॥

देवतायतनोद्यान-जिपातस्थान-गोव्रजान् ॥
सीमा-स्मशान-भूमिं च वृक्षच्छायां क्षितिं तथा ॥ १२२ ॥

भूमिं निखातं यूपांश्च अयन[10]स्थानमेव च ॥
अन्यामपि हि चाऽवाह्यां[11] न कृषेत्काषिकृद्धराम् ॥ १२३ ॥

नोषरां वाहयेद्भूमीं न चाऽश्म-शर्करावृताम् ॥

---

१. C. reads पिता for पुमान्. २. A. reads सर्वं° and F. आद्य for सद्य. ३. C. reads यस्य for ह्यापः. ४. A. reads त्वाद्भिः for ताभिः. ५. A. and C. read एतस्मात् for एतस्यां. ६. C. reads क्षितौ for कलौ. ७. A. and B. read सत्कृता हि for शक्तिसूनोः. ८. B. reads मई. ९. except A. all read धान्य° for गन्त्री°. १०. A. यवन°, C. यजन°, and B. D. E. read चयन° for अयन°. ११. B. D. and E. read निर्वाह्यां and C. reads निर्वास्यां for चावाह्यां.

न गोचरां न प्रदत्तां न नदीपुलिना तथा ॥१२४॥
यद्यसौ वाहयेल्लोभाद्द्वेषाद्वापि हि मानवः ॥
क्षीयतेऽसौ चिरात्पापात् सपुत्र-पशु-बान्धवः ॥१२५॥
नरकं घोरतामिस्रं पापीयान् याति निश्चितम् ॥
योऽपहृत्य परकीयां कृषिकृद्वाहयेद्धराम् ॥ १२६ ॥
स भूमिस्तेयपापेन सुचिरं नरके वसेत् ॥
एकसङ्ख्यमपि स्वर्णं भूमिमङ्गुलमात्रिकाम् ॥ १२७ ॥
तथैकामपि गां हृत्वा सृष्ट्यन्तं नरकं वसेत् ॥
न दूरे वाहयेत् क्षेत्रं न चैवात्यन्तिके तथा ॥१२८ ॥
वाहयेन्न पथि क्षेत्रं वाहयन्दुःखभाग्भवेत् ॥
क्षेत्रेष्वेवं वृतिं कुर्याद्यामुष्ट्रो नावलोकयेत् ॥ १२९ ॥
न लङ्घयेत्पशुर्नाश्वो नभिन्द्याद्यां च शूकरः ॥
बन्धाश्च यत्नतः कार्या मृगादित्रासनाय च ॥ १३० ॥
अत्राप्युपद्रवं राजा तस्करादिसमुद्भवम् ॥
संरक्षेत्सर्वतो यत्नाद्यस्मात् गृह्णात्यसौ करान् ॥ १३१ ॥
कृषिकृन्मानवस्त्वेवं मत्वा धर्मं कृषेद्धराम् ॥
अनवद्यां शुभां स्निग्धां जलावगाहनक्षमाम् ॥ १३२ ॥
निम्नां हि वाहयेद्भूमिं यत्र विश्रमते जलम् ॥
वाहयेत्तु जलाभ्यर्णमवृष्टौ सेकसम्भवः ॥ १३३ ॥
शारद्यमुच्चकैर्भूमौ कङ्ग्वाद्यं वापयेद्धली ॥
अधित्यकासु कार्पासं वदन्त्यन्यत्र हैमकम् ॥ १३४ ॥
वासन्तं ग्रीष्मकालीयं वाप्यं स्निग्धेषु तद्विदा ॥

---

१. A. reads वाहयेन्नाप्रदत्तां च for न गोचरां न प्रदत्तां, B. also वाहयन्नाप्रमत्तश्च. २. B. D. E F, read मत्सरतोऽपि च for वा पि हि मानवः. ३. B. and C. read पापात्; while D. and E. read पापैः. ४. A. reads चेतसा and C. चैनसः for निश्चितम्. ५. B. D. E. F. read भुवम् for धराम्. ६. A. and C. read भूमिस्थेन for भूमिस्तेय°. ७. A. reads ह्यनन्तं for सुचिरं and B. substitutes स चिरं. D. E. also the same. ८. only E. reads हत्वा for हृत्वा. ९. A. and C. read भुवम् for धराम्. १०. except A. and C. all read नोयं स्थिरीभवेत्. ११. A. only substitutes स्थाने for भूमौ. १२. only C. reads सुधीः for हली. १३. A. B. C. read हैमतम्, D. हैमनम्, E. हैमजम् and F. हैवनम् for हैमकम्. १४. C. reads उप्यं.

केदारेषु तथा शालीञ्जलोपान्तेषु चेक्षवः ॥१३५॥
वृन्ताक-शाकमूलानि कन्दानि च जलान्तिके ॥
वृष्टिविश्रान्तपानीयक्षेत्रेषु च यवादिकान् ॥१३६॥
गोधूमाश्च मसूराश्च खल्याः [1]खलकुशास्तथा ॥
समस्निग्धेषु वाप्याश्च भूमिजोवान्विजानता ॥ १३७ ॥
तिला बहुविधाश्चोप्या अतसी-शणमेव च ॥
समस्निग्धेषु वाप्यानि धान्यान्यन्यानि योगतः ॥ १३८ ॥
कुलत्थामुद्गमाषाश्च राजमाषादिकास्तथा ॥
वाप्या भूमिविशेषे तु भूमिजीवं विजानता ॥ १३९ ॥
मृदम्बुयोगजं सर्वं वापयेत्कृषिकृन्नरः ॥
सम्पश्येच्चरतः सर्वान् गोवृषादीन् स्वयं गृही ॥ १४० ॥
चिन्तयेत्सर्वमात्मीयं स्वयमेव कृषिं व्रजेत् ॥
प्रथमं कृषिवाणिज्यं द्वितीयं पशुपोषणम्[2] ॥ १४१ ॥
तृतीयं [3]क्रीतविक्रीतं चतुर्थं राजसेवनम् ॥
नखैर्विलिखने यस्याः पापमाहुर्मनीषिणः ॥ १४२ ॥
तस्याः सीरविदारेण किं न पापं क्षितेर्भवेत् ॥
तृणैकच्छेदमात्रेण प्रोच्यते क्षय आयुषः ॥ १४३ ॥
असङ्ख्यकन्दनि[4]र्नाशादसङ्ख्यातं भवेदघम् ॥
यद्घर्षे मत्स्यबन्धानां तथा [5]सङ्कुरिणामपि ॥ १४४ ॥
अंहः कुक्कुटिकानां च तद्दिने कृषिकारिणाम् ॥
[6]वधकानां च यत् पापं यत् पापं मृगयोरपि ॥
कदर्याणां च यत् पापं तद्दिने [7]कृषिकारिणाम् ॥ १४५ ॥
वर्णानां च गृहस्थानां कृषिवृत्त्युपजीविनाम् ॥
तदेनसो विशुद्ध्यर्थं प्राह सत्यवतीपतिः ॥ १४६ ॥

---

१. A. reads चलकुलाः B. reads चलकुशाः and C. reads खलकुलाः.
२. B. reads °पालनम् for °पोषणम्. C. D. and E. too read the same.
३. A. reads क्रयविक्रयौ for क्रीतविक्रीतं. ४. C. reads °निर्वासात् for निर्नाशात्. ५. A. reads शूकरिणाम् for सङ्कुरिणाम्. ६. A. बन्धकानां for वधकानां. ७. Only A. reads कृषिजीविनाम् for कृषिकारिणाम्.

द्वादशो नवमो वापि सप्तमः पञ्चमोऽपि वा
धान्यभागः प्रदातव्यो सीरिणा खलके ध्रुवम्॥ ॥ १४७ ॥

अशमर्थव्यूढभूमौ च विंशांशी क्षेत्रभुग्भवेत्
*एकैकांशाय कर्षः स्याद्यावद्दशम-सप्तमौ॥ ॥ १४८ ॥

ग्रामेशस्य नृपस्यापि वर्णिभिः कृषिजीविभिः॥ १४९ ॥

सस्यभागः प्रदातव्यो यतस्तौ कृषिभागिनौ॥
ब्राह्मणस्तु कृषिं कुर्वन्वाहयेदिच्छया धराम्॥ १५० ॥

न किञ्चित् कस्यचिद्दद्यात्स सर्वस्य प्रभुर्यतः॥
ब्रह्मा वै ब्राह्मणं चास्यात्प्रभुस्त्वसृजदादितः ॥ १५१ ॥

तद्रक्षणाय बाहुभ्यामसृजत् क्षत्रियानपि॥
पशुपाल्याशनोत्पत्त्यै ऊरुभ्यां च तथा विशः॥ १५२ ॥

द्विजदास्याय पण्याय पद्भ्यां शूद्रमकल्पयत्॥
यत्किञ्चिज्जगतीहात्र भू-गेहाश्वं गजादिकम्॥ १५३ ॥

स्वभावेन हि विप्राणां ब्रह्मा स्वयमकल्पयत्॥
ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ॥ १५४ ॥

न तयोरन्तरं किञ्चित् प्रजाधर्माभिरक्षणे॥
तस्मान्न ब्राह्मणो दद्यात् कुर्वाणो धर्मतः कृषिम्॥ १५५ ॥

ग्रामेशस्य नृपस्यापि कियन्तमप्यसौ बलिम्
अथान्यत् सम्प्रवक्ष्यामि कृषिकृच्छुद्धिकारणम्॥॥ १५६ ॥

संशुद्धः कर्षको येन स्वर्गलोकमवाप्नुयात्॥

* दृश्यत्यायं क्षेपकः श्लोकः केषुचित् आदर्शपुस्तकेषु।

१. E. and F. read देहिनः for सीरिणा. २. B. C. D. E. and F. read क्षेत्रिणः for खलके. ३. A. B. D. E. and F. read बलिभागिनौ for कृषिभागिनौ. ४. A. substitutes ब्राह्मणोऽस्यास्यात्. ५. except A. and F. all read पुण्याय for पण्याय. ६. B. D. and F. substitute °हेम च for °गेहाश्वं. ७. A. and B. read नैतयोः for न तयोः. D. the same but E. read नैनयोः. ८. Only C. reads कृषिको for कर्षको. ९. B. D. E. and F. substitute °के महीयते for °कमवाप्नुयात्.

सर्वसत्वोपकाराय सर्वयज्ञोपसिद्धये ॥ १५७ ॥

नृपस्य कोशवृद्ध्यर्थं जायते कृषिकृन्नरः ॥
कुर्यात्कृषिं प्रयत्नेन सर्वसत्वोपजीविनीम् ॥ १५८ ॥

पितृ-देव-मनुष्याणां पुष्ट्यै स्यात् कृषीवलः ॥
वयांसि चान्यसत्वानि क्षुत्तृष्णापीडिताः प्रजाः ॥ १५९ ॥

उपयुञ्जन्ति सस्यानि क्षेत्रजातानि नित्यशः ॥
पुष्ट्यर्थं मुष्टिमेकां वा ददत्पापं व्यपोहति ॥ १६० ॥

यस्य क्षेत्रस्य यावन्ति सस्यान्यदन्ति प्राणिनः ॥
तावन्तोऽपि विमुच्यन्ते पातकात् कृषिकारकाः ॥ १६१ ॥

कृताग्निकार्यदेहोऽपि ब्राह्मणोऽन्यतमोऽपि वा ॥
आददानः परक्षेत्रात् पथि गच्छन्न लिप्यते ॥ १६२ ॥

क्षेत्री विमुच्यते दोषात् नियतं कृषिसम्भवात् ॥
गृहीतं क्षेत्रिणो धान्यं निवेदयति वाण्वपि ॥ १६३ ॥

अनिवेदिते तदर्धं स्यात् पातकं कर्षुकस्य च ॥
भावशुद्धावतो धर्मो ह्यनेन तद्विशोधयेत् ॥ १६४ ॥

मुष्टिं तु कल्पयन्धान्यं सर्वपापं व्यपोहति ॥
यत्किञ्चिदर्थिने दद्याद्भिक्षामात्रं च भिक्षवे ॥ १६५ ॥

अन्नं सुसंस्कृतं वापि तेन सीरी विशुद्ध्यति ॥
सीतायज्ञं च यः कुर्यात् सिद्धसस्ये खलागते ॥ १६६ ॥

अनन्तकृतपापोऽपि मुक्तो भवति कर्षुकः ॥
खलयज्ञं प्रवक्ष्यामि तत्कुर्वाणा द्विजातयः ॥ १६७ ॥

विमुक्ताः सर्वपापेभ्यः स्वर्गौकस्त्वमवाप्नुयुः

---

१. The verses 152. 153. 155 are found in A. in different versions, as—

सर्वसत्वोपकाराय सर्वत्र कृषिकृन्नरः ॥
कुर्यात् कृषिं प्रयत्नेन स्वर्गलोकमवाप्नुयात् ॥ १५२ ॥
सर्वसत्वोपजीव्यः स्यात् कृषिकृद्धर्मतो नरः ॥
सर्वस्य स्थितिकारुण्यात् सदेव-पितृभिः पुनः ॥ १५३ ॥
मानुषाणां तु पोषाय कृषिं कुर्यात् कृषीवलः ॥
वयांसि यानि सत्वानि क्षुत्तृष्णापीडितानि च ॥१५४॥

२. This verse is not in A., and the following seven verses are also not given in A. B. and F.

चतुर्दिक्षु खले कुर्यात्प्राच्यमतिघनावृतिम् ॥ १६८ ॥

सेकद्वारं पिधानं च विदध्याच्चैव सर्वतः ॥
खरोष्ट्राजोरणांस्तत्र विशतस्तु निवारयेत् ॥ १६९ ॥

श्व-शूकर-शृगालादिकाकोलूक-कपोतकान् ॥
त्रिसन्ध्यं प्रोक्षणं कुर्यादानीताभ्युक्षणाम्बुभिः ॥ १७० ॥

रक्षां च भस्मना कुर्याज्जलधाराभिरक्षणम् ॥
त्रिसन्ध्यमर्चयेत्सीतां पाराशरमृषिं स्मरन् ॥ १७१ ॥

प्रेत-भूतादिनामानि न वदेच्चै तदग्रतः ॥
सूतिकागृहवत्तत्र कर्तव्यं परिरक्षणम् ॥ १७२ ॥

हरन्त्यरक्षितं यस्माद्रक्षांसि सर्वमेव हि ॥
प्रशस्तादिनपूर्वाह्णे नाऽपराह्णे न सन्ध्ययोः ॥ १७३ ॥

धान्योन्मानं सदा कुर्यात् सीतापूजनपूर्वकम् ॥
यजेत खलभिक्षाभिः काले रोहिण एव हि ॥ १७४ ॥

भक्त्या सर्वं प्रदत्तं हि तत्समस्तमिहाक्षयम् ॥
खलयज्ञे दक्षिणैषा ब्रह्मणा निर्मिता पुरा ॥ १७५ ॥

भागधेयमयीं कृत्वा तां गृह्णन्त्वीह मामिकाम् ॥
शतक्रत्वादयो देवाः पितरः सोमपादयः ॥ १७६ ॥

सनकादिमनुष्याश्च ये चान्ये दक्षिणाशनाः ॥
एतानुद्दिश्य विप्रेभ्यो प्रदद्यात् प्रथमं हली ॥ १७७ ॥

विवाहे खलयज्ञे च सङ्क्रान्तौ ग्रहणेषु च ॥
पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम् ॥ १७८ ॥

अन्येषामर्थिनां पश्चात्कारुकाणां ततः परम् ॥
दीनानामप्यनाथानां कुष्ठिनां कुशरीरिणाम् ॥ १७९ ॥

क्लीबा-ऽन्ध-बधिरादीनां सर्वेषामपि दीयते ॥

---

१. F. Reads पिदध्यात् for विदध्यात्. २. A. reads दिनान्ताभ्युक्षणाम्बुभिः, B. आनीतान्युक्षणाम्बुभिः and C. reads गृहीताभ्युक्षणाम्बुभिः; while in F. this verse is omitted. ३. A. reads खलमध्यतः and B. खलमध्यगः. ४. Except A. and C., all substitute प्रकुर्वीत for सदा कुर्यात्. ५. This half is read in A. thus—भागधेयाय आहूता अनुगृह्णन्तु मामिति; while B. reads भागधेयमयां for भागधेयमयीं. ६. B. C. D. E. and F. read दक्षिणाशिनः for दक्षिणाशनाः. ७. This verse is only found in C. and F. ८. A. reads सततं for कुष्ठिनां.

वर्णानां पतितानां च दद्भक्तानि तर्पयेत् ॥ १८० ॥
चाण्डालांश्च श्वपाकांश्च प्रीणात्युच्चावचांस्तथा ॥
ये केचिदागतास्तत्र पूज्यास्तेऽतिथिवद्द्विजाः ॥ १८१ ॥
स्तोकशः सीरिभिः सर्वैर्वर्णिभिर्गृहमेधिभिः ॥
दत्वा सूनृतया वाचा क्रमेणाथ विसर्जयेत् ॥ १८२ ॥
तत्कृत्वा स्वगृहं गत्वा श्राद्धमाभ्युदयं चरेत् ॥
शरद्धेमन्त-वासन्त-नवान्नैः श्राद्धमाचरेत् ॥ १८३ ॥
नो ऽदत्वान्नं तदश्नीयादश्नंश्चेदघमश्नुते ॥
कृषावुत्पाद्य धान्यानि खलयज्ञं समाप्य च ॥ १८४ ॥
सर्वसत्वहिते युक्त इहामुत्र सुखी भवेत् ॥
कृषेरन्यत्र नो धर्मो न लाभः कृषितोऽन्यतः ॥ १८५ ॥
सुखं न कृषितोऽन्यत्र यदि धर्मेण वर्तते ॥
अवस्त्रत्वं निरन्नत्वं कृषितो नैव जायते ॥ १८६ ॥
अनातिथ्यं च दुःखित्वं गोमतो न कदाचन ॥
निर्धनत्वमसत्यत्वं विद्यायुक्तस्य कर्हिचित् ॥ १८७ ॥
अस्थानित्वमभाग्यत्वं न सुशीलस्य कर्हिचित् ॥
वदन्ति मुनयः केचित् कृष्यादीनां विशुद्धये ॥ १८८ ॥
लाभस्यांशप्रदानं च सर्वेषां शुद्धिकृद्भवेत् ॥
प्रतिग्रहात् चतुर्थांशं वणिग् लाभात् तृतीयकम् ॥ १८९ ॥
कृषितो विंशतिं चैव ददतो नास्ति पातकम् ॥

---

१. A. and F. read प्रीणात्युच्चावचान्ददत्, B. D. and E. read प्रीत्यात्युच्चावचानि च. २. This verse is not found in D.; while in F. mention half of it. ३. A. reads सर्वे for सर्वैः. ४. A. reads च प्रियया for सूनृतया; while B. and others read च मधुरां वाचं ५ A. reads कृषेः for कृषौ. ६. A. and C. read कर्षति for वर्तते. ७. A. reads अवसुत्वं for अवस्त्रत्वं. ८. B. C. D. E. and F. read गोमता for गोमतः. ९. A. reads निर्धर्मत्व°, for निर्धनत्व°. १०. C. reads असभ्यत्वं for असत्यत्वं. ११. A. reads अनिष्टत्वं for अभाग्यत्वं. and B. D. F. read अभाष्यत्वं. १२. A. and C. read प्रतिग्रहे for प्रतिग्रहात्. १३. B. D. and E. read वणिग्लाभः, for वणिग्लाभात्. १४. B. D. E. and F. read विंशकं and C. विंशतिः for विंशतिं.

राज्ञो दत्वा च षड्भागं देवतानां च विंशकम् ॥ १९०
त्रयस्त्रिंशंच विप्राणां कृषिकर्मा न लिप्यते ॥
कृष्या यथोत्पाद्य यवादिकानि
धान्यानि भूयांसि मखान्विधाय ॥
मुक्तो गृहस्थोऽपि पराशरः प्राक्
तस्या मया कश्चिदवादि शेषः ॥ १९१ ॥
देवा मनुष्याः पितरश्च सर्वे
साध्याश्च यक्षाश्च सकिन्नराश्च ॥
गावो द्विजेन्द्राः सह सर्वसत्वैः
कृष्यन्नतृप्तानि मनाक् करोति ॥ १९२ ॥
यश्चैतदालोच्य कृषिं विदध्यात्
लिप्येन्न पापेन स भूभवेन ॥
सीरेण तस्यातिविदारितापि
स्याद्भूतधात्री वरदानदात्री ॥ १९३ ॥
षट्कर्माणि कृषिं ये तु कुर्युर्ज्ञात्वा विधिं द्विजाः ॥
तेऽमरादिवरप्राप्ताः स्वर्गलोकमवाप्नुयुः ॥ १९४ ॥
षट्कर्मभिः कृषिः प्रोक्ता द्विजानां गृहमेधिनाम् ॥
गृहं च गृहिणीमाहुस्तद्विवाहो मयोच्यते ॥ १९५ ॥

इति श्रीबृहत्पराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां संहितायां कृषिकर्मसीतायज्ञोपधर्मो नाम पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

१. B. E. and F. read देवानां चैकविंशकम् for देवतानां च विंशकम्. २. B. substitutes य उत्पाद्य for यथोत्पाद्य; while C. reads ऽथ चोत्पाद्य. ३. A. D. E. and F. read कृष्यान्न°. ४. A. reads नरः for मनाक्. ५. B. C. D. and E. read आलोक्य for आलोच्य. ६. B. C. D. E. and F. read कूटं विसीरेण, कुटुंबसीरेण, कुटुंबिसीरेण. ७. B. reads विवारिता for विदारिता. ८. A reads धात्री for दात्री. ९. C. reads सुरादि° for ऽमरादि°. १०. C. reads विवाहमथोच्यते. B. D. E. and F. read विवाहस्तथोच्यते.

# बृहत्पराशरसंहिता ।

## अथ षष्ठोऽध्यायः

स्वयं च वाहितैः क्षेत्रैर्धान्यैश्च स्वयमर्जितैः ॥
कुर्याद्विवाहयोगादि पञ्चयज्ञांश्च नित्यशः ॥ १ ॥

अष्टौ विवाहा नारीणां संस्कारार्थं प्रकीर्तिताः ॥
ब्राह्मादिकक्रमेणैतान्सम्प्रवक्ष्याम्यतः पृथक् ॥ २ ॥

जात्यादिगुणयुक्ताय पुंस्त्वे सति वराय च ॥
कन्याऽलङ्कृत्य दीयेत विवाहो वैधसः स्मृतः ॥ ३ ॥

रेतो मज्जति यस्याप्सु मूत्रं च न्हादि फेनिलम् ॥
स्यात् पुमाँल्लक्षणैरेतैर्विपरीतस्तु षण्ढकः ॥ ४ ॥

यो यज्ञे वर्तमाने तु ऋत्विजे कर्म कुर्वते ॥
कन्याऽलङ्कृत्य दीयेत विवाहः स तु दैविकः ॥ ५ ॥

वराय गुणयुक्ताय विदुषे सदृशाय च ॥
कन्या गोद्वयमादाय दीयेताऽऽर्षः स उच्यते ॥ ६ ॥

कन्या चैव वरश्चोभौ स्वेच्छया धर्मचारिणौ ॥
स्यातामिति च यत्रोक्त्वा दानं कायविधिस्त्वयम् ॥ ७ ॥

एतावद्देहि मे द्रव्यमित्युक्त्वा प्राग्वराय च ॥
यत्र कन्या प्रदीयेत स वै दैत्यविधिः स्मृतः ॥ ८ ॥

यत्रान्योन्याभिलाषेण उभयोर्वर-कन्ययोः ॥
तयोस्तु यो विवाहः स्याद्गान्धर्वः प्रथितः स तु ॥ ९ ॥

युद्धे हत्वा बलात् कन्या यत्राऽऽच्छिद्याऽपहृत्य च ॥
उह्यते स तु विद्वद्भिर्विवाहो राक्षसः स्मृतः ॥ १० ॥

---

१. Only C. reads वाहयेत्क्षेत्रे for वाहितैः क्षेत्रैः. २. A. reads स तु for स्मृतः; while F. reads °स्तु सः. ३. Except A. and F. read या for यो. ४. A. reads युद्ध्वा for युद्धे.

सुप्ता वापि प्रमत्ता वा छेलात् कन्या प्रगृह्यते ॥
सर्वेभ्यः स तु पापिष्ठः पैशाचः प्रथितोऽष्टमः ॥ ११ ॥

आद्या आद्यस्य षट् प्रोक्ता धर्म्याश्चत्वार एव हि ॥
चत्वारोऽन्ये द्वितीयस्य आद्यस्य च द्वयस्य च ॥ १२ ॥

पञ्चमश्च तथा षष्ठः स्मृतौ तौ त्रि-चतुर्थयोः ॥
द्वितीयस्यापि ये प्रोक्ता एतयोस्ते न चाष्टमः ॥ १३ ॥

वेधसाद्यनुरूपेण द्वितीयः परयोः स्मृतः ॥
सर्वे सप्तममेकस्य द्वितीयस्यैवं कीर्तिताः ॥ १४ ॥

अन्त्यावत्यधमौ चोक्तावुद्वाहौ शक्तिसूनुना ॥
तथा युगस्वरूपेण प्रोक्तो दैत्यस्तु मानुषः ॥ १५ ॥

तारयन्ते प्राक्ततोऽधस्ताच्चतुरोऽऽद्यविवाहजैः ॥
स्वात्मना द्विगुणान्वंश्यान् दश-सप्त-त्रयश्च षट् ॥ १६ ॥

स्त्रीणामाजन्मशर्मार्थं वंशशुद्धौ प्रयत्नवान् ॥
वरं हि वरयेद्विद्वाञ्जात्यादिगुणसंयुतम् ॥ १७ ॥

जाति-विद्या-वयः-शक्तिरारोग्यं बहुपक्षता ॥
अर्थित्वं वित्तसम्पत्तिरष्टावेते वरे गुणाः ॥ १८ ॥

जातिर्विद्या च रूपं च शीलं चैव नवं वयः ॥
अरोगित्वं विशेषेण पुंस्त्वे सत्यपि लक्षयेत् ॥ १९ ॥

जातिं रूपं च शीलं च वयो नवमरोगिताम् ॥
स्वाचारत्वं विशेषेण संलक्ष्य वरमाश्रयेत् ॥ २० ॥

सज्जातिं रूप-वित्तं च तथाऽग्रवयसं दृढम् ॥
सन्तोषजननं स्त्रीणां प्रज्ञावानाश्रयेद्वरम् ॥ २१ ॥

न जातिं न च विद्यां च वित्तं नाऽचरणं स्त्रियः ॥
किन्तु ताः प्रीतिमिच्छन्ति तस्मात् प्रीतिकरं श्रयेत् ॥ २२ ॥

१. A. reads बाल्याद्बालेन भुज्यते:; while C. reads कन्या छलेन भुज्यते. २. B. and E. read धर्माः for धर्म्याः. ३. A. and F. read द्वितीयः परमः स्मृतः, ४. A. reads द्वितीयश्चैव and B. reads द्वितीयस्तस्य. ५. B. C. and F. read शक्रसूनुना for शक्तिसूनुना. ६. B. D. E. F. read मानवः for मानुषः. ७. A. reads विवाहजाः for विवाहजैः. ८. C. only substitutes °शुद्धये for °शुद्धौ. ९. B. D. and F. read शीलं च for अर्थित्वं. १०. A. reads °त्यभि° for °त्यपि.

पित्रा यत्र सगोत्रत्वं मात्रा यत्र सपिण्डता ॥
न च तामुद्वहेत्कन्यां दारकर्मण्यनादृताम्[1] ॥ २३ ॥
कन्यायाश्च वरस्यापि यत्रोभयोर्भवेद्रतिः ॥
तथा कन्यां वरो[2] धीमान्वरयेद्वंशशुद्धये ॥ २४ ॥
नाना मतानि सर्वेषां सतां सन्ति[3] वरम्प्रति ॥
सन्तानस्य विशुध्यर्थं जात्यादिषु च नाऽन्यतः[4] ॥ २५ ॥
दूरस्थानामविद्यानां मोक्षधर्मानुयायिनाम्[5] ॥
शूराणां निर्धनानां च न देया कन्यका बुधैः ॥ २६ ॥
नाऽतिदूरे[6] न चाऽसन्न अत्याढ्ये चाऽतिदुर्बले ॥
वृत्तिहीने च मूर्खे[7] च षट्सु कन्या न दीयते ॥ २७ ॥
वर्जयेदतिरिक्ताङ्गीं कन्यां हीनाङ्गरोगिणीम् ॥
अतिलोम्नीं[8] हीनलोम्नीमवाचमतिवाग्युताम्[9] ॥ २८ ॥
पिता पितामहो भ्राता माता मातामहोऽपि वा ॥
कन्यादाः[10] स्युः क्रमेणैते पूर्वाऽभावे परः परः ॥ २९ ॥
अधिकारी यदा न स्यात्तदाऽऽख्याय नृपस्य सा ॥
तद्गिरा च स्वयं गम्यं कन्यापि वरयेद्वरम् ॥ ३० ॥
पिङ्गलां[11] कपिलां कृष्णां दुष्टवाक्काकनिःस्वनाम्[12] ॥
स्थूलाङ्ग-जङ्घ[13]-पादां च सदा चाऽप्रियवादिनीम् ॥ ३१ ॥
त्यजेन्नग-नदीनाम्नीं पक्षि-वृक्षर्क्षनामिकाम् ॥
अहि-प्रेष्या-ऽन्त्यनाम्नीं[14] च तथा भीषणनामिकाम्[15] ॥ ३२ ॥
स्वजातिमुद्वहेत्[16] कन्यां सुरूपां लक्षणान्विताम् ॥
अरोगिणीं सुशीलां च तथा भ्रातृमतीमपि ॥ ३३ ॥

---

१. A. reads मैथुने for अनादृताम्. २. A. reads वरं for वरो. ३. A. reads कन्यां for सन्ति. ४. A. substitutes तान्युत for नाऽन्यतः. ५. B. D. E. and F. read मुमुक्षूणां गरीयसाम् for मोक्षमार्गानुयायिनाम्. ६. In A. and F. this verse is not found. ७. C. reads वृद्धे for मूर्खे. ८. A. reads सलोमां लोमहीनां च for अतिलोम्नीं हीनलोम्नीं. ९. B. reads निर्वाचम for अवाचम्. १०. C. reads कन्यां दद्युः for कन्यादाः स्युः. ११. B. reads कृष्णपिंगाक्षीं. १२. A. reads द्युतिहीनां विनिःस्वनाम् for दुष्टवाक् काकनिःस्वनाम्. १३. B. D. E. and F. read °जानु° for °जङ्घ°. १४. B. D. E. read °मनाम्नीं for °ऽन्त्यनाम्नीं. १५. A. reads °नासिकाम् for °नामिकाम्, C. too the same. १६. C. reads सुजाति° for स्वजाति°.

सर्वावयवसम्पूर्णामसगोत्रां कुलोद्भवाम् ॥
हंस-मातङ्गगमनां सुमृद्वंगीं सुलोचनाम् ॥ ३४ ॥
सलज्जां शुभनासां च पतिप्रीतिकरीमपि ॥
श्वश्रू-श्वशुर-गुर्वादिशुश्रूषाकारिणीं प्रियाम् ॥ ३५ ॥
अव्यङ्गां कुलजातां तामनभिशस्तवंशजाम् ॥
प्रस्वेदशुभगन्धां चं शुभामिच्छन्समुद्वहेत् ॥ ३६ ॥
विप्रः स्वामपरे द्वे तु राजा स्वामपरे तथा ॥
वैश्यः स्वाञ्च चतुर्थी च क्रमेणैवं समुद्वहेत् ॥ ३७ ॥
पितृतः सप्तमीमेके मातृतः पञ्चमीमपि ॥
उद्वहेदिति मन्यन्ते कुलधर्मान् समाश्रिताः ॥ ३८ ॥
उक्तलक्षणकन्यायाः कृत्वा पाणिग्रहं द्विजः ॥
धर्म्योद्वाहेन केनापि समाऽऽदध्याद्धुताशनम् ॥ ३९ ॥
दायाद्यकाले वा दद्यात्तदुक्तं कर्मकृद्द्विजैः ॥
यदा वापि भवेत् भक्तिः सम्पत्तिर्वा यदा भवेत् ॥ ४० ॥
ऋतावृतौ स्त्रियं गच्छेत्स्त्रीच्छया च वरं स्मरन् ॥
सर्वं तदिच्छया कुर्याद्यथोभयोर्भवेत्धृतिः ॥ ४१ ॥
भोज्या-ऽलङ्कार-वासोभिः पूज्याः स्युः सर्वदा स्त्रियः ॥
यथा ता नैव शोचन्ति नित्यं कार्यं तथा नृभिः ॥ ४२ ॥
आयुर्वित्तं यशः पुत्राः स्त्रीप्रीत्या स्युर्नृणां सदा ॥
नश्यन्ते ते तदप्रीतौ तासां शापादसंशयम् ॥ ४३ ॥
स्त्रियश्च यत्र पूज्यन्ते सर्वदा भूषणादिभिः ॥
देवाः पितृ-मनुष्याश्च मोदन्ते तत्र वेश्मनि ॥ ४४ ॥
स्त्रियस्तुष्टाः श्रियः साक्षाद्रुष्टाश्च दुष्टदेवताः ॥
वर्धयन्ति कुलं तुष्टा नाशयन्त्यपमानिताः ॥ ४५ ॥
नाऽपमान्याःस्त्रियः सद्भिः पति-श्वशुर-देवरैः ॥
भ्रात्रा पित्रा च मात्रा च तथा बन्धुभिरेव च ॥ ४६ ॥

---

१. A. reads समशीलां for असगोत्रां. २. A. B. and C. read °शुभनादां. ३. D. E. read °कराम् for °करीम्. ४. A. reads तु. ५. A. C. and F. read धर्मो° for धर्म्यो°; while in E. this whole verse is not found. ६. C. and F. तदादध्यात् for समादध्यात्. ७. A. B. C. and F. read तदा for यदा. ८. A. reads °णाम्बरैः for °णादिभिः.

स्त्रियाश्च पुरुषस्यापि यत्रोभयोर्भवेद्धृतिः[1] ॥
तत्र धर्मा-ऽर्थऽकामाः स्युस्तदधीना यतस्त्वमी ॥ ४७
षट्कर्माणि नृणां तेषां येषां भार्या पतिव्रता ॥
पतिलोकं तु ता यान्ति तपसा येन योगवित् ॥ ४८ ॥
पतिव्रता तु साध्वी स्त्री अपि दुष्कृतकारिणम् ॥
पतिमुद्धृत्य याति द्यां केकीव पतितोरुगाम् ॥ ४९ ॥
जीवन्वापि मृतो वापि पतिरेव प्रभुःस्त्रियाः ॥
नान्यच्च दैवतं तासां तमेव प्रभुमर्चयेत्[2] ॥ ५० ॥
मनसापि हि दुष्टा स्त्री यान्यभावा प्रियं पतिम् ॥
सा याति नरकं घोरं तद्द्रोहादणुतोऽपि च ॥ ५१ ॥
नियोज्य गृहकृत्येषु सर्वदा ता नृभिः स्त्रियः ॥
गृहार्थासक्तचित्तास्तास्तदेवार्हन्ति शोचितुम् ॥ ५२ ॥
स्त्रीणामष्टगुणः कामो व्यवसायश्च षड्गुणः ॥
लज्जा चतुर्गुणा तासामाहारश्च तदर्धकः ॥ ५३ ॥
न वित्तं नैव जातिश्च नाऽपि रूपमपेक्षते ॥
किन्तु ताभिः पुमानेष इति मत्वैव भुज्यते ॥ ५४ ॥
विकुर्वाणाः स्त्रियो भर्तुरायुष्य-धननाशकाः ॥
अनायासेन तास्तस्य परासक्ता भवन्ति हि ॥ ५५ ॥
नारीणां च नदीनां च गतिर्न ज्ञायते बुधैः[3] ॥
कुलं कूलप्रपाते च कालक्षेपो न विद्यते ॥ ५६ ॥
चेष्टा-चारित्र-चित्राणि देवा नैव विदुः स्त्रियाम् ॥
किं पुनः प्राणिमात्रास्तु सर्वथा[4] नष्टबुद्धयः ॥ ५७ ॥
तस्मात्ताः सर्वथा रक्ष्याः सर्वोपायैर्नृभिः सदा ॥
श्वशुरैर्देवराद्यैस्ताः पितृ-भ्रात्रादिभिस्तथा ॥ ५८ ॥
विवाहात् प्राक् पिता रक्षे यौवने तु पतिस्ततः ॥
रक्षेयुर्वार्धके पुत्रा नास्ति स्त्रीणां स्वतन्त्रता ॥ ५९ ॥
स्वातन्त्र्येण विनश्यन्ति कुलजा अपि योषितः ॥
अस्वातन्त्र्यमतः स्त्रीणां प्रजापतिरकल्पयत् ॥ ६० ॥

---

१. C. and F. read रतिः for धृतिः. २. B. D. E. F. read पतिरेवप्रभुर्यतः for तमेव प्रभुमर्चयेत्. ३. A. E. and F. read नृपैः for बुधैः. ४. A. reads सर्वे ते नष्टबुद्धयः for सर्वथा नष्टबुद्धयः.

अशौचाश्च सशौचाश्च अमेध्या अपि पावनाः ॥
दुर्वाचोऽपि सुवाचस्तास्तस्मादन्वेषयेन्न ताः ॥ ६१ ॥
शौचं वाचं च मेध्यत्वं सोम-गन्धर्व-पावकाः ॥
ददुस्तासां वरानेतांस्तस्मान्मेध्यतराः स्त्रियः ॥ ६२ ॥
भर्तारो वो भविष्यन्ति युष्मच्चित्तानुसारिणः ॥
यथेच्छाकामिनः सर्वे तासामिन्द्रो वरं ददौ ॥ ६३ ॥
तस्मात्तदिच्छया प्रीतिं पुमानिच्छेत्तथा स्त्रियः ॥
रक्षणीयास्ततस्तास्तु सर्वभावेन योषितः ॥ ६४ ॥
सामाह मृकृथमित्याद्यैर्दैवैर्न्यस्ता नृणां तनौ ॥
अर्धकाया नराणां ताः स्त्रिणां नातः पृथक् व्रतम् ॥ ६५ ॥
न दिवापि स्त्रियं गच्छेदिच्छंस्तदिच्छयापि च ॥
न पर्वसु न सन्ध्यासु नाऽऽद्यर्त्तुचतुरात्रिषु ॥ ६६ ॥
वन्ध्याष्टमे ऽधिवेत्तव्या नवमे च मृतप्रजा ॥
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥ ६७ ॥
नोदक्यां न दिवा गच्छेत् सगर्भां च व्रतास्थिताम् ॥
अधिगच्छेदविद्वान्यस्तदायुः क्षयमेति च ॥ ६८ ॥
न वक्त्रेऽभिगमं कुर्यात् पाणिग्राही स्वयोषितः ॥
कुर्याच्चेत्पितरस्तस्य पतन्ति नरकेऽशुचौ ॥ ६९ ॥
भार्याधीनं सुखं पुंसां भार्याधीनं गृहं धनम् ॥
भार्याधीना सुखोत्पत्तिर्भार्याधीनः शुभोदयः ॥ ७० ॥
यत्र भार्या गृहं तत्र भार्याहीनं गृहं वनम् ॥
न गृहेण गृहस्थः स्याद्भार्यया कथ्यते गृही ॥ ७१ ॥
गृही स्याद्गृहधर्मेण स वै पञ्चमखादिकः ॥

---

१. This whole line is read in B. D. E. and F. thus—अर्धकाया नृणां तास्ताःपृथक् धर्मादि न स्त्रियाम्; while A. substitutes पृथग्विमोहिनीं स्त्रियम् for स्त्रीणां नातः पृथक् व्रतम्. २. A. substitutes नाद्यासु चतुरात्रिषु for नाद्यर्तुचतुरात्रिषु; while B. reads नर्त्तौ रात्रिचतुष्टये and C. नर्तुरात्रिचतुष्टये. ३. A. B. and F. read परित्याज्या for ऽधिवेत्तव्या. ४. C. reads this whole line thus—न दिवापि स्त्रियं गच्छेन्न सगर्भां व्यवस्थिताम्. ५. C. reads अभिगच्छे° for अधिगच्छे.° ६. A. and C. read पाणिगृहीतयोषितः for पाणिग्राही स्वयोषितः.

तद्धीनो न गृहस्थःस्यात्कुर्यात्तं यत्नतस्ततः ॥ ७२ ॥
[१]पञ्चयज्ञविधानेन कुर्यात्पञ्च महामखान् ॥
श्रौते[२] वा यदि वा स्मार्ते पञ्चयज्ञान्न हापयेत् ॥ ७३ ॥
[३]कुर्युः पञ्चमहायज्ञान् सूनादोषापनुत्तये ॥
पञ्चसूना भवन्त्य[४]त्र सर्वेषां गृहमेधिनाम् ॥ ७४ ॥
कण्डन्युदककुम्भी च चुल्ली पेषण्युपस्करः ॥
यदाऽऽदौ वेदमारभ्य स्नात्वा भक्त्या द्विजोत्तमः ॥ ७५ ॥
अध्यापयेद्द्विजांछिष्यान्स वै ब्रह्ममखः स्मृतः ॥
यत् स्नात्वाऽहरहः सर्वान्देवांश्च मनुजान्पितॄन् ॥ ७६ ॥
तर्पयेदम्भसा भक्त्या पितृयज्ञः स वै मतः ॥
श्रौते[५] वा यदि वा स्मार्ते यज्जुहोति हुताशने ॥ ७७ ॥
विधिवन्नित्यशो विप्रः स तु देवमखः स्मृतः ॥
दशस्वाशासु यः [६]कुर्याद्धुतशेषाद्बलिं द्विजः ॥ ७८ ॥
इन्द्रादिभ्यस्तथाऽन्येभ्यः स वै भूतमखो मतः ॥
समायातातिथिं भक्त्या [७]यद्[८]भोजयति नित्यशः ॥ ७९ ॥
अन्यानभ्यागतांश्चैव सा मनुष्येष्टिरुच्यते ॥
[९]एवं पञ्चमखान् कुर्वन्मधु-मांसाऽऽज्य-पायसैः ॥ ८० ॥
स सन्तर्प्य पितॄन्देवान्मनुष्यान् स्वर्गमाप्नुयात् ॥
गृहस्था य उपासीरन् वाचं धेनुं चतुस्तनीम् ॥ ८१ ॥
[१०]स्वर्गौकसां पितॄणां च पूज्यास्तेऽतिथिवद्दिवि ॥
चत्वारस्तु स्तना एते ये चतुर्वेदसंज्ञिताः ॥ ८२ ॥
स्वाहाकारो वषट्कारो हन्तकारस्तथा स्वधा ॥
देवानां भागधेयौ द्वौ अन्ये च मनुजन्मनाम् ॥ ८३ ॥

---

१. C. and F. do not insert this line. २. D. E. and F. read श्रौतो वा यदि वा स्मार्तो. ३. Only A. substitutes कुर्यात् for कुर्युः. ४. A. reads भवन्ति for वहन्ति. ५. B. D. and. E. read श्रौतो. for श्रौते and स्मार्तो for स्मार्ते respectively. ६. A. reads क्षिपेत् for कुर्यात्. ७. B. reads यो for यत्. ८. B. reads पूजयति for भोजयति, also D. and E. substitute the same. ९. A. and C. read पञ्चमखत्वं स्यात्. १०. B. D. E. and F. read स्वर्गौकोभ्यः पितृभ्यस्तु पूज्यास्तेऽतिथयो द्विजैः.

पितॄणां च चतुर्थस्तु इति वेद[1]निदर्शनम् ॥
इति निर्वर्त्य[2] विधिवत्सकलं कर्म नैत्यकम्[3] ॥ ८४ ॥
प्राणाग्निहोत्रविधिना भुञ्जीतान्नमघापहम् ॥
अदत्वा पोष्यवर्गस्य ह्यकृत्वाऽध्यापनादिकम् ॥ ८५ ॥
असाक्षिकं च योऽश्नीयात्सोऽश्नीयात्[4]किल्बिषं[5] द्विजः ॥
प्राङ्मुखादिक्रमेणाऽश्नन्नायुः कीर्तिं श्रियो ऋतम् ॥ ८६ ॥
[6]अविधिर्विधिगत्यात्तु यत्तदश्नन्ति राक्षसाः ॥
अथ प्राणाग्निहोत्रस्य श्रूयतां द्विजसत्तमाः ॥ ८७ ॥
वक्ष्यमाणो विधिः पुण्यः प्रेत्य चेह च पावनः ॥
यो विधिर्देवतां[7]भ्यस्तः संसारबन्धनाशकृत् ॥ ८८ ॥
तद्विदस्तु दिवं यान्ति मुक्ता दैवादृणादपि[8] ॥
उद्धरंद्यद्विदित्वाऽश्नन्पुरुषानेकविंशतिम् ॥ ८९ ॥
सर्वेष्टिफलभाग्यायाद्वैधसं क्षयमक्षयम् ॥
यः कालाकालविद्विप्रो नैनःस्पर्शी स कर्हिचित् ॥ ९० ॥
सोऽस्पृष्टैना विशे[9]त्तत्र यद्गत्वा नैति संसृतौ ॥
दश पञ्चाङ्गुलव्यासं नासिकाया बहिः स्थितम् ॥ ९१ ॥
जीवो यत्र विशुद्ध्येत[10] सा कला षोडशी स्मृता ॥
सर्वमेतत्तया व्याप्तं त्रैलोक्यं सचराचरम् ॥ ९२ ॥
ब्रह्मविद्येति विख्याता वेदान्ते च प्रतिष्ठिता[11] ॥
न वेदं वेदमित्याहुर्वेद्यं[12]नाम परं पदम् ॥ ९३ ॥
तत्पदं[13] विदितं येन स विप्रो वेदपारगः ॥
आहुतिः सा परा ज्ञेया सा च शान्तिः प्रकीर्तिता ॥ ९४ ॥
गायत्री सा च विज्ञेया सा च सन्ध्या प्रकीर्तिता ॥

१. B. D. E. and F. read वेदो निदर्शनम् for वेदनिदर्शनम्; while C. reads वेदे निदर्शनम्. २. A. and F. read निर्वृत्य for निर्वर्त्य. ३. B. D. E. and F. read पैतृकम् for नैत्यकम्. ४. B. D. C. and E. read यात्यसौ for सोऽश्नीयात्. ५. F. reads कल्मषं for किल्बिषं. ६. C. reads उदङ्मुखाननश्नीयात्. ७. C. reads °न्यस्तः for °भ्यस्तः. ८. D. C. and E. read देवऋणेन च and F. reads देवऋणेन तु. ९. A. reads वसेत् for विशेत्. १०. A. B. C. D. and F. read विबुद्ध्येत for विशुद्ध्येत. ११. B. D. and E. read प्रदर्शिता for प्रतिष्ठिता. १२. B. D. E. and F. read वेदानां परमं. १३. B. D. E. and F. read परं for पदं.

तज्जाप्यं तच्च वै ज्ञेयं तद्भूतं[१] तदुपासितम् ॥ ९५ ॥
तां कलां यो विजानाति स कलाज्ञो द्विजः स्मृतः ॥
तत्तुरीयपदं शान्तं यस्मिँल्लीनमिदं जगत् ॥ ९६ ॥
तज्ज्ञात्वा परमं तत्वं न भूयः पुरुषो भवेत् ॥
प्राणमार्गास्त्रयः प्रोक्तास्तिस्रो नाड्यः प्रकीर्तिताः ॥ ९७ ॥
ईडा च पिङ्गला चैव सुषुम्ना च तृतीयका ॥
ईडा च वैष्णवी नाडी ब्रह्माणी पिङ्गला स्मृता ॥ ९८ ॥
सुषुम्ना चेश्वरी नाडी त्रिधा प्राणवहाः स्मृताः ॥
उत्तरं दक्षिणं ज्ञेयं दक्षिणोत्तरसंज्ञितम् ॥ ९९ ॥
मध्ये तु विषुवं ज्ञेयं पुटद्वय[२]विनिःसृतम् ॥
संक्रांति[३]-विषुवे चैव यो विजानाति विग्रहे ॥ १०० ॥
नित्यमुक्तः[४] स योगी च ब्रह्मवादिभिरुच्यते ॥
मध्याह्ने चार्धरात्रे च प्रभातेऽस्तमये[५] तथा ॥ १०१ ॥
विषुवन्तं विजानीयात्पुटद्वयविनिःसृतम्[६] ॥
हृत्पुण्डरीकमरणीं मनो मन्थानमेव च ॥ १०२ ॥
प्राणरज्वा[७] न्यसेदग्निमात्माध्वर्युः प्रतिष्ठितः ॥
ज्वालयेत्पूरकेणाऽग्निं स्थापयेत्कुम्भकेन तु ॥ १०३ ॥
रेचकेणोर्ध्ववक्त्रेण[९] ततो होमं करोति यः ॥
यत्तद्धृदि स्थितं पद्ममधोनालं व्यवस्थितम् ॥ १०४ ॥
तस्मिन्विकसिते[१०] पद्मे प्राणो वायुर्विसर्पति ॥
वामहस्तधृते पात्रे दक्षिणे चाम्भसि स्थिते[११] ॥ १०५ ॥
सनादमुच्चरेद्[१२]विप्रो अच्छिन्नाग्रं तु पूरयेत् ॥

---

१. All except C. read तद्धुतं for तद्भूतं. २. B. D. and E. read पुरद्वय° for पुटद्वय°. ३. A reads this line in the following manner:—संक्रांतौ विषुवे चैव यो विजानाति विग्रहम. ४. B. D. and E. read नित्ययुक्तः for नित्यमुक्तः. ५. B. D. E. and F. read ऽस्तमने for ऽस्तमये. ६. B. D. E. and F. read °विनिर्गतम् for °विनिःसृतम्. ७. Except A. and C. the rest read प्राणायामो for प्राणरज्वा. ८. A. B. D. and E. read ऽभ्यसेत् for न्यसेत्. ९. B. D. and E. substitute °णाऽर्धवक्त्रेण for °णोर्ध्ववक्त्रेण. १०. A. substitutes here तद्वैविकसते पद्मं प्रणवं च विसर्पति, for the whole line. ११. B. C. D. and F. read स्थितः for स्थिते. १२. A. and F. read उद्धरेत् for उच्चरेत्.

पूरणात्[1] पूरकं प्राहुर्निश्चलं कुम्भकं भवेत् ॥ १०६ ॥
निर्गच्छति[2] शनैर्वायू रेचकं तं विनिर्दिशेत् ॥

स्वाहान्तैः प्रणवाद्यैश्च स्वस्वनाम्ना[3] च वायुभिः ॥ १०७ ॥
जीवात्मा[4] योजितः षष्ठः षडाहुत्या[5] हुतं भवेत् ॥

जिह्वादत्तं ग्रसेदन्नं दन्तैश्चैव न तत् स्पृशेत् ॥ १०८ ॥
दशनैः स्पृष्टमात्रेण पुनराचमनं चरेत् ॥

मुख आहवनीयोऽग्निर्गार्हपत्यस्तथोदरे ॥ १०९ ॥
हृदये दाक्षिणाग्निश्च गृह्याग्निश्चापि दक्षिणे ॥

सभ्यश्चोत्तरतश्चिन्त्य इत्यग्निस्मरणक्रमः ॥ ११० ॥
प्राणाद्येवाग्निहोत्रादि चिन्तयेत्तद्वदेव तु ॥

होतारं प्राणमित्याहुरुद्गातारमपानकम् ॥ १११ ॥
ब्रह्माणं व्यानमित्येके उदानोऽध्वर्युमित्यपि ॥

समानं चेह यज्वानमिति ऋत्विक्क्रमं बुधः ॥ ११२ ॥
अहङ्कारं पशुं कृत्वा प्रणवं यूपमित्यपि ॥

बुद्धिरित्यरणिः पृथ्वी[6] लोमानि च कुशाः स्मृताः ॥ ११३ ॥
मनो विभक्ता त्वग्जिह्वा इति तज्ज्ञाः प्रचक्षते ॥

कृत्वा त्रिमात्रमोङ्कारं हुङ्कारं च तथा पुनः ॥ ११४ ॥
उत्तिष्ठ जननाथाऽग्ने हारिलोहितपिङ्गल ॥

सप्तपरिधये तुभ्यं क्षुद्वह्निदैवतं च यत् ॥ ११५ ॥
विजिह्व जाठरायाऽग्ने स्वाहाप्राणाय व्यत्ययः ॥

इन्द्रगोपकवर्णाय त्रिजिह्वायाग्निदैवतम् ॥ ११६ ॥
ॐ स्वाहेति अपानाय स्वाहाकारान्तमुच्चरेत् ॥

गोक्षीरसमवर्णाय पर्जन्यं वह्निदैवतम् ॥ ११७ ॥
स्वाहोदानाय सोङ्कारमनलाय परार्चिषे[7] ॥

---

१. C. reads पूरयेत् and B. पूरयन् for पूरणात्. २. A and C. read विनिःसृत्य for निर्गच्छति. ३. A. B. D. E. and F. read पुमान् for स्वस्व°. ४. B. C. D. E. and F. read जितात्मा for जीवात्मा. ५. C. reads प्राणैः षडाहुतिर्भवेत् for षडाहुत्याहुतं भवेत्. ६. A. reads पृथिर् for पृथ्वी; while B. C. and F. read सृष्टिः for पृथ्वी. ७. A. reads परत्विषे for परार्चिषे.

तडित्समानवर्णाय वाय्वग्निदैवताय ते ॥ ११८ ॥
ॐ स्वाहा च समानाय ॐ स्वाहा चाह वेधसे ॥
तर्जनी-मध्यमा-ऽङ्गुष्ठैर्लग्ना प्राणस्य चाहुतिः ॥ ११९ ॥
कनिष्ठा-ऽनामिका-ऽङ्गुष्ठैर्व्यानस्य परिकीर्तिता ॥
मध्यमा-ऽनामिका-ऽङ्गुष्ठैरपानायाहुतिः स्मृता ॥ १२० ॥
मध्यमा-ऽनामिकास्त्वन्यामुदाने[2] जुहुयाद्बुधः ॥
समाने[3] सर्वैरुद्धृत्य आहुतिः[4] स्यात्समानतः ॥ १२१ ॥
जलं पीत्वा तु तृप्यन्ति रेचयेच्च शनैः शनैः ॥
ततोऽन्यद्द्रव्य[5]मश्नीयात्पूरणायोदरस्य च ॥ १२२॥
विधिं प्राणाग्निहोत्रस्य ये द्विजा नैव जानते ॥
अपानेन तु भुञ्जन्ति तेषां मुखमपानवत् ॥ १२३ ॥
यो ज्ञात्वा तु विधिं भुङ्क्ते यथोक्तमिदमाचरेत् ॥
इहामुत्र च पूज्यत्वं ब्रह्मभूयाय कल्पते ॥ १२४ ॥
त्रिःसप्तकुलमुद्धृत्य दातुरप्यक्षयं भवेत् ॥
दातुरपि हि यत्पुण्यं भोक्तुश्चैव हि तत्फलम् ॥ १२५ ॥
दाता चैव तु भोक्ता च तावुभौ स्वर्गगामिनौ ॥
यो जानाति विधिं चेमं [6]सभवेद्ब्रह्मवित्तमः ॥ १२६ ॥
एकं[7] पिबति गण्डूषं त्यजेदर्धं धरातले ॥
स हतः[8] पितृ-देवत्यमात्मानं नरकं व्रजेत्[9] ॥ १२७ ॥
रहस्यं सर्वशास्त्रेषु सर्वशास्त्रेषु[10] दुर्लभम् ॥
ज्ञानानामुत्तमं ज्ञानं न कस्यचित् प्रकाशयेत् ॥ १२८ ॥
विप्राणानामग्निहोत्रस्य ये द्विजा नैव जानते ॥

---

१. This verse is given in B. and F. as—

पद्मकिंजल्कवर्णाय वसुरूपाय चाग्नये ।
परानलाय व्यानाय ॐ स्वाहेति चोच्चरेत् ॥.

२. A. reads °कांगुष्ठैरुदाने for °कास्त्वन्यामुदाने. ३. A. reads this line thus—समानं सर्वैरुद्धृत्यदातुरप्यक्षयं भवेत्. ४. B. reads आहुतेः स्यात्समानता. ५. A. B. E. and F. read °दन्न° for °द्रव्य°. ६. B. reads ब्राह्मणो ज्ञानदुर्बलः. ७. B. reads पीतेन पितृदृप्तिः स्याद्भूत्यक्ते भूमिदेवता । and C. reads पिबेद्द्वितीयं गंडूषं. ८. C. substitutes हत्वा for हतः. ९. C. reads नयेत् for व्रजेत्. १०. B. E. and F. read क्षितावत्यन्तदुर्लभम् for सर्वशास्त्रेषु दुर्लभम्.

ज्ञानानि योऽप्रकाश्यानि पुंसामविदुषां वदेत् ॥ १२९ ॥
स प्रणाश्य फलं तेषामात्मानं नरकं नयेत् ॥

योऽज्ञात्वा ह्यप्रकाश्यानि पुंसामविदुषां वदेत् ॥ १३० ॥
प्राणायामफलं हत्वा आत्मानं नरकं नयेत् ॥

योऽश्नीयाद्विधिवद्विप्रः कृतपात्रपरिग्रहः ॥ १३१ ॥
पूजितान्नमवाग् जुष्टं सापोशानं ससाक्षिकम् ॥

वाग्यतो न्यस्तपात्रे च विप्र-क्षत्र-विशां क्रमात् ॥ १३२ ॥
वाग्यतो[1] न्यस्तपात्रस्त्रीन्[2] ग्रासानष्टावपि द्विजः ॥
तस्य त्रिरात्रं पुण्याप्तिर्[3] दानेऽपि कवयो[4] विदुः ॥ १३३ ॥

चतुस्त्रिकोणं वृत्तं च विप्र-क्षत्र-विशां क्रमात् ॥
प्राहुः परिहृतं[5] सन्तस्तद्धीनान्नं तु राक्षसम् ॥ १३४ ॥

गृह्णीयात्प्रागपोशानं तथा भुक्त्वा सकृत्त्वपः ॥
अनग्नममृतं तत्स्याद्भुक्तमन्नं द्विजन्मनाम् ॥ १३५ ॥

काले भुक्त्वा समुत्थाय प्रेक्ष्य विप्रं समीक्ष्य च ॥
अहःपतिं तत्र[6] स्थित्वा चिन्तयेद्बहु कृत्यकम् ॥ १३६ ॥

भार्या भोजनवेलायां भिक्षां सप्ताऽथ पञ्च वा ॥
दत्वा शेषं समश्नीयात्सापत्य-भृत्यकैः सह ॥ १३७ ॥

निर्वर्त्य सकलं सापि किंचित्स्थित्वा सुखेन तु ॥
स्वस्त्रीयरतिकार्येषु[7] सापि स्यात्तत्परा पुनः ॥ १३८ ॥

उपास्य पश्चिमां सन्ध्यां हुत्वा चैव हुताशनम् ॥
किञ्चित्पश्चात्[8]समश्नीयात्सायंप्रातरिति श्रुतिः ॥ १३९ ॥

स्वाध्यायमभ्यसेत्किञ्चिद्यामद्वयं शयीत च ॥
शयानो मध्यमौ यामौ ब्रह्मभूयाय कल्पते ॥ १४० ॥

१. F. reads य एव for वाग्यतो. २. B. reads °पात्रो ऽभ्यग्रासान् for °पात्रः स्त्रीन् ग्रासान्. ३. B. C. D. E. and F. read त्रिरात्रिपुण्याप्तिः, C. त्रिरात्रपुण्यानि for त्रिरात्रं पुण्याप्तिः. ४. B. D. E. F. read मुनयः for कवयः. ५. B. reads परिहृतं, D. also the same. ६. D. E. and F. read सुखं for तत्र. ७. B. D. E. F. read—

स्वस्त्रीयकृत्यकार्येषु सापि सान्त्वपरा पुनः ।

८. B. reads सायं for पश्चात्.

सुशयने शयीताथ एकान्ते च स्त्रियासह ॥
गोपनं मैथुनादीनां वदन्ति मुनिपुङ्गवाः ॥ १४१ ॥

ऋतुक्षपासु पुत्रार्थी आधानविधिना द्विजः ॥
प्रसाद्य भस्मना योनिमिति मन्त्रनिदर्शनात् ॥ १४२ ॥

कृत्वाऽऽधानविधानं तु स्त्रीयोगमभ्यसेत्पुनः ॥
मन्थेदविकृतो योनौ विकाराद्विकृताः प्रजाः ॥ १४३ ॥

ब्राह्मे मुहूर्त उत्थाय प्रातः सन्ध्यामुपक्रमेत् ॥
आसूर्यदर्शनात् प्रातः सायं चैवर्क्षदर्शनात् ॥ १४४ ॥

वहिःसन्ध्यामुपासीत सम्प्राप्तावम्भसः सदा ॥
उपासिता वहिःसन्ध्या विशिष्टफलदा भवेत् ॥ १४५ ॥

अनृतं मद्यगन्धं च दिवा मैथुनमेव च ॥
पुनाति वृषलस्यान्नं सन्ध्या वहिरुपासिता ॥ १४६ ॥

सिन्दूरारुणभं भाति नभो यावद्वितारकम् ॥
उदयेऽस्तमये भानोस्तावत्सन्ध्येति शक्तिजः ॥ १४७ ॥

आधानतो द्वितीये तु मासे पुंसवनं भवेत् ॥
सीमन्तोन्नयनं षष्ठे कार्यं मासेऽष्टमे ऽपि वा ॥ १४८ ॥

जातस्य जातकर्म स्याद्विधिवच्छ्राद्धपूर्वकम् ॥
दिने चैकादशे नामकर्म स्यात् च द्विजन्मनाम् ॥ १४९ ॥

तुर्ये निष्क्रमणं मासे षष्ठेऽन्नप्राशनं तथा ॥
चूडाकर्म तृतीयेऽब्दे कार्यं वा कुलधर्मतः ॥ १५० ॥

सर्वे स्त्रियां विमन्त्रं तु कार्यं कायविशुद्धये ॥
यस्य नस्युर्द्विजस्यैताः क्रियाश्चैव कथंचन ॥ १५१ ॥

स व्रात्यःसन् परित्याज्यो द्विजो यस्माद्द्विजन्मनाम् ॥
मुञ्जमौर्ण-शणानां तु त्रिवृता रशना स्मृता ॥ १५२ ॥

---

१. A. reads स्वशयने for सुशयने and B. reads शयीत शयने पश्चात् for सुशयने शयीताथ. २. B. reads सेवनं for गोपनं. ३. A. reads यथा ह्यविकृतो योगी, E. यथाहविकृतौ योनि°, F. न वेद विकृतो योनौ for मन्थेदविकृतो योनौ. ४. A. reads °उदयात् for °दर्शनात्. ५. B. reads सन्ध्यां for प्रातः. ६. A. reads ऽसम्भ्रमः for अम्भसः. ७. B. reads सक्रिया and C. शक्तितः for शक्तिजः. ८. A. reads दैववत्. ९. A. B. C. and F. read °कर्मादि स्यात् for °कर्म स्यात् च. १०. B. reads स्मृतम् for तथा.

कार्पास-शण-मेषौर्णान्युपवीतानि वर्णशः
पलाश-वट-पीलूनां[1] दण्डाश्च क्रमशः स्मृताः ॥ १५३ ॥

कार्ष्णं च रौरवं बास्तमजिनानि द्विजन्मनाम् ॥
शिरो-ललाट-नासान्ताः[2] क्रमाद्दण्डाः प्रकीर्तिताः ॥ १५४ ॥

अव्रणाः सत्वचो ऽदग्धा उक्ताः शुभकरा नृणाम् ॥
गायत्र्या त्रिष्टुप्-जगत्या त्रयाणामुपनायनम् ॥ १५५ ॥

गायत्र्यामविशेषो वा मुञ्जादिष्वपरेषु च ॥
तत्सवितुस्तां सवितुर्विश्वा रूपाणि वा क्रमात् ॥ १५६ ॥

औपनायनिका मन्त्रा विप्रादीनामुदाहृताः ॥
ब्राम्हणो विप्रगेहेषु नृपस्तेषू[3]त्तमेषु च ॥ १५७ ॥

वैश्यो विप्र-नृपेष्वेषु कुर्याद्भिक्षां स्ववृत्तये ॥
एकान्नं न द्विजोऽश्नीयाद्ब्रह्मचारिव्रते स्थितः ॥ १५८ ॥

भिक्षाव्रतं द्विजातीनामुपवाससमं स्मृतम् ॥
प्रतिग्रहो न भिक्षा स्या न्न तस्याःपरपाकता ॥ १५९ ॥

सोमपानसमा भिक्षा अतोऽश्नीत स भिक्षया ॥
भिक्षया यस्तु भुञ्जीत निराहारः स उच्यते ॥ १६० ॥

भिक्षामनभिशस्तेषु स्वाचारेषु द्विजेषु च ॥
भिक्षेत नित्यं क्रमशो गुरोः कुलं विवर्जयेत् ॥ १६१ ॥

स्वसारं मातरं चापि मातृष्वसारमेव[4] च ॥
भिक्षेत प्रथमां भिक्षां या चान्या न विमानयेत् ॥ १६२ ॥

'भवति भिक्षां मे देहि' 'भिक्षां भवति देहि मे' ॥
'भिक्षां मे देहि भवति' क्रमेणैवमुदाहरेत्[5] ॥ १६३ ॥

द्वादशाब्दं व्रतं धार्यं षट्त्र्यब्दं[6] तु श्रुतिम्प्रति ॥
आदित्याब्दे[7] त्यजेत्तद्वै दत्त्वा तु गुरवे वरम् ॥ १६४ ॥

त्रयस्तु स्नातकाः प्रोक्ताः विद्याव्रतोपसेविनः ॥
विद्यां समाप्य यःस्नायाद्विद्यास्नातक उच्यते ॥ १६५ ॥

---

१. C. reads °बिल्वानां for °पिलूनां. २. A. reads °नाशान्ताः for °नासान्ताः. ३. E. and F. read स्वेषु for तेषु. ४. A. reads पितृष्वसारम् for मातृष्वसारम्. ५. A. reads this line, as—भवतीति क्रमेणैतत् द्विजो नित्यमुदाहरेत्. ६. D. reads षडब्दं for षट्त्र्यब्दं. ७. B. C. D. E. and F. substitute अधीत्याथोत्सृजेत्तद्वै for आदित्याब्दे त्यजेत्तद्वै.

समाप्य च व्रतं यस्तु व्रतस्नातक उच्यते ॥
यज्ञं समाप्य यः स्नाति सद्द्विनामाऽभिधीयते ॥ १६६ ॥

द्वयं समाप्य यःस्नायात्स द्विनामाऽभिधीयते ॥
अष्टैक-द्वादशाब्दानि सगर्भाणि द्विजन्मनाम् ॥ १६७ ॥

मुख्यकालो व्रतस्यैष ह्यन्य उक्तो विपर्यये ॥
द्विगुणाब्देषु कर्तव्या क्रमादुपनतिर्द्विजैः ॥ १६८ ॥

हीनगायत्रिका व्रात्या उक्तकालादनन्तरम् ॥
नाध्याप्या[1] नैव चोद्वाह्या व्यवहारविवर्जिताः ॥ १६९ ॥

न याज्या नार्यकार्येषु प्रयोज्यास्त इति श्रुतिः ॥
स्त्रीवन्निर्लोम वक्त्रा ये निर्लोमदेह-वक्षसः ॥ १७० ॥

उच्चोरस्काऽनपत्याश्च अदेश्यास्तेऽपि गर्हिताः ॥
येऽजस्रं विहितं कुर्युः प्राप्नुयुस्ते सदा शुभम् ॥ १७१ ॥

दीर्घायुष्यमदारिद्र्यं सुप्रजास्त्वमरोगिता ॥
अगर्हितत्वं लोकेऽत्र विदुरनिषिद्धकारिणः ॥ १७२ ॥

क्षीणायुस्त्वं दरिद्रत्वमप्रजास्त्वं च रोगिता ॥
गर्हितत्वं च लोकेषु विदुर्निषिद्धकारिणः ॥ १७३ ॥

प्रातर्वा यदि वा सायं नाद्यादन्नमनर्चितम् ॥
नानाद्यमनपोशानं[2] शुभप्रेप्सुर्द्विजन्मना ॥ १७४ ॥

आपोशानं[3] विना नाद्यान्नाद्यादन्नमनर्चितम् ॥
अनाद्यं न दिवा सायं शुभमिच्छन् समश्नुते[4] ॥ १७५ ॥

षोडशाब्दानि विप्रस्य द्वाविंशतिर्नृपस्य च ॥
चतुर्विंशतिरन्यस्य व्रात्यास्ते स्युरतःपरम् ॥ १७६ ॥

उपनेया न ते विप्रैर्नाध्याप्याः शूद्रधर्मिणः ॥
व्यवहार्या नैव याज्या इति धर्मविदो विदुः ॥ १७७ ॥

स्त्रीणामुद्वाह एको वै वेदोक्तः पावनो विधिः ॥
स्त्री-पुंसोर्यत्र विन्यासस्तयोर[5]न्योन्यमुच्यते ॥ १७८ ॥

---

१. E. and F. read नाध्येयाः for नाध्याप्याः. २. B. reads this line in the following manner—

अनाद्यं न दिवासायं शुभमिच्छन्नचाश्नुते ।.

३. In B. this verse is omitted. ४. D. and E. read नचाश्नुते for समश्नुते.
५. C. reads सून्वोः for तयोः.

स्वस्मिन्यस्माद्बिभर्त्येषा पतिं, बिभर्ति सोऽपि ताम् ॥
अतो भार्या च भर्ता चेत्यत्र वेदो निदर्शनम् ॥ १७९ ॥

पतिर्विशति यज्जायां गर्भो भूत्वेह मातरम् ॥
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥ १८० ॥

जायोक्ता तेन भर्ता वै यदस्यां जायते पुनः ॥ १८१ ॥

इयमाभवनं[1] भार्या बीजमस्यां निषिच्यते ॥
देवा ऊचुर्मनुष्यांश्च स्वभार्या जननी तु वः ॥ १८२ ॥

आत्मना जायते ह्यात्मा सा[2] चैव पतितारिणी ॥
भार्या जाया जनन्येषा इति वेदे प्रतिष्ठिता ॥ १८३ ॥

यस्मात्स त्राति पुन्नाम्नो नरकात् पुत्र उच्यते ॥
सर्वां संसृतिमाहृत्य स याति ब्रह्मणैकताम्[3] ॥ १८४ ॥

पिता जातस्य पुत्रस्य पश्येच्चेज्जीवतो मुखम् ॥
सर्वं तेन फलं प्राप्तमैहिकामुष्मिकं[4] च यत् ॥ १८५ ॥

किं दण्डैरजिनैस्तीर्थैस्तपोभिः किं समाधिभिः ॥
पुमांसः[5] पुत्रमिच्छध्वं स वै लोके वदावदः ॥ १८६ ॥

प्राणोऽन्नमस्मिन् शरणं हि वासो रूप्यं[6] हिरण्यं पशवो विवाहाः ॥
सखा च यज्वा[7] कृपणश्च पुत्री ज्योतिः परं पुत्र इहाप्यमुत्र ॥१८७॥

स पुण्यकृत्तमो लोके यस्य पुत्राश्चिरायुषः ॥
विशेषेण हि धर्मज्ञाः[8] स परं ब्रह्म विन्दति ॥ १८८ ॥

पुत्रेण प्राप्यते स्वर्गो जातमात्रेण तु ध्रुवम्[9] ॥
तस्मादिच्छन्ति सर्वे हि पशवोऽपि वयांसि च ॥ १८९ ॥

१. B. C. D. E. and F. read यदिदं भवनं for इयमाभवनं. २. B. C. D. E. F. read सैषापरस्तु विधारिणी for सा चैव पतितारिणी. ३. A. reads ब्रह्मलोकताम्; while B. reads ब्रह्मणः पदम्. ४. B. D. E. and F. read °आमुत्रिकं for °आमुष्मिकं. ५. In this line the reading differs much, as— A. reads स वै लोको विदांवरः and C. substitutes ते वै लोकेश्वराद्वराः But while B. reads पुत्रमिच्छंति ते वै लोकेश्वराद्वशाः and F. reads पुत्रानिच्छन्तु ते वै लोकवरान्वराः. ६. B. C. D. E. read रूपं for रूप्यं. ७. A. B. E. and F. read जाया for यज्वा. ८. B. D. and E. read धर्मत्वात् for धर्मज्ञाः; while F. reads धर्मज्ञ. ९. B. D. E. and F. read निश्चितं for ध्रुवम्.

जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥
पुत्रस्यापि च पुत्रत्वं यत्त्राति[1] नरकार्णवात् ॥ १९० ॥

यः पिता स तु पुत्रः स्यात् जायैव हि जनन्यपि ॥
न पृथक्त्वं विदुस्तज्ज्ञास्तयोश्चाऽपरयोरपि ॥ १९१ ॥

अयं हि पन्थाः पुरुषस्य तस्य ध्रुवं भवेत्पुत्रजन्मेह यस्य ॥
तद्वीक्ष्य चोर्ध्वं पशवो वयांसि पुत्रार्थिनो मातरमारुहन्ति ॥ १९२ ।

जनिष्यमाणानिच्छन्ति पितरः स्वकुले सुतान् ॥
कश्चिद्दत्वा गयायां नोऽवश्यं[2] पिण्डान् प्रदास्यति ॥ १९३ ॥

यक्ष्यत्यन्योऽश्वमेधेन नीलं मोक्ष्यति गोवृषम् ॥
एष्टव्यं[3] पितृभिः सर्वं पुत्रेभ्यः सकलं फलम् ॥१९४॥

शुद्धः शौर्यैकचित्तो वा प्राणान्मोक्ष्यति संयुगे ॥
दानदो वा कुरुक्षेत्रे ज्ञानी वाथ भविष्यति ॥ १९५ ॥

जीवतो वाक्यकरणात् क्षयाहे भूरि भोजनात् ॥
गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता ॥ १९६ ॥

पुच्छे शिरसि यः शुक्लः शुक्लायाल्लोहितं वपुः ॥
देवाद्यभीष्टो[4] नीलोऽयमुत्सृष्टः पावनो वृषः ॥ १९७ ॥

रक्तो[5] वा यदि वा शुक्लः सुविषाणः शुभेक्षणः ॥
यो न हीनातिरिक्ताङ्गस्तं गोसहितमुत्सृजेत् ॥ १९८ ॥

दुहितापि तथा साध्वी श्वशुरयोरुपास्तिकृत् ॥
पतिव्रता च धर्मज्ञा पित्रोर्द्युगतिकृद्भवेत्[6] ॥ १९९ ॥

यः पिता स च वै पुत्रस्तत्समा[7] दुहिताऽपि च ॥
पुत्रश्च दुहिता चोभौ पितुः सन्तानकारकौ ॥ २०० ॥

तत्सुतः पावयेद्वंशान्त्रीन्वै मातामहादिकान् ॥
दौहित्रः पुत्रवत्स्वर्गे[8] उक्तौ शास्त्रैश्चतौ समौ ॥ २०१ ॥

---

१. B. D. E. read त्रायते for यत्त्राति. २. B. reads वंशे and C. D. E. वंश्यः for ऽवश्यं. ३. C. reads यष्टव्यं for एष्टव्यं. ४. C. substitutes वेदाद्यभीष्टो for देवाद्यभीष्टो. ५. B. D. E. and F. read

रक्तःकृष्णोऽपि तच्छुक्लः भुविषाणः शुभेक्षणः। .

६. A. reads °दा भवेत् for °कृत् भवेत्. ७. A. reads तन्माता for तत्समा. ८. A. B. and F. read स्वर्ग्यः for स्वर्गे.

आधानादिकसंस्काराः प्रोक्ता ये वै द्विजन्मनः ॥
कर्तव्याश्च स्वशाखोक्ताः केचित्कुलक्रमेण च ॥ २०२ ॥
चत्वारिंशच्च ते सर्वे निषेकाद्याः प्रकीर्तिताः ॥
मखदीक्षा च विविधा तथैवान्त्येष्टिकर्म च ॥ २०३ ॥
कुलाचारोऽपि कर्तव्य इति शास्त्रविदो विदुः ॥
देशाचारस्तथा धर्म इति प्राह पराशरः ॥ २०४ ॥
अयं[1] हि परमो धर्मः सर्वेषामिति निश्चयः ॥
हीनाचारश्च पुरुषो निन्द्यो[2] भवति सर्वशः ॥ २०५ ॥
क्लेशभागी च सततं व्याधितोऽल्पायुरेव च ॥
आचारे[3] व्यवहारे च दुराचारो विपर्ययः ॥ २०६ ॥
नृणामाचरतो धर्मः स्यादधर्मो विपर्ययात् ॥
तस्मादाद्ये ऽनुवर्तेत व्यत्ययं तु[4] विवर्जयेत् ॥ २०७ ॥

आचारवन्तो मनुजा लभन्ते
आयुश्च वित्तं च सुतांश्च सौख्यम् ॥
धर्मं तथा शाश्वतमीशलोकम्
अत्रापि विद्वज्जनपूज्यतां च ॥ २०८ ॥

वेदाः सहाङ्गैस्सपुराणविद्याः
शास्त्राणि वेद्यानि[5] च तद्विहीनम् ॥
कुर्युर्न[6] वै तान्यपि संस्मृतानि
नरं पवित्रं प्रवदन्ति वेदाः ॥ २०९ ॥

येऽधीतवेदाः क्रियया विहीनाः
जीवन्ति वेदैर्मनुजाधमास्तान् ॥
वेदास्त्यजेयुर्निधनस्य काले
नीडं शकुन्ता इव जातपक्षाः ॥ २१० ॥

---

१. All except A. read आचारः for अयं हि. २. D. E. and F. read प्रेत्य चेह विनश्यति for निन्द्यो भवति सर्वशः. ३. B. and F. read this line thus:—

आचारो व्यवहारश्च दुराचारो विपर्ययः ।

and C. reads—

आचारे व्यवहारेच दुराचारविपर्ययः ।;

while F. reads simply अनाचारो for दुराचारो.

४. सु° for तु. ५. A. B. D. E. and F. substitute सर्वाणि for वेद्यानि.
६. Except A. all read thus—कुर्युः स्वधीतान्यपि न स्मृतानि for कुर्युर्न वै तान्यपि संस्मृतानि.

आचारहीननरदेहगताश्च वेदाः
शोचन्ति किं नु कृतवन्त इतिस्म चित्ते॥
यन्नोऽभवद्वपुषि चास्य[1] शुभप्रहीणे
स्थानं तदत्र भगवान् विधिरेव शोच्यः[2] ॥ २११ ॥

कर्तव्यं यत्नतः शौचं शौचमूला द्विजातयः[3] ॥
शौचाचारविहीनानां सर्वाः स्युर्निष्फलाः क्रियाः ॥ २१२ ॥

तत्सद्भिर्द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा॥
विण्मूत्रशोधनं बाह्यं चित्तशुद्धिस्तथाऽऽन्तरम् ॥ २१३ ॥

मृद्भिरद्भिरनालस्यं तत्कर्तव्यं द्विजातिभिः॥
भावशुद्धिः परं शौचमाहुराभ्यन्तरं बुधाः ॥ २१४ ॥
गन्धलेपापहं बाह्यं शौचमाहुर्मनीषिणः॥
यस्य पुंसस्तु तच्छौचं शौचैस्तस्य किमन्यकैः ॥ २१५ ॥

वाङ्-मनो-जलशौचानि सदा येषां द्विजन्मनाम् ॥
त्रिभिः शौचैरुपेतो यः स स्वर्ग्यो नात्र संशयः॥ २१६ ॥

स्त्रियं रिरंसुर्द्रविणं जिहीर्षुर्वधं चिकीर्षुर्मनुजः परस्य॥
विवक्षुरत्यन्तमवाच्यवाचं[4] कथं स शुद्धिं समुपैति शौचात् ?॥२१७॥

किं निष्कामस्य नारीभिः किं गतासोश्च भेषजैः[5] ॥
जितेंद्रियस्य किं शौचैर्निष्फलं[6] मूर्खदानवत्[7] ॥ २१८ ॥

न गतिर्मूर्खदानेन न तारोऽम्बुनि चाश्मनः॥
तस्मात्तस्य न दातव्यं सह दात्रा स मज्जति ॥ २१९ ॥

यथा भस्म तथा मूर्खो विद्वान्प्रज्वालिताग्निवत् ॥
होतव्यं च समिद्धेऽग्नौ जुहुयात् को नु भस्मनि ॥ २२० ॥

यथा शूद्रस्तथा मूर्खो शूद्रश्च भस्मवत्तथा ॥
शूद्रेण सह संवासं मूर्खे दानं विवर्जयेत् ॥२२१ ॥

ग्रहीता यो न चोद्विद्वान् तं दाता रोहिको यथा॥
आत्मानं तारयेत्तं च नदीं वैतरणीं द्विजः ॥ २२२ ॥

---

१. B. D. E. and F. read पुण्य° for चास्य. २. A. reads कर्ता for शोच्यः. ३. D. and E. read द्विजाः स्मृताः for द्विजातयः ४. A. reads °वाच्यं for °वाचं. ५. A. and F. read सद्गुणैः for भेषजैः. ६. B. and F. read निष्फलैः for निष्फलं. ७. Except A. and C. all read मुर्खदत्तवत्.

योमूर्खो विशदाचारः षट्कर्माभिरतः सदा ॥
स नयन् स्वर्गमात्मानं वृद्धांश्चैव न पीडयेत् ॥ २२३ ॥
न विद्या[1] न तपो यस्य ह्यादत्ते च प्रतिग्रहम् ॥
निपातयन् स दातारमात्मानमप्यधो नयेत्[2] ॥ २२४ ॥
हेम-भूमि-तिलान् गाश्च अविद्वानाददाति यः ॥
भस्मीभवति सोऽह्नाय दातुःस्यान्निष्फलं च तत् ॥ २२५ ॥
तस्मादविद्वान्नाद्द्यादल्पशोऽपि प्रतिग्रहम् ॥
विषतत्वापरिज्ञानो विषेणाल्पेन नश्यति ॥ २२६ ॥
सर्वं गवादिकं दानं पात्रे दातव्यमर्चितम् ॥
विद्वाद्भिर्न त्वपात्रे तु गतिमिच्छद्भिरात्मनः ॥ २२७ ॥
हस्ति-कृष्णाजिनाद्यास्तु गर्हिता ये प्रतिग्रहाः ॥
सद्भिप्रास्तान्न गृह्णीयुर्गृह्णानास्तु पतन्ति ते ॥ २२८ ॥
कृष्णाजिनप्रतिग्राही हयानां शुक्रविक्रयी ॥
नवश्राद्धस्य यो भोक्ता न भूयः पुरुषो भवेत् ॥ २२९ ॥
यो गृह्णाति कुरुक्षेत्रे ग्रामं[3] गां द्विमुखीं गजम्[4] ॥
नवश्राद्धान्नभुग्यश्च वर्ज्या निर्माल्यवद्द्विजाः ॥ २३० ॥
एते यान्त्यन्धतामिस्रं यावन्मनुसहस्रकम् ॥ २३१ ॥
विष्णोश्च[5] वह्नेश्च रवेश्च जाता पृथ्वी च राज्ञश्च मुनीश गौश्च ॥
काले सुपात्रे विधिना प्रदत्ताः प्राप्नोति लोकत्रयमेतदुक्तम् ॥२३२॥
वेदविद्वान्सदाचारः सदा वसति सन्निधौ ॥
भोजने चैव दाने च वर्जनीयो न सत्तमैः ॥ २३३ ॥
अत्यासन्नानधीयानान्ब्राह्मणान्यो व्यतिक्रमेत् ॥
भोजने चैव दाने च हिनस्त्यासप्तमं कुलम् ॥ २३४ ॥
अनूचोऽपि निराचाराः प्रतिवासा[6]निवासिनः ॥
अन्यत्र हव्य-कव्याभ्यां भोज्याःस्युरुत्सवादिषु ॥ २३५ ॥

---

१. C. only reads विद्यते for विद्या न. २. This whole line is read in B. C. D. E. and F. thus—आददानस्त्वनाचारो दातारमपि वर्जयेत्. ३. A. reads मार्गं for ग्रामं. ४. B. E. and F. read हयम् instead of गजम्. ५. A. reads this verse as—

पृथ्वी च वेदाश्च मुनीश गौश्च कालेच पात्रे विधिना प्रदत्ताः ।
नरेण येनेह शुभेप्सुना चेत् स प्राप्नोति लोकत्रयमेतदुक्तम् ॥.

६. B. D. E. and F. read °वेश्म° for °वास°.

प्रोक्तप्रतिग्रहाभावे प्राप्तायां बृहदापदि ॥
विप्रोऽश्नन्प्रतिगृह्णन्वा यतस्ततोऽपि नाघभाक् ॥ २३६ ॥

गुर्वादिपोष्यवर्गार्थं देवाद्यर्थं च सर्वतः ॥
प्रत्यादद्याद्द्विजाग्र्यस्तु भृत्यर्थमात्मनोऽपि च ॥ २३७ ॥

दधि-क्षीरा-ऽऽज्य-मांसानि गन्ध-पुष्पा-ऽम्बु-मत्स्यकान् ॥
शय्या-ऽऽसनाशनं शाकं प्रत्याख्येयं न कर्हिचित् ॥ २३८ ॥

अपि दुष्कृतकर्मभ्यः समादद्यादयाचितम् ॥
पतितादिस्तदन्येभ्यः प्रतिग्राह्यमसंशयम् ॥ २३९ ॥

शक्तः प्रतिग्रहीतुं यो वेदवृत्तस्सु[1]संवृतम् ॥
लभ्य[2]मानं न गृह्णाति स्वर्गस्तस्याल्पकं[3] फलम् ॥ २४० ॥

प्रतिग्रहमृणं वापि याचितं यो न यच्छति ॥
त[4]त्कोटिगुणग्रस्तोऽसौ मृतो दासत्वमृच्छति ॥ २४१ ॥

दाता च न स्मरेद्दानं प्रतिग्राही न याचते ॥
उभौ तौ नरकं यातौ दाता चापि प्रतिग्रही ॥ २४२ ॥

अपात्रस्य हि यद्दत्तं दानं स्वल्पमपि द्विजाः ॥
ग्रहीता तत्क्षणाद्याति भस्मत्वं चाप्यवारितः[5] ॥ २४३ ॥

वदन्ति कवयः[6] केचिद्दान-प्रतिग्रहोपरि ॥
प्र[7]त्यक्षलिङ्गमेवेह दातृ-याचकयोरतः ॥ २४४ ॥

दातृहस्तो भवेदूर्ध्वं ग्रहीतुश्च भवेदधः[8] ॥
दातृ-याचकयोर्भेदो हस्ताभ्यामेव सूचितः ॥ २४५ ॥

सून्यादीनां चतुर्णां च तथा निन्दितभूपतेः ॥
न विद्वान् प्रतिगृह्णीयात्प्रतिगृह्णन्व्रजत्यधः ॥ २४६ ॥

दुष्टा दशगुणं पूर्वात् सूनि-चक्र्यथ मद्यकृत् ॥
वेश्या निषिद्धनृपतिः प्रतिग्रहे परः क्रमात् ॥ २४७ ॥

---

१. B. D. E. and F. read तु संवृतम् for सु संवृतम्. २. B. D. E. and F. read दीयमानं for लभ्यमानं. ३. A. substitutes सुनिश्चितम् for अल्पकं फलम्. ४. Except E. and F. read स कोटिगुणितग्रस्तो for तत्कोटिगुणग्रस्तोऽसौ. ५. E. and F. read अविचारतः for चाप्यवारितः. ६. A. E. and F. read मुनयः for कवयः. ७. B. reads this line thus—

प्रत्यक्षलिङ्गमेवैकं स्याद्दातृ-याचकयोरिह ।

८. A. and C. read अधस्तिष्ठेत्प्रतिगृही for ग्रहीतुश्च भवेदधः.

परपाकं वृथा मांसं देवानामपि दूषितम् ॥
अनुपाकृतमांसं च नाद्यं च लशुनादिकम् ॥ २४८ ॥
न भोक्तव्यमभोज्यान्नं कन्द-मूलादिकं च यत् ॥
न पातव्यमपेयं च द्विजैरत्यन्तगर्हितम् ॥ २४९ ॥
सत्यं युक्तं सदा ब्रूयाच्छनैर्धर्मं समाचरेत् ॥
यमान्सनियमान्कुर्याद्गार्हस्थ्यं व्रतमाचरन् ॥ २५० ॥
मातृ-पितॄनुपाध्यायाञ् गुरून्विप्रान्सदाऽर्चयेत् ॥
एतांश्छ्रेष्ठांस्तथा चान्यान्नित्यं विप्राभिवन्दनम् ॥ २५१ ॥
दमं सेवेत सततं दानं दद्याच्च[1] सर्वदा ॥
दयां च सर्वदा[2] कुर्यात्तद्विना नरकाश्रयः ॥ २५२ ॥
[3]दाम्यन्स सर्वदाऽऽत्मानं मनो दाम्यं सदा द्विजैः ॥
दयध्वमिति चैवैषां श्रुतिर्वाजसनेयिकी ॥ २५३ ॥
यन्विदं कारकं कुर्यात्स्तनयित्नुर्ध्वनिं दिवि ॥
[4]ददे[5]द्धेति दमं दानं दयामिति च शिक्षयेत् ॥ २५४ ॥
रसा रसैः समा ग्राह्या देया अपि च नान्यथा ॥
न रसैर्लवणं ग्राह्यं समतो हीनतोऽपि वा ॥ २५५ ॥
तिला अपि समा देया धान्यैरन्यैर्द्विजातिभिः ॥
[6]प्रपीड्या नैव यंत्रेषु ब्रूयुरेतन्मनीषिणः ॥ २५६ ॥
[7]तिलवत्सर्ववस्तूनि सस्नेहानि द्विजातिभिः ॥
अप्रपीड्यानि यंत्रेषु ब्रूयुरेतन्मनीषिणः ॥ २५७ ॥
विक्रयव्यपदेशेन दुग्ध-दध्यादिसर्पिषाम् ॥
शुश्रूष्यान्न तिरस्कुर्यादुपास्यान्नावधीरयेत् ॥ २५८ ॥

---

१. B. D. E. and F. read शक्त्या च instead of दद्याच्च. २. B. D. E. and F. omit सर्वदा. and read जंतुषु In its place. ३. in B. E. and F. the reading of this whole line is thus—

सद्विजाः सर्वदात्मानं दाम्यदत्तं सदा जनाः।,

and D.—

सद्विजानां च सन्मानं दानं दत्तं सदाजनाः।.

४. A. reads दद्यात् for ददेत्. ५. A. reads रक्षयन्. ६. A. and F. read this whole line, as—

न ते यंत्रेण निष्पीड्याः पातयन्ति निपीडिताः।.

७. This verse is omitted by all except A.

लोभात्कुर्याद्विजन्मा यः स तु शूद्रसमख्यहात् ॥
न निन्द्याच्च समभ्यर्च्यान्न विक्रीणीत गर्हितान् ॥ २५९ ॥

अदेयानि न वै दद्यादत्त्याज्यानि न वै त्यजेत् ॥
अभाष्यान्नैव भाषेच्च हीनाङ्गाद्यांश्च न क्षिपेत् ॥ २६० ॥

न संवदेच्च पित्राद्यैः पतिताद्यैर्न संविशेत्[१] ॥
न मतिं नीचवर्णाय दद्यादुच्छिष्टमेव च ॥ २६१ ॥

मतिं शूद्रस्य यो दद्याद्यश्चैनं पर्युपासते ॥
न किञ्चित्तस्य चाख्येयं व्रतादि नियमादिकम् ॥ २६२ ॥

आचक्षाणस्तु तद्धर्मं नरकाग्नौ प्रपच्यते ॥
नाद्यादन्नं निषिद्धस्थं स्वप्याद्वा[३] नार्द्धरात्रिषु ॥ २६३ ॥

वेदविद्यावितानानि[४] विक्रीणीत न कर्हिचित् ॥
नापत्यानि रसाद्यानि[५] भूवृत्तिं चान्वये सति ॥ २६४ ॥

नापः पिबेत् स्वपाणिभ्यां न च कण्डूतिकृद्भवेत्[६] ॥
विदिक्-प्रत्यगुदग्रस्तु शयीताह्नि न सन्ध्ययोः ॥ २६५ ॥

पादुकादि न पालाशं न वृक्षादिनिकृन्तनम् ॥
नोत्सृज्यं[७] ष्ठीवनाद्यं च कदाचिद्वै गवादिषु ॥ २६६ ॥

पद्भ्यां स्पृश्यं गवाद्यं नो नोच्छिष्टं न च तद्गतिः ॥
न लंघ्यं वत्स-तंत्र्यादि वाय्वग्न्योर्[८]नान्तरा गतिः ॥ २६७ ॥

न द्वयोर्विप्रयोर्नाम्न्योः सौरभेय्योः पति-स्त्रियोः ॥
विप्राग्न्योर्विप्रपिण्डानां नोग्रोक्ष्णोर्विष्णु-तार्क्ष्ययोः ॥ २६८ ॥

सौरभेयोर्जलाग्न्योश्च माहेयी-जलयोरपि ॥
भानु-व्योमादिकानां तु न कुर्यादन्तरा गतिम् ॥ २६९ ॥

---

१. B. reads संवदेत् and F. संश्रयेत् for संविशेत्. २. B. D. E. F. read नरकं प्रतिपद्यते for यश्चैनं पर्युपासते. ३. A. B. D. E. F. read सन्ध्याशय्यार्धरात्रिषु for स्वप्याद्वा नार्धरात्रिषु. ४. A. reads निपानानि; while B. D. E. and F. read न यानानि for °वितानानि. ५. D. E. and F. read समग्राणि for रसाद्यानि. ६. A. reads कण्डूयति कांचित् for कण्डूतिकृद्भवेत्; while F. reads कण्डूप्रतिकृद्भवेत्. ७. B. D. E. and F. substitute नोत्सार्यं for नोत्सृज्यं. ८. B. D. E. read वा स्वर्गो for वाय्वग्न्योः.

भोजनादिषु नासक्तां पश्येन्न विगतांशुकाम् ॥
न गच्छेत्स्त्रीं [2]रजोयुक्तां न चाश्नीयात्तया सह ॥
नगच्छेत्स्त्रीं रोगयुक्तां प्रसुप्यान्न तया सह ॥ २७० ॥

उत्तरीयं विना नैव न नग्नो ऽधः शयीत च ॥
[3]न गेहे चैव मार्गादौ न निषिद्धककुम्मुखः ॥ २७१ ॥

नोपगन्तुं सुरार्चादि न च विष्ठागृहान्तिके ॥
[4]अतिकालातियाने च शुभमिच्छन्विवर्जयेत् ॥ २७२ ॥

ज्येष्ठेन्द्रचाप-भद्रा[5]ख्या मूलनाम्ना न निर्दिशेत् ॥
इन्द्रचापं धयन्ती गौर्न ख्यातव्ये परस्य ते ॥ २७३ ॥

वर्जयेद्धावनं चैव पादयोः कांस्यभाजने ॥
पैशुन्यं मर्मभेदं च न वदेन्म्लेच्छभाषितम् ॥ २७४ ॥

प्राकृतं च कुशास्त्राणि पाषण्डं हैतुकानि च ॥
न श्रोतव्यानि विप्रेण यातनाकारणानि च ॥ २७५ ॥

न करं मस्तके दद्यान्मस्तकं न करे तथा ॥
न जानुनोः शिरो धार्यं नाऽप्रावृताशिरा भ्रमेत् ॥ २७६ ॥

वैणाश्च बद्धाश्च कदर्यचोराः
क्लीबाभिशस्ता गणिका तु या च ॥
यो वृद्धजीवी गणदीक्षका ये
तेषां न भोज्यं ह्यशनं द्विजातेः ॥ २७७ ॥

कूरा[6]तुरा [7]वृद्ध-चिकित्सकाश्च
या पुंश्चली यौ च विरोधि-शत्रू ॥
व्रात्योग्रमत्ता अबलाजिताश्च
[8]अग्राह्यमेषामशनं द्विजस्य ॥ २७८ ॥

---

१. A. reads भोजनादिपानासक्तां for भोजनादिषु नासक्तां. २. B. D. E. read जनैर्युक्तां for रजोयुक्तां. ३. A. omits this line; while F. reads नावहेचैव मार्गादौ for न गेहे चैव मार्गादौ. ४. A. reads अतिकालानि यामेन. for अतिकालातियाने च. ५. B. D. E. F. substitute °रुद्रा° for °भद्रा°. ६. D. and E. read नराः for °तुराः. ७. A. D. and F. read क्रुद्ध° for वृद्ध°. ८. A. D. E. and F. substitute स्यान्नाद्यम् for अग्राह्यम्.

ये दाम्भिका ये च सुवर्णकारा
उच्छिष्टभोजी पतितश्च यश्च ॥
ये पु[1]त्रभार्या बहुयाजका ये
वि[2]प्रेण चैषां न हि भोज्यमन्नम् ॥ २७९ ॥

ये सोम-शस्त्रास्त्र-कृताम्बु-तक्र-
क्षीराज्य-मांसं लवणाजिनानि ॥
क्षौमानि ला[3]क्षा च तिलान्फलानि
विक्रे[4]युरेषामशनं न भोज्यम् ॥ २८० ॥

जीवन्ति वृत्या-र[5]सदानपानां
कर्मारका येऽपि च त[6]न्तुवायाः ॥
राजा नृशंसो रजकः कृतघ्नो
भोज्याशना नैव विहिंसकाश्च ॥ २८१ ॥

ये चै[7]लधावाश्च सुराकृतो ये
पैशून्यवाचो ह्य[8]नृतंवदाश्च ॥
ये बन्दिनो येऽपि च चाक्रिकाश्च
विप्रस्य[9] चैतेऽपि न भोज्यसस्याः ॥ २८२ ॥

मध्वासव-मधूच्छिष्ट-दधि-क्षीर-रसौ दनान् ॥
मनुष्योपल-धूपांश्च कुश-मृत्पुष्प-वीरुधः ॥ २८३ ॥
कौशेय-केश-कुतपान्नीरं विषरसांस्तथा ॥
शाकैकश[10]फ-पिण्याक-गन्धानौषधिमूलकाः ॥ २८४ ॥

विक्रीणन्ति य एतानि वस्तूनि मनुजाधमाः ॥
तेषामन्नं न भोक्तव्यं तथोपपतिवेश्मनः ॥ २८५ ॥

---

१. B. D. and E. substitute विप्र° for पुत्र°. २. A. reads this, thus—
विप्रस्य चैतेऽपि न भोज्यधान्याः; while B. D. and E. read विप्राश्च नैते
ऽपि न भोज्यधान्याः. ३. B. D. E. and F. read भिक्षा instead of लाक्षा.
४. In A. the reading of this line is thus – एषां न विक्रीतकृदन्नमाद्यम्.
५. A. reads रसमायया वा for रसदानपानां. ६. B. and F. read तन्तुवाद्याः
for तन्तुवायाः. ७. B. and E. read तैलधाराः for चैलधावाः. ८. B.
D. E. and F. read वितथं° for ह्यनृतं°. ९. Only F. reads विप्रेण for
विप्रस्य. १०. E. and F. read °शिफ° for °शफ°.

योऽपचस्य[१] कदर्यस्य भुञ्जीतान्नं द्विजाधमः॥
तत्क्षणाच्छूद्रवत्स स्यान्मृतो विट्शूकरो भवेत्॥ २८६॥

योऽन्नं वार्द्धुषिकस्याद्यादजापालादिकस्य च॥
अन्यस्यापि निषिद्धस्य सोऽनन्तं[२] नरकं व्रजेत्[३]॥ २८७॥

पाणिगृहीतभार्यायां सत्यां यस्तु नराधमः॥
शूद्रीहस्तेन भुञ्जीत पतितः स सदैव[४] तु॥ २८८॥

त्यक्ता येनोढभार्या तु त्यक्तः स पितृ-दैवतैः॥
त्यक्तो दैवैः स पापीयांच्छूद्रादप्यधमः स्मृतः॥ २८९॥

यः शूद्रीं भजते नित्यं शूद्री तु गृहमेधिनी॥
वर्जितः पितृदेवैस्तु रौरवं यात्यसौ द्विजः॥ २९०॥

यः शूद्र्यां च स्वयं जातो ह्यन्यस्यां सोऽपि वै पुनः॥
अन्यस्यां च पुनः सोऽपि किमस्य प्रेत्य चिन्तनम्॥ २९१

सर्वान् भुञ्जीत नरकान्विंशतिं त्वेकवर्जितान्॥
रौरवादीन्क्रमेणैव पापिष्ठो यावदम्बरम्॥ २९२॥

हेमन्तशिशिरत्वींश्च प्रोष्ठपद्याः परस्य च॥
पञ्चस्वपरपक्षेषु कार्याः साग्निभिरष्टकाः॥ २९३॥

हेमन्ते शिशिरे चैका एकैकाथ तथा परा॥
प्रोष्ठपद्यां द्विजास्तिस्रो ह्यष्टका इति केचन॥ २९४॥

दर्शश्च पौर्णमासश्च तथैवाऽऽग्रयणद्वयम्॥
चातुर्मास्यव्रतान्येव कार्याणि साग्निकैर्द्विजैः[५]॥ २९५॥

अनूचानकृतं कुर्युः सदैव व्रतचारिणः॥
अनूचानकुले जाताः सदैव व्रतचारिणः॥
अग्निहोत्ररता नित्यं माता-पित्रादिपूजकाः॥ २९६॥

प्रतिग्रहनिवृत्ताश्च जप-होमपरायणाः॥
वृत्तवन्तश्च ये विप्राः स्नातकास्ते प्रकीर्तिताः॥ २९७॥

---

१. B. D. E. and F. read ऽपथ्यस्य for ऽपचस्य. २. B. D. and E. subsitute ह्यन्ते for ऽनन्तं. ३. B. E. and F. read वसेत् for व्रजेत्. ४. A. reads स्यात्तदैव; while B. F. read तथैव. for सदैव. ५. Only F. reads स्नातकैः for साग्निकैः.

सङ्क्रान्तिरर्कवारश्च व्यतीपातो युगादयः ॥
शुभर्क्ष-दिन-योगेषु[1] कार्याः साग्निभिरष्टकाः ॥ २९८ ॥
न शूद्राद्दीक्षितेनैतत्कर्तव्यं कर्म सद्द्विजैः ॥
चण्डालत्वमवाप्नोति यज्ञार्थं शूद्रयाचकः ॥ २९९ ॥
लब्धं यज्ञाय यो विप्रो न दद्याद्यज्ञकर्मणि ॥
स वायसोऽथ वा गृध्रः काको वाऽथ प्रजायते[2] ॥ ३०० ॥
शिलोञ्छवृत्तिर्विप्रः स्यादथ वैकाहिकाशनः ॥
त्र्यहाहिकाशनो वा[3] स्यात् कुम्भीकुशूलधान्यकः ॥ ३०१ ॥
पूर्वपूर्वतरः श्रेयान् तेषां सद्भिः प्रकीर्तितः ॥
सोमपः स्यात् त्रिवर्षान्नस्तत्पूर्वक्तसमाशनः[4] ॥ ३०२ ॥
सोमेष्टिं पशुयज्ञं च कुर्वीत प्रतिवासरम् ॥
इष्टिर्वैश्वानरी या तु कर्तव्यैतदसम्भवे ॥ ३०३ ॥
सत्यामर्थस्य सम्पत्तौ न कुर्याद्धीनदक्षिणम् ॥
तत्कृतं च भवेद्व्यर्थं प्राप्नुयात्पशुयोनिताम् ॥ ३०४ ॥
श्रद्धापूतं प्रदातव्यं पात्रे दानं समर्चितम् ॥
याचितेऽपि हि दातव्यं पूतं च श्रद्धया धनम्[5] ॥ ३०५ ॥
शूद्रान्नं ब्राह्मणोऽश्नन्वै मासं मासार्धमेव च ॥
तद्योनावेव जायेत सत्यमेतद्विदुर्बुधाः ॥ ३०६ ॥
आशूद्रस्थशूद्रान्नो[6] मृतः श्वाचोपजायते ॥
द्वादशं दश वाष्टौ च गृध्र-शूकर-पुल्कसाः ॥ ३०७ ॥
उदरस्थितशूद्रान्नो ह्यधीयानोऽपि नित्यशः ॥
जुह्वन्वापि जपन्वापि गतिमूर्ध्वां न विन्दति ॥ ३०८ ॥
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ॥
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम् ॥ ३०९ ॥

---

१. F. reads °यामाश्च for °योगेषु. २. B. D. E. and F. read this whole line thus—

सभासः काको गृध्रो वा श्मशाने निर्जले भवेत्।;

while A. substitutes भासोऽप्यथ वा for वायसोऽथ वा. ३. B. E. and F. read द्वित्र्याहिकाशनो वा for त्र्यहाहिकाशनो वा and D. reads त्र्यहाहिकान्नोवा पि. ४. B. reads त्रिवर्षान्तः. ५. B. D. E. F. read—

याचितेनाऽपि दातव्यं श्रद्धापूतं धनं नरैः।.

६. मासाद्विमस्तु शूद्रान्नो is the reading in A.

आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते ॥
तस्मादामं च पक्वं च शूद्रस्य परिवर्जयेत् ॥ ३१० ॥
[1]तस्माच्छूद्रं न भिक्षेरन्यज्ञार्थं सद्विजातयः ॥
श्मशानमेव यच्छूद्रस्तस्मात्तं परिवर्जयेत् ॥ ३११ ॥
[2]कणानामथ वा भिक्षां कुर्याच्चेद्वृत्तिकर्शितः ॥
सच्छूद्राणां गृहे कुर्वन्न तत्पापेन लिप्यते ॥ ३१२ ॥
विशुद्धान्वयसञ्जातो निवृत्तो मांस-मद्यतः ॥
द्विजभक्तिर्वणिग्वृत्तिस्सच्छूद्रः सम्प्रकीर्तितः ॥ ३१३ ॥
उदक्यास्पृष्ट-सङ्घुष्टं वाञ्छितं वाप्युदक्यया ॥
श्वस्पृष्टं शकुनोत्सृष्टं[3] प्रयत्नेन विवर्जयेत् ॥ ३१४ ॥
उच्छिष्टं च पदास्पृष्टं शुक्तं च पतितेक्षितम् ॥
पर्युषितं चिरस्थं च केश-कीटाद्युपाहतम् ॥ ३१५ ॥
पङ्क्त्युच्छिष्टं गवाघ्रातं प्रयत्नेन विवर्जयेत् ॥
नाश्नीरन्नेतदशनं शमिच्छन्तो[4] द्विजातयः ॥ ३१६ ॥
शूद्राणामपि भोज्यान्नाःस्युःसीरि-नापितादयः ॥
सस्नेहमशनं भोज्यं चिरस्थमपि यद्भवेत् ॥ ३१७ ॥
अनाक्ता अपि भोज्याः स्युः सद्यःश्रितयवादयः ॥
गर्भिण्यवत्ससूतिक्या गवादेर्वर्जयेत्पयः ॥ ३१८ ॥
स्त्रीणामेकशफोष्ट्रीणां तथारण्यकमाविकम् ॥
प्रसूता ब्राह्मणी गौश्च महिष्योजास्तथैव च ॥ ३१९ ॥
दशरात्रेण शुद्ध्यन्ति भूमिसस्थं नवं पयः ॥
शाकादिकं च विट्जातं कवकानि[5] च वर्जयेत् ॥ ३२० ॥
[6]मांसं कीटादिभिर्जुष्टं प्रयत्नेन विवर्जयेत् ॥
ये[7] वयः क्रव्यमश्नन्ति तथा विष्ठाभुजश्च ये ॥ ३२१ ॥

---

१. In B. D. E. this verse is omitted. २. In B. D. E. this line is altered as,—

कणभिक्षां निराकुर्याद्यदि कुर्याद्वृत्तिकः ।.

३. All except A. read उच्छिष्टं for °उत्सृष्टं. ४. C. reads सामिषं ते for शमिच्छन्तो. ५. B. C. E. and F. read कवचानि for कवकानि; while D. reads कवक्यानि. ६. The following 34 lines are omitted in, A. ७. B.reads एवं ये क्रव्यमश्नंति for ये वयः क्रव्यमश्नान्ति.

शुक-टिट्टिभ-दात्यूहाः कपोत-पिक-सारिकाः ॥
सेधाद्यांश्च पञ्चनखान् सिंहाद्यान्मत्स्यकांस्तथा ॥ ३२२ ॥
धर्मशास्त्रोदितानद्यात्सर्वाकारांश्च[१] वर्जयेत् ॥
भक्ष्यं प्राणात्यये मांसं श्राद्ध-यज्ञोत्सवेष्वपि ॥ ३२३ ॥
कृत्वा च विधिवच्छ्राद्धं पश्चात्तत् स्वयमश्नुते ॥
नाद्यादविधिना मांसं मृत्युकालेऽपि धर्मवित् ॥ ३२४ ॥
यदैवाव्ययसम्पत्तिस्तदैवामन्त्रयेद् द्विजान् ॥
यत्र वा तत्र वा काले नाद्यं त्वविधिनाऽऽमिषम् ॥ ॥ ३२५ ॥
भक्षयन्नरके तिष्ठेत्पशुलोमसमाः समाः ॥
गृहस्थोऽपि हि यो नाद्यात्पिशितं तु कदा च न ॥ ३२६ ॥
स साक्षान्मुनिभिः प्रोक्तो योगी च ब्रह्मलोकगः ॥
न स्वयं च पशुं हन्याच्छ्राद्धकालेऽप्युपस्थिते ॥ ३२७ ॥
क्रव्यादैः सारमेयाद्यैर्हतं मृगादिमाहरेत् ॥
एतच्छाकवदिच्छन्ति पवित्रं द्विजसत्तमाः ॥ ३२८ ॥
समर्थो यस्य यस्तु[२] स्यादन्नं दत्वातु देहिनाम् ॥
[३]सतामिति निरातङ्को लोकदृष्टं निगद्यते ॥ ३२९ ॥
अन्नादेरपि भक्ष्यस्य स्नेह-मद्या-ऽऽमिषस्य च ॥
महाफला निवृत्तिःस्यात्प्रवृत्तिः स्वर्गसाधना ॥ ३३० ॥
एकोऽब्दशतमश्वेन यजेत पशुना द्विजः ॥
नान्यस्तु मांसमश्नाति स्वर्गप्राप्तिस्तयोः समा ॥ ३३१ ॥
हेमराजत-शङ्खानां पात्राणां वैणवस्य च ॥
चर्मणो रज्जुवस्त्राणां शुद्धिर्जायेत वारिणा ॥ ३३२ ॥
स्रुक्यादीनां यज्ञपात्राणां धान्यानां वाससामपि ॥
अन्येषां चयरूपाणां प्रोक्षणात् शुद्धिरिष्यते ॥ ३३३ ॥
मार्जनान्मखपात्राणां हस्तेन मखकर्मणि ॥
[४]अंभोजपत्रकैरुष्णैः शुद्ध्यतः कौशिकाविके ॥ ३३४ ॥

---

१. B. D. E. F. read सर्पाकारान् for सर्वाकारान्. २. B. D. E. F. read यस्य for यस्तु. ३. B. D. E. F. read this line in somewhat different way, as—

सततन्ति निरातंको लोकदृष्टं निगद्यते ।

४. D. reads अंभो गोमूत्रकैरुष्णैः for अंभोजपत्रकैरुष्णैः.

श्रीफलैरंशुपट्टानां सारिष्टैः कुतपस्य च ॥
मृण्मयानि पुनः पाकैः क्षौमाणि सितसर्षपैः ॥ ३३५ ॥

शुद्ध्येत कारुहस्तस्थं पण्यं यत्स्यात्प्रसारितम्[1] ॥
भैक्ष्यं च प्रोक्षणाच्छुद्धेत्स्पृष्टिः[2] साक्षान्न यस्य तु ॥ ३३६ ॥

स्त्रीमुखं च सदा शुद्धं भूमिलेपविवर्जिता ॥
अपरा दहनाद्यैश्च गृहं मार्जन-लेपनैः ॥ ३३७ ॥

द्रवद्रव्याणि[3] शुद्ध्यन्ति वह्निना प्लावनेन च ॥
क्रव्यादाद्यैर्हतं मांसं सर्वदा शुचि कीर्तितम् ॥३३८॥

तृप्तिकृत्सौरभेयाश्च स्वभावस्थं महीगतम् ॥
वदन्ति सूरयो वारि पवित्रमिव सर्वदा ॥ ३३९ ॥

गौर्वह्नि-भानवच्छाया जलमश्वं वसुन्धरा ॥
विप्रुषो मक्षिका वायुर्न दुष्यन्ति कदा च न ॥ ३४० ॥

शुचिः प्रस्थापने वत्सो अजाश्वौ मुखतस्तथा ॥
शुचिः प्रस्रवणे वत्सस्तथाजाश्वौ मुखे शुची ॥
न तु गौर्मुखतो मेध्या न च[4] गोमुखजा मलाः ॥ ३४१ ॥

सोम-भास्करयोर्भाभिः पथशुद्धिः प्रकीर्तिता ॥
ओष्ठाधरौ श्मश्रुकरौ सस्नेहौ भोजनादनु ॥ ३४२ ॥

नदुष्येच्छाक्तिजः[5] प्राह बाल-वृद्धौस्त्रियोमुखम् ॥ ३४३ ॥

स्नात्वा पीत्वा च भुक्त्वा च सुप्त्वा तप्त्वा तथैव च ॥
गत्वा रथ्यादिके चैव शुद्धिराचमनेन तु ॥ ३४४ ॥

नापो मूत्र-पुरीषाभ्यां नाग्निर्दहति कर्मणा ॥
न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा ॥ ३४५ ॥

पद्माश्मलोहाः[6] फल-काष्ठ-चर्म-
भाण्डस्थतोयैः स्वयमेव शौचात् ॥
पुंसां निशास्वध्वनि चाऽसखानां ॥
स्त्रीणां च शुद्धिर्विहिता सदापि ॥ ३४६ ॥

---

१. A. reads प्रसादितम् for प्रसारितम्. २. B. D. E. and F. read संस्पृष्टिः for स्पृष्टिः. ३. B. reads द्रव्याणि चैव for द्रवद्रव्याणि. ४. A. reads नरस्य मुखजा मलाः for न च गोमुखजा मलाः; while D. reads कस्यापि मुखजा मलाः. ५. A. reads न दुष्येच्च रुजः for नदुष्येच्छाक्तिजः while B. नदुष्टं ऋत्विजः प्राहस्त्रीवृद्धाशिशुरोगिणाम्. ६. B. D. and E. read °लोह° for °लोहाः.

नभसः पंचदश्यां तु पंचम्यां च तथाऽपरे ॥
नभस्यस्य चतुर्दश्यामुपाकर्म यथोदितम् ॥ ३४७ ॥
तद्विदः केचिदिच्छन्ति नभसः श्रवणेन तु ॥
हस्तेन वाथ पञ्चम्यामध्यायानां वदन्ति तत् ॥ ३४८ ॥
यच्छाखयोपनीतः स्यात् ब्रह्मचारी द्विजोत्तमः ॥
तच्छाखाविहितं तस्य उपाकर्मादि कीर्त्यते ॥ ३४९ ॥
अतो वेदाधिकारित्वं वेदपाठस्य कीर्तने ॥
अनुपाकृतविप्रादेर्वेदाध्ययनदुष्कृतम् ॥ ३५० ॥
मुञ्जोपवीताजिनदण्डकाष्ठं त्याज्यं न तत्स्याद्व्रतचारिणापि ॥
अक्लिष्टमेको व्रतलोपपापं संस्कारमन्यं पुनरर्हयेयुः ॥ ३५१ ॥
ओषधीनां तु सद्भावे स्वशाखाविहितं तु यत्[1] ॥
रोहिण्यां च सहस्यस्ये[2] उपाकर्माणि कुर्वते ॥ ३५२ ॥
न भवेदनुपाकर्मा ब्राह्मणः स्नातको व्रती ॥
कर्मच्युतो भवेद्व्रात्यो व्रात्यनिष्कृतिकृच्छुचिः ॥ ३५३ ॥
अथाऽतः स्यादनध्यायो मृतगुर्वादिषु त्र्यहम् ॥
मित्रकादिष्वहोरात्रमधीत्यारण्यकः[3] शुचिः ॥ ३५४ ॥
अष्टकासु तथाष्टम्यां पूर्णिमास्यां शशिक्षये ॥
मन्वादौ युगपक्षादावर्विद्रचापोच्छ्रयेषु च ॥ ३५५ ॥
चातुर्मास्ये द्वितीयायां चतुर्दश्यामहर्निशम् ॥
अहोरात्रे नृपे संस्थे व्रतिनि श्रोत्रिये यतौ ॥ ३५६ ॥
अत्र त्र्यहमनध्यायमिच्छन्ति चापरे द्व्यम् ॥
अशौचे सूतकान्ते च यावच्छुद्धिस्तयोर्भवेत् ॥ ३५७ ॥
देशान्तरगते प्रेते श्रुतेऽपि स्यादहर्निशम् ॥
गुर्वादौ वा नृपत्यादौ इति वासिष्ठजोऽब्रवीत् ॥ ३५८ ॥
प्रतिगृह्य त्वहोरात्रं भुक्त्वा श्राद्धिकमेव च ॥
तज्ज्ञा ब्रूयुरनध्यायानृतुसन्धावहर्निशम् ॥ ३५९ ॥
पश्वाद्यैरन्तरायातैरहोरात्रं विदुर्बुधाः ॥
अकालगर्जिते वृष्टावग्निदाहे च सप्त सा ॥ ३६० ॥

---

१. B. D. E. and F. read हितम् for तु यत्. २. B. reads रोहिण्यां वैव हस्तस्य. ३. A. reads निर्वातादिष्वहोरात्रं. for मित्रकादिष्वहोरात्रं.

सामेषु[1] दुःखितानां च स्वरादीनां च निःस्वने ॥
पतित-श्याव[2]-शूद्रा-ऽन्त्यसन्निधाने न कीर्तयेत् ॥ ३६१ ॥
आत्मन्यशुचि देशे तु विद्युत्स्तनितरोहिते ॥
मृधे च कलहे देशविप्लवे लोकविग्रहे ॥ ३६२ ॥
पांशुवर्षेऽम्बुमध्ये च दिग्दाह-ग्रामदाहयोः ॥
नीहारे च भवेद्विद्वान्सन्ध्ययोरुभयोरपि ॥ ३६३ ॥
धावंश्च न पठेद्विद्वान्पूतिगन्धस्तथैव च ॥
विशिष्टे चागते गेहे गात्रासृङ्निर्गमे तथा ॥ ३६४ ॥
भोजनायोपविष्टस्य ह्युत्थितस्यार्द्रपाणिनः[3] ॥
वान्तेऽऽचान्ते तथाऽजीर्णे महारात्रेऽतिमारुते ॥ ३६५ ॥
रजोवृष्टौ च यानादौ आरूढस्य तथा द्विजः ॥
एतानन्यांश्च तत्कालाननाध्यायान्विदुर्बुधाः ॥ ३६६ ॥
यो वर्जयेदनध्यायान्वेदाध्ययनकृद्द्विजः ॥ B
भवन्ति तस्य सफला वेदाः प्रोक्ताः फलप्रदाः ॥ ३६७ ॥
ये चैतेषु पठंत्यज्ञाः पाठलोभेन लोभिताः ॥
न शाश्वता भवेद्विद्या निष्फला चैव जायते ॥ ३६८ ॥
यः पठेद्विधिवद्वेदान् व्रती चेन्द्रियसंयमी ॥
ब्रम्हत्वमिह लोकेऽपि ऐश्वर्यसुखभाग्भवेत् ॥ ३६९ ॥
जनानां शृण्वतां मार्गे गच्छन्यस्तु पठेद्द्विजः ॥
निष्फलास्तस्य वेदाश्च वेदविप्लवदोषभाक् ॥ ३७० ॥
यः पठेत्स्वरहीनं तु लक्षणेन विवर्जितम् ॥
सङ्कीर्णग्राममध्ये तु स भवेद्वेदविप्लवी ॥ ३७१ ॥
ये स्वाध्यायमधीयीरन् अनध्यायेषु लोभतः ॥
वज्ररूपेण ते मन्त्रास्तेषां देहे व्यवस्थिताः ॥ ३७२ ॥
नाक्रामेदमरादीनां च्छायां च परयोषिताम् ॥
वान्त-ष्ठीवन-विण्मूत्र-कार्पासा-ऽस्थि-कपालिकाः ॥ ३७३ ॥
नावज्ञेयाः कदापि स्युर्नृप-विप्रोरगादयः ॥
श्रियं कामं समाकांक्षेन्न स्पृशेन्मर्म कस्यचित् ॥ ३७४ ॥

---

१. A. reads साम्नां for सामेषु; while E. reads स्वनेषु. २. A. reads °शाव° for °श्याव°. ३. A. reads आस्थितस्यार्धपाणिनः and E. reads उच्छिष्टस्यार्द्रपाणिनः.

नित्यं वर्तेत चाजस्रं धर्मार्थौ च सदाऽर्जयेत् ॥
न कश्चित्ताडयेद्धीमान्सुतं शिष्यं च ताडयेत् ॥
ताडयेन्नाभितोऽधस्तान्न तानन्यत्र ताडयेत् ॥ ३७५ ॥

आचारेण सदा विद्वान्वर्तेत यो जितेंद्रियः ॥
स ब्रम्हपरमाप्नोति वरेण्योऽमुत्र चेह च ॥ ३७६ ॥

आचारमूलं श्रुतिशास्त्रवित्तम्
आचारशाखाश्च तदुक्तकृत्यम् ॥
आचारपर्णानि हि तन्नियोग
आचारपुष्पाणि यशोधनानि ॥ ३७७ ॥

आचारवृक्षस्य फलं हि नाकस्तस्माच्च सुस्वादुरसश्च मुक्तिः ॥
तस्मादनन्तं फलदं तु तत्वमाचारमेवाश्रय यत्नपूर्वम् ॥ ३७८ ॥

ये धर्मशास्त्रे विहिताश्च केचिद्धर्मा द्विजाग्र्योरपि ते च सर्वे ॥
यत्नेन कार्याः पितृ-देवभक्तैः श्राद्धानि कार्याण्यथ तानि वक्ष्ये॥३७९॥

यत्नेन धर्मो गृहमेधिविप्रैः प्रीतेन वाचा वपुषा च कार्यः ॥
आयुःप्रजा श्रीर्भुवि पूजितत्वं तस्माल्लभन्ते दिवि देवभोगान्॥३८०॥

इति श्रीबृहत्पराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां
धर्मसंहितायां षष्ठोऽध्यायः समाप्तः ॥ ६ ॥

# बृहत्पराशरसंहिता ।

## सप्तमोऽध्यायः ।

श्राद्धं वृद्धावचन्द्रेभच्छाया-ग्रहण-सङ्क्रमे ॥
व्यतीपात-विषुवत्कृष्णपक्ष-पात्रार्थलब्धिषु ॥ १ ॥
अष्टका ह्ययने द्वे च श्राद्धम्प्रति यदा रुचिः ॥
पुण्यः श्राद्धस्य कालोऽयमृषिभिः परिकीर्तितः ॥ २ ॥
युगादिषु च कर्तव्यं मन्वन्तरादिकेऽपि च ॥
श्राद्धकालो ह्ययं प्रोक्तो मन्वाद्यैर्धर्मकर्तृभिः ॥ ३ ॥
नवान्ने नवतोये च नवच्छन्ने तथा गृहे ॥
नावेक्षवेषु चेहन्ते पितरो हि मघास्विव ॥ ४ ॥
काणः पौनर्भवो रोगी पिशुनो वृद्धिजीवकः
कृतघ्नो मत्सरी क्रूरो मित्रध्रुक् कुनखी गदी ॥ ५ ॥
विद्धप्रजननःश्वित्रि-श्यावदन्तावकीर्णिनः ॥
हीनाङ्गश्चातिरिक्ताङ्गो विक्लवः परनिन्दकः ॥ ६ ॥
क्लीबाऽभिशस्त-वाग्दुष्ट-भृतकाध्यापकास्तथा ॥
कन्यादूषी वणिग्वृत्तिर्विनाग्निः सोमविक्रयी ॥ ७ ॥
भार्याजितोऽनपत्यश्च कुण्डाशी कुण्डगोलकः ॥
पित्रादित्यागकृत्स्तेनो वृषलीपति-तर्जकौ ॥ ८ ॥
अनुक्तवृत्तिस्त्ववज्ञातः परपूर्वापतिस्तथा ॥
अजापालो माहिषिकः कर्मदुष्टाश्च निन्दिताः ॥ ९ ॥
यो ऽसत्प्रतिग्रहग्राही यश्च नित्यं प्रतिग्रही ॥
ग्रहसूचक-दूतौ च पितृश्राद्धेषु वर्जिताः ॥ १० ॥

---

१. F. reads द्युत्पात° for व्यतीपात°. २. A. reads °वक्तृभिः for °कर्तृभिः. ३. A. reads विप्लवः परिविन्दकः for विक्लवः परानिन्दकः. ४. A. reads °काध्यापिताः for °काध्यापकाः. ५. This whole verse is omitted in E. ६. A. reads °तत्ख्यातः for °स्त्ववज्ञातः.

एकादशाहे भुञ्जन्तः शूद्रान्नरससंयुताः ॥
गुरुतल्पगो ब्रम्हघ्नो यस्यचोपपतिर्गृहे ॥ ११ ॥
प्रेतस्पृक् तैलनिर्णक्तो बहुयाजक-याचकौ ॥
बक-काक-बिडाला-ऽश्व-शूद्रवृत्तिश्च गर्हितः ॥१२॥
वाग्दुष्ट-बालदमकौ नित्यमप्रियवाक् च यः ॥
आसक्तो द्यूतकामादावतिवाक् चैव दूषितः ॥ १३ ॥
निराचाराश्च ये विप्राः पितृ-मातृविवर्जिताः ॥
विद्वांसोऽपि हि नाभ्यर्च्याः पितृश्राद्धेषु सत्तमैः ॥ १४ ॥
न वेदैः केवलैर्वापि तपसा केवलेन वा ॥
सद्वृत्तैरेव सा प्रोक्ता पात्रता ब्राह्मणस्य च ॥ १५ ॥
यत्र वेदास्तपो यत्र यत्र वृत्तं द्विजाग्रगे ॥
पितृश्राद्धेषु तं यत्नाद्विद्वान्विप्रं समर्चयेत् ॥ १६ ॥
वेदशास्त्रार्थविच्छान्तः शुचिर्धर्ममनाः सदा ॥
गायत्रीब्रम्हचिन्ताकृत्पितृश्राद्धेषु पावनः ॥ १७ ॥
रथन्तरं बृहज्ज्येष्ठसामवित्त्रिसुपर्णकः ॥
त्रिमधुश्चापि यो विप्रः पितृश्राद्धेषु पूजितः ॥ १८ ॥
मातामहश्च दौहित्रो भागिनेयोऽथ मातुलः ॥
मातृस्वस्रेयतज्जश्च तथा मातुलजोऽपि वा ॥१९ ॥
जामाता श्वशुरो बन्धुर्भार्याभ्राता च तत्सुतः ॥
सुवृत्ताश्च सदाचाराश्चैते श्राद्धेषु पावनाः ॥ २० ॥
ऋत्विग्गुरुरुपाध्याय आचार्यः श्रोत्रियोऽपरः ॥
एते श्राद्धेषु वै पूज्याः ज्ञाति-सम्बन्धि-बान्धवाः ॥ २१ ॥
अग्निहोत्री च यो विप्र आवसथ्याग्निकोऽपि च ॥
पितृ-मातृपरावेतौ भोक्तव्यौ हव्य-कव्ययोः ॥ २२ ॥
कृष्येकवृत्तिजीवी यो भक्तो मात्रादिकेषु च ॥
षट्कर्मनिरतः पूज्यो हव्य-कव्ये सदैव हि ॥ २३ ॥
क्षत्रवृत्तिः सदाचारो मात्रादिभक्तितत्परः ॥
शुचिः षट्कर्मयुक्तश्च हव्य-कव्येषु पूजितः ॥ २४ ॥

---

१. This verse is omitted in A. B. D. and E. २. A. reads °निर्मोक्ता for °निर्णक्ता. ३. B. and E. both read °बालदुष्टकौ for °बालदमकौ ४. B. C. D. E. read द्विजाग्रते for द्विजाग्रजे. ५. A. reads °श्रेष्ठ° for °ज्येष्ठ°. ६. A. reads तृप्तिदः. ७. This verse is omitted in D.

युगानुरूपतो यस्तु विद्याचारादिसंयुतः ॥
स पूज्योऽनभिशस्तश्च षट्कर्मनिरतो द्विजः ॥ २५ ॥
इत्युक्तगुणसम्पन्नान्ब्राह्मणान्पूर्ववासरे ॥
निमन्त्रयेत तान् भक्त्या नियोगाख्यानपूर्वकम् ॥ २६ ॥
सव्येन देवतार्थं तु पित्रर्थमपसव्यवान् ॥
ततस्तैश्चरितव्यं स्यादुक्तं पितृव्रतं द्विजैः ॥ २७ ॥
जितेन्द्रियैस्तु भाव्यं स्यादहोरात्रमतन्द्रितैः ॥
तस्मिन्नहनि प्रातर्वा यत्र श्राद्धमुपास्थितम् ॥ २८ ॥
निमन्त्रयेत तान्भक्त्या तैश्च भाव्यं जितेन्द्रियैः ॥
विप्रोरः-पार्श्व-पृष्ठस्थाः पितृ-मातामहादयः ॥ २९ ॥
भुञ्जन्ति क्रमशः श्राद्धे तथा पिण्डाशिनोऽपि च ॥
निमन्त्रितो द्विजः श्राद्धे न शयीत स्त्रियासह ॥ ३० ॥
अध्वानं न तु वै यायान्न ब्रूयादनृतं वचः ॥
नाधीयीत दिवा स्वापं न कुर्वीत न संवदेत् ॥ ३१ ॥
न म्लेच्छ-पतितैः सार्धं न वदेच्च निषिद्धकम् ॥
प्राङ्मुखौ दैविकौ विप्रौ विप्रास्त्रय उदङ्मुखाः ॥ ३२ ॥
एकैको वोभयत्र स्यादसम्पत्ताविति क्रमः ॥
पात्रं वा दैविकं कृत्वा विप्र एकस्तु पैतृके ॥ ३३ ॥
इति वा निर्वपेच्छ्राद्धं निर्धनश्चान्यदाचरेत् ॥
गत्वारण्यममानुष्यमूर्ध्वबाहुर्विरौत्यदः ॥ ३४ ॥
निरन्नो निर्धनो देवाः पितरो माऽनृणं कुथाः ॥

न मेऽस्ति वित्तं न गृहं न भार्या
श्राद्धं कथं वः पितरः करोमि ॥
वने प्रविश्येह रुतं मयोच्चैर्
भुजौ कृतौ वर्त्मनि मारुतस्य ॥ ३५ ॥
श्राद्धर्णमेतद्भवतां प्रदत्तं
मह्यं दयध्वं पितृदेवताद्याः ॥
अख्याय चोत्क्षिप्य भुजावितस्ततो
दिवा च रात्रिं समुपोष्य तिष्ठेत् ॥ ३६ ॥

---

१. In B. and E. this is omitted. २. A. B. D. E. read °गस्थान° for °गाख्यान°. ३. C. reads °उरु° for °उरः°. ४. B. E. read भुंजते for भुंजंति. ५ A. reads वेद° for म्लेच्छ°. ६. C. and F. read भुजावृते for भुजौ कृतौ.

भवेन्नरस्तेन कृतेन[1] तेषा-
मृणेन मुक्तः पितृदेवतानाम् ॥
निर्विंत्त-निर्भाग्य-निराश्रयाणां[2]
श्राद्धस्य मार्गः कथितो मुनीन्द्रैः ॥ ३६ ॥
मयाऽऽख्यातं रुदित्वा वः पितरः श्राद्धदेवताः ॥
श्राद्धर्णस्य विमुक्तोऽहं महिताः पितरो मया ॥ ३७ ॥
कृतोपवासस्तत्राह्नि[3] श्राद्धर्णान्मुच्यते[4] द्विजः ॥
एतच्चापि न यः कुर्यात्पितरस्तेन वै हताः ॥ ३८ ॥
सम्पत्तावर्थ[5]-पात्राणामेकैकस्य त्रयस्त्रयः ॥
पित्रादेर्ब्राम्हणाः प्रोक्ताश्चत्वारो वैश्वदेविके[6] ॥ ३९ ॥
द्वौ वापि दैविके विप्रौ[7] चैकैको वा न दोषभाक् ॥
स्यान्मातामहिके[8]ऽप्येवमेकोऽपि वैश्वदेविके ॥ ४० ॥
नत्वेवैकं तु सर्वेषामाश्वलायन[9]मतस्थितः ॥
पितॄणामर्चयेद्विप्रमत्रापिण्डा निदर्शनम् ॥ ४२ ॥
न मातामहिकं श्राद्धं श्रौतमुक्तं तु साग्निकैः ॥
अनग्निकस्तु तत्कुर्यादिति केचिन्मतं विदुः ॥ ४३ ॥
साग्निकैरपि कार्यं स्याच्छ्राद्धं मातामहं द्विजैः ॥
षट्दैवत्यमिति ह्येके एके तु पार्वणद्वयम् ॥ ४४ ॥
अपुत्रस्य पितृव्यस्य तत्पुत्रैर्भ्रातृजो भवेत् ॥
स एव तस्य कुर्वीत पिण्डदानोदकक्रियाः ॥ ४५ ॥
पार्वणं तेन कार्यं स्यात्पुत्रवद्भ्रातृजेन तु ॥
पितृस्थानेषु तं कृत्वा शेषं पूर्ववदुच्चरेत् ॥ ४६ ॥
श्राद्धं पत्यापि कार्यं स्यादपुत्रायास्तु योषितः ॥
तस्यापि हि तया कार्यमेकत्वं हि तयोर्यतः ॥ ४७ ॥
भ्रातुर्ज्येष्ठस्य कुर्वीत ज्येष्ठो भ्राताऽनुजस्य च ॥
दैवहीनं तु तत्कुर्यादिति धर्मविदो विदुः ॥ ४८ ॥

---

१. D. reads रुतेन for कृतेन. २. A. B. D. E. read °निर्वृत्ति° °निर्भार्य° for °निर्वित्त-निर्भाग्य°. ३. A. C. D. read स तस्मात् for तत्राह्नि. ४. A. C. D. read विप्रमुच्यते for मुच्यते द्विजः. ५. C. reads अथ for अर्थ°. ६. B. reads वैश्वदेविकाः for वैश्वदेविके. ७. B. substitutes प्रोक्तौ for विप्रौ. ८. only D. reads मातामहानाम् for मातामहिके. ९. B. and E. read आप्यायन° for आश्वलायन.°

पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया ॥
पुत्राभावे तु पुत्री च तदभावे सहोदरः ॥ ४९ ॥
मित्रादीनां च कर्तव्यं समीहन्ते यतोऽप्यमी ॥
नावज्ञेयास्तु ते सर्वे कृते तु स्यान्महाफलम् ॥ ५० ॥
पितामहस्तदन्यो वा यस्य जीवन् भवेद्विजः ।
प्रत्यक्षास्तेऽपि वै पूज्याः संस्थित्यर्थं यतश्च तत् ॥ ५१ ॥
विद्यमानत्रयाणां स्यात्प्रत्यक्षः पूज्य एव सः ॥
गौतमस्य मतं त्वेतदिति वासिष्ठजोऽब्रवीत् ॥ ५२ ॥
विद्यमाने तु पितरि श्राद्धं कर्तुमुपस्थितः ॥
पितृवत्पितृपित्रादेः कुर्याच्छ्राद्धमसंशयम् ॥ ५३ ॥
पुत्रिकायाः सुतः श्राद्धं निर्वपेन्मातुरेव सः ॥
तत्पितुर्निर्वपत्यस्मात्तृतीयं तु पितुःपितुः ॥ ५४ ॥
अत एव द्विजः पुत्रीमूद्वहेन्न कथं च न ॥
उद्वोढुः पुत्रः पुत्रोऽसौ पुत्रोऽसौ मातुरेव हि ॥ ५५ ॥
पुत्रश्च दुहितुःपुत्रः समौ तौ धार्मिके पथि ॥
अर्थाहृतौ च विप्रोक्तौ तुल्यौ तौ शक्तिजोऽब्रवीत् ॥ ५६ ॥
मुख्यं यथा पितुःश्राद्धं तथा मातामहस्य च ॥
पुत्र-दौहित्रयोर्लोके विशेषो नोपपद्यते ॥ ५७ ॥
दौहित्रः पौवनः श्राद्धे कालस्तु कुतपस्तथा ॥
तथा कृष्णास्तिला विद्धान्निति शास्त्रविदो विदुः ॥ ५८ ॥
काम्यमाभ्युदयं चैव द्विविधं पार्वणं स्मृतम् ॥
यथाकामं तु काम्यं स्याद्वृद्धावभ्युदये स्मृतम् ॥ ५९ ॥
क्षत्रियायां तु यो जातो वैश्यायां च तथा सुतः ॥
ब्राह्मणस्य पितुस्तौ तु निर्वपेतां द्विजाग्र्यवत् ॥
क्षत्रियस्य सुतश्चैव तथा वैश्यसुतोऽपि च ॥
शृतान्नेन द्विजांस्तर्प्य श्राद्धद्वयं च निर्वपेत् ॥ ६० ॥
आमान्नेन तु शूद्रस्य तूष्णीं च द्विजपूजनम् ॥
कृत्वा श्राद्धं तु निर्वाप्य सजातीनाशयेत्तथा ॥ ६१ ॥

---

१. B. and E. read अथोभौ तावपि प्रोक्तौ for अर्थाहृतौ च विप्रोक्तौ.
२. C. reads पार्वणश्राद्धे for पावनः श्राद्धे.

यः शूद्रो भोजयेद्विप्रांच्छूतपाकाशनेन तु ॥
स तद्विप्रकृतैनोभिर्लिप्यते शक्तिजोऽब्रवीत् ॥ ६२ ॥

शूद्रपाकं द्विजेभ्यश्च विभवान्धो ददाति यः ॥
कृमी भवति पाताले स युगानेकविंशतिम् ॥ ६३ ॥
भोजितेन तु विप्रेण यत्पापं तस्य जायते ॥
तेनासौ लिप्यते मूढो यः शूद्रो भोजयेद्विजान् ॥ ६४ ॥
योऽहंमन्यो द्विजाग्र्यांस्तु शूद्रश्रितेन भोजयेत् ॥
स गच्छेन्नरकं घोरं पुनरावृत्तिदुर्लभम् ॥ ६५ ॥
यत्किंचित्किल्बिषं विप्रे कृतपूर्वं तु तिष्ठति ॥
तेनासौ लिप्यते पापी यः शूद्रो भोजयेद्विजान् ॥ ६६ ॥
शूद्रोच्छिष्टं[1] तु यो भुङ्क्ते मतिपूर्वं[2] द्विजाधमः ॥
कृमित्वं याति विष्ठायां युगानि ह्येकविंशतिः ॥ ६७ ॥
शूद्रोच्छिष्टं तु यो भुङ्क्ते पञ्चाहानि द्विजाधमः[3] ॥
स तद्विष्ठाकृमित्वं तु प्राप्नोति हि शतं समाः ॥ ६८ ॥
अतो न भोजयेद्विप्रान्निर्वपेन्नैव पूजयेत् ॥
शूद्रान्नं[4] भोजनाद्युक्तं इति पाराशरोऽब्रवीत् ॥ ६९ ॥
न भोजयेत् स्त्रियं श्राद्धे यद्यपि व्रतचारिणीम् ॥
पात्रं[5] तस्यै समर्प्यं स्यादिति धर्मविदब्रवीत् ॥
द्विजन्मानो न कुर्वीरंच्छ्राद्धमामाशनेन तु ॥ ७० ॥
यदैव स्युः प्रवासस्था भार्या यत्र न सन्निधौ ॥
व्यवधानेन भार्याया ग्रहणे पुत्रजन्मनि ॥
कुर्यादामाशनश्राद्धमिति पाराशरोऽब्रवीत् ॥ ७१ ॥
अग्नौकरणपिण्डांश्च कुर्यादामाशनेन तु ॥
सतिलैर्दधिमध्वाज्यसम्पृक्तैः सक्तुशैरपि[6] ॥ ७२ ॥
यवाद्यं संस्कृतान्नेन द्रव्यं[7] वापि च निर्वपेत् ॥
जलेन पयसा वापि न स्याच्छ्राद्धकृद्यथा ॥ ७३ ॥

---

१. B. reads शूद्रान्नं यो द्विजो भुङ्क्ते for शूद्रोच्छिष्टं तु यो भुङ्क्ते. २. A. and D. read मन्ये विप्रोऽधमः स तु. ३. B. E. and F. read द्विजोत्तमः for द्विजाधमः. ४. A. B. D. and E. read अशनं for शूद्रान्नं. ५. पात्रं is omitted in B. C. and E. ६. A. reads सक्तुकैः for सक्तुशैः. ७. A. D. read हेम्ना for द्रव्यं.

आमान्नेन द्विजैः कार्यं न कदाचिदपि द्विजाः ॥
श्रपयित्वा द्विजैाकस्तु तथापि पाकमाश्रयेत् ॥ ७४ ॥
न कुर्यात्परपाकेन नैकपाकेन तु द्वयम् ॥
नैकश्राद्धे द्वयं कुर्यान्न च कुर्यात्परान्नभुक् ॥ ७५ ॥
पित्रादीनां सगोत्रा ये तथा मातामहस्य च ॥
तेषामेकेन पाकेन कार्यं पिण्डविवर्जितम् ॥
केचित्सापिण्ड्यमिच्छन्ति समगोत्रतयाऽनघ ॥
अपि मातामहो न स्याद्भिन्नगोत्रतया तथा ॥ ७७ ॥
पृथक्कर्तुमशक्यं स्यादर्थ-पात्राद्यसम्भवे ॥
अवश्यं तत्र कर्तव्यमेकदैवमतः श्रयेत् ॥ ७८ ॥
येषां नोद्वाहसंस्कारा ह्यन्यसंस्कारसंस्कृताः ॥
साङ्कल्पिकं भवेत्तेषां श्राद्धं कार्यं मृतेऽहनि ॥ ७९ ॥
केचित्सापिण्ड्यमिच्छन्ति ब्रह्मसंस्कारवत्तया ॥
आद्यो हि ब्रह्मसंस्कारस्तस्मात्पिण्डः प्रदीयते ॥ ८० ॥
पर्वस्वपि निमित्तेषु कर्तव्यं पिण्डसंयुतम् ॥
पितॄणां त्रिविधा यस्माद्गतिः प्रोक्ता मुनीश्वरैः ॥ ८१ ॥
वैश्वदेवः सदा कार्यो श्राद्धे च समुपस्थिते ॥
पाकशुद्ध्यर्थमेवैतत्पूर्वमेव विधीयते ॥ ८२ ॥
वैश्वदेवोग्रतश्चैव श्राद्धकाले विशेषतः ॥
पाकशुद्धिस्तु विज्ञेया भुक्तोच्छिष्टं तु वर्जयेत् ॥ ८३ ॥
सम्प्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च ॥
अग्रतो वैश्वदेवः स्यात् पश्चादेकादशेऽहनि ॥ ८३ ॥
एकोद्दिष्टे विशेषेण प्रागेव ह्यग्निपूजनम् ॥
कालस्तु कुतपस्तस्य रौहणः पार्वणस्य च ॥ ८४ ॥
वामतश्चासनं दद्यात्पितृकार्येषु सत्तमः ॥
दैविकं दक्षिणं तद्वदिति पाराशरोऽब्रवीत् ॥ ८५ ॥

---

१. B. E. read कार्यं पिण्डविवर्जितम् for नैकपाकेन तु द्वयम्. २. These preceding 141½ lines are omitted in F. ३. B. D. E. F. read सपिण्डम् for सापिण्ड्यम्. ४. A. reads येन for ह्यन्य.° ५. F. reads सर्वेष्वपि for पर्वस्वपि. ६. D. and E. read रोहिणः for रौहणः; A. also reads as D. and E. too. ७. This verse is omited in B. and E.

आसने चासनं दद्याद्वामे वा दक्षिणेऽपि वा ॥
पितृकार्येषु वामं तु दैवे कर्मणि दक्षिणम् ॥ ८६ ॥
पितृश्राद्धेषु यो दद्याद्दक्षिणं दर्भमासनम् ॥
नाश्नन्ति पितरस्तस्य सार्धानि वत्सराणि षट् ॥ ८७ ॥
तस्माद्वामत एवात्र पितृकर्मणि चासनम् ॥
दैविके दक्षिणं तद्वदिति वासिष्ठजोऽब्रवीत् ॥ ८८ ॥
कुत्र काले च कर्तव्यं श्राद्धं तत्पैतृकं प्रभो? ॥
वदस्व निश्चयं तत्र विवदन्त्यपरेऽत्र तु ॥ ८९ ॥
पञ्चदशमुहूर्ताहस्तत्प्रागर्धदिनं स्मृतम् ॥
अपरार्धं स्मृता रात्रिस्तन्मध्यः कुतपो मतः ॥ ९० ॥
यथा यथा च ह्रस्वत्वं पुसः स्थानेन सम्भवेत् ॥
तथा तथा पवित्रः स्यात्कालः श्राद्धार्चनादिषु ॥ ९१ ॥
छायेयं पुरुषस्यैवं तत्पादाधो भवेद्यथा ॥
आधानश्राद्धदानादेः स कालोऽक्षयकृत्स्मृतः ॥ ९२ ॥
अयुतं तु मुहूर्तानामर्धं ह्यष्टदशाधिकम् ॥
त्रिंशद्भिस्तैरहोरात्रमिति माध्यन्दिनी श्रुतिः ॥ ९३ ॥
मध्याह्ने तु गते सूर्ये न पूर्वे न च पश्चिमे ॥
तुल्याग्रसंस्थिते चैव सोऽष्टमो भाग उच्यते ॥ ९४ ॥
दिवसस्याष्टमे भागे मन्दो भवति भास्करः ॥
स कालः कुतपो ज्ञेयस्तत्र दत्तं तु चाक्षयम् ॥ ९५ ॥
मध्याह्नचलितो भानुः किञ्चिन्मन्दगतिर्भवेत् ॥
स कालो रोहिणो नाम पितॄणां दत्तमक्षयम् ॥ ९६ ॥
तस्मात्सर्वप्रयत्नेन रोहिणं तु न लङ्घयेत् ॥
अकाले विधिना दत्तं न देव-पितृगामि तत् ॥ ९७ ॥
अब्दवृद्धिर्भवेद्यत्र तत्राऽऽब्दमुभयात्मकम् ॥
श्राद्धं तत्र च कुर्वीत मासयोरुभयोरपि ॥ ९८ ॥

---

१. दर्श वर्षाणि पंच वा is the extra reading in A. २. B. and E. read दैवपैतृकम् for पैतृकं प्रभो. ३. A. reads वेदस्य for वदस्व; while B. and E. read the whole line—

वेदस्य निश्चयं तत्र क्व च दत्ताक्षयं भवेत् ।.

४. A. reads अब्दस्याष्टदशात्मिकम् for अर्धं ह्यष्टदशाधिकम् and B. reads वर्णाष्टशतसंयुतम्. ५. A. B. D. and F. read तुलाग्र° for तुल्याग्र.° ६. This whole verse is omitted in A. B. C. D. and E.

नवन्ध्यं दिवसं कुर्यान्मासयोरुभयोरपि ॥
पिण्डवर्जमसङ्क्रान्ते सङ्क्रान्ते पिण्डसंयुतः ॥
षष्ठिभिर्दिवसैर्मासस्त्रिंशद्भिः पक्ष उच्यते ॥ ९९ ॥
सङ्क्रान्तिरहितः पक्षस्तत्र कार्यं विपिण्डकम् ॥
सिनीवाली मतिक्रम्य यदा सङ्क्रमते रविः ॥
युक्तःसाधारणैर्मासैः स काल उत्तरो भवेत् ॥ १०० ॥
सङ्क्रान्तिवर्जितः कालः स मलः¹ पापसम्भवः ॥
रक्षसां भागधेयोऽसौ उत्सवादिविवर्जितः ॥ १०१ ॥
तत्र नैमित्तिकं कार्यं श्राद्धं पिण्डविवर्जितम् ॥
नित्यं तु सततं कार्यमिति पाराशरोऽब्रवीत् ॥ १०२ ॥
अहोभिर्गुणितैर्यत्स्यात्तत्कार्यं यत्र सर्वदा ॥
तिथि-नक्षत्र-योगाश्च जातकर्मादिकाश्च ये ॥ १०३ ॥
नैमित्तिकाश्च ये चान्ये कार्यास्तेऽपि मलिम्लुचे ॥
तीर्थस्नानं गजच्छायां द्विमुखीं गोप्रदानवत् ॥ १०४ ॥
मलिम्लुचेऽपि कर्तव्यं सपिण्डीकरणादिकम् ॥
आग्रयणममावास्यामष्टकाग्रहसङ्क्रमम् ॥ १०५ ॥
अधिमासेऽपि कार्यं स्यादिति पाराशरोऽब्रवीत् ॥
नित्यं च नित्यशः कार्यमिष्टीः काम्याश्च वर्जयेत् ॥ १०६ ॥
वार्षिकं पिण्डवर्जं स्यादन्यस्मिन्पिण्डसंयुतम् ॥
इष्टिराग्रयणं श्राद्धमन्वाहार्यं च सर्वदा ॥ १०७ ॥
कर्तव्यं सततं विप्रैरिष्टीःकाम्याश्च वर्जयेत् ॥
दैवे कर्मणि सम्प्राप्ते तिथिर्यत्रोदितो रविः ॥
सा तिथिः सकला ज्ञेया विपरीता तु पैतृके ॥ १०८ ॥
वृद्धिमद्दिवसे कार्यं श्राद्धमाभ्युदिकं द्विजैः ॥
क्षीयमाणे दिने कार्यं श्राद्धं विद्वन्! क्षयाह्निकम् ॥ १०९ ॥
मित्रे चैव सगोत्रे च पितृ-मातृसहोदरे ॥
आसनं नैव दातव्यं भोक्तव्या एवमेव ते ॥ ११० ॥
ब्राह्मणं न सगोत्रं च पूजयेत्पितृकर्माणि ॥
नोपतिष्ठति तत्तेषां किन्तु स्याच्च निराशता ॥ १११ ॥

---

१. E. and F. read स कालः for स मलः. २. A. B. C. D. read गणितैः for गुणितैः. ३. only C. reads इष्टकामांश्च.

स्वगोत्रं भोजयेद्यस्तु पितृश्राद्धेषु वै द्विजः ॥
हताः स्युः पितरस्तेन न भुक्तमुपतिष्ठते ॥ ११२ ॥
श्राद्धं कुर्वन्द्विजोऽज्ञानात् स्वगोत्रं यस्तु भोजयेत् ॥
स लुप्तपितृदेवस्सन्नरकं प्रतिपद्यते ॥ ११३ ॥
तस्मान्न गोत्रिणं विप्रं भोजयेद्विधिपूर्वकम् ॥
ज्ञातिमत्वेन भोज्यास्ते उत्थितैस्तु द्विजोत्तमैः ॥ ११४ ॥
दक्षिणाप्रवणे देशे श्राद्धं कुर्यात्तु पैतृकम् ॥
पितॄणां पावनो[2] देशः स प्रोक्तोऽक्षयतृप्तिकृत् ॥ ११५ ॥
देशे काले च पात्रे च विधिना हविषा च यत् ॥
तिलैर्दर्भैश्च मन्त्रैश्च श्राद्धं स्याच्छ्रद्धयान्वितम् ॥ ११६ ॥
तैजसानि तु पात्राणि ह्यर्घ्यार्थं भोजनाय च ॥
मृत्पाषाणमयान्येके अपराण्यपरे विदुः ॥ ११७ ॥
पलाश-पद्म-पत्राणि अनिषिद्धानि यानि च ॥
तानि श्राद्धेषु कार्याणि पितृ-देवहितानि[3] च ॥ ११८ ॥
वृद्धिश्राद्धेषु मन्यन्ते मृणमयानि तु केचन ॥
शौनकस्य मतं ह्येतद्यथा कार्यं तु मृण्मयम् ॥ ११९ ॥
एकद्रव्याणि कार्याणि पात्राणि [4]भोजनार्घयोः ॥
त्रीणि पैतृकपात्राणि द्वे दैवे वैश्वदेविके ॥ १२० ॥
एकस्य वैश्वदेवानि पैतृकाण्येकवस्तुनः ॥
इति वा तानि कार्याणि भेदमेकत्र वर्जयेत् ॥ १२१ ॥
वटा-ऽश्वत्था-ऽर्कपत्रेषु कुम्भी-तिन्दुकयोरपि ॥
कोविदार-करञ्जेषु न भुञ्जीत कदाच न ॥
सुरभी-नागकर्णाद्यैः [6]करवीर-करञ्जकैः ॥
बिल्वैर्यस्त्वर्चयेद्विद्वान् पितॄन् श्राद्धेष्वगर्हितैः ॥
तद्भुञ्जन्तेऽसुराः श्राद्धं निराशैः पितृभिर्गतैः ॥ १२४ ॥
सर्वाणि रक्तपुष्पाणि निषिद्धाण्यपराणि च ॥
वर्जयेत् पितृकार्येषु केतकीकुसुमानि च ॥ १२५ ॥

---

१. B. and F. read स ज्ञातिमध्ये भोज्यस्तु for ज्ञातिमत्वेन भोज्यास्ते.
२. only B. reads वाचनो for पावनः ३. B. and C. read पात्राणि भोजनार्घयोः for पितृ-देवहितानि च. ४. B. reads भोजनार्घार्चनेष्वपि for पात्राणि भोजनार्घयोः. ५. D. reads भेदमेकत्र वर्जयेत् for द्वे दैवे वैश्वदेविके.
६. B. reads हयारिकांचनारिकैः and D. reads करवीरैश्च नारकैः.

गो-रम्भा-भृङ्गराजाद्यैर्मल्लिकाकुब्जकैरपि ॥
समर्चयेद्द्विजान् श्राद्धे हव्य-कव्यादितैर्द्विजः ॥
न दद्याद्गुग्गुलं श्राद्धे द्विजानां पितृदैवते ॥
धूपाभावे गुडो देयो घृतदीपं द्विजोत्तमाः ॥ १२७ ॥
कुङ्कुमाद्यं चन्दनं च देयं गन्धविमिश्रितम् ॥
ऊर्ध्वं च तिलकं कुर्याद्दैवे पित्र्ये च कर्मणि ॥ १२८ ॥
निराशाः पितरो यान्ति यस्तु कुर्यात्त्रिपुण्ड्रकम् ॥
पवित्रं यदि वा दर्भं करे कृत्वा द्विजान्नरः ॥ १२९ ॥
समालभेद्द्विजानज्ञस्तच्छ्राद्धमासुरं भवेत् ॥
गन्धाश्च विविधा देयाः कर्पूरागरुमिश्रिताः ॥ १३० ॥
शक्त्या वस्त्राणि देयानि तदभावे च निष्क्रयम् ॥
दीपश्च सर्पिषा देयस्तिलतैलेन वा पुनः ॥ १३१ ॥
नकाष्ठतैलैरन्यैस्तु कदाचित् सार्षपाऽऽतसैः ॥ १३२ ॥
देशधर्मं समाश्रित्य वंशधर्मं तथापरे ॥
सूरयः श्राद्धमिच्छन्ति पार्वणं च क्षयाह्न्यपि ॥ १३२ ॥
स्त्रीणामपि पृथक् श्राद्धं ते मन्यन्ते स्वधर्मतः ॥
मातामहस्य गोत्रेण मातुस्तेन सपिण्डताम् ॥ १३३ ॥
मातामह्या सहेच्छन्ति मातुस्तेऽपि सपिण्डताम् ॥
स्त्रीणां स्त्रीगोत्रसम्बन्धात्पुंगोत्रेण नृणां यतः ॥ १३४ ॥
सपिण्डीकरणे काले श्राद्धद्वयमुपस्थितम् ॥
देवाद्यं प्रथमं कुर्यात्पितॄणां तदनन्तरम् ॥ १३५ ॥
देवाद्यं पार्वणं प्रोक्तं प्रेतश्राद्धमथापरम् ॥
एकत्वं तु ततः पश्चात्कृत्वा विप्रांश्च भोजयेत् ॥ १३६ ॥
पितॄणामर्घ्यपात्राणि प्रेतपात्रमथापरम् ॥
प्रेतपात्रं तु तत्कृत्वा पितृपात्रेषु योजयेत् ॥
ये समाना इति द्वाभ्यां पूर्ववच्छेषमाचरेत् ॥
सपिण्डीकरणं यस्य कृतं न स्याद्द्विजन्मनः ॥ १३७ ॥
अदैवं तस्य देयं स्यात्पिण्डमेकं तु निर्वपेत् ॥
सपिण्डीकरणं चैतत्स्त्रियाश्चैव क्षयाह्निकम् ॥ १३८ ॥

---

१. B. E. and F. read तु कर्तव्यं for गुडो देयो. २. B. E. and F. read त दुर्बुद्धिः for द्विजानज्ञः. ३. A. reads त्रिसर्जयेत् for च भोजयेत्.

एकादशाहिकं त्वाद्यं मासि मासि च मासिकम् ॥
वर्षे वर्षे च कर्तव्यं मृतेऽहनि च तत्पुनः ॥ १३९ ॥
नाऽपुत्रस्य सपिण्डत्वं केचिदिच्छन्ति तद्विदः ॥
विशेषतोऽनपत्यस्य सत्यप्यत्राधिकारिणि ॥ १४० ॥
विद्यमानः पिता यस्य सचेद्यदि विपद्यते ॥
तदन्तरा सपिण्डत्वं वदन्ति श्राद्धवादिनः ॥ १४१ ॥
आभ्युदयिकसम्पत्तावर्चां प्रागेव कारयेत् ॥
कुर्यात्परिजनेनैतत्स्वयं वापि द्विजोत्तमः ॥ १४२ ॥
सन्यसन्सर्वकर्माणि तच्छ्राद्धाय च तद्दिनम् ॥
अग्निदाहदिनं चैके केचिन्मृतदिनं विदुः ॥ १४३ ॥
विदेशस्थे श्रुताहस्तु कृष्णा वा द्वादशी सिता ॥
संग्रामे संस्थितानां च प्रेतपक्षे शशिक्षये ॥ १४४ ॥
अग्नि-सर्पादिमृत्यूनां षण्मासोपरि सत्क्रिया ॥
तेषां पार्वणमेवोक्तं क्षयाहेऽपि च सत्तमैः ॥ १४५ ॥
चन्द्रक्षया-ऽनाशक-संयुगेषु यः प्रेतपक्षे मृतवान् सपिण्डः ॥
सपिण्डनानन्तरमाब्दिकानि भवन्ति तेषामिह पार्वणानि ॥ १४६ ॥
अग्नि-सर्पादिमृत्यूनां षण्मासोपरि सत्क्रियाः ॥ A.
क्षयाह्निकानि कार्याणि ब्रूयुर्धर्मविदो जनाः ॥ १४७ ॥
अब्दादूर्ध्वं चरन्त्येके कृत्वा च वैष्णवं बलिम् ॥
विष्णवर्चनं विना नार्वाग्प्रदत्तमुपतिष्ठति ॥ १४८ ॥
विद्युता वृक्षपातेन सर्पेण महिषेण वा ॥
इत्यादिकेन मृत्युः स्यात्तिथौ यत्र च तत्र वै ॥ १४९ ॥
तन्निमित्तस्य तृप्त्यर्थं मासि मासि क्षयाह्निकम् ॥
कर्तव्यमवधौ यावत्ततः कुर्वीत सत्क्रियाम् ॥ १५० ॥
अनाशकमृतानां च क्षयाहेऽपि च पार्वणम् ॥
सन्यासवद्धि मन्यन्ते केचिद्विदुरदैविकम् ॥ १५१ ॥

---

१. D. reads केचिदिच्छन्ति वा विदः for वदन्ति श्राद्धवादिनः. २. A. B. D. E. and F. read °वर्गेव तु कारयेत् for °वर्चां प्रागेव कारयेत्. ३. A. B. D. E. and F. read परिन्नजन् for परिजनेन. ४. A. reads कृष्णा वा सितद्वादशी for कृष्णा वा द्वादशी सिता. ५. E. reads सत्कृतिः for सत्तमैः ६ C. reads आब्दिकानां for आब्दिकानि. ७. B. E. and F. read कृष्णार्चनं for विष्णवर्चनं. ८. B. and E. read अवैदिकम् for अदैविकम्.

एकोद्दिष्टमदैवं स्यात्तथैकार्घ्यपवित्रकम् ॥
आवाहना-ऽग्नौकरणहीनं तदपसव्यवत् ॥ १५२ ॥
पूर्वोत्तरप्लवे देशे श्राद्धं स्यान्मातृपूर्वकम् ॥
सित-पीतादिपिष्टेन चर्चिते भूतले च तत् ॥ १५३ ॥
उद्दिष्टक्रतु¹कालस्य तत्प्रागेव विधीयते ॥
आभ्युदयिकदैवानि पूर्वाह्णे स्युरिति स्मृतिः ॥ १५४ ॥
तिलाक्षतोदकैर्युक्तान्यासनानि प्रदक्षिणात् ॥
परिहृत्यादि पृष्ठेन कृत्वा च शान्तिपूर्वकम् ॥ १५५ ॥
व्रीहयो यव-गोधूमा अक्षताश्चाहताः स्मृताः ॥
अक्षतामलकैः पिण्डान्दधि-कर्कन्धुमिश्रितैः ॥ १५६ ॥
नान्दीमुखेभ्यो देवेभ्यः प्रदक्षिणकुशासनम् ॥
पितृभ्यस्तन्मुखेभ्यश्च प्रदक्षिणमिति स्मृतिः ॥ १५७ ॥
कर्कन्धुभिर्यवैः पुष्पैः²शमीपत्रैस्तिलैस्तथा ॥
तेभ्यो ह्यर्घ्यः प्रदातव्यः पितृभ्यो दैवतैस्सह ॥ १५८ ॥
मातामहानामप्येवं षट्दैवत्यं श्रिये द्विजः ॥
माङ्गल्यपूर्वकं सर्वं गन्धाद्यपि च धारयेत्³ ॥ १५९ ॥
तृप्तिकृत्पितृ-मातॄणां धूपो देयश्च गुग्गुलः ॥
घृताभिघारधूपो वा यथा स्यात्परिपूर्णता ॥ १६० ॥
दीपाश्च बहवो देयाः क्षिप्रं प्रतिघृतेन च ॥
तैलेन येन केनापि नवनीतेन चैव ही ॥ १६१ ॥
मालत्या शतपत्र्या वा मल्लिका-कुन्दयोरपि ॥
केतक्या पाटलाया वा स्रजो देया न लोहिताः ॥ १६२ ॥
वासांसि च यथाशक्त्या दद्यात्तेभ्योऽपि निष्क्रयम्⁴ ॥
परिपूर्णं यथा तत्स्यात्तथा कार्यं भवेदिति ॥ १६३ ॥
सुवेष-भूषणैस्तत्र सालङ्कारैस्तथा नरैः ॥
कुङ्कुमाद्यनुलिप्ताङ्गैर्भाव्यं तु ब्राह्मणैः सह ॥ १६४ ॥
स्त्रियोऽपि स्युस्तथाभूता गीत-नृत्यादिहर्षिताः ॥
दुन्दुभीनादहृष्टाङ्गा मङ्गलध्वनिकारिकाः ॥ १६५ ॥

---

१. A. B. D. E. and F. read °कृत्य° for °क्रतु°. २. A. B. D. E. and F. read माषैः for पुष्पैः. ३. A. reads दापयेत् for धारयेत्. ४. D. reads दक्षिणाम् for निष्क्रयम्.

सोमसदोऽग्निष्वात्ताश्च तथा बर्हिषदोऽपि च ॥
सोमपाश्च तथा विद्वंस्तथैव च हविर्भुजः ॥ १६६ ॥
आज्यपाश्च तथा वत्स तथाह्यन्ये सुकालिनः ॥
एते चान्ये च पितरः पूज्याः सर्वे द्विजातिभिः ॥ १६७ ॥
वसवश्च तथा रुद्रास्तथैवादितिसूनवः ॥
देवता अपि यज्ञेषु स्वायम्भुवा हि कीर्तिताः ॥ १६८ ॥
एते च पितरो दिव्यास्तथा वैवस्वतादयः[1] ॥
एतत्पौत्रप्रपौत्राश्च असंख्याः पितरः स्मृताः ॥ १६९ ॥
एते श्राद्धेषु सन्तर्प्या उत्पन्नान्नै[2]र्द्विजातिभिः ॥
सन्तर्पिता इमे सर्वान्प्रीणयन्ति नृणां पितॄन् ॥ १७० ॥
प्रागेव केतितान्विप्रान् स्नातान्[3]काले समागतान् ॥
दत्वार्घ्यान् कृतसच्छौचानाचान्तानुपवेशयेत् ॥ १७१ ॥
ये स्पृशन्तस्तु खान्यद्भिराचामन्ति पिबन्ति च ॥
तेषां न जायते शुद्धिराचमन्त्यसृजा हि ते ॥ १७२ ॥
सर्वाणि स्वानि वक्त्राणि कार्यच्छिद्राणि चात्मनः ॥
तैराचान्तैर्भवेच्छुद्धिरशुचिस्त्वन्यथा भवेत् ॥ १७३ ॥
व्याहृत्य वैष्णवान्मन्त्रान् स्मृत्वा च वेदमातरम् ॥
शान्तस्वान्तो द्विजान्पृच्छेत्करिष्ये श्राद्धमित्यथ ॥ १७४ ॥
करवै करवाणीति पृष्ट्वा ब्रूयुर्द्विजाह्यतः ॥
अनुज्ञायै वचो ह्येतत् कुरुष्व क्रियतां कुरु ॥ १७५ ॥
ततो दर्भासनं दद्याद्देवेभ्यः सयवं पुनः ॥
दक्षिणं जानु मन्वास्य दक्षिणं च तथासनम् ॥ १७६ ॥
पात्रद्वयमतोर्घ्यार्थं तैजसं चैकवस्तुजम् ॥
साप च सपवित्रं तत्समभ्यर्च्य विधानतः ॥ १७७ ॥
प्राङ्मुखोऽमरतीर्थेषु शन्नो देव्योदकं क्षिपेत् ॥
यवोसीति यवांस्तत्र तूष्णीं पुष्पाणि चन्दनम् ॥ १७८ ॥

---

१. A. B D. E. and F. read चैतत्सुतादयः for वैवस्वतादयः. २. A. reads पुण्यान्नाद्यैः for उत्पन्नान्नैः. ३. A. reads श्राद्धकाले for स्नातान् काले. ४. B. reads स्यानि. ५. A. reads विप्राणि for कार्याणि and E. F. read वक्राणि. ६. E. reads कार्यच्छिद्राणि for कार्यछिद्राणि ७. B. reads यत्कृतं for क्रियतां.

यवोऽसि पुण्यामृतमिश्रितोऽसि
समस्तधान्यप्रभुरस्यमुत्र ॥
मरुन्मनुष्य-पितृवंशतृप्त्यै
क्षितावतीर्णोऽसि हितोऽसि पुंसाम् ॥ १७९ ॥
उत्पाद्य पूर्वकमिमानमृतेन वेधा
भूयः प्रसन्नमनसा तदुपासितःसन् ॥
चिक्षेप तान्वरुणलोकाहिताय सिक्ताः
तेनामृता वरुणदैवतका बभूवुः ॥ १८० ॥
अनीतवान्विधिरिमान्वरुणस्य लोकात्
अन्नप्रभून्भुवि यवान्सुरलोकतृप्त्यै ॥
तात्पिष्टपक्कहविषा पितृ-देवतानां
तृप्ता वसन्ति दिवि ते वरदानवाचः ॥ १८१ ॥

ततः सव्यं करं न्यस्य विप्रदक्षिणजानुनि ॥
देवानावाहयिष्येऽहमिति वाचमुदीरयेत् ॥ १८२ ॥
आवाहयेत्यनुज्ञातो विश्वेदेवास आगतम् ॥
विश्वेदेवाः शृणुतेममिति मन्त्रद्वयं पठेत् ॥ १८३ ॥
सोमेन सह राज्ञेति केचित्पठन्त्यदोऽपि च ॥
व्याहृत्य मन्त्रमावाह्य हस्ते दत्वा पवित्रकम् ॥ १८४ ॥
अर्चयेत्तं द्विजं पुष्पैर्दद्यादर्घ्यं करे पुनः ॥
विश्वेभ्यस्त्वेष देवेभ्यस्तुभ्यमर्घ्यः प्रदीयते ॥ १८५ ॥
या दिव्या इति मन्त्रेण पाणौ विप्रस्य तं क्षिपेत् ॥
अपसव्यमतः कृत्वा निर्वर्त्य वैश्वदैविकम् ॥ १८६ ॥
आपो भूमिगताः केचिदादित्येत्यभिमन्त्र्य च ॥
पुनस्ताभिः कराभ्यां च कुर्वन्ति मुखमार्जनम् ॥ १८७ ॥
उदकं गन्ध-धूपांश्च वासांसि चन्दनं स्रजः ॥
दत्वाऽपसव्यवद्भूत्वा दद्यात्पितृकुशासनम् ॥ १८८ ॥
सोदकान्द्विगुणं भूम्नान्सतिलान्सकुशानपि ॥
गोकर्णमात्रकान्साग्रान्प्रदद्याद्वामपार्श्वतः ॥ १८९ ॥
चतुर्थ्यंतं सगोत्रं च पितृनाम च शर्मवत् ॥
उच्चार्य परयोस्तद्वदिदं तुभ्यं कुशासनम् ॥ १९० ॥

---

१. B. E. and F. read द्विगुणीभूतान् for द्विगुणं भूम्नान् .

पित्रर्थमर्घ्यपात्राणि सम्पूज्य दक्षिणामुखः ॥
तिलोसीत्येतदुच्चार्य यवस्थाने तिलान्क्षिपेत् ॥ १९१ ॥
भूलग्नसव्यजानुः सन्पितृतीर्थेन चाऽस्वरः ॥
पितृध्यानमनाः कुर्यात्पितृकार्यमशेषतः ॥ १९२ ॥
आवाहयिष्ये पित्रादीननुज्ञाऽऽवाहयेति च ॥
उशन्तस्त्वेति प्रोदीर्य तथाऽयन्तु न इत्यपि ॥ १९३ ॥
अन्येऽप्यपहतासुरा इत्याद्यापि पठन्ति हि ॥
अन्नविघ्नव्यपोहार्थं वक्तव्यमिति केचन ॥ १९४ ॥
प्राग्वाद्धिप्रार्चनं कार्यं प्राग्वदर्घ्यप्रसेचनम्[1] ॥
प्राग्वन्मन्त्रं समुच्चार्य प्राग्वच्च मुखमार्जनम् ॥ १९५ ॥
एते तिलास्तु विधिना शशिलोकतस्तु
प्राहृत्य भोजनहितेन शुभाय धन्याः ॥
क्षिप्त्वा मलानि पुरुषस्य च तर्पणाद्यैर्
ये घ्नन्ति तेषु भुवि सत्सु कुतो भयं स्यात् ॥ १९६ ॥
तिलोऽसि तारापति[2]दैवतोऽसि
हितोऽस्यशेषपितृ-देवतानाम् ॥
कर्तासि तृप्तिं परमां पितृणां
मुक्त स्ततस्त्वं विधिसम्भवोऽसि ॥ १९७ ॥
[3]अर्घ्यपात्राणि सर्वाणि कृत्वा तान्याद्यपात्रके ॥
पितृभ्यस्थानमसीति न्युब्जं कुर्यादधश्च तत् ॥ १९८ ॥
यस्तूद्धरेत्तदज्ञानादर्घ्यपात्रं तु पैतृकम् ॥
तद्धि श्राद्धमभोज्यं स्यात्क्रुद्धैः पितृगणैर्गतैः ॥ १९९ ॥
आश्रित्य प्रथमं पात्रं तिष्ठन्ति पितरो नृणाम् ॥
श्राद्धे तस्मान्न तद्विद्वानुद्धरेत्प्रथमं सुधीः ॥ २०० ॥
वाचयेत्परिपूर्णं तु वासो दत्वा विधानतः ॥
[4]नत्वा सर्वान्द्विजान्पृच्छेत्करिष्येऽग्नाविति द्विजः ॥ २०१ ॥
अस्त्वेतत्परिपूर्णं तु ब्रूयुरेते द्विजातयः ॥
ससर्पि पा[5]त्रमादाय सापिधानं विधानतः ॥ २०२ ॥

---

१. C. reads °प्रसेवनं for °प्रसेचनम्. २. B. reads चंद्रामृत° for तारापति°. ३. E. reads पवित्राणि च त्रीण्येव for अर्घ्यपात्राणि सर्वाणि. ४. A. B. D. E. and F. read भूत्वा for नत्वा. ५. A. B. D. E. and F. read अन्नम् for पात्रम्.

कुरुष्वेति ह्यनुज्ञातो जुहोत्यग्नौ ततः पुनः ॥
भोजने पितृविप्राणामिति मन्त्रमुदीरयेत् ॥ २०३ ॥
अग्निशब्दं चतुर्थ्येकवचनान्तं समुच्चरेत् ॥
कव्यवाहनशब्दं च सोमं पितृमदित्यपि ॥ २०४ ॥
पङ्क्ति[1]मूर्धन्यमेवात्र पृच्छेदिति हि केचन ॥
पितृश्राद्धे प्रधानत्वात्सा[2]मस्त्येनाथ वा पुनः ॥ २०५ ॥
तूष्णीं यत्र तु होमादौ प्रजापतिस्तु तत्र तु ॥
तृतीयं मनसा दद्याद्यमायास्त्विति वा पुनः ॥ २०६ ॥
अहन्येवास्मिंस्तस्मिन्वा संवादोभून्मनोर्गिरः ॥
[3]अहव्या वाग्यतो वाणी अभूद्यज्ञे प्रजापतेः ॥ २०७ ॥
अग्नावाहुतयः प्रोक्तास्तिस्र एव मनीषिभिः ॥
अग्निवाद्धिप्रपात्रेषु पश्चात्तज्जुहुयाद्विजः ॥ २०८ ॥
अग्नौकरणशेषं तु पितृपात्रेषु दापयेत् ॥
प्रतिपाद्य पितॄणां तु दद्याद्वै वैश्वदेविके ॥ २०९ ॥
यश्चाग्नौकरणं दद्यात्पितृविप्रकरेषु च ॥
तेनोच्छेषितमेतत्स्यात्समाप्तिस्तावतैव तु ॥ २१० ॥
पितरः [4]करवक्त्राश्च वन्हिवक्त्राश्च देवताः ॥
अतःपाणौ न तद्देयं पात्रे देयं कुशान्विते ॥ २११ ॥
वैश्वदेविकविप्राणां पात्रे वा यदि वा करे ॥
अनाग्निकस्तु तद्दद्यात्प्रथमं वैश्वदेविके ॥ २१२ ॥
हुतशेषमशेषाणां पात्रे दद्याद्विजोत्तमः ॥
पृच्छेत्[5]सर्वांश्च यत्कृत्यं सामान्येन [6]द्विजोत्तमान् ॥ २१३ ॥
दत्वाऽग्नौकरणं चान्यत् विप्राणां तृप्तिकृद्धविः ॥
परिवेष्यमिति ब्रूयुस्ततो विधिरनन्तरम् ॥ २१४ ॥
प्रागग्नौकरणं दद्याद्दत्वा चान्यत्तु तृप्तिकृत् ॥
पक्वीकृतं तु भुञ्जानाः प्रीणयन्ति नृणां पितॄन् ॥ २१५ ॥

---

१. A. and B. read °मूर्धान° for °मूर्धन्य°. २. B. and E. read सामगान् for सामस्त्येन. ३. A. reads अहव्यकव्यतो वाणी for अहव्या वाग् यतो वाणी. ४. A. B. D. E. and F. read कव्य° for कर° . ५. A. reads विप्रांश्च for सर्वांश्च. ६. A. reads विद्युद्धिमान् for द्विजोत्तमान्.

परिवेष्य हविः सर्वं तदर्थं यच्च वै श्रुतम् ॥
अभिमन्त्र्य ततः पात्रे आपोशानप्रदानवत् ॥ २१६ ॥
अन्नपूर्णस्य पात्रस्य कर्तव्यमभिषेचनम् ॥
अपो दत्वा तु सङ्कल्प्यमेष श्राद्धविधिर्वरः ॥ २१७ ॥
वर्जितानि न देयानि पितृप्रीतिं विजानता ॥
हविष्याणि प्रदेयानि वक्ष्यमाणानि वर्जयेत् ॥ २१८ ॥
निष्पावान् राजमाषांश्च कुलित्थान् कोरदूषकान् ॥
मसूरान् शीतपाकं च पुलाकं शणमर्कटाः ॥ २१९ ॥
आढक्यः सितसिद्धार्थं वल्लानि स्विन्नधान्यकम् ॥
पिण्याकं परिदग्धं च मथितं च विवर्जयेत् ॥ २२० ॥
नापि नीरस-निर्गन्धं करञ्जं सर्वसक्तुकम् ॥
अप्रोक्षितं च यत्किञ्चित्पर्युषितं विवर्जयेत् ॥ २२१ ॥
लोहितान्वृक्षनिर्यासान्प्रत्यक्षलवणानि च ॥
कृतकृष्णानि लवणं सर्वाः पलाण्डुजातयः ॥ २२२ ॥
कृष्णजीरक-वंशाग्रास्तृणानि च विवर्जयेत् ॥
कुम्भिका-यूप-पालङ्क्यः कट्फलं तण्डुलीयकम् ॥ २२३ ॥
नीलिका च सितच्छत्रा शोभाञ्जन-कुसुम्भिकाः ॥
कोविदार-करञ्जौ च सुमुखा मूलकं तथा ॥ २२४ ॥
कूष्माण्डं गौरवृन्ताकं बृहत्याश्च फलानि च ॥
करीरफल-पुष्पाणि विडङ्गं मरिचानि च ॥ २२५ ॥
जम्भारिका सुजम्बीरा सुषवी बीजपूरकाः ॥
जम्ब्वलाबूनि पिप्पल्यः पटोलं पिण्डमूलकम् ॥ २२६ ॥
मसूराञ्जनपुष्पं च श्राद्धे दत्वा पतत्यधः ॥
विषच्छद्महतं मांसमन्यच्च चिरसंस्थितम् ॥ २२७ ॥
नित्यं श्राद्धेऽपि वर्ज्यं स्याद्विड्वराह-चकोरयोः ॥
स्वायम्भुवादिभिः सर्वैर्मुनिभिर्धर्मदर्शिभिः ॥ २२८ ॥

---

१. A. reads अभिमन्त्रणम् for अभिषेचनम्. २. A. reads °कीर्तिं for °प्रीतिं; while B. and F. read °तृप्तिं. ३. B. E. and F. read चित्रधान्यकम् for स्विन्नधान्यकम्. ४. C. reads कृताः कृष्णतिलावर्णाः for कृतकृष्णानि लवणं. ५. A. B. D. E. and F. read °वार्ताकं for °वृन्ताकं.

निषिद्धानि न देयानि पितृणामहितानि च ॥
एकेन किञ्चित् अपरेण किञ्चित् किञ्चिच्च किञ्चिच्च परैर्मुनीन्द्रैः ॥
श्राद्धे निषिद्धं ह्यशनादि विद्वन्सर्वं पितॄणां ननु किञ्च देयम् ॥२२९॥
सौवीर-तिक्तैर्लवणादिकैस्ततपात्रस्य शुद्धिर्भवतीह यैस्तु ॥
तद्बीजपूरान्मरिचादियोगात्सिद्धं प्रदेयं ननु दुष्यतीह ॥ २३० ॥
श्राद्धे तु यस्य द्विज दीयमानं पित्रादिकस्येह भवेन्मनुष्यैः ॥
यद्वस्तु यस्येह मनस्यभीष्टमासीत्पुरा तस्य तदेव देयम् ॥२३१॥
दातुश्च यस्मिन्मनसोऽभिलाषः श्रद्धा भवेत्तत्र तु दीयमाने ॥
श्राद्धेऽपि देयं विधिवत्तदेव तद्दत्तमक्षय्यमिति प्रवादः[1] ॥२३२॥
आनीतमम्भो निशि यत्कथञ्चित् यत्पाणिदत्तं भवतीह विद्वन् ॥
हेमाम्बुनिक्षेपहरिस्मृतिभ्यामच्छिद्रतामेति पराशरोक्तिः ॥२३३॥
यत् क्षीरसारैक्षवखण्डयोगाच्छाखाभिधेयं भवतीह विद्वन् ॥
प्राण्यङ्गधूपान्मरिचादियोगात् पाकस्य सिद्धिं प्रवदन्ति तज्ज्ञाः ॥२३४॥
व्रीहयो यव-गोधूमा मुद्गा माषास्तिलास्तथा ॥
नीवारः श्यामकाद्यं च अकृष्टसम्भवानि च ॥ २३५ ॥
आरण्यकालशाकादि प्रतिषिद्धापराणि च ॥
माहेयीक्षीरमध्वादि[2] खड्गादिपिशितानि च ॥ २३६ ॥
शर्करा-गुड-खण्डादि संशुद्धं क्षौद्रमेव च ॥
पितृश्राद्धे हविर्मुख्यं यद्वा तद्वाप्यलाभतः ॥ २३७ ॥
यद्देहिनामत्र शरीरपुष्ट्यै धाता ससर्जाशननाम किञ्चित् ॥
तत्सर्वधान्यान्नमिति[3] ह्यवादि त्रेधा मुनीन्द्रेण पराशरेण ॥ २३८ ॥
शामाकरस्यादिककम्बुजाति यत्किञ्चिदस्मिंस्तुषसारभूतम् ॥
आरण्यजं वा कृषिसम्भवं वा सस्यं तदुक्तं मुनिनाऽशनेषु ॥२३९॥
काण्डोद्भवं यत्वशनेषु किञ्चित् पङ्कोद्भवं वा स्थलसम्भवं वा ॥
यत्तुच्छसारं बहुसारमस्मिन्सर्वाणि धान्यानि च शूकवन्ति ॥ २४० ॥
यत्सर्वसारं सतुषं च भक्ष्यं निःशूकशूकान्वितमत्र किञ्चित् ॥
आप्यायनं देहभृतां च सद्यस्तत्प्रोक्तमन्नं[4] ह्यशनेन सद्भिः[5] ॥ २४१ ॥

---

१. A. reads तदक्षयं चेति जनप्रवादः; while B. E. and F. substitute the word श्रुतिः in place of प्रवादः. २. A. reads °रभ्यादि instead of °मध्वादि ३. Only B. reads तच्छस्यधान्यान्नमिति त्रिधैवमूचे. ४. A. B. E. and F. read आद्यैः for अन्नं. ५. B. E. and F. read अशनेषुचाग्रम् for अशनेन सद्भिः

प्रतिश्रुतं च भुक्तं च कटुतिक्तं च यत्तथा ॥
केचिदूचुरदेयानि यत् खातप्रतिरोपितम् ॥ २४२ ॥
तुण्डिकेरान्यलाबूनि लिङ्गाख्यानि च यानि तु ॥
श्राद्धे नित्यमदेयानि प्राह सत्यवतीपतिः ॥ २४३ ॥
सोङ्कारया वै गायत्र्या दशावर्तितया जलम् ॥
पूतं तु तेन तत् प्रोक्ष्यं सर्वमन्नं विशुद्धये ॥ २४४ ॥
शुद्धवत्योथ कूष्माण्ड्यः पावमान्यस्तरत्समाः ॥
पूतं तु वारिणैताभिरन्नशोधनमुत्तमम् ॥ २४५ ॥
तद्विष्णोरिति मन्त्रेण गायत्र्या च प्रयत्नवान् ॥
प्रोक्षयेदशनं सर्वं शूद्रदृष्ट्यादिशुद्धये ॥ २४६ ॥
गृहाग्नि-शिशु-देवानां यतीनां ब्रह्मचारिणाम् ॥
तावन्न दीयते किञ्चिद्यावत् पिण्डान्न निर्वपेत् ॥ २४७ ॥
काञ्जिकं दधि तक्रं च शृतं चाशृतमेव वा ॥
पूर्वाह्णे न प्रदातव्यं एकोद्दिष्टेऽथ पार्वणे ॥ २४८ ॥
आपिण्डदानतो दद्याद्यत्किञ्चिच्छ्राद्धवासरे ॥
तेनैव पितरो यान्ति श्राद्धं गृह्णन्ति नैव च ॥ २४९ ॥
परिवेषयेत्समं सर्वं न कार्यं पङ्क्तिभेदनम् ॥
पङ्क्तिभेदी वृथापाकी नित्यं ब्राह्मणनिन्दकः ॥
आदेशी वेदविक्रेता पञ्चैते ब्रम्हघातकाः ॥ २५० ॥
यद्येकपङ्क्त्यां विषमं ददाति स्नेहाद्भयाद्वा यदि चार्थलोभात् ॥
वेदैश्च दृष्टं ऋषिभिश्च गीतं तद्ब्रह्महत्यां मुनयो वदन्ति ॥ २५१ ॥
देवान्पितॄन्मनुष्यांश्च वह्निमभ्यागतांस्तथा ॥
अनभ्यर्च्य तु भुञ्जानो वृथापाक इति स्मृतः ॥ २५२ ॥
पृथ्वी ते पात्रमित्येतद्द्यौरपीति पिधानकम् ॥
एतद्वै ब्राम्हणस्यास्ये जुहोमि चामृतेऽमृतम् ॥ २५३ ॥
इदं विष्णुरिति ह्येतन्मन्त्रमुच्चार्य चापरे ॥
द्विजाङ्गुष्ठं च तत्रान्ने निवेशयन्ति तद्विदः ॥ २५४ ॥

---

१. A. B. D. E. and F. read शुक्तं for भुक्तं. २. B. D. E. and F. read तुण्डीरका° for तुण्डिकेरा°. ३. A. reads ब्रह्मचारितपस्विनाम्. for यतीनां ब्रह्मचारिणाम्. ४. A. D. and F. read पूर्वमेव न दातव्यं for पूर्वाण्हे न प्रदातव्यं. ५. In A. and D. this verse is omitted. ६. B. and E. read तद्द्विजाः for तद्विदः

जप्त्वा व्याहृतिभिः साग्रां गायत्रीं मधुमतीरिति ॥
सङ्कल्प्यान्नमपोशानं ब्रूयाच्च मधुमध्विति ॥ २५५ ॥
आपोशानं प्रदेयान्नं न तत्संकल्पयेद्द्विजः ॥
संङ्कल्पान्नरके याति निराशैः पितृभिर्गतैः ॥ २५६ ॥
आपोशानोदके विप्रपाणौ तिष्ठति यो द्विजः ॥
संङ्कल्पं कुरुतेऽज्ञानात् स्युस्तस्य पितरो हताः ॥ २५७ ॥
जप्त्वा वै वैष्णवान्मन्त्रान्विप्रान्ब्रूयाद्यथासुखम् ॥
भुञ्जीरन्वाग्यतास्तेतु पितृ-देवहितैषिणः ॥ २५८ ॥
अत्युष्णमशनं कार्यं वचो वाच्यं पितृष्ववदः ॥
शूद्रं च शूकर-ध्वाङ्क्ष-कुक्कुटानपनाययेत् ॥ २५९ ॥
भुञ्जते ब्राम्हणा यावत्तावत्पुण्यं जपेज्जपम् ॥
पावमान्यानि वाक्यानि पितृसूक्तानि चैवहि ॥ २६० ॥
ततस्तृप्तान् द्विजान्पृच्छेत्तृप्तास्थेत्यनुशासनम् ॥
तृप्तास्मेति द्विजा ब्रूयुस्तदन्नं विकिरेद्भुवि ॥ २६१ ॥
सकृत्सकृत्त्वपो दत्वा शेषमन्नं निवेदयेत् ॥
यथानुज्ञा तथा कृत्वा पिण्डांस्तदनु निर्वपेत् ॥ २६२ ॥
यद्यद्भुक्तं द्विजैरन्नं तत्तदादाय वित्तरैः ॥
स्थालीपाकं तिलोपेतं दक्षिणाशामुखस्ततः ॥ २६३ ॥
अवनिज्य तिलान्दर्भान्पिण्डार्थमवनीतले ॥
तस्मिंश्च निर्वपेत्पिण्डान् गोत्रनामकपूर्वकान् ॥ २६४ ॥
ये देवलोकं पितृलोकमापुः प्राप्तास्तथैव नरकं नरा ये ॥
अग्नौ हुतेन द्विजभोजनेन तृप्यन्ति पिण्डै र्भुवि तैः प्रदत्तैः ॥ २६५ ॥
यदन्नं लेपरूपं तु क्रमात्तेषु च निक्षिपेत् ॥
प्रक्षाल्य सलिलं तत्र अवनेजनवत्पुनः ॥ २६६ ॥

---

१. A. D. and F. read सार्द्धं for साग्रां. २. A. reads संकल्पते for संकल्पयेत्. ३. A. reads संकल्प्य for संकल्पात्. ४. A. and F. do not mention this verse. ५. A. and B. read तेन for तस्य. ६. A. reads अभ्यक्तम् for अत्युष्णम्. ७. A. B. D. E. and F. read पितृप्रियम् for पितृष्वदः. ८. C. reads अपलापयेत् for अपनाययेत्. ९. B. D. and E. read पावमान्यश्च and A. reads पावनानि तु. १०. A. reads चित्रकम् for वित्तरः. ११. B. D. E. and F. read स्थालीपाकतिलोपेतं. १२. F. reads ते for तैः.

निवृत्तानर्च्येयेतिपिण्डान् पुष्प-गन्धाविलेपनैः ॥
दीप-वासः प्रदानेन पितॄनर्च्य[1] समाहितः ॥ २६७ ॥
वासो वस्त्रदशां दद्याद्विधिवन्मन्त्रपूर्वकम् ॥
केचिदत्रा[2]ऽविकं लोम केचिन्मतं न तात्त्विति ॥ २६८ ॥
पञ्चाशद्वार्षिको[3] यस्तु दद्याल्लोम स्वमंशुकम् ॥
तदवश्यं प्रदेयं स्याद्विधिसम्पूर्णताकृते ॥ २६९ ॥
पवित्रं यदि वा दर्भं करात्तत्र विनिःक्षिपेत् ॥
प्रक्षाल्य हस्तावाचम्य प्रोक्षणादिकमाचरेत् ॥ २७० ॥
निर्वपन्त्यपरे पिण्डान् प्रागेव द्विजभोजनात् ॥
खादयेयुः शकुन्तास्तान्पितॄणां तृप्तितत्पराः ॥ २७१ ॥
मातामहानामप्येवं विप्रानाचामयेदथ ॥
वाचयेत द्विजान्स्वस्ति दद्याच्चैवाक्षयो[4]दकम् ॥ २७२ ॥
दक्षिणा हेम देवानां पितॄणां रजतं तथा ॥
शक्त्या दद्यात्स्वधाकारं व्याहरेच्छ्राद्धकृद्द्विजः ॥ २७३ ॥
तिष्ठन्पिण्डान्तिके ब्रूयाद्वाचयिष्ये स्वधामिति ॥
वाच्यतामिति विप्रोक्तिः प्रवदेद्गोत्रपूर्वकम् ॥ २७४ ॥
स्वधोच्यतामिति ब्रूयादस्तु स्वधेति तद्वचः ॥
ऊर्जं वहन्तीरुच्चार्य जलं पिण्डेषु सेचयेत् ॥ २७५ ॥
याः काश्चिद्देवताः श्राद्धे विश्वशब्देन जल्पिताः[5] ॥
प्रीयतामिति च ब्रूयाद्विप्रैरुक्तमिदं जपेत् ॥ २७६ ॥
दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ॥
श्रद्धा च नो माव्यगमद्बहु देयं च नोऽस्त्विति ॥ २७७ ॥
न्युब्जपिण्डार्घ्यपात्राणि कृत्वोत्तानानि संश्रवात् ॥
क्षिप्त्वा पिण्डेष्वतो विप्रान्पितृपूर्वं विसर्जयेत् ॥ २७८ ॥
वाजे वाजे इति ह्युक्त्वा आमावाजस्य तान् बहिः ॥
ब्रूयात्प्रदक्षिणीकृत्य क्षमध्वमित्थामित्यापि ॥ २७९ ॥
पिण्डानां मध्यमं पिण्डं पितॄन्ध्यायन् समाहितः ॥
[6]प्राशयेत्पुत्रकामां तु भार्यां तच्छ्राद्धकृन्नरः ॥ २८० ॥

१. A. B. D. E. and F. read ध्यायन् for अर्च्य. २. F. reads °दत्रा° for °दत्रा°; while C. reads दत्वा for अत्र. ३. B. E. and F. read अशीतिवार्षिको for पञ्चाशद्वार्षिको. ४. C. reads अक्षतो° for अक्षयो°. ५. D. reads सूचिताः for जल्पिताः; while B. E. and F. read कीर्तिताः for the same. ६. A. reads this line as—प्राशयेत्पुत्रकामा या भार्या तं श्राद्धदस्य च.

स्नुषा वापि सगोत्रा वा पुत्रकामा द्विजाज्ञया[1] ॥
आधत्त पितरो गर्भं व्याहरेयुर्द्विजातयः ॥ २८१ ॥
महारोगगृहीतो वा तद्रोगोपशमाय च ॥
घ्नन्तु मे पितरो रोगामित्युक्त्वा प्राशयेच्चरुम्[2] ॥ २८२ ॥
अन्यानप्सु हुताशे वा क्षिपेत्पिण्डान्द्विजाय वा ॥
अजाय वा प्रदद्याच्च पश्चाद्विप्रविसर्जनम् ॥ २८३ ॥
उद्धारं[3] पैतृकादेके पाकान्मातामहाय च ॥
एकेनैव हि चैकेऽपि षट्दैवत्यादिति श्रुतिः ॥ २८४ ॥
उद्धारं[4] पितृकादेके पाकान्मातामहाय तु ॥
एकेनैव हि गच्छन्ति भिन्न गोत्रास्तथा द्विजाः ॥ २८५ ॥
निदध्युः पृथगुद्धृत्य पात्रे पिण्डार्थमोदनम् ॥
तथा पाकमपीच्छन्ति भिन्नगोत्रतया द्विजाः ॥ २८६ ॥
आब्दिके[5] ऽक्षय्यस्थाने तु वक्तव्यमुपतिष्ठताम् ॥
अभिरम्यतां स्वधास्थाने विप्रोक्तिरभिरताः स्मह ॥ २८७ ॥
ऊर्ध्वं तु प्रोष्ठपद्यास्तु प्रतिपदादिकाश्च याः ॥
पुण्यास्तास्तिथयः सर्वा दशापि सहपञ्चभिः ॥ २८८ ॥
तेषां चतुर्दशी प्रोक्ता[6] ये शस्त्रेण हता नराः ॥
पितृभे च[7] त्रयोदश्यां गयाश्राद्धादिकं फलम् ॥ २८९ ॥
न तत्र पातयेत्पिण्डान् सन्तानेप्सुः कदाचन ॥
पिण्डदानेन कवयो वंशक्षयं वदन्ति हि ॥ २९० ॥
सन्तानेप्सुस्त्रयोदश्यां न पिण्डान् पातयेन्नरः ॥
पातयेत्तमनिच्छंश्च प्राह सत्यवतीपतिः ॥
मघायुक्तत्रयोदश्यां पिण्डनिर्वपणं द्विजः ॥
स सन्तानो नैव कुर्यादित्यन्ये कवयो विदुः ॥ २९१ ॥
यः सङ्क्रमे भानुदिने च कुर्यादुपोषणं पारणकं द्विजन्मा ॥
पिण्डप्रदानं पितृभे च तद्वज्ज्येष्ठो विपद्येत सुतोऽनुजो वा ॥ २९२ ॥

---

१. B. and F. read प्राप्नुते पुत्रकांक्षिणी for पुत्रकामा द्विजाज्ञया. २. A. D. and F. read च तम् instead of चरुम्. ३. A. reads उद्धरेत् for उद्धारं ४. In A. B. D. E. and F. this verse is not mentioned. ५. B. reabs अदैवे for आब्दिके. ६. A. B. D. E. and F. read पुण्या for प्रोक्ता ७. Only C. reads पितृभ्यश्च for पितृभे च.

पुत्रदा पञ्चमी कर्तुस्तथैवैकादशी तिथिः ॥
सर्वकामा त्वमावास्या पञ्चम्यूर्ध्वं शुभाः स्मृताः ॥ २९३ ॥

अन्नं क्षीरं घृतं क्षौद्रमैक्षवं कालशाकवत् ॥
एतैस्तु तर्पितैर्विप्रैस्तर्पिताः पितरो नृणाम् ॥ २९४ ॥

देशः पर्व च कालश्च हविः पात्रं च सत्क्रियाः ॥
पितृ-दैविकचित्तत्वं योगश्चेतिपतृभादिभिः ॥ २९५ ॥

शौचं च पात्रशुद्धिश्च श्रद्धा च परमा यदि ॥
अन्नं[1] तत्तृप्तिकृच्छ्राद्ध एतत्खलु[2] न चाऽमिषे ॥ २९६ ॥

यस्तु प्राणिवधं कृत्वा मांसेन तर्पयेत् पितॄन् ॥
सोऽविद्वाश्चंदनं दग्ध्वा कुर्यादङ्गारविक्रयम् ॥ २९७ ॥

क्षित्वा कूपे यथा किञ्चिद्बाल आदातुमिच्छति ॥
पतत्यज्ञानतः सोऽपि मांसेन श्राद्धकृत्तथा ॥ २९८ ॥

सर्वथाऽन्नं यदा नस्यात्तदैवामिषमाश्रयेत् ॥
ब्राम्हणश्च स्वयं नाद्यात्[3]तच्च श्वादिहतं यदि ॥ २९९ ॥

अथान्यत् पापमृत्यूनां[4] शुद्ध्यर्थं श्राद्धमुच्यते ॥
कृतेन तेन येषां तु प्रदत्तमुपतिष्ठति ॥ ३०० ॥

दन्ति-शृङ्गि-गर-व्याल-नीराग्नि-बन्धनैस्तथा ॥
विद्युन्निर्घात-वृक्षैश्च विप्रैश्च स्वात्मना हताः ॥ ३०१ ॥

व्रणसञ्जातकोटैश्च म्लेंच्छैश्चैव हतास्तथा ॥
पापमृत्यव एवैते शुभगत्यर्थमुच्यते ॥ ३०२ ॥

नारायणबलिः कार्यो विधानं तस्य चोच्यते ॥
ऊर्ध्वं षण्मासतः कुर्यादेके उर्ध्वं तु वत्सरात् ॥ ३०३ ॥

तेषां पापव्यपोहार्थं कार्यो नारायणो वलिः ॥
धौतवासाः शुचिः स्नात एकादश्यामुपोषितः ॥ ३०४ ॥

शुक्लपक्षे तु सम्पूज्य विष्णुमीशं यमं तथा ॥
नदीतीरं शुचिर्गत्वा प्रदद्याद्दश पिण्डकान् ॥ ३०५ ॥

---

१. A. reads अनन्यवृत्तिकृच्छ्राद्धे for अन्नं तत्तृप्तिकृच्छ्राद्धे. २. B. D. E. and F. read नूनमेतत् instead of एतत्खलु. ३. A. reads चाद्यात्तच्च स्वादु हितं यदि for नाद्यात्तच्च श्वादिहतं यदि. ४. A. reads अपमृत्यूनां for पापमृत्यूनां.

क्षौद्रा-ऽऽज्य-तिलसंयुक्तान् हविषा दक्षिणामुखः ॥
अभ्यर्च्य पुष्प धूपाद्यैस्तन्नाम-गोत्रपूर्वकान् ॥ ३०६ ॥
विष्णुध्यानमनाः कुर्यात्ततः स्तानम्भसि क्षिपेत् ॥
निमन्त्रयेत विप्रांश्च पंच सप्ताऽथ वा नव ॥ ३०७ ॥
द्वादश्यां कुतपे स्नातान्धौतवस्त्रान्समागतान् ॥
कृष्णाराधनकृद्भक्त्या[1] पादप्रक्षालितांच्छुभान् ॥ ३०८ ॥
दक्षिणाप्रवणे[2] देशे शुचिस्तानुपवेशयेत् ॥
द्वौ दैवे तु त्रयः पित्र्ये प्राङ्मुखोदङ्मुखान्द्विजान् ॥ ३०९ ॥
आसना-ऽऽवाहनार्घ्यं च कुर्यात् पार्वणवद्द्विजः ॥
भोजयेद्भक्ष्य-भोज्यैश्च क्षौद्रेक्षवाज्य-पायसैः ॥ ३१० ॥
तृप्तान् ज्ञात्वा ततो विप्रांस्तृप्तिं पृच्छेद्यथाविधि ॥
भोज्येन तिलमिश्रेण हविष्येण च तान् पुनः ॥ ३११ ॥
पञ्च पिण्डान्प्रदद्याद्वै दैवं रूपमनुस्मरन् ॥
विष्णु-ब्रह्म-शिवेभ्यश्च त्रीन्पिण्डांश्च यथाक्रमम् ॥ ३१२ ॥
यमाय सानुगायाथ चतुर्थं पिण्डमुत्सृजेत् ॥
मृतं सञ्चित्य मनसा गोत्र-नामकपूर्वकम् ॥ ३१३ ॥
विष्णुं स्मृत्वा क्षिपेत्पिण्डं पञ्चमञ्च ततः पुनः ॥
दक्षिणाभिमुखश्चैव निर्वपेत्पञ्च पिण्डकान् ॥ ३१४ ॥
आचम्य ब्राह्मणःपश्चात्प्रोक्षणादिकमाचरेत् ॥
हिरण्येन च वासोभिर्गोभिर्भूम्या च तान्द्विजान् ॥ ३१५ ॥
प्रणम्य शिरसा पश्चाद्विनयेन प्रसादयेत् ॥
तिलोदकं करे दत्वा प्रेतं संस्मृत्य चेतसि ॥
गोत्रपूर्वं क्षिपेत्पाणौ विष्णुं बुद्धौ निवेश्य च ॥ ३१६ ॥
बहिर्गत्वा तिलाम्भस्तु तस्मैदद्यात्समाहितः ॥
मित्रभृत्यैर्निजैः सार्द्धं पश्चाद्भुञ्जीत वाग्यतः ॥ ३१७ ॥
एवं विष्णुमते स्थित्वा यो दद्यात्पापमृत्यवे ॥
समुद्धरति तं प्रेतं पराशरवचो यथा ॥ ३१८ ॥
सर्वेषां पापमृत्यूनां कार्यो नारायणो बलिः ॥
तस्मादूर्ध्वं च तेभ्यो हि प्रदत्तमुपतिष्ठति ॥ ३१९ ॥

---

१. A. and D. substitute हर्याराधन° for कृष्णाराधन°. २. B. E. and F. read °प्लवने for °प्रवणे.

एवं श्राद्धैः समस्तान्यः सन्तर्पयति वै पितॄन् ॥
ददत्यनुत्तमांस्तस्य पितरस्तर्पिता वरान्[1] ॥ ३२० ॥
विद्या-तपोसुखान्पुत्रान्पूज्यत्वमथ योषितः ॥
सौभाग्यैश्वर्य[2]-तेज[3]श्च बलं श्रैष्ठ्यमरोगताम् ॥ ३२१ ॥
यशः[4] शुचित्वं कुप्यानि सिद्धिं चैवात्मवाञ्छिताम् ॥
यशश्च दीर्घमायुश्च तथैवानुत्तमां मतिम्[5] ॥ ३२२ ॥
अथान्यत्किञ्चिदाख्यामि पितॄणां तु हितार्थं[6] वै ॥
कृतेन स्वल्पकेनापि प्राप्नुवन्ति विधेः फलम् ॥ ३२३ ॥
उच्छिष्टस्य विसर्गार्थं विधिस्तात्कालिको हि यः ॥
श्राद्धैर्विहितं यत्प्राक् पितॄणां हितकाङ्क्षिभिः ॥ ३२४ ॥
आदाय सर्वमुच्छिष्टमवनेजनवद्बुधः ॥
तत्रैव निक्षिपेत् भूमौ तिल-दर्भसमान्वितम् ॥ ३२५ ॥
नरकेषु गता ये वै अपमृत्युमृता मम ॥
एतदाप्यायनं तेषां चिरायास्त्विति चोच्चरेत् ॥ ३२६ ॥
करस्य मध्यतो देवाः करपृष्ठे[7]तु राक्षसाः ॥
पात्रस्यालम्भनादौ[8] च तस्मात्तं न प्रदर्शयेत् ॥ ३२७ ॥
दर्भाश्च स्वयमानेया दक्षिणाप्रवणोद्भवाः ॥
तर्पणाद्युज्झिता[9] ये वै इत्याद्यांश्च विवर्जयेत् ॥ ३२८ ॥
न कुशं कुशमित्याहुर्दर्भमूलं कुशःस्मृतः ॥
छिन्ना दर्भा इति प्रोक्तास्तदग्रं कुतपः स्मृतः ॥ ३२९ ॥
हरिता यज्ञिया दर्भाः पीतकाः पाकयाज्ञिकाः ॥
सकुशाः पितृदैवत्याच्छिन्ना वै वैश्वदैविकाः ॥ ३३० ॥
दर्भमूले स्थितो ब्रम्हा दर्भमध्ये जनार्दनः ॥
दर्भाग्रे शङ्करस्तस्थौ दर्भा देवत्रयान्विताः ॥ ३३१ ॥
अहन्येकादशे श्राद्धे प्रतिमासं तु वत्सरम् ॥
प्रतिसंवत्सरं कार्यमेकोद्दिष्टं तु सर्वदा ॥ ३३२ ॥

१. A. and D. read सुतान् in the place of वरान्. २. A. B. D. E. and F. read °शौर्य° instead of °ऐश्वर्य°. ३. A. B. D. E. and F. read ओजः for °तेजः . ४. A. reads यशोऽशोकित्वकुप्यानि; while B. reads यशःकुप्यमशोकत्वं, also D. E. and F. read as B. ५. A. B. D. E. and F. read गतिम् in the place of मतिम्. ६. B. E. and F. read पितॄणां मुक्तिदायकम्. ७. A. reads तन्मनुः. ८. B. E. and F. read आलंबनात्पश्चात् instead of आलंभनादौ च. ९. B .C. D. and E. read °द्युच्छ्रिताः instead of °द्युज्झिताः.

एकस्य प्रथमं श्राद्धमर्वागब्दाच्च मासिकम् ॥
प्रतिसंवत्सरं चैव शेषं[1] त्रिपुरुषं स्मृतम् ॥ ३३३ ॥
सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः ॥
माता-पित्रोः पृथक्कार्यमेकोद्दिष्टं क्षयाहनि ॥ ३३४ ॥
सपिण्डिकरणादूर्ध्वं प्रतिसंवत्सरं द्विजः ॥
एकोद्दिष्टं प्रकुर्वीत पित्रोरप्यत्र पार्वणम् ॥
चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणे कृते ॥
एकोद्दिष्टविधानेन तत्कुर्याच्छस्त्रपातिते[2] ॥ ३३५ ॥
पित्रादयस्त्रयो यस्य शस्त्रपातास्त्वनुक्रमात् ॥
सम्भूतेः पार्वणं कुर्यादष्टकानि[3] पृथक् पृथक् ॥ ३३६ ॥
[4]सपिण्डीकरणादूर्ध्वं पितुर्यः प्रपितामहः ॥
स तु लेपभुगित्येव प्रलुप्तः पितृपिण्डतः ॥ ३३७ ॥
सपिण्डीकरणादूर्ध्वं कुर्यात्पार्वणवत्सदा ॥
प्रतिसंवत्सरं विद्वच्छागलेयो विधिः स्मृतः ॥ ३३८ ॥
सपिण्डता तु कर्तव्या पितुः पुत्रैः पृथक् पृथक् ॥
स्वाधिकारप्रवृत्तत्वादितरः श्राद्धकर्तृवत् ॥ ३३९ ॥
तीर्थश्राद्धं गयाश्राद्धं श्राद्धं वा परपान्थिकम् ॥
सपिण्डीकरणे कुर्यादकृते तु निवर्तते ॥
यस्य संवत्सरादर्वाक् सपिण्डीकरणं भवेत् ॥
प्रतिमासं तस्य कुर्यात् प्रतिसंवत्सरं तथा ॥ ३४० ॥
अर्वाक् संवत्सराद्वृद्धौ पूर्णे संवत्सरेऽपि च ॥
ये सपिण्डीकृताः प्रेता न तु तेषां पृथक्क्रिया ॥ ३४१ ॥
एकपिण्डीकृतानां तु पृथक्त्वं नोपपद्यते ॥
सपिण्डीकरणादूर्ध्वं मृते कृष्णचतुर्दशीम् ॥ ३४२ ॥
अर्वाग्संवत्सरादूर्ध्वं मृते कृष्णचतुर्दशीम् ॥
ये सपिण्डीकृतास्तेषां पृथक्त्वेनोपपद्यते ॥
पृथक्त्वकरणे तस्य पुनः कार्या सपिण्डता ॥ ३४३ ॥
स्त्रियं श्वश्र्वा पतिर्मात्रा तयासह सपिंडयेत् ॥
तत्सद्भावे पितामह्या तन्मात्रा चापरे विदुः ॥ ३४४ ॥

१. A. reads एकं for शेषं. २. A. reads घातिने instead of पातिते. ३. A. only subtitutes प्रतिसंवत्सरं in the place of अष्टकानि पृथक्. ४. This verse is not mentioned in A., ५. B. and E. read प्राति° instead of पित°.

नान्यथा तु पितामह्या मातामह्यास्तथाऽपरे ॥
उदकं पिण्डदानं च सहभर्त्रा[1] प्रदीयते ॥ ३४५ ॥
अपुत्रा ये मृताः केचित्स्त्रियो वा पुरुषाऽपि वा ॥
तेषामपि च देयं स्यादेकोद्दिष्टं च पार्वणम् ॥ ३४६ ॥
अपुत्राश्च मृता ये च कुमाराः संस्कृता अपि ॥
तेषां समानता न स्यान्न स्वधा नाभिरम्यताम् ॥ ३४७ ॥
भर्त्रा सपिण्डता स्त्रीणां कार्येति कवयो विदुः ॥
स्वस्रा सहापरे तस्यास्तन्मात्रा चापरे विदुः ॥ ३४८ ॥
अनपत्येषु प्रेतेषु न स्वधा नाभिरम्यताम् ॥
एकोद्दिष्टेषु सर्वेषु न स्वधा नाभिरम्यताम् ॥ ३४९ ॥
मित्र-बन्धु-सपिण्डेभ्यः स्त्री-कुमारस्य चैव ही ॥
दद्याद्वै मासिकं श्राद्धं संवत्सरं तु नान्यथा ॥ ३५० ॥
अप्रत्ययगतश्चैव कुल-देशव्यवस्थया ॥
यो यथा क्रियया युक्तः स तथैव हि निर्वपेत् ॥ ३५१ ॥
दार्ढ्यार्थं दृश्यते रूढिर्मानवं लिङ्गमेव च ॥
दृढीकृता च विद्वद्भिर्लोकरूढिर्गरीयसी ॥ ३५२ ॥
विकल्पेषु च सर्वेषु स्वयमेकैकमादितः ॥
अङ्गीकरोति यं कर्ता स विधिस्तस्य नेतरः ॥ ३५३ ॥
बहून् हि याजयेद्यस्तु वर्णबाह्यांश्च नित्यशः ॥
म्लेच्छांश्च शौण्डिकांश्चैव स विप्रो बहुयाजकः ॥ ३५४ ॥
यश्च धैर्येण दुष्टात्मा गो-सुवर्णापहारकः ॥
सङ्गृहीतासवर्णास्त्रिः स विप्रो गण उच्यते ॥ ३५५ ॥
वर्तते यश्च चौर्येण सुवर्णोपहारकः ॥
सङ्गृहीतसवर्णास्त्रि स विप्रो गौण उच्यते ॥ ३५६ ॥
मृते भर्तरि या नारी रहस्यं कुरुते पतिम् ॥
तस्य वैस्रावयेद्गर्भं सा नारी गणिका स्मृता ॥ ३५७ ॥
अन्यदत्ता तु या कन्या पुनरन्यत्र दीयते ॥
अपि तस्या न भोक्तव्यं पुनर्भूः सा प्रकीर्तिता ॥ ३५८ ॥
कैमारं पतिमुत्सृत्य यात्वन्यं पुरुषं श्रिता ॥
पुनः पत्युर्गृहं गच्छेत्पुनर्भूः सा द्वितीयका ॥ ३५९ ॥

---

१. B. D. E. and F. read न for च.

असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते ॥
सवर्णाय सपिण्डाय सा पुनर्भूस्तृतीयका ॥ ३६० ॥
प्राप्ते द्वादशे वर्षेऽत्र या रजो न बिभर्ति हि ॥
धारितं तु तया रेतो रेतोधाः सा प्रकीर्तिता ॥ ३६१ ॥
या भर्तुर्व्यभिचारेण कामं चरति नित्यशः ॥
तस्या अपि न भोक्तव्यं सा भवेत्कामचारिणी ॥ ३६२ ॥
पतिं हित्वा तु या नारी गृहादन्यत्र गच्छति ॥
वरेषु[1] रमते नित्यं स्वैरिणी सा प्रकीर्तिता ॥ ३६३ ॥
भर्तुः शासनमुल्लंघ्य स्वकामेन प्रवर्तते ॥
दीव्यन्ती च हसन्ती च सा भवेत्कामचारिणी॥ ३६४ ॥
पतिं विहाय या नारी सवर्णमन्यमाश्रयेत् ॥
वर्तते ब्राम्हणत्वेन द्वितीया स्वैरिणी तु सा ॥ ३६५ ॥
मृते भर्तरि या याति क्षुत्पिपासातुरा परम् ॥
तवाहमिति सम्भाष्य तृतीया स्वैरिणी तु सा ॥ ३६६ ॥
देश-कालाद्यपेक्ष्यैव[2] गुरुभिर्या प्रदीयते ॥
उत्पन्नसाहसाऽन्यस्मै चतुर्थी स्वैरिणी तु सा ॥ ३६७ ॥
आसु पुत्रास्तु ये जाता वर्ज्यास्ते हव्य-कव्ययोः
तथैव पतयस्तासां वर्जनीयाः प्रयत्नतः ॥ ३६८ ॥
श्राद्धं तैश्च न कर्तव्यं प्रतिलोमाविधानतः ॥
वैश्वश्राद्धं पितृश्राद्धं प्रतिलोमाविधानतः ॥
वर्णाश्रमबहिःस्थास्ते संकीर्ण[3]जन्मसम्भवाः ॥ ३६९ ॥
मातॄणां च पितॄणां च स्वीयानां[4] पिण्डदाः स्मृताः[5] ॥
उपपतिसुतो यस्तु यश्चैव दीधिषूपतिः ॥ ३७० ॥
परपूर्वपतेर्जाताः सर्वे वर्ज्याः प्रयत्नतः ॥
अजापालादिजाताश्च विशेषेण तु वर्जयेत् ॥ ३७१ ॥
मृतानुगमनं नास्ति ब्राम्हण्या ब्रम्हशासनात् ॥
इतरेषु च वर्णेषु तपः परममुच्यते ॥ ३७२ ॥

---

१. A. reads विटेषु for वरेषु. २. A. and D. read °नुपेक्ष्यैव for °द्यपेक्ष्यैव. ३. A. reads विकीर्ण° for संकीर्ण.° ४. B. D. E. and F. read त्रयाणां for स्वीयानां. ५. B. D. E. also read नच पिंडदाः instead of पिंडदाः स्मृताः.

भर्तुश्चित्यां समारोहेद्या च नारी पतिव्रता ॥
अहन्येकादशे प्राप्ते पृथक्पिण्डे नियोजयेत् ॥ ३७३ ॥

श्रौतैश्च स्मार्तमंत्रैश्च दम्पत्यावेकतां गतौ ॥
एकमृत्युगतौ चैव वह्नावेकत्र तौ हुतौ ॥ ३७४ ॥

एकत्वं च तयोर्यस्माज्जातमाद्यावसानिकम् ॥
एकादशाहिकं श्राद्धमेकमेव स्मृतं बुधैः ॥ ३७५ ॥

आरुह्य भर्तुश्चितिमंगना या प्राप्नोति मृत्युं बहु सत्वयुक्ता ॥
एकादशाहे तु तयोर्विधेयं श्राद्धं पृथक्स्वर्गमपेक्ष्य सद्भिः ॥ ३७६ ॥

एकत्वमिच्छन्ति पतिप्रहीणा एकादशाहादिषु ये नृनार्यः ॥
ते स्वर्गमार्गं विनिहत्य कुर्युः स्त्रीसत्वघातान्नरकेऽधिवासम् ॥ ३७७ ॥

समानमृत्युना यस्तु मृतो भर्ता च योषिताम् ॥
तस्याः सपिण्डता तेन पिण्डमेकत्र[1] निर्वपेत् ॥ ३७८ ॥

स्त्रीपात्रं पतिपात्रे[2] तु सिंचयेदे[3]कमेव हि ॥
श्राद्धे[4] त्रिपुरुषे त्रीणि तत्प्रत्यक्षं पितृन्प्रति ॥ ३७९ ॥

पत्या सह परासुत्वात्तेनैवास्याः सपिण्डता ॥
पितामह्यापि चान्यत्र ह्येतदाह पराशरः ॥ ३८० ॥

अन्यप्रीतौ न चान्यस्य तृप्तिः कुत्रापि दृश्यते ॥
एवं धीमानमुत्रापि तस्मान्नैकत्वमाश्रयेत् ॥ ३८१ ॥

एकत्वाश्रयणे धर्मो नार्या लुप्तो भवेद्ध्रुवम् ॥
तस्याः सुकृतसामर्थ्यात्पत्युः स्वर्गमिहेष्यते ॥ ३८२ ॥

भर्त्रा सह मृता या तु नाकलोकमभीप्संती[5] ॥
साऽऽद्यश्राद्धे पृथक्पिण्डा नैकत्वं तु बुधैः स्मृतम् ॥ ३८३ ॥

पतिमृत्युः स्त्रियो मृत्यु[6]र्निमित्तमेव जायते ॥
निर्निमित्तो न वै मृत्युर्मृत्युना चैकता[7] भवेत् ॥ ३८४ ॥

१. B. D. E. and F. read एकं तु for एकत्र. २. B. E. and F. read पितृपात्रेषु for पतिपात्रे तु. ३. A. reads चिंतयेत् for सिंचयेत्. ४. B. E. and F. read श्राद्धं for श्राद्धे. ५. B. and E. read समीहया; while D. reads अभिप्सया. ६. A. reads मृत्योः for मृत्युः. ७. B. reads नैकता instead of चैकता, also A. D. E. and F. too the same.

भर्त्रासह मृता भार्या भर्तारं सा समुद्धरेत् ॥
तस्याः पतिव्रताधर्मः पिण्डैक्येन हतो भवेत् ॥ ३८५ ॥
वलीयस्त्वेन धर्मस्य तुच्छत्वाच्चांगसस्तथा ॥
धर्मेण लुप्यते पापमेकत्वे समता तयोः ॥ ३८६ ॥
नैकत्वं तु तयोरस्माद्धक्तव्यं श्राद्धकर्मणि ॥
पृथगेवहि कर्तव्यं श्राद्धमेकादशाहिकम् ॥ ३८७ ॥
यानि श्राद्धानि कार्याणि तान्युक्तानि पृथक् पृथक् ॥
कर्तव्यं यैस्तु तेऽप्युक्ता विशेषं च निबोधत ॥ ३८८ ॥
औरसाद्याः स्मृताः पुत्रा मुनिभिर्द्वादशैव तु ॥
यथा जात्यनुसारेण वर्णानामनुसारतः ॥ ३८९ ॥
पिण्डप्रदाः क्रमेण स्युः पूर्वाभावे परः परः ॥
यस्माद्यो जायते पुत्रः स भवेत्तस्य पिण्डदः ॥ ३९० ॥
तस्मात्तस्मादपोहन्ते मृताः प्रेतत्वमागताः ॥
तस्मादवश्यमेवं हि श्राद्धं कार्यं विधानतः ॥ ३९१ ॥
शूद्रस्य दासिजः पुत्रः कामतस्तु स पिण्डदः ॥
ज़ात्या जातः सुतो मातुः पिण्डदः स्यात्सुतोऽपि च ॥ ३९२ ॥
जनकस्य न किञ्चित्स्यादर्थात्कामप्रवर्तनात् ॥
वायुभूताश्च पितरो दत्ताभिकांक्षिणः सदा ॥
तस्मात्तेभ्यः सदा देयं नृभिधर्मरतैः सदा ॥ ३९३ ॥
ये खाण्ड-मांस-मधु-पायस-सर्पिरन्नैर्-
देशे च कालसहिते च सुपात्रदत्तैः ॥
प्रीणन्ति देव-मनुजान्पितृवंशजातान्
तेषां नृणां तु पितरो वरदा भवन्ति ॥ ३९४ ॥
मया श्राद्धविधिः प्रोक्तो वर्णानां पितृतृप्तिकृत् ॥
एवं दास्यति यः श्राद्धं वरान्सर्वानवाप्स्यति ॥ ३९५ ॥

इति श्रीबृहत्पराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां संहितायां श्राद्धाधिकारो नाम सप्तमोऽध्यायः समाप्तः ॥

---

१. A. reads एकत्वेन for पिण्डैक्येन, and D. also the same. २. B. E. and F. read आगमस्य च for चागसस्तथा.

# बृहत्पराशरसंहिता।

## अथ अष्टमोऽध्यायः।

अथातः सम्प्रवक्ष्यामि शुद्धिं पराशरोदिताम् ॥
सूतके वाप्यशौचे वा यथावत्तां निबोधत ॥ १ ॥
प्रसवं सूतकं प्राहुरशौचं शावमुच्यते ॥
यावत्कालं च यन्मात्रं तथा तावन्निगद्यते ॥ २ ॥
केषां चित्तेन वैं मासं केषां चिन्मरणान्तिकम् ॥
सद्यः शौचास्तथा चान्ये अन्ये चैकाहिकाः स्मृताः ॥ ३ ॥
त्रि-षट्-दश-दशद्वाभ्यां दशापि सह पञ्चभिः ॥
तान्येव त्रिगुणान्याहुर्दिनान्येव मनीषिणः ॥ ४ ॥
वक्ष्यमाणं निबोधध्वमुक्तक्रममिदं द्विजाः।
शाक्तिजो यन्मुनीनां च प्राग् ब्रवीत्कलिधर्मवित् ॥ ५ ॥
विष्णुध्यानरतानां च सदैव ब्रह्मचारिणाम् ॥
गृहमेधिद्विजानां तु तथैव व्रतचारिणाम् ॥ ६ ॥
वेदतत्वार्थवेत्तॄणां नित्यस्नानकृतां तथा ॥
अतत्संसर्गिणामेषां नाशौचं नापि सूतकम् ॥ ७ ॥
संसर्गं वर्जयेद्यत्नात्संसर्गो दोषकारणम् ॥
कुर्यान्नान्नादिसंसर्गं वर्जने स्यादकिल्बिषी ॥८ ॥
वदन्ति मुनयः प्राच्याः संसर्गो दोषकारणम् ॥
असंसर्गः स्वकर्मस्थो द्विजो दोषैर्न लिप्यते ॥ ९ ॥
दानोद्वाहेष्टि-संग्रामे देशविप्लवकादिके ॥
सद्यः शौचं द्विजातीनां सूतकाशौचयोरपि ॥ १० ॥
दातॄणां व्रतिनामेके कवयः सत्त्रिणामपि ॥
सद्यः शौचमदोषाणामूचुर्धर्मविदः कलौ ॥ ११ ॥

---

१ A. B. D. E. and F. read ग्रस्तं for मासं.

सर्वमंत्रपवित्रस्तु अग्निहोत्री षडङ्गवित् ॥
राजा च श्रोत्रियश्चैव सद्यः शौचाः प्रकीर्तिताः ॥ १२ ॥
देशान्तरगते जाते मृते वाऽपि सगोत्रिणि ॥
शेषाहानि दशाहार्वाक् सद्यः शौचमतः परम् ॥ १३ ॥
सत्यप्येकनिवासे तु सद्यः शौचं विशोधनम् ॥
पिण्डनिर्वर्तने जाते मृते वापि सगोत्रजे ॥ १४ ॥
सद्यः शौचं विधातव्यमर्वाक् च दश जन्मनः ॥
बान्धवादिषु विज्ञेयमन्यदूर्ध्वं विधीयते ॥ १५ ॥
नाऽऽशौच-सूतके स्यातां नृपतीनां कदा च न ॥
यज्ञकर्मप्रवृत्तस्य ऋत्विजो दीक्षितस्य च ॥ १६ ॥
पृथक्पिण्डमृते बाले निर्दशेऽन्यत्र च श्रुते ॥
जाते वापि च शुद्धिः स्यात्सद्यः शौचादसंशयम् ॥ १७ ॥
सवेदः साग्निरेकाहाद् ब्राह्मणः शुद्धिमाप्नुयात् ॥
तथैकाहो नृपे संस्थे तथैव ब्रम्हचारिणि ॥ १८ ॥
दुर्भिक्षे राष्ट्रभङ्गे च आपत्काल उपस्थिते ॥
उपसर्गान्मृते वापि सद्यः शौचं विधीयते ॥ १९ ॥
गो-विप्रार्थविपन्नानां आहवेषु तथैव च ॥
ते योगिभिः समा ज्ञेया सद्यः शौचं विधीयते ॥ २० ॥
विप्रे संस्थे व्रतादर्वाक् श्रोत्रिये च तथा द्विजे ॥
अनूचाने गुरौ चैव आचार्ये चापि संस्थिते ॥ २१ ॥
असंस्कृतस्त्रियां राज्ञि श्रोत्रिये निधनं गते ॥
त्रिरात्रमप्यशौचं स्यात्तथैवोदकदायिनः ॥ २२ ॥
विद्वाननग्निको विप्रस्त्रिरात्राच्छुद्धिमाप्नुयात् ॥
मनीषिणः परे ब्रूयुरसपिण्डे अहं मृते ॥ २३ ॥
प्रेतीभूतं च यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः ॥
नियतं ह्यनुगच्छेत त्रिरात्रमशुचिर्भवेत् ॥ २४ ॥
षड्रात्रं नवरात्रं च शवस्पृशां विशुद्धिकृत् ॥
त्र्यहं चैव विशुद्ध्यर्थं धर्मशास्त्रविदो विदुः ॥ २५ ॥

---

१. B. reads विधानेनाग्निको विप्र आशौचात् for सवेदः साग्निरेकाहाद्ब्राह्मणः.
२. B. reads द्विजे मृते for तथा द्विजे.

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ॥
पदे पदे यज्ञफलमनुपूर्वं लभन्ति ते ॥ २६ ॥
अशुचित्वं न तेषां तु पापं वाऽशुभकारणम्[1] ॥
जलाव-गाहनात्तेषां सद्यः शौचं विधीयते ॥ २७ ॥
असगोत्रमसम्बन्धं प्रेतीभूतं तथा द्विजम् ॥
ऊढ्वा दग्ध्वा द्विजाः सर्वे स्नानान्ते शुचयः स्मृताः ॥ २८ ॥
एकरात्रं वदन्त्येके सद्यः स्नानं तथाऽपरे ॥
गोग्रहादिमृतानां[2] च मुनयः शुद्धिकारणम् ॥ २९ ॥
हतः शूरो विपद्येत शत्रुभिर्यत्र कुत्रचित् ॥
स मुक्तो यतिवत्सद्यः प्रविशेत्परवेधसि ॥ ३० ॥
संन्यासी युद्धसंस्थश्च[3] सम्मुखं शत्रुभिर्नरः ॥
सूर्यमण्डलभेत्ताराविति प्राहुर्मनीषिणः ॥ ३१ ॥
पराङ्मुखे हते सैन्ये यो युद्धाय निवर्तते ॥
तत्पदानीष्टितुल्यानि स्युरित्याह पराशरः ॥ ३२ ॥
वदने प्रविशेद्येषां लोहितं शिरसः पतत् ॥
सोमपानेन ते तुल्या बिन्दवो रुधिरस्य वै ॥ ३३ ॥
सन्यासेन मृता ये वै प्रधने ये तनुत्यजः ॥
मुक्तिभाजो नरास्तेस्युरिति वेदोऽपि कीर्तयेत्[4] ॥ ३४ ॥
सद्यः शौचं विधातव्यं शुद्धिरेवं विधियते ॥
नोच्यन्ते ते मृता लोके सद्यो ब्रह्मवपुर्गताः[5] ॥ ३५ ॥
सन्ध्याचारविहिनानां सूतकं ब्राम्हणे ध्रुवम् ॥
अशौचं द्वादशाहं स्यादिति पाराशरोऽब्रवीत् ॥ ३६ ॥
राज्ञां तु द्वादशाहः स्यात्पक्षो वैश्यस्य पावनः ॥
वृषलस्य तथा मासस्त्र्यहादेष्वपि धर्मतः ॥ ३७ ॥
क्षपा च पक्षिणी सद्भिर्मातुलादिषु कीर्तिताः ॥
गर्भस्रावे च[6] पाते च रात्रयो माससम्मिताः ॥ ३८ ॥

---

१. A. reads शौककारणम् for ऽशुभकारणम्. २. A. reads विग्रहादि° for गोग्रहादि°. ३. A. and D. read मृध° for युद्ध°. ४. A. reads निदर्शनम् for ऽपि कीर्तयेत्. ५. A. reads °र्गमाः for °र्गताः. ६. A. B. E. and F. read तु तैरुक्ताः for च पाते च.

स्रावं गर्भस्य विद्वांसो मासादर्वाक् चतुर्थकात् ॥
पातमूर्ध्वं वदन्त्येके तत्राधिक्यं च सूतकम् ॥ ३९ ॥

ऋणि-व्यसनि-रोगार्त-पराधीन-[1]कदर्यकाः ॥
तृष्णावन्तो निराचाराः पितृ-मातृविवर्जिताः ॥ ४० ॥

स्त्रीजिताश्चानपत्याश्च देव-ब्राह्मणवर्जिताः ॥
परद्रव्यं जिघृक्षन्तः सद्यः सूतकिनः [3]सदा ॥ ४१ ॥

सूतके [4]मृतशौचे वा अन्यदापद्यते यदि ॥
पूर्वेणैव तु शुद्ध्येत जाते जातं मृते मृतम् ॥ ४२ ॥

एकपिण्डाश्च दायादाः पृथक्[5]दार-निकेतनाः ॥
जन्मन्यपि मृते वापि तेषां वै सूतकं भवेत् ॥ ४३ ॥

भृगु-वह्नि-प्रपाते च देशान्तरमृतेषु च ॥
बाले प्रेते च [6]संन्यस्ते सद्यः शौचं विधीयते ॥ ४४ ॥

अजातदन्ता ये बाला ये च गर्भाद्विनिर्गताः ॥
न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया ॥ ४५ ॥

विवाहोत्सव-यज्ञेषु कर्तारो [8]मृत-सूतके ॥
पूर्वसंकल्पितानर्थान्भोज्यान्तानब्रवीन्मनुः ॥ ४६ ॥

शिल्पिनः कारुकाश्चैव दासी-दासास्तथैव च ॥
इत्यादीनां न ते स्यातामनुगृह्णन्ति यान् द्विजाः ॥ ४७ ॥

पिता पुत्रेण जातेन दद्याच्छ्राद्धं यथाविधि ।
पितॄणां विधिवद्दानं दत्तं तत्राप्यनन्तकम् ॥
तत्राप्यनन्तकं दानं कर्तव्यं पुत्रजन्मनि ॥ ४८ ॥

प्रसवे च द्विजातीनां न कुर्यात्सङ्करं यदि ॥
दशाहाच्छुद्ध्यते माता अवगाह्य पिता शुचिः ॥ ४९ ॥

अतिमानादतिक्रोधात्स्नेहाद्वा यदि वा भयात् ॥
उद्बध्य म्रियते यस्तु न तस्याग्निः प्रदीयते ॥ ५० ॥

---

१. A. reads °कदर्यकाः. २. A. reads गृहस्वान्ताः for जिघृक्षन्तः. ३ A. reads स्मृताः for सदा, B. E. and. F. too the same. ४. A. reads सत्यशौचे for मृतशौचे. ५. B. reads °कृत° for °दार°, E. and. F. also the same. ६. B. E. and F. read संन्यासि for संन्यस्ते. ७. B. D. and F. substitute विनिःसृताः for विनिर्गताः. ८. A. reads ऽशौच° for मृत°.

न स्नायान्नोदकं दद्यान्नापि कुर्यादशौचताम् ॥
सर्पेण शृंगिणा वापि जलेन चाग्निना तथा ॥ ५१ ॥
न स्नानादौ विपन्नस्य तथाचैवात्मघातिनः ॥
अर्वाक् द्विहायनादग्निं न दद्यान्मृतकस्य च ॥ ५२ ॥
किन्तु तान्निखनेद्भूमौ कुर्यान्नैवोदकक्रियाम् ॥
सर्पादिप्राप्तमृत्यूनां वह्निदाहादिकाः क्रियाः ॥ ५३ ॥
षण्मासे तु गते कार्या मुनिः प्राह पराशरः ॥
शास्त्रदृष्टं बुधैः[1] कार्यमस्थिसञ्चयनादिकम् ॥ ५४ ॥
तत्कृत्वा तूक्तदिवसैः शुद्धिमर्हति धर्मतः ॥
अन्यायमृतविप्राणां ये वोढारो भवन्ति हि ॥ ५५ ॥
अग्निदाश्चैव ये तेषां तथोदकादिदायिनः ॥
उद्बन्धनमृतस्यापि यश्छिन्द्याद्रज्जुपाशकम् ॥ ५६ ॥
ते सर्वे पापसंयुक्ताः प्रायश्चित्तस्य भाजनाः ॥ ५७ ॥

यः सूतकाशौचविशुद्धिकृत्स्यादाख्याय कालं तमनुक्रमेण ॥
पराशरास्याम्बुजानिःसृता या वाच्यास्ततो निष्कृतयो द्विजास्ते ॥५८॥

सूतकाशौचयोरुक्तः शुद्धिपन्थाऽनुपूर्वशः ॥
सर्वैनसां विशुध्यर्थं प्रायश्चित्तं यथाब्रवीत् ॥ ५९ ॥
मनुर्वा याज्ञवल्क्यस्तु वसिष्ठः प्राह निष्कृतिम् ॥
सा कृतादिषु वर्णानां सति धर्मे चतुष्पदे ॥ ६० ॥
मानसा वाचिका दोषास्तथा वै कार्यकारिताः ॥
धर्माधीना नृणां सर्वे जायन्ते तेऽप्यनिच्छताम् ॥ ६१ ॥
तेषामुपरताक्षाणां प्रत्यहं शुभमिच्छताम् ॥
शक्तिजो निष्कृतिं प्राह युगधर्मानुरूपतः ॥ ६२ ॥
विकृतव्यवहाराणां[2] पापो निष्कृतिकाङ्क्षिजः ॥
कति विप्रैः कथं रूपैरिति वाच्या भवेद्धि सा ॥ ६३ ॥
तद्रूपं च प्रवक्ष्यामि यावद्भिः सा द्विजैर्भवेत् ॥
यथाविधाश्च विप्रास्युरिति विद्वन् प्रकीर्त्यते ॥

---

१. A. reads द्विजैः instead of बुधैः. २. F. reads this whole line thus:—विकृतव्यवहाराणां पर्षन्निष्कृतिकृद्विजः ।; while A. reads निष्कृतिं व्यवहाराणां वर्षान्निष्कृतिकृद्यथा ।.

पर्षद्दशावरा प्रोक्ता ब्राह्मणैर्वेदपारगैः ॥
सायद्रूपा स धर्मः स्यात् स्वयम्भूरित्यकल्पयत् ॥ ६४ ॥
वेद-शास्त्रविदो विप्रा यं ब्रूयुः सप्त पंच वा ॥
त्रयो वाऽपि स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥ ६५ ॥
संयमं नियमं वाऽपि उपवासादिकं च यत् ॥
तद्गिरा परिपूर्णं स्यान्निष्कृतिर्व्यावहारिकी ॥ ६६ ॥
न लक्षेणापि मूर्खाणां न चैवाऽधर्मवादिनाम् ॥
विदुषां नापि लुब्धानां न चापि पक्षपातिनाम् ॥ ६७ ॥
श्रुता-ध्ययनसम्पन्नः सत्यवादी जितेंद्रियः ॥
सदा धर्मरतः शान्त एकः पर्षत्त्वमर्हति ॥ ६८ ॥
न सा वृद्धैर्न तरुणैर्न सुरूपैर्धनान्वितैः ॥
त्रिभिरेकेन पर्षत् स्याद्विद्भिर्विदुषापि च ॥ ६९ ॥
वयसा [1]लघवोऽपि स्युर्वृद्धा धर्मविदो द्विजाः ॥
शिशवोऽपि हि मध्यस्थाः सर्वत्र समदर्शनाः ॥ ७० ॥
न सा वृद्धैर्भवेद्विप्रैर्वृध्दास्युर्धर्मवादिनः ॥
यत्र सत्यं स धर्मः स्यात्छलं यत्र न गृह्यते ॥ ७१ ॥
न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न वदन्ति धर्मम् ॥
धर्मो वृथा यत्र न सत्यमस्ति सत्यं न तद्यन्न हृदानुविद्धम् ॥ ७२ ॥
निष्कृतौ व्यवहारे च व्रतस्याशंसने तथा ॥
धर्मं वा यदि वाऽधर्मं परिषत्प्राह तद्भवेत् ॥ ७३ ॥
स्त्रीणां च बाल-वृद्धानां क्षीणानां कुशरीरिणाम् ॥
उपवासाद्यशक्तानां कर्तव्योऽनुग्रहश्च तैः ॥ ७४ ॥
ज्ञात्वा देशं च कालं च व्ययं सामर्थ्यमेव च ॥
कर्तव्योनुग्रहः सद्भिर्मुनिभिः परिकीर्तितः ॥ ७५ ॥
लोभान्मोहाद्भयान्मैत्र्याद्यदि कुर्युरनुग्रहम् ॥
नरकं यान्ति ते मूढाः शतधा वाप्तवाचिनः ॥ ७६ ॥
प्रविश्य पर्षदं ते वै सभ्यानामग्रतःस्थिताः ॥
यथाकालं प्रकुर्युस्ते प्रायश्चित्तं तदीरितम् ॥ ७७ ॥

---

१. A. reads तनवः for लघवः. २. A. B. read छलेनानुविद्धम् for हृदानुविद्धम्. ३. चोत्तमान्ते for पर्षदं ते is in all except A. and B.; while B. reads पार्षदाम् for सभ्यानाम्.

किन्त्वयं याचते देवा वदन्तोऽत्र द्विजातयः ॥
सर्वे कुर्वन्ति नियमं गतपापं न संशयः ॥ ७८ ॥

प्रसादो द्विविधो ज्ञेयो दैव्यश्चासुर एव च ॥
क्रीडयापि च तत्रैव देयास्तथैव ते द्विजाः ॥ ७९ ॥

व्यवहारे गोसमैस्तु प्रब्रूयाद्वापि वैरतः ॥
यथाकृतं च तत्पापं तत्तथैव निवेदयेत् ॥ ८० ॥

यस्तेषामन्यथा ब्रूयात्स पापीयान्न संशयः ॥
सत्यमसत्यमेवात्र विपर्यस्तं वदेद्यतः[1] ॥ ८१ ॥

स एवानृतवादी स्यात्सोऽनन्तं नरकं व्रजेत् ॥
ज्योतिषं व्यवहारं च प्रायश्चितं चिकित्सितम् ॥ ८२ ॥

अजानन् यो नरो ब्रूयात्साहसं किमतः परम् ? ॥
व्यवहारश्च तैः प्रोक्तो मन्वाद्यैर्धर्मवादिभिः ॥ ८३ ॥

प्रजाभिर्नतु सर्वाभिर्मान्यैः[2]श्चैव तु मानवैः ॥
तच्छोधकप्रमाणानि लिखितादीनि तैर्विना ॥ ८४ ॥

जलादीनि च दिव्यानि सांख्योक्तशपथानि च ॥
अन्ये जनपदाचारा कुल[3]धर्मस्तथापरः ॥
परिषद्ब्राम्हणैर्मध्या[4] निर्णेतव्या[5] यथाविधि ॥ ८५ ॥

जन्म जात्यनुसारेण देश-कालादिधर्मतः ॥
कर्तव्यः सत्तमैः सर्वैर्माननीयश्च वादिभिः[6] ॥ ८६ ॥

गो-ब्राह्मणहतादीनां तथा दम्भादिकारिणाम् ॥ ॥
तप्तकृच्छ्रेण शुद्धिः स्यादिति[7] पाराशरोऽब्रवीत् ॥ ८७ ॥

भोजयेद्ब्राम्हणान्पश्चात्सवृषा गौश्च दक्षिणा ॥
जायन्ते पापनिर्मुक्ताः शक्तिसूनोर्यथा वचः ॥ ८८ ॥

अ[8]नाशकान्निवृत्ता ये ब्रम्हचर्यात्तथा द्विजाः ॥
वैडालिकास्ते विज्ञेयाः सर्वधर्मविवर्जिताः ॥ ८९ ॥

---

१. E. reads च वेदितः instead of वदेद्यतः. २. A. only reads नान्यौ for मान्यैः. ३. only B. reads अणु° for कुल°. ४. A. reads मत्वा for मध्या. ५. A. reads मानितव्या for निर्णेतव्या. ६. A., B. and F. read °योऽभिवादिभिः. ७. B. D. E. and F. read शुद्धिः स्यात् for शुध्येयुरिति. ८. C. and F. read अनाशिका° for अनाशका°.

[१]सर्वत्र प्रविशन्तो ये ये च वैडालिकैः समाः ॥
तेषां सर्वाण्यपत्यानि पुल्कसैः सह पातयेत् ॥ ९० ॥
स्त्रीणां च बाल-वृद्धानां क्षयीणां कुशरीरिणाम् ॥
उपवासाद्यशक्तानां कर्तव्योऽनुग्रहश्च तैः ॥ ९१ ॥
ज्ञात्वा देशं च कालं च वयः सामर्थ्यमेव च ॥
कर्तव्योऽनुग्रहः सद्भिर्मुनिभिः परिकीर्तितः ॥ ९२ ॥
ब्रह्मघ्नश्च सुरापश्च स्तेयी गुर्वङ्गनागमः ॥
एतेषां निष्कृतिं ब्रूयादेतत्संसर्गिणामपि ॥ ९३ ॥
द्वादशाब्दं च विचरेत् ब्रह्मघ्नस्तत्कपालधृक् ॥
सर्वत्र ख्यापयन्कर्म भिक्षां विप्रेषु संचरन् ॥ ९४ ॥
दृष्ट्वा सेतुं समुद्रस्य स्नात्वा वै लवणांभसि ॥
ब्राह्मणेषु चरन् भिक्षां स्वकर्म ख्यापयञ्छुचिः ॥ ९५ ॥
मुण्डितस्तु शिखावर्ज्यः सकौपीनो निराश्रयः ॥
चोर-चीवरवासा वै त्रिः स्नायी सन् शुचिर्व्रती ॥ ९६ ॥
[३]संयताक्षश्चरेच्छान्तश्छत्रोपानद्विवर्जितः ॥
ब्रह्मघ्नोऽस्मीत्यहं वाचमिति सर्वत्र वै वदेत् ॥ ९७ ॥
गवां च विंशतिं दद्याद्दक्षिणां वृषसंयुताम् ॥
ब्राह्मणेभ्यो निवेद्यैताः शुचिराख्याय भूपतेः ॥ ९८ ॥
पूर्वोक्तप्रत्यवायानां प्रायश्चित्तमिदं स्मृतम् ॥
ब्राह्मणानां प्रसादेन तीर्थेषु गमनेन च ॥ ९९ ॥
गोशतस्य प्रदानेन शुध्यन्ति नात्र संशयः ॥
अवभृथेऽश्वमेधस्य स्नात्वा शुद्धिमवाप्नुयात् ॥ १०० ॥
आख्याय नृपतेर्वाऽपि तेन संशोधितः शुचिः ॥
महापापानि सर्वाणि कथयित्वा महीपतेः ॥ १०१ ॥
निष्कृतिं तद्गिरा दद्यादन्यथा तेऽपि तत्समाः ॥
रोगार्ताङ्गं द्विजं वापि मार्गे खेदसमन्वितम् ॥
दृष्ट्वा कृत्वा निरातंकं ब्रह्मघ्नः शुद्धिमाप्नुयात् ॥ १०२ ॥

---

१. A. reads सर्वे प्रवेशिता ये वै. for सर्वत्र प्रविशन्तो ये २. A. B. E. F. read घातयेत् instead of पातयेत्. ३. A. and D. read संजिताक्षः for संयताक्षः; while C. reads संयुताक्षः.

असंख्यातं धनं दत्वा विप्रेभ्यो वापि शुध्यति ॥

अरण्ये निर्जने जप्त्वा शुध्येद्वै वेदसंहिताम् ॥ १०३ ॥

सुरापस्य प्रवक्ष्यामि निष्कृतिं श्रोतुमर्हथ ॥

सुरापस्तु सुरां तप्तां पयो वा जलमेव वा ॥

तप्तं गोमूत्रमाज्यं वा मृतः पीत्वा विशुध्यति ॥

जटी वा चैलवासी वा ब्रह्महत्याव्रतं चरेत् ॥ १०४ ॥

यद्यज्ञानात् पिबेद्विप्रो द्विजातिर्वा सुरां पुनः ॥

पुनः संस्कारकरणाच्छुद्ध्येदाह पराशरः ॥ १०५ ॥

स्तेयं कृत्वा सुवर्णस्य शुद्ध्यै सर्वं द्विजातये ॥

समर्प्य, मुसलं राज्ञे ख्यापयेत्स्तेयकर्मकृत् ॥ १०६ ॥

शक्तिं चोभयतस्तीक्ष्णामायसं दण्डमेव च ॥

खादिरं लगुडं वापि हन्यादेकेन तं नृपः ॥ १०७ ॥

जीवन्नपि भवेच्छुद्धो मुक्तो वा तेन पाप्मना ॥

मृतश्चेत्प्रेत्य संशुध्येदिति पाराशरोऽब्रवीत् ॥ १०८ ॥

अयः प्रतिकृतिं कृत्वा वह्निवर्णां च तां धमेत् ॥

गुर्वंगनागमं तस्यां लोहमय्यां तु शाययेत् ॥ १०९ ॥

वृषणौ पुनरुत्कृत्य नैर्ऋत्यामुत्सृजेत्तनुम् ॥

स मृतः शुद्धिमाप्नोति नान्यतस्तस्य निष्कृतिः ॥ ११० ॥

संवत्सरं चरेत् कृच्छ्रं प्रजापत्यमथापि वा ॥

चांद्रायणं चरेद्वापि त्रीन्मासान् नियतेंद्रियः ॥ १११ ॥

व्रते तु क्रियमाणे वै विपत्तिः स्यात्कथंचन ॥

स मृतोऽपि भवेच्छुद्ध इति धर्मविनिर्णयः ॥ ११२ ॥

अनिर्दिष्टस्य पापस्य तथोपपातकस्य च ॥

तच्छुध्यैपावनं कुर्याच्चांद्रं व्रतं समाहितः ॥ ११३ ॥

तिष्ठेन्मासं पयोऽशित्वा पराकं वा चरेद्व्रतम् ॥

अनिर्दिष्टस्य पापस्य शुद्धिरेषा प्रकीर्तिता ॥ ११४ ॥

ब्राम्हणः क्षत्रियं हत्वा गवां दद्यात्सहस्रकम् ॥

वृषेणैकेन संयुक्तं पापादस्मात्प्रमुच्यते ॥ ११५ ॥

---

१. Except A. all read °त्रिर्वेदसंहिताम् for वै वेदसंहिताम्. २. A. reads ब्रह्मघ्नस्य for ब्रह्महत्या°. ३. A. reads °वासा for °वासी. ४. A. reads पावनः instead of पाप्मना.

त्रीणि वर्षाणि शुद्ध्यर्थं ब्रम्हघ्नस्य व्रतं चरेत् ॥
चान्द्रायणानि वा त्रीणि कृच्छ्राणि त्रीणि वाऽऽचरेत् ॥ ११५॥
वैश्यं हत्वा द्विजश्चैवमब्दमेकं व्रतं चरेत् ॥
गवां ह्येकशतं दद्याच्चरेच्चान्द्रायणानि च ॥ ११६ ॥
कृच्छ्राणि त्रीणि वा कुर्याद्वचनाद्विदुषामसौ ॥
ये हन्युरप्रदुष्टां स्त्रीं चातुर्वर्णां द्विजातयः ॥
शूद्रहत्या व्रतं ते तु चरन्तः शुद्धिमाप्नुयुः ॥ ११७ ॥
शूद्रां ये चानुलोम्येन निहन्त्यव्यभिचारिणीम् ॥
मुनयः शुद्धिमिच्छन्ति चन्द्रव्रतेन केचन ॥ ११८ ॥
व्यभिचारात्तु ते हत्वा योषितो ब्राम्हणादयः ॥
तिलधेनुं बस्तमविं क्रमाद्दद्युर्विशुद्धये ॥ ११९ ॥
साध्वीनां[1] तु नरो दत्वा गवां चैव सहस्रकम् ॥
चीर्णेन शुद्धिमाप्नोति योषाहत्याव्रतं चरेत् ॥ १२० ॥
अथ गोघ्नस्य वक्ष्यामि निष्कृतिं श्रोतुमर्हथ ॥
यथा यथा विपत्तिः स्याद्गवां तथोपपद्यते ॥ १२१ ॥
गोघाती पंचगव्याशी गोष्ठशायी च गोनुगः ॥
मासमेकं व्रतं चीर्त्वा गोप्रदानेन शुद्ध्यति ॥ १२२ ॥
एकपादे तु लोमानि द्वये श्मश्रुनिकृन्तनम् ॥
पादत्रये शिखावर्जं सशिखं तु निपातने ॥ १२३ ॥
साशिखं वपनं कृत्वा द्विसन्ध्यमवगाहनम् ॥
गवां मध्ये वसेद्रात्रौ दिवा गाः समनुव्रजेत् ॥ १२४ ॥
तिष्ठन्तीभिश्च तिष्ठेत व्रजन्तीभिःसह व्रजेत् ॥
पिबन्तीभिः पिबेत्तोयं संविशन्तीभिश्च संविशेत् ॥ १२५ ॥
शृंग-कर्णादिसंयुक्तं चर्मोत्कृत्य तदावृतः ॥
विप्रौकःसु चरेद्भिक्षां स्वकर्म ख्यापयन्व्रती ॥ १२६ ॥
गोघ्नस्य देहि मे भिक्षामिति वाचमुदीरयेत् ॥
मासमेकं व्रतं कृत्वा गोप्रदानेन शुद्ध्यति ॥ १२७ ॥
चौर-व्याघ्रादिकेभ्यश्च सर्वप्राणैः समुद्धरेत् ॥
गर्तप्रपात-पंकाच्च तथान्यादपकारतः[2] ॥ १२८ ॥

---

१. A. and F. read सास्थिनां च अनस्थीनां for साध्वीनां तु नरो दत्वा-
२. A. B. D. E. and F. read उपकारतः for अपकारतः-

भोजयेद्ब्राम्हणान्पश्चात्पुष्प धूपादिपूर्वकम् ॥
दद्याद्गां च वृषं चैकं ततः शुद्ध्यति किल्विषात् ॥ १२९ ॥
मुनयः केचिदिच्छान्ति विचित्रासु विपात्तिषु ॥
यथासम्भवतस्तासु पृथक् पृथक् विनिष्कृतिम् ॥ १३० ॥
शस्त्र-वस्त्राश्म-मृत्पिंड-यष्टि-मुष्टि-प्रधावनम् ॥
योक्त्रेण तारणं रोधो बन्धनं विद्युदग्नयः ॥ १३२ ॥
ग्रह-पङ्क-प्रपातश्च बद्धव्याघ्रादिभक्षणम् ॥
क्षुत्तृट्-रोगचिकित्सा च तथाऽतिदोह-वाहने ॥ १३३ ॥
मृत्युस्थानानि चैतानि गवामति प्रधावनम् ॥
प्रब्रूयात्पृथगेतेषु प्रायश्चितं पराशरः ॥ १३४ ॥
उपेक्षणं च पङ्कादौ तथोपविषभक्षणे ॥
वक्ष्यमाणक्रमेणैतच्छृणुध्वं द्विजसत्तमाः ॥ १३५ ॥
शस्त्रेण त्रीणि कृच्छ्राणि तदर्धं वा समाचरेत् ॥
अश्मना द्वे चरेत्कृच्छ्रे मृत्पिण्डे नापि कृच्छ्रकम् ॥ १३६ ॥
यष्ट्याघाते चरेत्कृच्छ्रे साक्षान्मुष्ट्या तु तच्चरेत् ॥
योक्त्रेण पादमेकं तु तारणे पादमेव च ॥ १३७ ॥
रोधने कृच्छ्रपादे द्वे कृच्छ्रमेकं तु बन्धने ॥
कूपपाते चरेत्कृच्छ्रमर्धं वाप्यां समाचरेत् ॥ १३८ ॥
गोशत्कृत्पिण्डघाते च प्राजापत्यं चरेद्द्विजः ॥
क्षुत्तृड्-रोगचिकित्सासु कृच्छ्रमुत्प्रेक्षणे चरेत् ॥ १३९ ॥
पतितां पङ्कलग्नां वा अवलिप्तां च यो नरः ॥
स्वस्य चान्यस्य चोपेक्ष्य सार्धं कृच्छ्रं चरेच्छुचिः ॥ १४० ॥
एका च द्वहुभिर्बद्धा क्ष्वेडिता चेन्म्रियेत गौः ॥
पादं पादं चरेयुस्ते इति पाराशरोऽब्रवीत् ॥ १४१ ॥
सुबद्धां येऽवलिप्ताङ्गां पश्यन्तो नोपकुर्वते ॥
घातनोत्प्रेक्षणं प्रोक्तं चरेयुस्ते व्रतं नराः ॥ १४२ ॥
या गर्तादौ विपद्येत क्ष्वेडिता सम्प्रपत्य वा ॥
पादे क्ष्वेडितयोरुक्तं तत्कर्ता व्रतमाचरेत् ॥ १४३ ॥

१. A. reads °कुड्य° for °पंक°. २. A. reads अतिप्रधातनम् for अति प्रधावनम्. ३. A. reads शास्त्रेण for शस्त्रेण. ४. B. reads अवलुप्ताङ्गां for अवलिप्ताङ्गां ५. A. reads पाते for पादे.

प्रबद्धा रज्जुदोषेण गोर्विपद्येत यस्य सः ॥
व्रतपादं चरेच्छुद्ध्यै किंचिद्दद्याच्च दक्षिणाम् ॥ १४४ ॥
योगामपालयन् दुह्यादति वा वाहयेद्वृषम् ॥
यदि म्रियेत तद्दोषात्तदा कृच्छ्रार्द्धमाचरेत् ॥ १४५ ॥
घासं यो न क्षुधार्तस्य तृषार्तस्य न वा जलम् ॥
स्वीकृतस्य न चेद्दद्यात्स तत्पादव्रतं चरेत् ॥ १४६ ॥
या तु बद्धा चिकित्सार्थं विशल्यकरणाय च ॥
औषधादिप्रदानाय विपत्तौ नास्ति पातकम् ॥ १४७ ॥
विद्युत्पातादि-दाहाभ्यां कुण्डस्य पतनादिभिः ॥
गोभिर्विपत्तिमापन्नैस्तत्र दोषो न विद्यते ॥ १४८ ॥
पालयन्पश्यतोऽरण्ये गौस्तु व्याघ्रादिभिर्हता ॥
अकुर्वतः प्रतीकारं कृच्छ्रार्धं तस्य पावनम् ॥ १४९ ॥
शृण्वन् शून्येषु पालेषु तथान्यारण्यगामिषु ॥
पाले संभाषयत्युच्चैर्हन्यात्तत्र न दोषभाक् ॥ १५० ॥
गर्भिणी गर्भशल्या तु तद्गर्भे तु विशल्यतः ॥
यत्नतो गौर्विपद्येत तत्र दोषो न विद्यते ॥ १५१ ॥
गर्भस्य पातने पादं द्वौ पादौ गात्रसंभवे ॥
पादोनं व्रतमाचष्ट हत्वा गर्भमचेतनम् ॥ १५२ ॥
अङ्ग-प्रत्यंगभूतेन तद्गर्भे चेतनान्विते ॥
द्विगुणं गोव्रतं कुर्यादेषा गोघ्नस्य निष्कृतिः ॥ १५३ ॥
वस्त्राद्युत्रासने गौश्च गलदामकदोषतः ॥
पादयोर्बंधने चैव पादोनं व्रतमाचरेत् ॥ १५४ ॥
घण्टाभरणदोषेण गौश्चेद्बंधमवाप्नुयात् ॥
चरेदर्धं व्रतं तत्र भूषणार्थं च यत्कृतम् ॥ १५५ ॥
गोविपत्ति-वधाशङ्की कुर्याद्यो नैव निष्कृतिम् ॥
सतद्गोरोमतुल्यानि नरकाण्याविशेत्समाः ॥ १५६ ॥

१. A. reads दुःखात् for दुह्यात्. २. A. reads बन्धनमाप्नुयात् inst of बंधमवाप्नुयात्. ३. A. B. D. E. and F. read °विपत्तौ वधाशंकी °विपत्तिवधाशंकी. ४. A. reads °तुल्या वै for °तुल्यानि.

यःस्नात्वा पापसम्भीतो विप्राराधनतत्परः ॥
तद्वृत्तां निष्कृतिं कुर्याद्गतैनाः सोऽश्नुते शुभम् ॥ १५७ ॥
अन्यत्प्राणिवधस्याथ प्रवक्ष्यामि विशोधनम् ॥
गजादिवधशुद्ध्यर्थं यद्भुतं या च दक्षिणा ॥ १५८ ॥
हस्तिनं तुरगं हत्वा वृषभं खरमेव च ॥
वृषान्यं वा शतगुणं वृषं दद्याद्यथाक्रमम् ॥ १५९ ॥
क्षणाद्गोनिष्क्रयं कृत्वा परगोवधकृन्नरः ॥
तस्याथ निष्कृतिं कुर्याद्वधशुद्धिमपेक्षया ॥ १६० ॥
हंसं श्येनं कपिं गृध्रं जल-स्थलशिखण्डिनम् ॥
भासं च हत्वा स्युर्गावः शुद्ध्यै देयाः पृथक् पृथक् ॥ १६१ ॥
हंस-सारस-चक्राव्ह-मयूर-मद्गु-कुक्कुटान् ॥
आटी-पारावत-क्रौंच-शुकहा नक्तभोजनात् ॥ १६२ ॥
मेषा-ऽजघ्नो वृषं दद्यात्प्रत्येकं शुद्धये द्विजः ॥
मनीषिणो वदन्त्येनां प्राणिनां वधनिष्कृतिम् ॥ १६३ ॥
क्रौंच-सारस-हंसादिशिख-सारसकुक्कुटान् ॥
शुक-टिट्टिभसंघघ्नो नक्ताशी बकहा शुचिः ॥ १६४ ॥
पारावत-कपोतघ्नः सारि-तित्तिर-चाषहा ॥
त्रिसंध्यांतर्जले प्राणानायम्य स्याच्छुचिर्द्विजः ॥ १६५ ॥
काकं गृध्रं च श्येनं च अन्यं क्रव्यादपक्षिणम् ॥
हत्वा स्यादुपवासेन शुद्धिमाह पराशरः ॥ १६६ ॥
मार्जारं मूषकं सर्पं हत्वाऽजगर-डिण्डिभौ ॥
शर्कराभोजनं दण्डमायसं च ददन् शुचिः ॥ १६७ ॥
मेषं च शशकं गोधां हत्वा कूर्मं च शल्लकम् ॥
वार्ताकं गृंजनं जग्ध्वा ऽहोरात्रोपोषणाच्छुचिः ॥ १६८ ॥
वृकं च जंबुकं हत्वा तरक्षर्क्षौ तथा द्विजः ॥
त्रिरात्रोपोषितः शुद्ध्येत्तिलप्रस्थप्रदानतः ॥ १६९ ॥

---

१. A. reads उक्तां च for तद्वृत्तां २. A reads करभं for वृषभं. ३. F. reads वृकान् for वृषान्. ४, A. चांशुकं गुंजां, C. too the same, while F. reads पंचांशुकं गुंजां. ५. A. reads नृणां for क्षणात् and B. क्रणात्. ६. A. reads दत्वा for कृत्वा, F. too the same. ७. B. E. and F. read पिक° for हंस°. ८. F. reads °मद्गुघ्नः for °संघघ्नः ९. A.reads श्यहात् for बकहा. १० A. B. D. E. and F. read कृशरा° for शर्करा°. ११. A reads this whole line as— त्रिस्नात्वैकोपवासेन शुद्धः स्याद्द्विजपूजनात्.

द्विजः शाखामृगं हत्वा सिंहं चित्रकमेव च ॥
कृत्वा सप्तोपवासान्स दद्याद्ब्राह्मणभोजनम् ॥ १७० ॥
महिषोष्ट्रगजाऽश्वानां हत्वा चान्यतमं द्विजः ॥
त्रिः स्नात्वा चोपवासेन शुद्धः स्याद्द्विजपूजनात्[1] ॥ १७१ ॥
वराहं यदि वा रोहं हत्वा मृगमकामतः ॥
अफालकृष्टभोजी सन् नक्तेनैकेन शुद्ध्यति ॥ १७२ ॥
अथान्यत्सम्प्रवक्ष्यामि अस्पृश्यस्पर्शनादिषु ॥
अभक्ष्यभक्षणादौ च निष्कृतिं श्रोतुमर्हथ ॥ १७३ ॥
उदक्या ब्राह्मणी स्पृष्टा मातंगपतितेन च[2] ॥
चान्द्रायणेन शुद्ध्येत द्विजानां भोजनेन च ॥ १७४ ॥
कापालिकादिकां नारीं गत्वाऽगम्यां तथा पराम् ॥
भुक्त्वा विप्रस्तद्दिनं स्याच्छुद्धिःचंद्रव्रतेन तु ॥ १७५ ॥
कामतस्तु द्विजः कुर्यादुक्तस्त्रीगमनं यदि ॥
चंद्रव्रतद्वयं शुध्यै प्राह पाराशरो मुनिः ॥ १७६ ॥
दुग्धं सलवणं सक्तून् सदुग्धान्निशि सामिषान् ॥
दन्तच्छिन्नान्सकृद्दंतान्पृथक् पीतजलानि च ॥ १७७ ॥
योऽद्यादुच्छिष्टमाज्यं तु पीतशेषं जलं पिबेत् ॥
एकैकशो विशुद्ध्यर्थं विप्रः चंद्रव्रतं चरेत् ॥ १७८ ॥
वासांसि धावतो यत्र[3] पतन्ति जलबिन्दवः ॥
तदपुण्यं जलस्थानं नरकस्य शिलान्तिकम्[4] ॥ १७९ ॥
तत्र पीत्वा जलं विप्रः श्रान्तस्तृट्परिपीडितः[5]
तदेनसो विशुद्ध्यर्थं कुर्याच्चान्द्रायणं व्रतम् ॥ १८० ॥
नटीं शैलूषिकीं चैव रजकीं वेणुवादिनीम्[6] ॥
गत्वा चांद्रायणं कुर्यात्तथा चर्मोपजीविनीम् ॥ १८१ ॥
गां नृपं चैव वैश्यं च शूद्रं वाप्यनुलोमजम् ॥
क्षत्रियादिस्त्रियं गत्वा विप्रश्चांद्रायणं चरेत् ॥ १८२ ॥
ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददन्[7] ॥
द्वावप्येतावभोज्यान्नौ चरेतां शशिनो व्रतम् ॥ १८३ ॥

---

१. F. reads °भोजनात् for °पूजनात्. २. B. reads पतितेनांत्यजेन वा, E. and F. also read the same. ३. B. reads यस्य for यत्र, E. and F. also the same. ४. A. B. E. and F. read शिलांकितम् for शिलांतिकम्. ५. A. B. E. and F. read शांतः for श्रांतः. ६. A. reads °जीविनीम् for °वादिनीम्. ७. ८. In both places B. D. E. and F. read ह्यदन् for ददत्.

विप्रेणामंत्रितोऽविप्रः शूद्राहूतश्च योऽश्नुते ॥
आमंत्रयितृ-भोक्तारौ शुध्येतामैन्दवेन तु ॥ १८४ ॥
समानार्षां च यो गच्छेन्मात्रा सह सगोत्रजाम् ॥
मातुलस्य सुतां चैव विप्रश्चान्द्रायणं चरेत् ॥
पीतशेषं जलं पीत्वा भुक्तशेषं तथा घृतम् ॥
अत्त्वा मूत्र-पुरीषे तु द्विजश्चान्द्रायणं चरेत् ॥ १८७ ॥
सूनिहस्ताच्च गोमांसमत्त्वामद्यमकामतः ॥
पीत्वा चंद्रव्रतं कुर्यात्पावनं शुद्धिदं परम् ॥ १८८ ॥
साग्निः सन्पंचयज्ञान्यो न कुर्वीत द्विजाधमः ॥
परपाकरतो नित्यं आत्मपाकविवर्जितः ॥ १८९ ॥
अदाता च सदा लुब्धः श्वपचः परिकीर्तितः ॥
यो द्विजोऽस्यान्नमश्नाति स कुर्यादैन्दवं व्रतम् ॥ १९० ॥
गणिका-गणयोरन्नं यदन्नं बहुयाजकम्[१] ॥
सीमन्तोन्नयने भुक्त्वा द्विजश्चांद्रायणं चरेत् ॥ १९१ ॥
अजानन् सम्यगश्नीयात्पुत्रजन्मनि यो द्विजः ॥
सोऽभक्ष्यसममश्नाति द्विजश्चांद्रायणं चरेत् ॥ १९२ ॥
महापातकिनामन्नं योद्यादज्ञानतो द्विजः ॥
अज्ञानात्तप्तकृच्छ्रं तु ज्ञानाच्चांद्रायणं चरेत् ॥ १९३ ॥
प्रपात-विष-वह्न्यम्बु-प्रव्रज्योद्बन्धनाशकात् ॥
च्युतो हतश्च हंता च प्रत्यवासानिकाः स्मृताः ॥ १९४ ॥
केचिदेताद्विशुद्ध्यर्थमिच्छन्ति व्रतमैंदवम् ॥
दक्षिणां सवृषां गां च दद्युश्च द्विजभोजनम् ॥ १९५ ॥
गृहद्वारेऽतिथौ प्राप्ते तस्यादत्वा समश्नुते ॥
अभोज्यमशनं तच्च भुक्त्वा चांद्रायणं चरेत् ॥ १९६ ॥
सव्यहस्तस्थिते दर्भे यो द्विजः समुपस्पृशेत्[४] ॥
असृक्पानेन तुल्यं च पीत्वा चान्द्रायणं चरेत् ॥ १९७ ॥
भुक्त्वा शय्यागतः पीत्वा विप्रश्चांद्रायणं चरेत् ॥
अभक्ष्येण समं तद्वै प्रायश्चित्तं समं भवेत् ॥ १९८ ॥

१. B. E. and F. read °याचकम् for °याजकम्. २. These three verses are not given in A. ३. A. reads योऽभक्ष्यं च समश्नाति for सोऽभक्ष्यसममश्नाति. ४. B. D. E. and F. read समुपासते for समुपस्पृशेत्.

आसनारूढपादः सन्वस्त्रस्यार्धमधः कृतम् ॥
धरामुखेन यो भुंक्ते द्विजश्चांद्रायणं चरेत् ॥ १९९ ॥
उद्धृत्य वामहस्तेन यत्किंचित्पिबते द्विजः ॥
सुरापानेन तत्तुल्यं पीत्वा चांद्रायणं चरेत् ॥ २०० ॥
स्पृष्टेन तेन संध्यायाद्यदि तच्छ्रुतमश्नुते ॥
चरन् चांद्रायणं शुद्ध्यै त्रीणि कृच्छ्राणि वा द्विजः ॥
अभीयाद्येन स्पृष्टेन उच्छिष्टं चाश्नुते हि सः ॥
चरेच्चांद्रायणं शुद्ध्यै त्रीणि कृच्छ्राणि च द्विजः ॥ २०१ ॥
चांद्रायणं नवश्राद्धे पाराको मासिके मतः ॥
न्यूनाब्दे पादकृच्छ्रं स्यादेकाहः पुनराब्दिके ॥ २०२ ॥
स्नानमन्येषु कुर्वीत प्राणायामं जपं तथा ॥
यःस्वैरिणीनां च पुनर्भुवां च यः कामचारिद्विजयोषितां च ॥
रेतोधृतां पाकमनाय दद्याद्विप्रः स चंद्रव्रतकृच्छुचिः स्यात् ॥
वेश्मन्यज्ञातचांडालो द्विजातेर्यदि तिष्ठति ॥
ब्रह्मकूर्चं चरेन्मासं त्रिः स्नायी नियतेन्द्रियः ॥ २०३ ॥
स्नेहांश्च घृततैलादीन्वस्त्राणि चासनानि च ॥
बहिः कृत्वा दहेद्गेहं संशुद्धो भोजयेद्द्विजान् ॥ २०५ ॥
गोविंशतिं वृषं चैकं तेभ्यो दद्याच्च दक्षिणाम् ॥
इमं च निष्क्रयं ब्रूयुः के[1]ऽपि चांद्रायणत्रयम् ॥ २०६ ॥
अ[2]ल्पपापस्य शुद्ध्यर्थं चरेत्सां[3]तपनं व्रतम् ॥
इमं च निष्क्रयं दद्यादित्येके मुनयो विदुः ॥ २०७ ॥
महापातक शुध्यर्थं स[4]र्वा निष्कृतयो नरैः ॥
नृप-ग्रामेशविदितैः कुर्वाणैः शुद्धिराप्यते ॥ २०८ ॥
सुरा-मूत्र-पुरीषाणां लीढा त्वेकमकामतः ॥
पुनः संस्कारकरणाच्छुद्ध्येदाह पराशरः ॥ २०९ ॥
अभक्ष्यभक्षणो विप्रस्तथैवापेयपानकृत् ॥
व्रतमन्यत्प्रकुर्वीत वदन्त्यन्ये द्विजोत्तमाः ॥ २१० ॥
कुशा-ऽब्जा-ऽश्वत्थ-पालाश-बिल्वोदुम्बरवारिणा ॥
पीतेन जायते शुद्धिः षड्रात्रेण न संशयः ॥ २११ ॥

---

१. A. reads चांद्रायणं च केचन for केऽपि चांद्रायणत्रयम्. २. B. D. E. and F. read अस्य for अल्प°. ३. A. reads °वा सैन्दवं for सांतपनं. ४. A. B. D. E. and F. read सर्वनिष्कृतये for सर्वा निष्कृतयो.

द्रोण्यम्बूशीर-कुम्भाभः स्वस्पृष्टं केशवारि च ॥
पीत्वारण्ये प्रपातोऽयं पंचगव्यं पिबञ्छुचिः ॥ २१२ ॥
भाण्डस्थितमभोज्यान्नं पयो-दधि-घृतं पिबन् ॥
द्विजातेरुपवासः स्याच्छूद्रो दानेन शुध्यति ॥ २१३ ॥
तत्तोयपीतजीर्णांगः तप्तकृच्छ्रं चरेद्विजः ॥
वांते तु तज्जले सद्यः प्राजापत्यं समाचरेत् ॥ २१४ ॥
रजकाद्यंबुपानेन प्राजापत्यं बुधैःस्मृतम् ॥
वान्ते जले तदर्धं तु शूद्रः स्यात्पादकृच्छ्रकृत् ॥ २१५ ॥
चाण्डालकूपपानेन महदेनः प्रजायते ॥
गोमूत्रयावकाहाराः शुद्धयेयुर्दिवसैस्त्रिभिः ॥ २१६ ॥
घृतं दधि तथा दुग्धं गोष्ठे वाऽशौचसूतके ॥
अभिचारस्य तद्भुक्त्वा भुक्त्वा वा शूद्रभोजनम् ॥ २१७ ॥
द्रुपदां वा द्विजो जप्त्वा मानस्तोकमथापि वा ॥
क्षुधातिपीडितः पश्चादिति प्राह पराशरः ॥ २१८ ॥
सूतकान्नं द्विजो भुक्त्वा त्रिरात्रोपोषणाच्छुचिः ॥
तोयपाने त्वसौ कुर्यात्पंचगव्यस्य चाशनम् ॥ २१९ ॥
द्रोणाढकं तदर्धं वा प्रस्थं प्रस्थार्धमेव वा ॥
घृतमुच्छिष्टसंस्पृष्टं प्रोक्षणाच्छुचितामियात् ॥ २२० ॥
चरुपक्वं शृतं पक्वं अन्नं काकाद्युपाहतम् ॥
तद्ग्रासस्थानसंत्यागात्पूतं हेमाम्बुसिंचनात् ॥ २२१ ॥
केचिद्वदन्ति तज्ज्ञास्तु तस्याग्निनावचूडनम् ॥
केचित्प्रणवयुक्तेन वारिणा प्रोक्षणं विदुः ॥ २२२ ॥
केश-कीटकसंदुष्टं अन्नं मक्षिकयापि च ॥
मृद्भस्मवारिणा तत्र क्षेप्तव्यं शुद्धिकारणम् ॥ २२३ ॥
उदक्या ब्राह्मणी स्पृष्ट्वा क्षत्रिण्यापि ह्युदक्यया ॥
अर्धकृच्छ्रं चरेत्पूर्वा तदर्धमपरा चरेत् ॥ २२४ ॥
प्राजापत्यं विशःपत्या विट्पत्नी पादमाचरेत् ॥
शूद्रास्पृष्टा चरेत्कृच्छ्रं शूद्री दानेन शुद्ध्यति ॥ २२५ ॥
ब्राह्मण्या ब्राह्मणी स्पृष्टा उदक्योदक्यया च ते ॥
चरेतां पादकृच्छ्रे द्वे कृते स्नाने विशुद्ध्यति ॥ २२६ ॥

---

१. B. reads °सीर° for °शीर°. २. B. reads कुश° for केश°.

ब्राह्मणी क्षत्रियां स्पृष्ट्वा ब्राह्मणीव्रतमाचरेत् ॥
अपरा क्षत्रियायास्तु वक्तव्यमेवमन्ययोः ॥ २२७ ॥
रजस्वला तु संस्पृष्टा श्व-विट्-शूद्रैश्च वायसैः ॥
स्नानं यावन्निराहारं पंचगव्येन शुद्ध्यति ॥ २२८ ॥
उदक्या ब्राह्मणी स्पृष्टा मेद-मातंग-भिल्लकैः ॥
गोमूत्रयावकाहारा षड्रात्रेण च शुद्ध्यति ॥ २२९ ॥
उच्छिष्टो ब्राह्मणः स्पृष्ट्वा द्विजातिस्त्रीं रजस्वलाम् ॥
प्राजापत्येन संशुद्ध्येच्चीर्णकृच्छ्रेण वा पुनः ॥ २३० ॥
वदन्ति कवयः केचिदेतद्दोषविशुद्धये ॥
प्राणायामशतं चास्य पंचगव्यस्य भक्षणात् ॥ २३१ ॥
उच्छिष्टो ब्राह्मणः स्पृष्टो ब्राह्मण्युदक्यया चरेत् ॥
प्राजापत्यं च गायत्रीमयुतं नियतं सकृत् ॥ २३२ ॥
क्षत्रिण्यादिभिरुच्छिष्टैः संस्पृष्टो व्रतमाचरेत् ॥
अनुच्छिष्टस्तु तत्स्पर्शे स्नानकर्म यतः स्मृतम् ॥ २३३ ॥
रजकादिकसंस्पर्शे द्विजन्मोदक्ययोषितः ॥
प्राजापत्यं चरेद्विप्रा अन्याश्चरेयुरंशतः ॥ २३४ ॥
उदक्यां ब्राह्मणीं गत्वा क्षत्रियो वैश्य एव च ॥
त्रिरात्रोपोषितः प्राश्य गव्यमाज्यं शुचिर्भवेत् ॥ २३५ ॥
क्षत्रिणीं चैव वैश्यां च जानन् गत्वा तु कामतः ॥
चरेत्सांतपनं विप्रस्तत्पापस्य विमोक्षकृत् ॥ २३६ ॥
वैश्यां च क्षत्रियो गत्वा वैश्यश्च शूद्रिणीं तथा ॥
प्राजापत्यं चरेतां ताविति प्राह पराशरः ॥ २३७ ॥
उच्छिष्टा ब्राम्हणी स्पृष्टा शुना वा वृषलेन वा ॥
अशुद्धा वा भवेत्तावद्यावन्नस्यादुपोषणम् ॥
शुद्धा भवति सा तावद्यावत्पश्यति शीतगुम् ॥ २३८ ॥
विप्रोष्य स्वजनीं वेश्यां महिष्युष्ट्रीमजां खरीम् ॥
प्राजापत्यं चरेद्गत्वा ह्येकैकस्य विशुद्धये ॥ २३९ ॥
शूद्रीं तु ब्राम्हणो गत्वा मासं मासार्धमेव वा ॥
गोमूत्रयावकाहारो मासार्धेन विशुद्ध्यति ॥ २४० ॥
नृपोऽप्यस्वजनां गत्वा प्राजापत्यं समाचरेत् ॥
वैश्यपत्नीमसौ गत्वा कृत्वा सांतपनं शुचिः ॥ २४१ ॥

१. B. reads जपेत्स्नानं त्रिकालकृत् for अयुतं नियतं सकृत्.

शूद्रीं तु क्षत्रियो गत्वा गोमूत्रयावकाशनः ॥
दशभिर्दिवसैः शुद्ध्येद्वैश्यःसोऽप्येवमेव हि ॥ २४२ ॥
उत्तमागमनेऽनार्याः[1] सर्वे ते स्युः कराग्निना ॥
महापथं च संव्रात्याः खरयानेन योषितः ॥ २४३ ॥
चाण्डालीमेव भिल्लानामभिगम्य सकृत्स्त्रियम् ॥
चाण्डाल-मेद-भिल्लानामभिगम्य स्त्रियं नरः ॥
शुद्ध्यै पयोव्रतं कुर्यान्मासार्धमघमर्षणम् ॥ २४४ ॥
पतितां च द्विजाग्र्यस्त्रीं प्राजापत्यं चरेद्द्विजः ॥
तैलिकस्य स्त्रियं गत्वा तथा मद्यकृतःस्त्रियम् ॥ २४५ ॥
अज्ञानाभिगतौ स्त्रीणां पुंसामनुलोमजस्य च ॥
इमां निष्कृतिमिच्छन्ति घृतयोनिं च केचन ॥ २४६ ॥
पितृव्य-भ्रातृजायां च मातृष्वसारमेव च ॥
भगिनीं चैव धात्रीं च गत्वा कृच्छ्रं समाचरेत् ॥ २४७ ॥
षण्मासान् केचिदिच्छन्ति संगम्यैता विशुद्धये ॥
कृच्छ्रं धर्मविदो विप्राः शुद्धिं तत्वार्थवेदिनः ॥ २४८ ॥
गुरुपत्नीं द्विजो गत्वा मातृष्वसृ-दुहितृषु ॥
क्षिपेच्छुध्यर्थमात्मानं सुसमिद्धे-हुताशने ॥ २४९ ॥
उपाध्याय-नृपा-ऽऽचार्य-शिष्य-योषिद्गमी नरः ॥
षण्मासान्कृच्छ्रचरणाच्छुद्धिमाह पराशरः ॥ २५० ॥
कृतचाण्डालसंस्पर्शः शकृन्मूत्रकरो द्विजः ॥
षड्रात्रोपोषणाच्छुद्ध्येद्भुक्त्वा ऽऽचान्तो नवद्युभिः ॥ २५१ ॥
ऊर्ध्वोच्छिष्टस्य संशुद्ध्यै केचित्प्रजापतिव्रतम् ॥
पराकं पञ्चगव्यं च केचिदाहुर्मनीषिणः ॥ २५२ ॥
उच्छिष्टो ब्राम्हणः स्पृष्ट उच्छिष्टेन द्विजेन तु ॥
आचम्यैव तु शुध्येतां विष्णुनामानुकीर्तनात् ॥ २५३ ॥
क्षात्रियेण तु संस्पृष्टो ब्राह्मणो नक्तभोजनात् ॥
वैश्येन चैव संस्पृष्टो नक्ताशी पंचगव्यपः ॥ २५४ ॥
शूद्रेण तु च संस्पृष्टो एकरात्रोपवासकृत् ॥
उच्छिष्टैः पुनरेतैस्तु प्रोक्तं द्विगुणमर्हति ॥ २५५ ॥

१. F. reads शाह्याः for ऽनार्याः.

उच्छिष्टः शूद्रसंस्पृष्टः शुना वापि द्विजोत्तमः ॥
उपोष्य पंचगव्येन शुद्धिः स्यादपरे विदुः ॥ २५६ ॥
अनुच्छिष्टोऽपि यत्स्पर्शात्स्नाति वर्णी विशुद्धये ॥
उच्छिष्टः तस्य संस्पर्शे चरेत्प्रजापतिव्रतम् ॥ २५७ ॥
रजकाद्यन्त्यजैः स्पृष्टः शुध्येत्तस्यार्धमाचरन् ॥
उदक्या ब्राम्हणी कृच्छ्रात्प्राजापत्यात्तथापरे ॥ २५८ ॥
उदक्या ब्राम्हणी स्पृष्टा शुना वा वृषलेन वा ॥
तावत्तिष्ठेन्निराहारा स्नात्वा कालेन शुद्ध्यति ॥ २५९ ॥
उदक्या सूतिका-म्लेच्छसंस्पर्शेऽस्तमिते रवौ ॥
द्विवाहृतास्भुना स्नात्वा शुद्ध्येद्विप्राग्निसन्निधौ ॥ २६० ॥
वदन्त्यपां पवित्रत्वं दिवा सूर्यांशु-मारुतैः ।
वन्दयित्वा पवित्रत्वं मन्दार्करश्मि-वायुभिः ॥
मुनयो धर्मवेत्तारो रात्रौ चंद्रांशु-रश्मिभिः ॥ २६१ ॥
सकृच्च ब्राम्हणः प्राश्य षडहं पंचगव्यकम् ॥
हेम्नो दद्याच्च षण्मासान्दत्वा गां च विशुद्ध्यति ॥ २६२ ॥
पंचाहेन नृपः शुद्ध्येत्पंचमासान्ददच्च गाः ॥
चतुर्भिर्दिवसैर्वैश्यश्चतुर्मासान् गवा सह ॥ २६३ ॥
त्र्यहेण तु चतुर्थस्तु ददन्मासत्रयं च गाम् ॥
सकृत्स्पर्शाद्भवेच्छुद्ध एतदाह पराशरः ॥ २६४ ॥
रक्तं निःसार्य विप्रस्य कामतोऽकामतोऽपि वा ॥
गायत्र्यष्टसहस्रेण जप्तेन तु भवेच्छुचिः ॥ २६५ ॥
यो यस्य हरते भूमिं हेम गामश्वमेव वा ॥
स तं यत्नात्प्रसाद्यापि तदुक्तः शुद्धिमाप्नुयात् ॥ २६६ ॥
आख्याय भूभृते वापि तेन संशोधितः शुचिः ॥
द्रव्यदण्डाद्विमुक्तिर्वा तपसा वा शुचिर्नरः ॥ २६७ ॥
निराहाराज्जायते च एतदाहुर्मनीषिणः ॥
विनिर्गता यदा शूद्रादुक्यान्ते व्यवस्थिता: ॥ २६८ ॥

---

१. A. reads एकरात्रोपवासेन for उपोष्य पंचगव्येन, B. D. E. and F. also read the same. २. Except B. read °माषान् for °मासान्. ३. A. C. and F. read हेममाषत्रयं for ददन्मासत्रयं. ४. A. only reads सकृत्स्पर्शान्मुच्येत for सकृत्स्पर्शाद्भवेच्छुद्धः. ५. These 5 lines are not given in B. D. E. and F.

तदा द्विजैस्तु द्रष्टव्य इतिधर्मविदो विदुः ॥
दुःस्वप्नदर्शने चैव वान्ते वा क्षुरकर्मणि ॥
मैथुने कटधूमे च सद्यः स्नानं विधीयते ॥ २६९ ॥
चितां च चितिकाष्ठं च यूपं चण्डालमेव च ॥
स्पृष्ट्वा देवलकं चैव सवासा जलमाविशेत् ॥ २७० ॥
श्व-जंबुक-वृकाद्यैश्च यदि दष्टो भवेन्नरः ॥
सचैलो जलमाविश्य दत्वाज्यं शुद्धिमर्हति ॥ २७१ ॥
शुनो घ्राणावलीढस्य नखैर्विलिखितस्य च ॥
यतीनां दर्शनं कार्यमग्निना चोपचूलनम् ॥ २७२ ॥
अवज्ञां तु गुरोः कृत्वा नक्तं तस्य च भोजनम् ॥
नक्षत्रदर्शनं त्वन्य इति प्राह पराशरः ॥ २७३ ॥
कुमारी तु शुना स्पृष्ट्वा जम्बुकेन वृकेण वा ॥
यां दिशं व्रजते सूर्यस्तां दिशं सा विलोकयेत् ॥ २७४ ॥
दिवसे तु यदा ग्रामे शुना स्पृष्टो भवेद्द्विजः ॥
विप्रं प्रदक्षिणीकृत्य घृतं प्राश्य विशुद्ध्यति ॥ २७५ ॥
चातुर्वर्ण्यात्तु या नारी कृताभिगमनापि च ॥
प्रक्षाल्य नाभितोऽधस्तादाचान्तस्तु शुचिर्नरः ॥ २७६ ॥
विप्रे मैथुनिनि स्नानं केचिद्ब्राह्मि शिरोविना ॥
नाभिं यावत् विशस्तद्वार्लिंगंशौचोऽन्त्यजः शुचिः ॥ २७७ ॥
अभिगच्छन्नृतार्थं च ऋतावृत्तौ स्त्रियं द्विजः ॥
न च कुर्वीत स स्नानं नाभेरधस्तु शोधयेत् ॥ २७८ ॥
त्वङ्कारं तु गुरोः कृत्वा हुंकारं तु गरीयसः ॥
प्रसाद्यैतावनश्नन्स्यात्स्नात्वा शुद्धो द्विजोत्तमः ॥ २७९ ॥
विवादे शास्त्रतो जित्वा जयो यस्य न जायते ॥
स्मशाने जायते तस्य तमोभावेन दुष्कृतम् ॥ २८० ॥

---

१. B. D. E. and F. read तिला वसूनि काष्ठानि अंत्यजस्यापि वेश्मनः for the given line in the original. २. A. reads अद्भिः प्रक्षालनं for यतीनां दर्शनं. ३. A. B. D. E. and F., read दृष्टा for स्पृष्टा. ४. A. reads चतुर्वर्णाशुचिर्नारी and B. reads चातुर्वर्ण्यशुचिर्नारी, D. E. and F. also read the same as B. ५. A. reads लिंगशौचांतिकं for लिंगशौचोऽन्त्यजः. ६. A. reads अवश्यं for अनश्नन्. ७. A. reads भयं for जयो.

ताडयित्वा तृणेनापि स्कन्धे वाऽऽबध्य रज्जुना ॥
कलहादपि[1] निर्जित्य तं प्रसाद्य विशुद्ध्यति ॥ २८१ ॥
अवगूर्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने ॥
कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽस्यान्तरशोणिते ॥ २८२ ॥
प्रेतमूढ्वा च दग्ध्वा च शुद्धिः स्नानाद्विजन्मनाम् ॥
उपवासेन चैकेन ब्रह्मकूर्चं च पावनम् ॥ २८३ ॥
प्रेतीभूतं च यः शूद्रं ब्राम्हणो ज्ञानदुर्बलः ॥
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ॥ २८४ ॥
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम् ॥
प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति ॥ २८५ ॥
अंगुल्या दन्तकाष्ठं च प्रत्यक्षलवणं तथा ॥
मृत्तिकाभक्षणं चैव तुल्यं गोमांसभक्षणम् ॥ २८६ ॥
कृत्वाऽन्यतममेतेषां शुद्ध्यर्थमात्मनो हितम् ॥
चरेच्छशिव्रतं विप्र इति प्राहुर्मनीषिणः ॥ २८७ ॥
केचिद्वदन्ति मुनयः कृच्छ्रं सांतपनं तथा ॥
तदर्द्धं पादकृच्छ्रं वा प्राहुरन्ये द्विजोत्तमाः ॥ २८८ ॥
अर्धोच्छिष्टो द्विजोऽज्ञानाद्यात्यघं नहि किंचन ॥
भुक्त्वाऽनाचम्य वा कुर्याद्विण्मूत्रं केह निष्कृतिः? ॥ २८९ ॥
नक्तोपवासी बाह्ये तु अन्यत्र द्विगुणं चरेत् ॥
अष्टोत्तरशतं जप्त्वा गायत्र्याः शुद्धिमर्हति ॥ २९० ॥
अर्धोच्छिष्टो द्विजः स्पृष्टः शुना वा वृषलेन वा ॥
नक्षत्रदर्शनेऽश्नीयात्पंचगव्यपुरस्सरम् ॥ २९१ ॥
अर्धोच्छिष्टाश्च विप्राद्याः श्वोच्छिष्टैः शूद्रसंस्पृशः ॥
उपवासेन शुद्ध्येयुः पचगव्यस्य पानतः ॥ २९२ ॥
श्व-काकी-काकसंस्पृष्टो भुञ्जानो ब्राह्मणश्च यः ॥
तदन्नस्य परित्यागं कृत्वा स्नानेन शुद्ध्यति ॥ २९३ ॥
विना यज्ञोपवीतेन भोजनं कुरुते यदि ॥
अथ मूत्र-पुरीषे वा रेतःसेचनमेव वा ॥ २९४ ॥
त्रिरात्रोपोषितो विप्रः पादकृच्छ्रं तु भूमिपः ॥
अहोरात्रोषितो वैश्यः शुद्धिरेषा पुरातनी ॥ २९५ ॥

1. A. reads विवादेनापि for कलहादपि.

विप्रः क्षुत्कृत्य निष्ठीव्य कृत्वा चानृतभाषणम् ॥
वचनं पतितैःकृत्वा दक्षिणं श्रवणं स्पृशेत् ॥ २९६ ॥
विप्रस्य दक्षिणे कर्णे नित्यं वसति पावकः ॥
अंगुष्ठे दक्षिणे पाणौ तस्मात्तेन च स स्पृशेत् ॥ २९७ ॥
प्रेक्षणं शशिनोऽर्कस्य ब्रह्मेश-विष्णुसंस्मृतिम् ॥
गायत्र्याः शत-साहस्रं सर्वपापहरं स्मृतम् ॥ २९८ ॥
गायत्र्यष्टसहस्रं तु ब्रह्महत्याविशोधनम् ॥
शूद्रवधे द्विजाग्र्यस्य गायत्र्य[1]ष्टसहस्रकम् ॥ २९९ ॥
राज्ञः पंचसहस्रं तु स्याद्विशश्च तदर्धकम् ॥
योगेन गत[2]शीलस्तु यदि वा स्यात्सदा नरः ॥ ३०० ॥
विप्र[3]श्च सम्मताचारस्तावुभौ सर्वदा शुची ॥
मक्षिकां सन्ततीर्धारा विप्रुषो ब्रह्मबिन्दवः ॥
स्त्रीमुखं बाल-वृद्धौ च न दुष्यन्ति कदाचन ॥ ३०१ ॥
आत्मस्त्रीह्यात्मबालश्च आत्मवृद्धस्तथैव च ॥
आत्मनः शुचयः सर्वे परेषामशुचीनि तु ॥ ३०२ ॥
उत्पन्नमातुरे स्नानं दशकृत्वस्त्वनातुरः ॥
स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्ध्येत्स आतुरः ॥ ३०३ ॥
विवाहोत्सव-यज्ञेषु संग्रामे जलसंप्लवे ॥
[4]पलायने तथारण्ये स्पर्शदोषो न [5]विद्यते ॥ ३०४ ॥
आद्यसङ्गी समो दोषी सङ्गसङ्गी तदर्धतः ॥
तत्सङ्गी तृतीयभागी तुरीयस्तु न दोषभाक् ॥ ३०५ ॥
आद्यस्पृष्टुर्भवेत्स्नानं द्वितीयस्यापि तत्स्मृतम् ॥
शिरः प्रोक्षणमन्येषामन्यत्राऽऽचमनं स्मृतम् ॥ ३०६ ॥
पलाश-शिंशिपाकाष्ठदन्तधावनकृन्नरः ॥
दिवाकीर्तिसमस्तावत् यावद्गां नैव पश्यति ॥ ३०७ ॥
पद्माश्म-लोहं फल-काष्ठ-चर्म-
[6]भाण्डस्थतोयैः स्वयमेव शौचात् ॥

१. A. B. D. E. and F. read °त्रि° for °अष्ट°. २. Only A. reads गति° for गत°. ३. A. and C. read तावुभौ सर्वदा त्याज्यौ निश्चितं सर्वकर्मसु । ४. A. reads this line thus:—पलायने वनेऽरण्ये स्पृष्टास्पृष्टिर्न दुष्यति । ५. F. substitutes दुष्यते for विद्यते. ६. B. reads भांडस्थले वा स्वयमेव शौचम् for भांडस्थतोयैः स्वयमेव शौचात्.

पुंसां निशास्वध्वनि निःसखानां
स्त्रीणां च शुद्धिर्विहिता सदैव ॥ ३०८ ॥
स्नानं स्पृष्टेन येन स्यात्काष्ठाद्यैर्यदि तत्स्पृशेत् ॥
नावारोहणवत् स्पर्शे तत्रोपस्पर्शनाच्छुचिः ॥ ३०९ ॥
म्लेच्छ-लूताशनास्पर्शे क्षेत्रे वा यदि वा स्थले ॥
उपस्पृशेत् शिरः प्रोक्ष्य संशुद्धो जायते द्विजः ॥ ३१० ॥
वस्त्रसंस्पर्शने तस्य सचैलाङ्गावगाहनम् ॥
अङ्गस्पर्शनवत्तस्य वदन्ति द्विजसत्तमाः ॥ ३११ ॥
चाण्डालोदकसंस्पृष्टः शुद्धः स्नानेन जायते ॥
तथा तद्भाण्डसंस्पर्शे स्नानमाहुर्मनीषिणः ॥ ३१२ ॥
उदक्या स्पर्शने स्नानमंशुकेनान्तराऽपि वा ॥
तत्स्पृष्टेऽपि भवेत्स्नानं तुल्याः सर्वा रजस्वलाः ॥ ३१३ ॥
संस्पर्शे मेद-भिल्लानां तथैव ब्रह्मघातिनाम् ॥
पतितानां च संस्पर्शे स्नानमेव विधीयते ॥ ३१४ ॥
रजस्वलादिसंस्पर्शे उपस्पर्शनमेव च ॥
उदक्यायास्त्रितोयेऽह्नि केचिदाचमनं विदुः ॥ ३१५ ॥
प्रथमेऽहनि चाण्डाली द्वितीये ब्रम्हघातिनी ॥
तृतीये रजकी प्रोक्ता चतुर्थे तु विशुध्यति ॥ ३१६ ॥
पुरुहूतः पुरा दैत्यं त्रिशीर्षाख्यं जघान यत् ॥
तद्वधे ब्रम्हहत्यायाः स्त्रीणां स प्रददौ फलम् ॥ ३१७ ॥
आसां तत्प्रभृति स्त्रीणामस्पृश्यत्वं सदा भवेत् ॥
अंशैर्दिनत्रयं ह्येतच्छुक्र-गुर्वादिकल्पितम् ॥ ३१८ ॥
शवराश्च पुलिन्दाश्च कैवर्ताश्च नटास्तथा ॥
एतान् रजकसन्तुल्यान् केचिदाहुर्मनीषिणः ॥ ३१९ ॥
रजक्याद्यभिगम्यत्वे वैश्या गो-मूत्र-यावकम् ॥
चरन्ति षड्गुणाहोभिः कृच्छ्रं वा द्विगुणं भवेत् ॥ ३२० ॥
ब्रम्ह-क्षत्रिय-विड्जाता शूद्रास्तेऽनुक्रमेण तु ॥
क्रमातिक्रमतश्चान्ये म्लेच्छान्त्यवर्णसंभवाः ॥ ३२१ ॥
भोज्याशनास्तु सच्छूद्रा अभोज्यान्नाः परे स्मृताः ॥
आमाशनानि भोज्यानि शृतमुच्छिष्टमुच्यते ॥ ३२२ ॥

१. B. reads °अंभो° for °अंग.° २. B. reads संसर्गे for संस्पर्शे.

शुभ्राणि हर्म्याणि वराङ्गनाश्च नानाप्रकारो विभवो नरस्य ॥
उर्वीपतित्वं नृपकारता च सर्वं हि मंक्षु क्षयमेति दैवात् ॥ ७१ ॥
केषां हि पुंसां महतो[1] हि दैवात्स्थानस्थितानामपि चार्थसिद्धिः ॥
केषां प्रभुत्वं बहुजीवितं च एको हि देवो बलवानतोऽत्र ॥ ७२ ॥
पुं-स्त्रीप्रयोगादथशुक्र-शोणितात्[2] को देहमध्ये विदधाति गर्भं ॥
स्त्रीणां तु ताद्धिग्न न चापि पुंसां सर्वापि चैषा ननु दैवचेष्टा ॥ ७३ ॥
कासां तु गर्भस्य न सम्भवोऽस्ति केषां च शुक्रं ननु वीर्यहीनम् ॥
दधाति[3] गर्भं ननु कापि दैवात् काश्चित्तु गर्भं न दधाति दैवात् ॥ ७४॥
धाता विधाता निजकर्मयोगात् विधेस्त्वभीष्टं त्वनुभावभाव्यम्[4] ॥
देवासुराणां[5] सह दैत्यकानां[6] स ह्येव कर्ता च मनूद्भवानाम् ॥ ७५ ॥
दैवात् मघोनोऽपि सहस्रमक्ष्णां दैवाद्धिमांशोः क्षयरोगिता[7]ऽभूत् ॥
दैवात्पयोधेर्लवणोदकत्वं दैवाद्धवेश्चित्रतरा च वृष्टिः ॥ ७६ ॥
यद्यप्यमुष्मान्न परोऽस्ति दैवात् कुर्यात्तथापीह नरो नृकारम् ॥
उद्दीपयेत्कर्मकरो[8] नृकारादुद्दीपितं कर्म करोति लक्ष्मीः[9] ॥ ७७ ॥
दैवेन केचित्प्रसभेन[10] केचित्केचिन्नृकारेण नरस्य चार्थाः ॥
सिध्यन्ति यत्नेन विधीयमानास्तेषां प्रधानं नरकारमाहुः ॥ ७८ ॥
स्वामिः प्रधानं नयं[11] दुर्ग-कोशान् दण्डं च मित्राणि च नीतिविज्ञाः ॥
अङ्गानि राज्यस्य वदन्ति सप्त सप्ताङ्गपूर्वो नृपतिर्धराभुक् ॥ ७९ ॥
दुर्वृत्त-सद्वृत्तनरेषु दण्डं राजा विधत्ते निपुणोऽर्थसिध्यै ॥
दण्डस्य मत्वोर्जितवित्तसत्वं पुंसोऽर्थहीनस्य[12] दमं तु हीनम् ॥ ८० ॥
अन्यायतो ये तु जनं नरेशाः सम्पीड्य वित्तानि हरन्ति लोभात् ॥
तत्क्रोधवन्हौ[13] परिदग्धदेहा गतायुषस्ते[14] तु भवन्ति भूपाः ॥ ८१ ॥

---

१. A. B. D. and E. अकृतो for महतो. २. D. reads °शुक्रसेकात्. ३. C. reads अधत्तगर्भापि जहाति गर्भं. ४. A. reads विधिस्त्वदृष्टं तनुभोगभाग्यम्, B. विधिस्त्वदृष्टस्तनुभावभाव्यः, D. विधेस्त्वदृष्टं त्वनुभाव्यभाग्यम्. ५. A. reads देवोरगाणां. D. E. F. also the same. ६. B. reads वै नराणां for दैत्यकानां. ७. B. reads °गामिता for °रोगिता. D. and E. also read as B. ८. A. B. D. E. and F. read नरो for °करो. ९. A. reads श्रीर्वितनोति सद्यः. B. simply alters तनोति for करोति in the original, C. reads श्रीरिव वै तनोति, D. E. and F. as A.; १०. A. reads कृतकेन, C. स्वहठेन and D. महणेन for प्रसभेन. ११. C. reads भज for नय.° १२. A. reads हीनार्थपुंसस्तु दमं तु हीनम्., and C. दमान्ति हीनम्. १३. C. reads °वृद्धा for °वन्हौ. १४. B. reads गतायुषः for क्षीणायुषः.

दण्डो महान् मध्यमकाधमस्तु मानं तु तेषां त्रसरेणुकादि ॥
सोऽशीतिसाहस्रपणो महान् स्यादर्धार्द्धको[1] तस्य तदर्धको वा[2] ॥८२॥

सर्वार्थपादश्च हरश्च दण्डो पात्यौ नृपेणेति वदन्ति सन्तः ॥
पाण्यादिपच्छेदन-मारणं च निर्वासनं राष्ट्रत एव सद्यः ॥ ८३ ॥

ज्ञात्वापराधं मनुजस्य यस्तु देशं च कालं च वपुर्वयश्च ॥
दंड्येषु दण्डं विदधाति भूभृत् साम्यं स बध्नाति पुरन्दरस्य ॥ ८४ ॥

यः शास्त्रदृष्टेन पथा नरेशो दण्डं विदध्याद्विधिवत्करांश्च[3] ॥
सोऽतीव कीर्तिं वितनोति गुर्वीं आयुश्च दीर्घं दिवि देवभोगान् ॥८५॥

यस्त्यक्तमार्गाणि कुलानि राजा श्रेणीश्च जातीश्च गणांश्च लोकान् ॥
आनीय मार्गे विदधाति धर्म्ये नाकेऽपि[4] गीर्वाणगणैः प्रशस्यते ॥८६॥

यः स्वधर्मे स्थितो राजा प्रजाधर्मेण पालयेत् ॥
सर्वकामसमृद्धात्मा विष्णुलोकमवाप्नुयात् ॥ ८७ ॥

हर्यश्व-वन्हि[5]-यम-वित्तनाथ-शीतांशुरूपाणि हि बिभ्रतीह ॥
सर्वेऽपि भूपास्त्विह पञ्चरूपास्तं कथ्यमानं शृणुत द्विजेन्द्राः ॥ ८८ ॥

यदा जिगीषुर्धृतशस्त्रपाणिस्त्विषुं[6] समालम्भ्य स विद्धसैन्यः[7] ॥
सर्वान् सपत्नानिह जेतुकामस्तदा स हर्यश्व इवेह भाति ॥ ८९ ॥

अकारणात्कारणतोऽपि चैष प्रजां दहेत्कोपसमिद्धरोचिः ॥
यदा तदैनं नृपनीतिविज्ञास्तनूनपातं प्रवदन्ति भूपम् ॥ ९० ॥

धर्मासनस्थः श्रुतिशास्त्रदृष्ट्या शुभाशुभाचारविचारकृत्स्यात् ॥
धर्म्येषु दानं त्वघकृत्सु दण्डं तदाऽवनीशस्त्विह धर्मराजः ॥ ९१ ॥

यदा त्वमात्य-द्विज-याचकादीन् प्रहृष्टचित्तस्तु यथोचितेन ॥
धनप्रदानेन करोति हृष्टान् भूभृत्तदाऽसौ द्रविणेशवत्स्यात् ॥ ९२ ॥

समस्तशीतांशुगुणप्रयुक्तो[8] यदा प्रजामेष शुभाय पश्येत् ॥
प्रसन्नमूर्तिर्गतमत्सरः सन् तदोच्यते सोम इति क्षितीशः ॥ ९३ ॥

आज्ञा नृपाणां परमं हि तेजो यस्तां न मन्येत स शस्त्रवध्यः ॥
ब्रूयाच्च कुर्याच्च वदेच्च भूभृत्कार्यं तदेवं भुवि सर्वलोकैः ॥ ९४ ॥

---

१. C. reads अर्धादिके for अर्धार्धको. २. A. B. D. E. F. read तदन्यको च for तदर्द्धको वा. ३. B. E. read वरांश्च for करांश्च. ४. C. reads नागेश° for नाकेऽपि. ५. F. reads °विष्णु° for °वन्हि.° ६. C. reads स्त्रियं for °स्त्विषुं.° ७. A. B. C. D. E. and F. चिन्हसैन्यः for विद्धसैन्यः. ८. B. E. F. read °प्रयुक्तं for °प्रयुक्तो.

दुर्धर्षतिग्मांशुसमानदीप्तेर्ब्रूयान् मनुष्यः परुषं नृपस्य ॥
यस्तस्य तेजोऽप्यवमन्यमानः सद्यः स पंचत्वमुपैति पापात् ॥ ९४ ॥

योऽह्नाय सर्वं विदधाति पश्येत् शृणोति जानाति चकास्ति शास्ति ॥
कस्तस्य चाज्ञां न बिभर्ति राज्ञः समस्तदेवांशभवो हि यस्मात् ॥ ९५ ॥

इति राजधर्मः ।

अथ विप्रो वनं गच्छेद्विना वा सहभार्यया ॥
जितेन्द्रियो वसेत्तत्र नित्यं श्रौताग्निकर्मकृत्[1] ॥ ९६ ॥

वन्यैर्मुन्यशनैर्मेध्यैः श्यामा-नीवार-कङ्गुभिः ॥
कन्द-मूल-फलैः शाकैः स्नेहैश्च फलसम्भवैः ॥ ९७ ॥

सायं-प्रातश्च जुहुयात्त्रिकालं स्नानमाचरेत् ॥
चर्मचीवरवासाः स्यात् श्मश्रु-लोम-जटाधरः ॥ ९८ ॥

पितॄंश्च तर्पयेन्नित्यं देवांश्चाजस्रमर्चयेत् ॥
अर्चयेदतिथीन्नित्यं तथा भृत्यांश्च पोषयेत् ॥ ९९ ॥

न किञ्चित्प्रतिगृह्णीयात्स्वाध्यायं नित्यमाचरेत् ॥
सर्वसत्वहितो दान्तः शान्तश्चाध्यात्मचिन्तकः ॥ १०० ॥

सन्तुष्टस्वान्तको[2] नित्यं दानशीलः सदा द्विजः ॥
कश्चिद्वेदं समास्थाय सुवृत्त्या[3] वर्तयेत्सदा ॥ १०१ ॥

एकाहिकं तु कुर्वीत मासिकं वाथ सञ्चयम् ॥
षाण्मासिकं चाब्दिकं वा यज्ञार्थं च वने वसन् ॥ १०२ ॥

त्यक्त्वा तदाश्विने मासि स्थानमन्यत्समाश्रयेत् ॥
यथावदग्निहोत्रं तु समिदाज्यैस्तु[4] पालयेत् ॥ १०३ ॥

चान्द्र-कृच्छ्र-पराकाद्यैः पक्ष-मासोपवासकैः ॥
त्रिरात्रैरेकरात्रैश्च[5] आश्रमस्थः क्षिपेद्बुधः ॥ १०४ ॥

तिष्ठेन्नाव्रतिकस्तत्र स्वप्यादधस्तथा निशि ॥
अतन्द्रितो भवेन्नित्यं वासरं प्रपदैर्नयेत् ॥ १०५ ॥

---

१. A. reads °कर्मवित् for °कर्मकृत्. २. C. reads सन्यस्तश्चान्तको and B. सन्तुष्टस्यान्तको respectively. ३. A. B. D. E. F. substitute तद्वृत्त्या for सुवृत्त्या. ४. D. reads समिदाद्यैः for समिदाज्यैः. ५. A. and D. read द्व्येकरात्रैश्च for एकरात्रैश्च.

योगाभ्यासरतो नित्यं स्थानाऽऽसन-विहारवान् ॥
हेमन्त-ग्रीष्म-वर्षासु जलाग्न्याकाशमाश्रयेत् ॥१०६॥
दन्तोलूखलिको वापि कालपक्वभुगेव वा ॥
स्याद्वाश्मकुट्टको विप्रः फलस्नेहैश्च कर्मकृत् ॥ १०७ ॥
शत्रौ मित्रे समस्वान्तस्तथैव सुख-दुःखयोः ॥
समदृष्टिश्च सर्वेषु न विशेद्वनगह्वरम् ॥ १०८ ॥
म्लेच्छव्याप्तानि सर्वाणि वनानि स्युः कलौ युगे ॥
न भूपाः शासितारश्च ग्रामोपान्ते वसेदतः ॥ १०९ ॥
ग्रामाश्च नगरादेशास्तथारण्य-वनानि च ॥
क्षितीशरक्षितान्येव सर्वेषां फलदानिहि ॥ ११० ॥
प्रथमं भूपतेस्तस्मात्कृत्यं शंसेद्द्विजाग्रजाः ॥
योगं वाऽरण्यवासं वा कुर्वीत तदनुज्ञया ॥ १११ ॥
सुत्रामा-ऽनल-वायूनां यमस्येन्द्रोर्विवस्वतः ॥
ईशे-वित्तेशयोर्ब्रह्ममात्राभ्यो निर्मितो नृपः ॥ ११२ ॥
पारत्रिकं तु यत्किञ्चिद्यत्किञ्चिदैहिकं तथा ॥
नृपाज्ञया द्विजातीनां तत्सर्वं सिध्यति ध्रुवम् ॥ ११३ ॥
नृपतेः प्रथमं तस्मात् साधोर्यज्ञादिकं द्विजः ॥
रक्षार्थं कथयित्वा तु यथा कार्यं समापयेत् ॥ ११४ ॥
धेनुः पूर्वं वसिष्ठस्य ह्यासीद्दुर्वाससोऽपि च ॥
वनवासाश्रमस्थस्य वह्निकार्याय तां श्रयेत् ॥ ११५ ॥
फलस्नेहा यदा न स्युः कालवैगुण्यतो द्विजाः ॥
तदा गोदुग्ध-सर्पिभ्यामग्निकार्यं समापयेत् ॥ ११६ ॥
तथा सर्वेषु कालेषु तथा सर्वाश्रमेषु च ॥
गोदुग्धादि पवित्रं स्यात्सर्वकार्येषु सत्तमाः ॥ ११७ ॥
वनवासिषु सर्वेषु भिक्षां कुर्याद्वनाश्रमी ॥
तदा सर्वं प्रकुर्वीत पितृदेवार्चनादिकम् ॥ ११८ ॥

१. A. reads ह्यार्द्रवासादिकं चरेत् for जलाग्न्याकाशमाश्रयेत्. २. C. reads °पक्ष° for °पक्व°. ३. A. reads निवसेद्गह्वरं वनम्; while B. D. E. read निवासं गव्हरं वनम्. ४. A. C. D. read इन्द्र° for ईश.° ५. A. reads दैविकं for ऐहिकं. B. D. E. and F. too read the same. ६. D. reads वनवासाय for वह्निकार्याय.

अष्टौ भुञ्जीत वा ग्रासान् ग्रामादाहृत्य यत्नवान् ॥
वासंनासंक्षयं गच्छेदनिलाशः प्रागुदीचिकः ॥ ११९ ॥

विधाय विप्रो वनवासधर्मान् सर्वानिमानुक्तविधिक्रमेण ॥
स शोध्य पापानि वपुर्विशोध्य ब्रह्माधिगच्छेत्परमं द्विजेन्द्राः ॥१२०॥

आश्रमत्रयधर्मान्वा चरित्वा प्राक् द्विजास्ततः ॥
द्वयस्य वा ततः पश्चाच्चतुर्थाश्रममाचरेत् ॥ १२० ॥
द्विजाग्रजो यदा पश्येत् वलीपलितमात्मनः ॥
उंपरामस्तथाक्षाणां क्षैण्यं कामस्य सद्विजाः ॥ १२१ ॥
समीक्ष्य पुत्रं पौत्रं वा दृष्ट्वा वा दुहितुः सुतम् ॥
अधीत्य विधिवद्वेदान् कृत्वा यज्ञान्विधानतः ॥ १२२ ॥
निश्चयं मनसः कृत्वा चतुर्थाश्रममाविशेत् ॥
प्राजापत्यां विधायेष्टिं वनाद्वा सद्मनोऽपि वा ॥ १२३ ॥
समस्तदक्षिणायुक्तान् सर्ववेदांस्ततश्च तान् ॥
अग्नीनात्मनि चारोप्य दण्डान् विधिवदाहरेत् ॥ १२४ ॥
किञ्चिद्वेदं समास्थाय तद्धर्मेण च वर्तयेत् ॥
वाङ्-मनः-कायदण्डाश्च तथा सत्वादयो गुणाः॥ १२५ ॥
त्रयोऽपि नियता यस्य स त्रिदण्डीति कथ्यते ॥
कमण्डल्वक्षमाला च भिक्षापात्रमथापरम् ॥ १२६ ॥
काषायवासः कौपीनं कार्यार्थं वस्त्रमेव वा ॥
शिखा यज्ञोपवीतं च दण्डानां त्रितयं तथा ॥ १२७ ॥
द्विकालं विधिवत्स्नानं भिक्षया चैकभोजनम् ॥
शुद्धैकवृत्तिविप्रेषु सत्कर्मनिरतेषु च ॥ १२८ ॥
भिक्षाचर्या यतेः प्रोक्ता व्रतचर्या तथैव च ॥
असम्भाषश्च शूद्रेण तथा च शिल्पि-कारुभिः ॥ १२९ ॥
अवक्तृत्वं तथा स्त्रीभिः कृत्यमेतद्यतेः स्मृतम् ॥
न कदम्बकसंरोधो नित्यमेकान्तशीलता ॥ १३० ॥
सदैव प्राणसंरोधः सदैवाध्यात्मचिन्तनम् ॥
मृद्वेणुदार्वलाब्वश्ममयं पात्रं यतेः स्मृतम् ॥ १३१ ॥

---

१. A. and D. read आसमासं क्षयं गच्छेदनिला° for वासनासंक्षयं गच्छेद-निला°  २. A. reads उपरतिं for उपरामः.  ३. Only A. reads समास्थाप्य for समास्थाय. ४. C. and E. read वनचर्या for व्रतचर्या.

शुद्धिरद्भिरमीषां तु गोवालैश्चावघर्षणम् ॥[1]
न दण्डैर्न च दण्डेन विना वा तेन वा तथा ॥ १३२ ॥
मोक्षावाप्तिर्भवेत्पुंसां किंत्वस्याध्यात्मचिन्तनात् ॥
समत्वं सुख-दुःखेषु तथा विद्वेष-रागयोः॥ १३३ ॥
आत्मान्ययोः समानत्वमजस्रं चात्मचिन्तनम् ॥ १३४ ॥
यतिभिस्त्रिभिरेकत्र द्वाभ्यां पञ्चभिरेव वा ॥
न स्थातव्यं कदाचित्स्यात्तिष्ठन्तो नाशमाप्नुयुः ॥ १३५ ॥
बहुत्वं यत्र भिक्षूणां वार्तास्तत्र विचित्रकाः ॥
स्नेह-पैशून्य-मात्सर्यं भिक्षूणां नृपतेरपि ॥ १३६ ॥
तस्मादेकान्तशीलेन भवितव्यं तपोर्थिना ॥
आत्माभ्यासरतश्चैव[2] ब्रह्मप्राप्त्यभिलाषुकः[3] ॥ १३७ ॥
त्रिदण्डग्रहणादेव यतित्वं नैव जायते ॥
अध्यात्मयोगयुक्तस्य ब्रह्मावाप्तिर्भवेद्यतः ॥
जितेन्द्रियो हि दण्डार्हो युवा न स्यात्तथा सरुक् ॥ १३८ ॥
युवा नीरुक् तथा भिक्षुरात्मवृद्धिप्रदूषकः ॥
भिक्षुर्गेहे वसन्यत्र कामार्त्तोऽन्योऽभिगच्छति ॥ १३९ ॥
तत्सद्मनाथं वृद्धान्वै सह तेनैव पातयेत् ॥
एकरात्रं तु निवसेद्भिक्षुर्यस्य गृहाङ्गणे ॥ १४० ॥
तस्य[4] वै तारयेत्पूर्वान् विंशतिं पितृमातृतः ॥
भिक्षुर्यस्यान्नभुक् ब्रह्मयोगाभ्यासरतो भवेत् ॥ १४१ ॥
परिणामश्च योगेन कृतकृत्यो गृही भवेत् ॥
निर्ममो निरहङ्कारः सर्वसहः प्रसन्नधीः ॥ १४२ ॥
ब्रह्मण्यात्मनि गोमायौ[5] मुनौ म्लेच्छे च तुल्यदृक् ॥
चिह्नानि धात्रा कथितानि धत्ते वर्तेत यो वै विहितेन भिक्षुः ॥
योऽध्यात्मवेदी सततं जिताक्षः स ब्रह्मकाये गमनं करोति ॥ १४३ ॥
वनस्थ-भिक्षुधर्मान्वै यानुवाच पराशरः ॥
यथावदभिधायैतान् वक्ष्याम्याश्रमभेदकान् ॥ १४४ ॥
इति वानप्रस्थ-भिक्षुधर्माः ।

---

१. E. and F. read भवकर्षणम् for अवघर्षणम्. २. A. reads °रतेनैव for °रतश्चैव. ३. A. reads °मिमभीप्सता for °प्त्यभिलाषुकः. ४. A. reads स तारयति वृद्धान्वै for तस्य वै तारयेत्पूर्वान्. ५. B. reads योगात्मौ for गोमायौ.

अथातः सम्प्रवक्ष्यामि भेदमाश्रमसम्भवम् ॥
ब्रह्मचर्यादिकानां तु याथातथ्यं निबोधत ॥ १४५ ॥

चतुर्णामाश्रमाणां तु भेदो दृष्टो मनीषिभिः ॥
प्रत्येकशो वदाम्येनं शृणुध्वं द्विजसत्तमाः ॥ १४६ ॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ॥
एतद्भेदान् प्रवक्ष्यामि शृणुध्वं पापनाशनम् ॥ १४७ ॥

चतुर्धा ब्रह्मचारी स्याद्गायत्रो वैधसस्तथा ॥
प्राजापत्यो बृहच्चेति लक्षणानि पृथक् पृथक् ॥ १४८ ॥

अक्षारलवणाशी स्यात् गायत्र्यभ्यासतत्परः[1] ॥
वर्तते भिक्षया[2] नित्यं गायत्रोऽयं प्रकीर्तितः ॥ १४९ ॥

चतुर्धा द्वादशाब्दानि योऽधीयानश्चतुःश्रुतीः ॥
भिक्षया ब्रह्मचर्येण तिष्ठेत् ब्राह्मः स उच्यते[3] ॥ १५० ॥

गुरोर्वा गुरुपुत्रस्य तत्पत्न्या वापि सन्निधौ ॥
यो वसेदभ्यसन् ज्ञानं[4] ब्रह्मचारी स नैष्ठिकः ॥ १५१ ॥

ऋतुकालाभिगामी सन् परस्त्रीं पर्व वर्जयन् ॥
वेदानध्येति भिक्षाभुक् प्राजापत्योऽयमुच्यते ॥ १५२ ॥

गृहस्थस्तु चतुर्भेदो वार्ता-शालीनवृत्तिकौ[5] ॥
यायावरस्तथा वान्यो घोरसन्यासिकस्तथा ॥ १५३ ॥

कृषि-गोरक्ष-वाणिज्यैः कुर्वन् सर्वाः क्रिया द्विजः ॥
विहितैरात्मविद्यैश्च वार्तावृत्तिः स उच्यते ॥ १५४ ॥

ददात्यध्येति यजते याजयेन्न च पाठयेत् ॥
कुर्यात्कर्मा[6]प्रतिग्राही शालीनो ध्यानकृद्द्विजः[7] ॥ १५५ ॥

उक्तः सन् कारयेदन्यांक्रियां कुर्यात्प्रतिग्रहम्[8] ॥
पाठयेच्च तथात्मानं यायावरः स उच्यते ॥ १५६ ॥

तिष्ठेद्यश्च शिलोञ्छाभ्यामुद्धृताग्निश्च उच्यते ॥
आत्मविच्च क्रियाः कुर्यात् घोरसंन्यासिकः स्मृतः ॥ १५७ ॥

१. C. reads °सकृत् परम् for °भ्यासतत्परः. २. C. reads क्षमया for भिक्षया. ३. C. reads तेष्वध्यात्मं तदुच्यते, for तिष्ठेत् ब्राम्हः स उच्यते. ४. C. reads °दात्मसज्ज्ञानं for °दभ्यसन् ज्ञानं. ५. C. reads मतः शालीन-तीव्रकौ for वार्ता-शालीनवृत्तिकौ. ६. C. reads कर्ता° for कर्मा.° ७. A. reads ऽध्यात्मकृत् for ध्यानकृत्. ८. C. reads प्रतिग्रहे for प्रतिग्रहम्.

वानप्रस्थश्चतुर्भेदो वैखानस उदुम्बरः ॥
वालखिल्यो वनेवासी तल्लक्षणमथोच्यते ॥ १५८ ॥
फलैर्मूलैरकृष्टान्नैरग्निकर्म वने वसन् ॥
कुर्यात्पञ्चमहायज्ञान् स वैखानस आत्मवित् ॥ १५९ ॥
प्रातर्दृष्टदिगानीतैर्फलाकृष्टाशनेन्धनैः ॥
उदुम्बरो मतो ज्ञानी पञ्चयज्ञाग्निकर्मकृत् ॥ १६० ॥
चतुरो न्यासकृदग्निकार्यं कुर्वन्वने वसन् ॥
फलस्नेहैर्वनान्नैश्च बहुभिःश्रुतिचोदितैः ॥ १६१ ॥
उद्धृत्य परिपूताद्भिस्तथाऽयाचितवृत्तिकः ॥
फलैर्वन्यैर्वनान्नैश्च फेनपः पञ्चयज्ञकृत् ॥ १६२ ॥
वनस्थो वालखिल्यो यो धत्ते वल्कलचीवरम् ॥
अग्निकार्यकृदात्मज्ञ ऊर्जान्ते संचितं त्यजन् ॥ १६३ ॥
चतुर्भेदः परिव्राट् स्यात् कुटीचक-बहूदकौ ॥
हंसाः परमहंसाश्च वक्ष्यन्ते ते पृथक् पृथक् ॥ १६४ ॥
पुत्रस्य भ्रातृपुत्रस्य भ्रातृ-दौहित्रयोरपि ॥
तदुपान्तकुटीस्थो यः स भैक्ष्यवृत्तिभुक् द्विजः ॥ १६५ ॥
प्रतिचर्याकृतःसोऽपि यो वासःपूतवारिपः ॥
तथा त्रिदण्डभृत् शान्त आत्मज्ञः स कुटीचकः ॥ १६६ ॥
ज्ञेयो बहूदको नाम यः पवित्रितपादुकः ॥
शिखासनोपवीतानि धातुकाषायवस्त्रभृत् ॥ १६७ ॥
साधुवृत्तिर्द्विजौकस्तु भिक्षाभुगात्मचिन्तकः ॥
बहूदकस्त्वयं ज्ञेयो यः परिव्राट् त्रिदण्डभृत् ॥ १६८ ॥

---

१. A. B. D. E. F. read फेनपो वा for वनेवासी. २. A. B. D. E. and F. read °दिष्टा° for °दृष्ट.° ३. C. reads, लब्धैः फलैर्वन्यफलैः. ४. C. reads परिभूताद्भि for परिपूताद्भिः. ५. C. reads वैवित्तवृत्तिक. for ऽयाचितवृत्तिकः. ६. C. reads वसेत् for धत्ते. ७. C. reads this line thus:—

नरुष्पात्रः कुटीस्थो वा यद्भैक्ष्यं वृत्तिभुक् द्विजः ।.

८. A. reads—

प्रतिचार्यकृतस्तेयी यो वस्त्रपूतवारिपः ।.

एकदण्डधरा हंसा शिखोपवीतधारिणः ॥
वार्याधारकराः शान्ता भूतानामभयङ्कराः ॥ १६९ ॥
वसन्त्येकक्षपां ग्रामे नगरे पञ्चशर्वरीः ॥
कर्षयन्तो व्रतैर्देहमात्मज्ञानरताः सदा ॥ १७० ॥
एकदण्डधरा मुण्डा कन्था-कौपीनवाससः ॥
अव्यक्तलिङ्गिनोऽव्यक्ता सर्वदैव च मौनिनः ॥ १७१ ॥
शिखादिरहिताः शान्ता उन्मत्तवेषधारिणः ॥
भग्न-शून्यामरौकःसु वासिनो ब्रम्हचिन्तकाः ॥ १७२ ॥
एते परमहंसा वै नैष्ठिका ब्रह्मभिक्षवः ॥
उक्तास्तद्व्रतभेदश्चैरात्मनः प्रार्थनाकराः ॥ १७३ ॥
यो ब्रम्हचर्यव्रतचारिभेदो भेदो गृहस्थस्य तथैव यश्च ॥
योऽरण्यवासिद्विजकर्मभेदो यतेस्तथा नैष्ठिकमुक्तिभेदाः ॥ १७४ ।
चतुर्णामाश्रमाणां तु भेदमुक्त्वा पराशरः ॥
अथाब्रवीत् द्विजा योगं श्रुणुध्वं पापनाशनम् ॥ १७५ ॥
मुमुक्षवो विरज्यन्ते देहाद्गेहादितो यथा ॥
शरीरज्ञास्तथा प्राहुः परब्रम्हलयंगमाः ॥ १ ॥
ख-वाय्वग्न्यंबु-धात्रीभिरारब्धमाशुनाशि च ॥
तन्मुख्यगुणसंयुक्तं तत्पञ्चाक्षालयं त्यजेत् ॥ २ ॥
शुक्र-शोणितसंयोगात्स्त्रीकोष्ठपाकसम्भवम् ॥
दुःखेन दशभिर्मासैर्व्यायतं भूरिदोहदैः ॥ ३ ॥
जनन्या दोहदाभावे गर्भस्थस्यापि दुःखिताः ॥
अत्यन्तं जायमानस्य योनियन्त्रनिपीडनात् ॥ ४ ॥

---

१. A. reads वार्याधानकराः; while C. and E. read वार्याचारकराः for वार्याधारकराः. २. A. B. C. read अभयप्रदाः for अभयङ्कराः. ३. C. reads सर्वशः for °शर्वरीः. ४. C. मर्षयन्तो for कर्षयन्तो. ५. C. reads अत्यन्त° for अव्यक्त.° ६. C. reads प्रार्थनापराः for प्रार्थनाकराः. ७. C. reads this whole line thus:—

हिरण्यवासो द्विजकर्मभेदो ह्युक्तो मयासीद्द्विजभिक्षुभेदः ॥.

८. B. C. D. E. F. read देहादितो for गेहादितो. ९. B. and E. read °पाप° for °पाक°. १०. C. reads व्यापितं; while A. and E. read व्यायितं for व्यायतं. ११. B. reads जनन्या दौर्हृदाभावे; while C. reads जनन्यादौ गृहाभावे for जनन्या दोहदाभावे.

जातस्य बालरोगाद्यैर्योगिनीग्रहदोषतः ॥
देहिनः सर्वदा दुःखं दंतजन्मादिकैर्ग्रहैः ॥ ५ ॥
एवं बाल्ये महद्दुःखं कौमार्ये यौवनेऽपि च ॥
स्त्रिया विनापि सार्धं वा दारिद्र्यैश्वर्ययोरपि ॥ ६ ॥
क्षुत्तृड्भ्यां प्रथमे वित्तरक्षणाद्यैर्द्वितीयके ॥
वृद्धत्वे चानयोर्दुःखं तस्माद्दुःखमयं वपुः ॥ ८ ॥
मांसेन लेपितं बद्धं स्नायुभिः कुल्यसञ्चयम् ॥
मेदोमेहनसम्पूर्णं कफ-पित्त-वसाश्रयम् ॥ ९ ॥
अमेध्यपूर्णं भस्त्रावत्सर्वं वै सर्वदाऽशुचि ॥
मृत्स्नया स्नान गन्धाद्यैर्निर्गन्धि क्रियते बहिः ॥ १० ॥
दुर्गन्धं सर्वरन्ध्रेषु स्वघ्राणोद्वेगकारकम् ॥
सततं स्रवतेऽमेध्यं किं देहस्योच्यते शुभम् ॥ ११ ॥
यददग्धं भवेन्मृत्स्ना दग्धं भस्मत्वमाप्नुयात् ॥
मृतस्य दृश्यते किञ्चित् तृष्णाकोपरतस्य तु ॥ १२ ॥
क इहोत्पद्यते विद्वान् को वेह म्रियते पुनः ॥
यन्त्रोपममिदं धीमान् वायुत्यक्तं मृतं भवेत् ॥ १३ ॥
पृथगात्मा पृथक् स्वान्तं पृथक् खानि दशापि च ॥
पृथक् पृथक् च भूतानि पृथक् तेषां गुणोत्करः ॥ १४ ॥
पृथक् प्राणादिवायुश्च तद्गतिश्च पृथक् पृथक् ॥
पृथक् पृथगिति ह्येतत् शरीरं किमिहोच्यते ॥ १५ ॥
आरम्भकाणि यान्येव तेषु यान्ति तदंशकाः ॥
आत्मा चान्यदवाप्नोति यातनीयं पुनर्वपुः ॥ १६ ॥

---

१. B. and E. read हत° for दन्त°; while C. reads पूजा° for दन्त°. २. A. reads कामात्तद्यौवने and B. मन्मथाद्यौवने for कौमार्ये यौवने ३. A. B. E. read बालं for बद्धं. ४. B. reads मीढ° for मेदो.° ५. B. and E. read अमेध्यपूर्णभस्त्रावत् and अमेध्यपूर्णे वस्नावत् respectively; while C. reads अमेध्यपूर्णसस्रावं for अमेध्यपूर्णं भस्त्रावत्. ६. B. and E. read तृष्णायाः and C. reads तृसायाः. ७. C. D. read °कोपरि तस्य च for °कोपरतस्य तु. ८. Only C. reads दशानि for दशापि. ९. B. reads गुणोत्तरः for गुणोत्करः. १०. C. reads.

अत्ययाद्यदवाप्नोति याति वीर्यं पुनर्वपुः ।;

while B. E. read पावनीयं for यातनीयं.

यः पश्येत् शृणुयाज्जिघ्रेत् स्वदेद्विद्यात्स्मरेद्वदेत् ॥
स्वप्याच्च जागृयादृच्छेद्भिन्द्यात् गायेत् जपेत् पठेत् ॥ १७ ॥
गृह्णीयादर्पयेद्द्याज्जायेत जनयेदपि ॥
सोऽस्ति कश्चित्परो देहाद्यो देहीति निगद्यते ॥ १८ ॥
नैकश्चेत्स्यान्न देहेऽस्मिन् प्रत्यभिज्ञा कथं भवेत् ॥
एकदृक्-दृष्टिरूपस्य पुनरन्येन पश्यतः ॥ १९ ॥
अद्राक्षं यदहं वस्तु तदेवैतत्स्पृशाम्यथ ॥
यथाऽस्प्राक्षं च पश्यामि प्रतीतिर्यस्य जायते ॥ २० ॥
दर्शन-स्पर्शनाभ्यां च ग्रहणादेकवस्तुनः ॥
अस्ति ह्यात्मा परो देहात्तथा देह्यस्ति कश्चन ॥ २१ ॥
गृही च गृहमध्यस्थो भग्नं किंचित्समाचरेत् ॥
देहे क्षतादिसंरोहात्तथा देह्यस्ति कश्चन ॥ २२ ॥
ज्ञानयोगफलेनायं कर्मयोगफलेन च ॥
स एव भुज्यते कुर्वन् उद्देशौ तस्य ताविति ॥ २३ ॥
तार्यते कर्मणा चायं बध्यते कर्मणापि च ॥
उभयथापि नैवात्र प्रत्यक्षं दृश्यते द्विजाः ॥ २४ ॥
मायावित्वं च मूकत्वमतिरिक्तांगता क्रमात् ॥
अवाक्त्वं धान्यहर्तॄणां पैशून्ये पूतिनासिता ॥ २५ ॥
भरतो वर्णकैश्चित्रैः स्वदेहं चित्रयेद्यथा ॥
कुर्वन्नानाविधं कर्म तथात्मा कर्मजास्तनूः ॥ २६ ॥

---

१. C. reads मांतस्य शृणुयात्पाद स्पर्शं जिघ्रेत्स्वादेद्वितत्. २. C. reads भयात्, and यतेत वा, respectively for भिन्द्यात् and जपेत् पठेत्. ३. A. reads यस्तथा for अर्पयेत्; while C. reads this line thus—

गृण्हीयाद्यद्यथाऽप्यद्य जायेत स नयेदपि ।.

४. D. reads नवे देहे for न देहेऽस्मिन्. ५. E. F. read दृष्टरूपस्य for दृष्टिरूपस्य. B. D. also read the same. ६. E. reads अद्राक् यं for अद्राक्षं. ७. B. and E. read सुशाम्यथ for स्पृशाम्यथ. ८. B. E. both read यथापक्षं for यथाऽस्प्राक्षं. ९. A. reads युज्यते for भुज्यते. B. D. E. F. also read as A., but C. reads पूज्यते for युज्यते. १०. Only A. reads निर्देश्यौ for उद्देशौ. ११. C. reads वार्यते for तार्यते; while D. reads तीर्यते for तार्यते. १२. B. C. both read बाध्यते for बध्यते. १३. A. reads अत्रं for अत्र. १४. B. reads तया कर्मप्रजास्तनूः for तथात्मा कर्मजास्तनूः; while C. reads तथात्मा कर्मजस्तनुस्.

जरायुजाण्डजादीनि वपूंषि योऽग्रहोन्निजैः ॥
कर्मभिर्वर्णभेदैश्च चित्तदौर्गत्यरुग्युतः ॥ २७ ॥
बधिर-क्लीब-निःस्वा-ऽन्धा जायन्ते पुरुषाधमाः ॥
निरेनसः पुनर्भूत्वा विद्वद्विप्रकुलेषु च ॥ २८ ॥
महाकुलेषु चान्येषु जायन्ते लक्षणान्विताः ॥
धनवन्तः प्रजावन्तो विद्यावन्तो यशस्विनः ॥ २९ ॥
रूप-सौभाग्यसंयुक्ताः सर्वेषामुपकारकाः ॥
ब्रह्माभ्यासरताः शान्ताःषट्कर्मनिरतास्तथा ॥ ३० ॥
पञ्चयज्ञकृतो नित्यमग्निष्टोमादिषु स्थिताः ॥
द्विजोपास्तिकरा नित्यं गुर्वाचार्यादिपूजकाः ॥ ३१ ॥
चतुराश्रमधर्माणां सेविनः समदर्शिनः ॥
गुणैः सर्वैः समायुक्तास्तेजस्विनो जनप्रियाः ॥ ३२ ॥
एवंभूताश्च ये विप्रास्तेषां विष्णुः सदान्तिके ॥
विष्णुश्च सर्वदैवत्यस्तस्माद्विष्णुमना भवेत् ॥ ३३ ॥
देवतार्चाकृतां नित्यं गुरूपास्तिकृतां तथा ॥
ब्रह्मैवाभ्यसतां सम्यक् ब्रह्मसान्निध्यमिष्यते ॥ ३४ ॥
उपास्यं तत्सदा ब्रह्म यावत्साधकतां वहेत् ॥
बह्वायासाद्विदित्वा यत्संसरेन्नेह मानवः ॥ ३५ ॥
वदन्ति ब्रह्मवेत्तारो ब्रह्माभ्यासमनेकशः ॥
ब्रह्मापि द्विविधं धीमन्नपरं परमेव च ॥ ३६ ॥
समत्वं परमं ब्रह्म शब्दब्रह्मेति कीर्तितम् ॥
प्रणवाख्यं त्रिरूपं तत्प्रागेव हि विशेषतः ॥ ३७ ॥

---

१. Only C. reads चित्र° for चित्त.° २. B. reads नीरेतसः for निरेनसः. E. D. also the same; while C. निरतः स पुनर्भूत्वा. ३. A. D. C. E. read वेदवन्तो for विद्यावन्तो. ४. A. C. D. read नयनप्रियाः for उपकारकाः. ५. B. E. and F. read °वर्णानां for °धर्माणां. ६. C. reads कथिताः for सेविनः. ७. A. C. D. read द्विजप्रियाः or जनप्रियाः. ८. C. reads विष्णुमयो for विष्णुमनाः. ९. C. reads आचामतां for अभ्यसतां. १०. A. reads बहूपायात्, and C. reads बहुपापात्. D. and F. read as A.; ११. B. reads संस्मरन् for संसरेत्. १२. B. C. read देवेशे for °वेत्तारो. १३. D. reads °न्यास° for °भ्यास°. १४. C. reads समात्रं for समत्वं. १५. B. C. E. and F. read विरूपं for त्रिरूपं. १६. B. D. E. F. read वागेव for प्रागेव.

प्राणायामैस्तदभ्यस्य पूरकाद्यैश्च वायुभिः॥
पूरक-कुम्भकौ वायू रेचकस्तु तृतीयकः[1] ॥ ३८ ॥
येन व्यावर्तते वायुर्नासाग्रान्निःसरेद्बहिः ॥
पूरयेत् श्वासयोगेन पूरकं तद्विदो विदुः[2] ॥ ३९ ॥
आपूर्य निश्चलीकृत्य यःकश्चिद्धार्यते निलः ॥
श्वासयोगं वदन्त्येनं कवयः कुम्भकं त्विति ॥
ब्रह्मध्यानसमायुक्तं वायुं यो न बहिर्नयेत् ॥ ४० ॥
कुम्भकः पवनः स स्याद्यो बहिर्नैव मुच्यते ॥
रेचकं तद्विदुस्तज्ज्ञा रेच्यते यः शनैः शनैः ॥ ४१ ॥
न वेगाद्रेचयेद्वायुं सर्वथा विघ्नभाग् भवेत्[3] ॥
मोचयेन्मन्दमन्दं तु बहिः स्यात्कुम्भितो यथा ॥ ४२ ॥
नासाग्रस्थितपाणिस्तु सशिरश्चालनक्षमम्[4] ॥
अनिलं रेचयेद्योगी न मन्दं नातिवेगतः ॥ ४३ ॥
न ज्ञायतेऽनिलो यस्य निःसरन् नासिकाग्रतः ॥
यस्यास्ते कुम्भितोऽजस्रं प्राणयोगी[5] स उच्यते ॥ ४४ ॥
दीर्घायुस्त्वं परं ज्ञानं[6] समस्ता योगसिद्धयः ॥
देहे तस्याऽवतिष्ठन्ति प्राणो[7] येन वशीकृतः ॥ ४५ ॥
यत्र तिष्ठति जीवःस्यान्निःसृतेमृत उच्यते ॥
स किन्न धार्यते प्राणो ब्रम्हाप्तिः[8] सति यत्र तु ॥ ४६ ॥
प्राण एवायमात्मास्ते प्राणो देहस्य वाहकः ॥
शरीरान्निःसृते प्राणे नात्मा विग्रह[9]वाहकः ॥ ४७ ॥
देहं त्यक्त्वा यदा जीवो बहिराकाशमास्थितः ॥
तदा निर्विषयो वायुर्भवेदत्र न संशयः ॥ ४८ ॥

---

१. C. reads द्वितीयकः for तृतीयकः. २. A. reads:—

श्वासयोगेन तं प्राहुः पूरकं तद्विदोऽनिलम्।.

३. B. reads निर्गतो भयात् for विघ्नभाग्भवेत्; D. E. and F. also read as B.; ४. A. reads स स्वीषचानलक्षमम्, B. स्वच्छयेचानलक्षमम्, C. सशिखं चालनक्षयम्, D. सशिखश्चालनं क्षमम् and E. सस्कोषचलनक्षमम् all for स शिरश्चालनक्षमम्. ५. B. and E. read प्राणयागी for प्राणयोगी. ६. Only A. reads जन्यं for ज्ञानं. ७. C. reads प्राणायाम° for प्राणो येन. ८. F. reads प्राणान् ब्रम्हा तिष्ठति यत्र तु for प्राणो ब्रम्हाप्तिः स हि यत्र तु. ९. B. D. E. read निग्रह° for विग्रह°.

तदा स सर्वदेहेषु नासाग्रमास्थितः शिवः ॥
प्रत्यक्षः सर्वभूतानां तिष्ठते न च लक्ष्यते ॥ ४९ ॥
यदा न श्वसते वायुस्तदा निष्फलमुच्यते ॥
नाभिसंस्थं तु विज्ञाय जन्मबन्धाद्विमुच्यते ॥ ५० ॥
देहस्थः सर्वसत्वानां स जीवति शृणोति च ॥
धर्माधर्मैरवष्टब्धो देहे देहे व्यवस्थितः ॥ ५१ ॥
स[3] हृत्पंकजसंस्थस्तु अध ऊर्ध्वं प्रधावति ॥
धर्माधर्मैर्महापाशैर्गृहीतःसन् प्रवर्तते ॥ ५२ ॥
उर्ध्वमुच्छ्वसते यावत्प्राणाख्यस्तु समीरणः ॥
तावत्प्राणस्तु विज्ञेयो यावन्नासाग्रमास्थितः ॥ ५३ ॥
अत्रस्थं निष्कलं ब्रह्म यावन्न श्वसिति द्विज ॥
श्वासेन हि समायोगादाकाशात्पुनरागतः ॥ ५५ ॥
नासारन्ध्रसमालीनस्तदा निष्फलमुच्यते ॥
स जीव इति विख्यातः स विष्णुः स महेश्वरः ॥ ५६ ॥
ध्यातव्या देवतास्तत्र क्रमेण पूरकादिषु ॥
विष्णु-ब्रह्मेश्वरास्तेषु स्थानेषु स्थानविद्‌जैः ॥ ५७ ॥
नीलपङ्कजवत् श्याममासीनं नाभिमध्यतः ॥
महात्मानं चतुर्बाहुं पूरके तु हरिं स्मरेत् ॥ ५८ ॥
हृत्पद्मे कुम्भके ध्यायेत् ब्रह्माणं पङ्कजासनम् ॥
रक्तेन्दीवरवर्णाभं चतुर्वक्त्रं पितामहम् ॥ ५९ ॥
रेचके शङ्करं ध्यायेल्ललाटस्थं त्रिशूलिनम् ॥
शुद्धस्फटिकसङ्काशं संसारार्णवतारकम् ॥ ६० ॥
एवं श्वसनसंरोधाद्देवतात्रयचिन्तनात् ॥
अग्नि-वाय्वंभसंयोगादन्तरं शुध्यते त्रिभिः ॥ ६१ ॥

---

१. A. reads निःकलम् for निष्कलम्. F. also reads as A.; २. B. and E. read महापाशैर्गृहीतःसन्प्रवर्तते for °रवष्टब्धो देहेदेहे व्यवस्थितः. ३. B. E. read सक्रुत्पंकज° for स हृत्पंकज°. ४. B. reads निष्फलं for निष्कलं. ५. Only B. and E. read स जीवति इति ख्यातः for स जीव इति विख्यातः. ६. A. reads ध्यानकृत्° for स्थानवित्° and B. ध्यानेषु विधिवत् for स्थानेषु स्थानवित्°; while C. reads स्थावरा for स्थानवित्°. E. reads the same as B.

निरोधादभवद्वायुस्तस्मादग्निस्ततो जलम् ॥
इति त्रिदेवतायोगात् शुद्ध्यतेऽन्तः पुनर्द्विजाः ॥ ६२ ॥

व्याहृतिप्रणवोपेताः[1] प्राणायामास्तु षोडश ॥
अपि भ्रूणहणं मासात्पुनन्त्यहरहः कृताः ॥ ६३ ॥

प्रातरह्नि[2] च सायं च पूरकं ब्रह्मणोऽन्तिकम् ॥
रेचकेन तृतीयेन प्राप्नुयात्परमं पदम् ॥ ६४ ॥

न प्राणेनाप्यपानेन वायुं वेगेन रेचयेत् ॥
प्रागुक्तेन प्रयोगेण मोचयेत्प्राणसंयमी ॥ ६५ ॥

शरीरं च शिरोग्रीवा विद्वान् पाणी च पद्द्वयम् ॥
सर्वाङ्गं निश्चलं धार्यमापूर्य सर्वनाडिकाः ॥ ६६ ॥

संवृत्याङ्गानि सर्वाणि कूर्मवद्ध्यानकाङ्क्षिजः ॥
बद्धासनोऽचलाङ्गस्तु[3] कुर्यादसुनिरोधनम् ॥ ६७ ॥

कृत्वा सुसंयमं[4] विद्वान्विधिवत्समुपस्पृशेत् ॥
अन्तरं शुध्यते यस्मात्तस्मादाचमनं स्मृतम् ॥ ६८ ॥

इत्युक्तः प्राणसंरोधो देवतात्रयसंयुतः ॥
त्रिमात्रः प्रणवस्तत्र ध्यातव्यः सर्वयोगिभिः ॥ ६९ ॥

स्मर्यमाणस्य यातस्य विश्रान्तिःस्यादमातृके[5] ॥
तत्परं निष्कलं[6] ज्ञानं तद्विदुर्ब्रह्मचिन्तकाः ॥ ७० ॥

मृदुमध्यान्तसत्वाच्च[7] स्थूलसूक्ष्मानुभावतः ॥
त्रिविधं प्राणसंरोधं विदुस्तत्तत्त्ववेदिनः ॥ ७१ ॥

क्रियमाणो विशेषेण प्रत्याहारोऽयमुच्यते ॥
सर्वं प्रागुक्तमेवास्य विशेषं तु निबोधत ॥ ७२ ॥

---

१. C. reads भवन्ति for व्याहृति°. २. A. B. D. E. and F. read अहश्च for अन्हि च. ३. B. reads उज्ज्वलाङ्गः for अचलाङ्गः. E. also reads the same. ४. C. reads सुसंचयं for सुसंयमं and विधिस्तुः for विधिवत् respectively. ५. A. reads अमात्रिके for अमातृके. ६. C. and D. read निष्फलं for निष्कलं. ७. B. D. E. and F. read—

मृदुमध्यस्थसत्वाच्च स्थूललक्ष्यानुभावतः ।;

while C. reads °मध्योत्तमत्वाच्च for मध्यान्तसत्वाच्च.

बाह्यं वायुं यथोत्थाप्य[१] आकृष्य यच्छनैः शनैः ॥
निरुन्ध्याद्विधिवद्योगी प्रत्याहारः स उच्यते ॥ ७३ ॥

व्याहृत्या[२]ऽभिमुखीकृत्य खानि यत्र निरुध्य च ॥
चिन्तयेन्निश्चलीकृत्य प्रत्याहारः स उच्यते ॥ ७४ ॥

प्राणाद्या[३] वायवः स्थूलाः सङ्कल्पाद्यास्तथाऽणवः[४] ॥
निरोद्धव्या दशाप्येते[५] प्राणसंयमकारिभिः ॥ ७५ ॥

वायुरेकोऽपि देहस्थः क्रियाभेदेन भिद्यते ॥
प्रकर्षेणासमन्ताच्च नयनादि[६]क्रियाः स्मृताः ॥ ७६ ॥

भविष्या-ऽतीतकालेभ्यः कर्मभ्यश्चाशु[७]संयमी ॥
सर्वानिलांस्तथा खानि निरुध्यैकत्र धारयेत् ॥
स धीमान्वेदविद्विद्वान् स योगी ब्रह्मवित्तमः ॥ ७७ ॥

स्थानं द्विजन्मा विधिवत्त्वजस्रम[८]भ्यस्य संयाति विधेःपरस्य ॥
पराशरोक्तैर्बहुभिःप्रकारैरुक्तो विधिः प्राणनिरोधनस्य ॥ ७८ ॥

प्रत्याहारो विशेषस्तु प्रोक्तस्तस्यैव वित्तमाः ॥
यदभ्यस्याप्नुयाद्ब्रह्म सर्वदानंदमव्ययम् ॥ ८० ॥

एतैस्तु पुनरावृत्तिः कदाचिदिह दृश्यते ॥
संसृतिं[९] नाप्नुयाद्येन शक्तिसूनुस्तदब्रवीत् ॥ ८१ ॥

उक्तस्तु संयमः पूर्वं त्रिविधो[१०] मलनाशनः ॥
निबोधत चतुर्थं तु ध्यानं प्रणववेधसः ॥ ८२ ॥

विधिवत्प्रणवध्यानमेकाचित्तस्तु योऽभ्यसेत् ॥
ब्रम्हाभ्येति स मुक्तात्मा स योगी योगिनां वरः ॥ ८३ ॥

---

१. A. reads यथोत्साहं for यथोत्थाप्य. B. E. and F. also read the same. २. Only F. reads व्याहृत्यभिमुखोऽन्यत्र for व्याहृत्याऽभिमुखीकृत्य ३. Only C. reads प्राणाद्यवयवाः for प्राणाद्या वायवः. ४. C. reads सुवायवः for तथाऽणवः. ५. A. reads दशस्वेते and D. तथाप्येते for दशाप्येते; while C. reads दृशोऽप्येते. ६. C. reads न यानादि° for नयनादि°. ७. B. and E. read अनुसंयमी and F. reads आत्मसंयमी for शुसंयमी; while C. reads अस्तु संयमी. ८. B. E. read नितान्तं for अजस्रं. ९. B. reads संस्मृतं, and C. संस्मृतिं for संसृतिं. १०. Only C. reads विधिहीनो हि नाशनः for त्रिविधो मलनाशनः.

तद्ध्यानमसुसंरोधस्तुर्यं सम्यगिहोच्यते ॥
[1]तदन्यथानपेक्षं च चित्तक्षेपविवर्जितम् ॥ ८४ ॥
[2]चतुर्णामाश्रमाणां तु भेदमुक्त्वा पराशरः ॥
अथाब्रवीद्द्विजा योगं श्रुणुध्वं पापनाशनम् ॥ ८५ ॥
तच्छान्तं निर्मलं शुद्धं ध्यातव्यं हृत्सरोरुहे ॥
तद्ध्येयं तद्वरेण्यं च बीजं मुक्तेस्तदुच्यते ॥ ८६ ॥
सञ्चित्य व्याहृतीः सप्त प्रणवाद्यास्तदन्तकाः ॥
सम्यगुक्तमिदं ध्यात्वा परब्रह्मणि योजयेत् ॥ ८७ ॥
हुतभुक् पवनो जीवस्त्रयोऽप्येते हृदि स्थिताः ॥
एतत्सर्वं तु चैकत्र संस्मरेत् ध्यानकृद्द्विजः ॥ ८८ ॥
ॐ[3]कारवर्त्मनालेन उद्धृत्योपरि योजयेत् ॥
योजयेत्सर्वमप्येतत्सिद्धयोगी स उच्यते ॥ ८९ ॥
शून्यभूतस्तु यत्प्राणः श्वा[4]सं जीवेति संज्ञितम् ॥
यस्मादुत्पद्यते श्वासः पुनस्तत्र निवेशयेत् ॥ ९० ॥
आद्यं तं प्रणवं विद्वान् घटाकाशवदभ्यसेत् ॥ ९१ ॥
स पश्येन्नि[5]र्मलं शुद्धं पुरुषं तमसंशयम् ॥
अन्तर्वक्रो वहिः सर्पन् त्सर्पवत्कुण्डलाकृतिः ॥ ९२ ॥
ध्यातव्यः प्रणवस्तत्र म[6]ध्यगं धाम संस्मरेत् ॥
स मात्रा[7] स च बिन्दुश्च तदेव परमं पदम् ॥ ९३ ॥
त[8]दभ्यस्यं हि तज्ज्ञात्वा स तस्मिन्नेव लीयते ॥
प्रथमं प्रणवो ऽव्यक्तः त्र्यक्षरः प[9]रमाक्षरः ॥
सर्व[10]ज्ञत्वमवाप्नोति प्राप्नोति परमं पदम् ॥ ९४ ॥

---

१. B. E. F. read तदन्यार्थानपेक्षं for तदन्यथानपेक्षं. २. This whole verse is not mentioned in A. C. D. and F.; ३. B. E. read ओंकारवर्त्मना तेन; while C. reads ओंकारावर्तनालेन for ओंकारवर्त्मनालेन. ४. C. reads हासजीवितसंज्ञितम्. ५. C. reads निर्गलं for निर्मलं. ६. B. E. and F. read मध्यमं for मध्यगं. ७. A. reads स धामात्मा C. reads स ध्यातात्मा, for समात्रा स. ८. B. and E. read तदर्थस्य for तदभ्यस्यं and D. तदभ्यसन्. ९. B. reads प्रथमाक्षरः for परमाक्षरः. १०. C. reads रुजत्वमन्यदाप्नोति for सर्वज्ञत्वमवाप्नोति.

पञ्चमं तु पदं विद्वान् तत्सार्धमवतिष्ठते ॥
नादबिन्दुसमभ्यासात् प्राप्नुयात्परमं पदम् ॥ ९५ ॥
पदं प्राप्य निवर्तन्ते धाम स्वं स्वान्तमेव च ॥
सर्वेऽप्यमातृका वर्णाः पुनस्तत्र विशन्ति च ॥ ९६ ॥
वर्णात्मा सन्नवर्णस्तु समस्तवर्णजीवनम् ॥
न दीर्घं नापि ह्रस्वं च न घोषं नाप्यघोषवत् ॥ ९७ ॥
न विसर्गं न तद्धीनं नानुस्वारविपर्ययः ॥
हृद्याकाशनिविष्टं यदचलत्वं प्रयाति चेत् ॥ ९८ ॥
ज्ञानयोगे त्रिषष्टिर्वै बिभ्रतीत्यक्षराणि तु ॥
तत्पदं योगिभिर्ध्येयं व्योम यस्य तु मध्यगम् ॥ ९९ ॥
व्योमान्तं सततं ध्येयमनंताकाशमव्ययम् ॥
चिन्तयामो वयं यद्वै धियो यो नः प्रचोदयात् ॥ १०० ॥
एतद्ब्रह्म त्रयीरूपमेतद्वर्गस्त्रयीमयम् ॥
एषा सा परमा मुक्तिर्गत्वा यां न निवर्तते ॥ १०१ ॥
आदाय चापं प्रणवं च बाणं सन्धाय चात्मानमवेक्ष्य लक्ष्यम् ॥
स तद्विधिं तत्र निवेश्य योगी प्राप्नोति नित्यं स तु मुक्तिकामः ॥ १०२ ॥
उद्देशतः किंचिदथादि विद्वन् ध्यानं [10]विधेर्यत्ध्वनिपूर्वकस्य ॥
सर्वं विधानं विधिवच्च सम्यक् वक्तुं समर्थो विधिरेव चास्य ॥ १०३ ॥

इति बृहत्पराशरे प्रणवध्यानविधिः ॥

अथान्यत्सम्प्रवक्ष्यामि विधानं ध्यानकर्मणाम् ॥
नाना[11]मतोदितं कार्यं परब्रह्मात्तिकारकम् ॥ १०४ ॥

---

१. A. C. D. F. read तन्मूर्धन्यवतिष्ठते for तत्सार्धमवतिष्ठते. २. A. reads भास्त्यश्चान्त्यमेव च, and B. यदि for पदं, C. यत्प्राप्य न for पदं प्राप्य and F. यदि प्राप्य निवर्तन्ते भास्त्यः स्वान्तमेव च, ३. C. reads सर्वेभ्यो for सर्वेऽप्य° ४. A. reads लघ्वीनं for तद्धीनं. ५. A. reads भवन्ति for बिभ्रति. B. D. and F. also read as A.; while E. reads विभर्ति for the original. ६. A. reads विविध्य; while C. reads प्रविश्य for निवेश्य. ७. A. B. D. E. F. read योगी for नित्यं. ८. A. D. F. read °धाम for °कामः. ९. A. D. F. read उद्देश्यतः for उद्देशतः; while C. उद्देशेन for उद्देशतः. १०. B. D. C. E. and F. read विधेयं for विधेर्यत. ११. B. D. E. F. read °विध्युदितं for °मतोदितं.

कर्मात्मकस्त्विह प्रोक्तः कः परात्मा परं च किम् ॥
वक्ष्यमाणमिदं विप्राः श्रुणुध्वं भक्तितत्पराः ॥ १०५ ॥
स्वीयेन कर्मणा येषां शरीरग्रहणं भवेत् ॥
कर्मात्मानस्त उच्यन्ते निर्गता परमात्मनः ॥ १०६ ॥
यं न स्पृशन्ति दुःखाद्यास्तथा सत्वादयो[1] गुणाः ॥
कादाचित्कं[2] न कर्मास्ति परमात्मा ततः परम् ॥ १०७ ॥
निष्ठा-नाशौ न विद्येते गुणा यं न स्पृशन्ति हि ॥
अजःसन् कथमेतस्मिल्लोके जातो[3]ऽभिधीयते ॥ १०८ ॥
स्वात्मानमेव चात्मानं वेष्टयेत्कोशकारवत् ॥
कर्मणैव प्रजातस्तु बाह्यस्वार्थविमोहितः ॥ १०९ ॥
तस्माद्विवर्जयेत्[4]कर्म स्वर्गादेरपि साधकम् ॥
संसरेत्[5]स्वर्गतः कर्मक्षये स तु पुनर्यतः ॥ ११० ॥
सीमैषा परमा विद्वन् ब्रह्मणः[6] पात-मोक्षयोः ॥
कर्मस्थानमियं धात्री कृतमत्रोपभुज्यते ॥ १११ ॥
वैदिकः कर्मयोगश्च दिवोऽप्यावर्तकः स तु ॥
योनेर्हावृत्तिकृत्तं[7] च ज्ञानयोगमतोऽभ्यसेत् ॥ ११२ ॥
हृदि निःसृतनाडीनां सहस्राणां द्विसप्ततिः ॥
तन्मध्यावस्थितं तेजः शशिप्रभं विभाति यत् ॥ ११३ ॥
तन्मध्यमण्डले ह्यात्मा विधूमाचलदीपवत् ॥
स ज्ञातव्यो विदित्वा तं संसरेन्न[8] पुनर्यतः ॥ ११४ ॥
पुटीभूतमधोवक्त्रं तत्हृत्पद्मं व्यवस्थितम् ॥
नाभ्युत्थोदान[9]वातेन कृत्वोर्ध्वास्यं विकासयेत्[10] ॥ ११५ ॥

---

१. A. B. E. and F. read सुखादयो for सत्वादयो; while C. reads ससत्वया. २. C. reads कदाचित् केन कर्माणि for कादाचित्कं न कर्मास्ति. ३. Only C. reads लोकपालो° for लोके जातो°. ४. F. reads विसर्जयेत् for विवर्जयेत्. ५. B. reads संस्मरेत् for संसरेत्, but F. reads संसारं. ६. C. reads ब्राह्मण्यः पाश-मोक्षयोः for ब्रह्मणः पात-मोक्षयोः. ७. B. D. E. F. read आवृत्तिकत्वञ्च for आवृत्तिकृत्तं च. ८. B. reads संस्मरेत् for संसरेत्. ९. B. and F. read नाभ्युत्सादन° for नाभ्युत्थोदान.° १०. B. E. read कृत्वा दोर्भ्यां for कृत्वा चास्यं. in C. The two lines are read thus:—

भूरिभुवमधोवक्त्रं तद्ध्यातव्यं व्यवस्थितम्
नानुच्छेदेन वातेन कृत्वोद्वास्य विकासयेत् ॥.

विकास्य तस्य मध्यस्थमचलं दीपशिखेव तत् ॥
तदूर्ध्वं निःसरच्छुभ्रं सूक्ष्मं तत्तु विचिन्तयेत् ॥ ११६ ॥
ललनाद्वारनिर्गच्छन्योगी मूर्ध्नि तु चिन्तयेत् ॥
तावत्तु चिन्तयेद्यावन्निरालम्बत्वमृच्छति ॥ ११७ ॥
निरालम्बं यदा ध्यानं कुर्वाणो निश्चलो भवेत् ॥
तदा तदुच्यते ब्रम्ह स योगी ब्रम्हवित्तमः ॥ ११९ ॥
तत्पदं च पदातीतं तत्प्राप्तौ मुक्त उच्यते ॥
इति ध्यानं विधातव्यं मुक्तिकृत्साङ्गिजैर्द्विजाः ॥ १२० ॥
भूतानामात्मभूतस्य तानि सम्यक् प्रपश्यतः ॥
विमुह्यन्त्यमरा मार्गं पदं किमपदस्य तु ॥ १२१ ॥
यो न तिष्ठति नो याति न किञ्चित्सर्व एव यः ॥
अवाग्यो वाङ्मयो यश्च सकलश्रुतिरश्रुतिः ॥ १२३ ॥
योऽप्यन्तिके दवीयांश्च योऽस्ति नास्ति स्वरूपकः ॥
यस्य तत्वस्य संवित्तिः स तस्मिन्नेव लीयते ॥ १२४ ॥
यस्तु सर्वाणि भूतानि पश्यत्यात्मगतानि तु ॥
आत्मानं तेषु सर्वेषु ततो यो न विरज्यते ॥ १२५ ॥
सर्वभूतात्मभूतात्मा यत्र पश्यति धीमतिः ॥
शोक-मोहौ च किं तस्य ह्येकत्वमनुपश्यतः ॥ १२६ ॥
समासाधुक्तमादिर्यन्मन्त्र-ब्राह्मणयोर्द्विजाः ॥
ॐ खं ब्रह्मेति चाम्नायो दर्शकस्त्वेषं वेधसः ॥ १२७ ॥
आत्मज्ञाने बहूपाया उक्तास्ताद्धि मनीषिभिः ॥
तैस्तैः सर्वैः स मन्तव्यो ज्ञातव्यश्चोपदेशतः ॥ १२८ ॥
न वेदैर्ज्ञेयता तस्य न शास्त्रैर्बहुभिः श्रुतैः ॥
न यज्ञैर्न जपैर्होमैः शौचैर्वाग्मितयापि च ॥ १२९ ॥

१. Only B. and E. read चलदीप° for अचलं दीप.° २. C. reads कुन्तयोगी for योगी मूर्ध्नि. ३. A. B. D. E. and F. read कुर्वतो for कुर्वाणो. ४. Only F. reads °प्राप्तो for °प्राप्तौ. ५. B. reads °स्यपरे for °स्यमरा. ६. B. and E. read अवाग्मी for अवाग्यो. ७. A. reads सर्वश्रुतिषु वै श्रुतिः and C. reads सर्वश्रुतिप्रचोदितः for सकलश्रुतिरश्रुतिः. ८. C. reads यस्येदं न ममेति for यस्य तत्वस्य संवित्तिः ९. D. reads धाम्ना यो for चाम्नायो. १०. B. and E. read दर्शक-श्चेति while C. D. and F. read दर्शकस्त्वेक° for दर्शकस्त्वेष. ११. The two lines are not mentioned in C.

गुरूपदेशतो भक्त्या सम्यगभ्यासतस्तथा ॥
ज्ञातव्यः परमात्मैवं [1]भक्तिकृत्तत्परेण च ॥ १३० ॥
[2]ध्यानज्ञानस्य तद्भक्तैर्यत्र विश्रमते मनः ॥
तदेवोपादिशेत्तस्य वस्तु ज्ञानोपदेशकम् ॥ १३१ ॥
मनो यस्य [3]निषण्णं तु [4]जायते यत्र वस्तुनि ॥
स तु ध्यायेत्तदेवेति [5]यावत्स्यात्ध्यानसन्ततिः ॥ १३२ ॥
तत्र ध्याने तु संलग्ने हरावात्मानि वा पुनः ॥
ध्यानं [6]योजयते योगी तं निरालम्बतां नयेत् ॥ १३३ ॥
योगशास्त्रेषु यत्प्रोक्तं रहस्यारण्यकेषु च ॥
तत्तथोपादिशेद्ध्यानं ध्यायेदपि तथैव च ॥ १३४ ॥
प्रवदन्त्यन्यथा केचित् [7]शुभादिभेदतस्त्वतः ॥
[8]त्रैविध्यं विदुषो विद्वन् सिद्धिदं च परापरम् ॥ १३५ ॥
[9]चित्तजं श्रुतिजं भावं भावना[10]भवमेव च ॥
त्रैविध्यमात्मना [11]सिध्येद्योगाभ्यासफलप्रदम् ॥ १३६ ॥
आत्मशक्तिः शिवश्चेति चैतन्यमिति [12]संज्ञितम् ॥
उत्तरोत्तरवैशिष्ट्याद्योगाभ्यासः प्रवर्तते ॥ १३७ ॥
स एको निश्चलीभूतकर्मात्मा [13]यमुपार्जितः ॥
न बिभेति स एकाकी [14]परेषां जायते भयम् ॥ १३८ ॥
तदेवं गतिभिर्ब्रह्मध्यानं यस्यास्ति योगिनः ॥
[15]स विशेत्तमजं शान्तं कदाचित्[16]संसरेन्न तु ॥ १३९ ॥

---

१. C. reads भक्ति कृत्वा परेण च for भक्तिकृत्तत्परेण च. २. B. and F. read धाता ज्ञानस्य, and D. reads ध्यानाज्ज्ञातश्च; while F. ध्यानाव्हानस्य for ध्यानज्ञानस्य. ३. B. C. E. read विषण्णं for निषण्णं. ४. A. and D. read ज्ञायते for जायते. ५. Only A. reads सा for स्यात्. ६. A. D. F. read नियोजयेत् for योजयते. ७. A. reads वातादि° for शुभादि°; while D. reads श्रुतादि° for शुभादि.° ८. A. reads विविदुस्त्वपरे परम् and C. reads विद्धि तत्त्वं परम्पदम्. ९. A. B. E. and F. read श्रुतिजं वाग्जं चिन्ताजं. and D. reads श्रुतिजं वाथ चिन्ताजं. १०. E. reads °स्तव° for °भव°. ११. A. C. D. read आत्मविद्धयैतत् for आत्मना सिद्ध्येत्. १२. A. C. D. read संस्थितम् for संज्ञितम् १३. A. C. D. read यत्र योजितः for यमुपार्जितः. १४. A. C. D. read भयं वै जायतेऽन्यतः for परेषां जायते भयम्. १५. C. reads संवित्तोत्रम् for स विशेत्तम्. १६. A. D. E. and F. read संस्मरेत् for संसरेत्.

त्र्यम्बकश्च चतुर्वक्त्रश्चतुर्बाहुः परेश्वरः ॥
एक एव महेशो वै तज्ज्ञैस्त्रिधेति कीर्त्त्यते ॥ १४० ॥
नाभिमध्यस्थितं विद्धि वस्तु विद्वन् सुनिर्मलम् ॥
रविवद्भ्राजमानं तु काशद्रश्मिगणैर्द्विज ॥ १४१ ॥
चिन्तयेत् हृदि मध्यस्थं दीप्तिमत्सूर्यमण्डलम् ॥
तस्य मध्यगतः सोमो वह्निश्चन्द्रशिखो महान् ॥ १४२ ॥
तन्मध्ये तु परं सूक्ष्मं तद्ध्यायेद्योगमात्मनः ॥
तन्मध्ये चिन्तयेदेतद्वक्ष्यमाणक्रमेण तु ॥ १४३ ॥
बिन्दुमध्यगतो नादो नादमध्यगतो ध्वनिः ॥
ध्वनिमध्यगतस्तारस्तारमध्यगतोऽशुमान् ॥ १४४ ॥
तस्य मध्यगतं ब्रह्म शान्तं तस्य तु मध्यगम् ॥
परं पदं तु यच्छान्तं सम्यग्व्याहृत्य योजयेत् ॥ १४५ ॥
जीवात्मा कायमध्यस्थस्तत्रापि देहवर्जितः ॥
वक्त्र-नासापुटस्थस्तु भुञ्जीत विषयान् प्रभुः ॥ १४६ ॥
इत्येतद्ध्यानमार्गं तु वदन्ति कवयो द्विजाः ॥
केचिदन्येऽन्यथा ब्रूयू रूपं ब्रम्हविदो विधेः ॥ १४७ ॥
न नामापि हि दुःखस्य शर्भ यत्र निरन्तरम् ॥
ब्रम्हणो रूपमानन्दं तन्मुक्तावुपलभ्यते ॥ १४८ ॥
सर्वव्यापी य एकस्तु यश्चानन्तश्च भावुकः ॥
स मन्तव्योऽनरो ह्यात्मा सर्वं व्याप्य च यः स्थितः ॥ १४९ ॥
एकं व्योम यथानैकं गृहाद्यैरुपलक्ष्यते ॥
एको ह्यात्मा तथानैको जलागारेषु सूर्यवत् ॥ १५० ॥
विश्वरूपो मणिर्यद्वत् वर्णान् गृह्णात्यनेकशः ॥
उपाधितस्तथात्मैको नानादेहेषु कर्मतः ॥ १५१ ॥
कला-काष्ठादिरूपेण वर्तमानादिभेदकृत् ॥
एकःकालो यथा नाना तथात्मैकोऽप्यनेकधा ॥ १५२ ॥

---

१. A. reads सं तु and C. विज्ञानं तु ज्ञानं D. विज्ञानेन for वस्तु विद्वन्. २. A. C. D. F. read उद्धृत्य for व्याहृत्य. ३. C. reads विदुः for विधेः. ४. C. reads तन्मुक्तं रूपमुच्यते. ५. A. B. C. D. E. read भावकः for भावुकः. ६. A. C. D. F. read जलाधारेषु for जलागारेषु. ७. A. C. D. F. read तत्वं for यद्वत्. ८. C. reads उपाधिस्थस्तथा चैको for उपाधितस्तथात्मैको. ९. B. and E. read °वादेह कर्मतः for °देहेषु. कर्मतः.

देहमध्यस्थितं देवं यो न ध्यायति मूढधीः ॥
सोऽङ्कलब्धं[1] मधु त्यक्त्वा क्लेशायाज्ञो[2] गिरिं व्रजेत् ॥ १५३ ॥
यस्तीर्थयानं जप-यज्ञ-होमान् कुर्याद्वपुष्मान् न च वेत्ति विष्णुम्[3] ॥
स मांसपिण्डं परिहृत्य दूरादज्ञः प्रधावेदधिरुह्य पृष्ठम्[4] ॥ १५४ ॥

सम्भ्राम्यते[5] विधिवशात्करणोग्रचक्रे
पापेन कुम्भ इव धातृवरेण नूनम् ॥
आरोप्य स्वार्थधृतदण्डमुखेन पूर्ण
हृत्पद्मसंस्थशिवतत्वमतिप्रहीणः ॥ १५५ ॥

द्वौ मार्गावात्मनो ज्ञेयौ ब्राह्मणैर्ब्रह्मचिन्तकैः ॥
अभियाति विदित्वा यौ सायुज्यं[6] परवेधसः ॥ १५६ ॥
विद्वन् धूमादिरेको वै द्वितीयस्त्वर्चिरादिकः[7] ॥
प्रत्येतव्यौ[8] प्रयत्नेन यत्प्रतीतिर्न जायते ॥ १५७ ॥
धूमः क्षपाऽसितः पक्षो दक्षिणायनमेव च ॥
लोकःपित्र्यश्च सोमश्च मातरिश्वानुकर्षणम्[9] ॥ १५८ ॥
यथा धातृक्रमादेते सम्भवन्ति समाश्रिताः ॥
अर्चिर्दिनं सितः पक्षस्तथाचैवोत्तरायणम् ॥ १५९ ॥
देवलोकस्तथा सूर्यो विद्युतश्च क्रमादिमान् ॥
मानसाः पुरुषा यान्ति जानन्तो ब्रम्हलोकताम् ॥ १६० ॥
यत्र याताः पुनर्नेह[10] संसरन्ति द्विजाः क्वचित् ॥
मार्गद्वयमिदं धीमन्मन्तव्यं सततं द्विजैः ॥ १६१ ॥
ज्ञानेन येन विज्ञातुर्ज्ञान[11]-मोक्षौ च सिध्यतः ॥
गृहारण्यस्थ-भिक्षूणां त्रयाणामपि धीमताम् ॥ १६२ ॥
ज्ञानमभ्यस्यमानं तु तथा दहति संसृतिम् ॥
ज्ञानं समानमेतद्वै इति ब्रह्मविदो विदुः ॥ १६३ ॥

---

१. A. C. D. F. read सोऽर्कलब्धं for सोऽङ्कुलब्धं. २. B. reads क्लेशाद्यदो and E. reads क्लेशाद्यज्ञो for क्लेशायाज्ञो. ३. C. reads सतु वैष्णवः स्यात् for नच वेत्ति विष्णुम्. ४. D. reads प्रधावेच्च तरक्षुपृष्ठे; while C. reads प्रभावैश्च वरिष्ठपृष्ठे for प्रधावेदधिरुह्य पृष्ठम्. ५. F. reads सम्प्राप्यते for सम्भ्राम्यते. ६. B. D. E. and F. read साम्राज्यं for सायुज्यं. ७. C. reads अविराडिकः for अर्चिरादिकः. ८. C. reads यत्र देवौ प्रतीतव्यौ for प्रत्येतव्यौ प्रयत्नेन. ९. B. D. E. read °वर्षणम् for °कर्षणम्. १०. C. reads देहं for नेह. ११. A. D. F. C. °नाक° for °ज्ञान°

यथा दहति चैधांसि समिद्धश्चाशुशुक्षणिः ॥
तस्मान्मार्गद्वयेनापि आत्मा ज्ञेयो द्विजोत्तमैः ॥ १६४ ॥
ये न जानन्ति ते यान्ति दन्दशूकादियोनिषु ॥
यत्र गत्वा कृमित्वं वा कीटत्वमथ वाऽऽप्नुयुः ॥ १६५ ॥
एताभ्योऽप्यधमास्वेव जायन्ते ते कुयोनिषु ॥
विद्याविद्ये च मन्तव्ये ते हेतू स्वर्ग-मोक्षयोः ॥ १६६ ॥
विद्या मोक्षप्रदा च स्यादविद्या मृत्युजन्मकृत् ॥
ज्ञानयोगस्तथा कर्म विद्याविद्ये स्मृते बुधैः ॥ १६७ ॥
अपवर्गाय द्वे चापि कर्म कृत्वा निवेदयेत् ॥
कर्मापि क्रियमाणं वै निरपेक्षं तु मोक्षकृत् ॥ १६८ ॥
विष्णवे गुरवे वापि कर्म कृत्वा निवेदयेत् ॥
आत्मनः फलमिच्छंस्तु यत्कर्म कुरुते नरः ॥
तेनैव वाञ्छितप्राप्तिस्तेनान्यद्वोपजायते ॥
हरिर्वा नित्यमभ्यस्यःसर्वभावेन सद्विजैः ॥
तदभ्यासादवाप्नोति मृत्यौ दृष्टे हरिस्मृतिम् ॥ १६९ ॥
एक एव हि स ध्येयो यत्परं नास्ति किञ्चन ॥
विराट् सम्राट् महानेष सदा ध्येयो जितेन्द्रियैः ॥ १७० ॥
महान्तं पुरुषं देवं रविरूपं तमःपरम् ॥
ब्रम्हवित्सोऽतिमृत्युं वै प्रयात्येवानिवर्तकम् ॥ १७१ ॥
एष एव नृणां पन्था ब्रम्हा वै यमुपासते ॥
ये ये जन्मस्वनेकेषु विधिवच्चैकचेतसः ॥ १७२ ॥
न भक्त्या नापि योगेन नाभ्यासैर्नैकजन्मना ॥
ब्रम्हाप्तिर्जायते पुंसां किन्तु स्याद्भूरिजन्मभिः ॥ १७३ ॥
यद्देवा सन्तताभ्यासाद्ब्रम्ह प्रतिपेदिरे ॥
तन्मनुष्यैः कथं प्राप्यमेकेनैव च जन्मना ॥ १७४ ॥

---

१. A. reads पतंगत्वं for यत्र गत्वा. B. also the same, but C. reads पन्नगत्वं. २. A. reads वेतृणां, B. द्वे वापि and C. वै नृणां. ३. A. C. D. read त्रिविष्टपाय च for कृत्वा निवेदयेत्. ४. A. reads देवं रविरूपमतः परम्, B. देवं विरूपं तमसः परम् and C. वेद हरि रूपमतः परम् for देवं रविरूपं तमःपरम्. ५. A. reads सा for स्यात्.

ज्ञानाभ्यासैर्न तद्ब्रह्म कृतैर्दंभस्वरूपकैः ॥
न प्राप्यते परं ब्रह्म न वाप्यासनमुद्रया ॥ १७५ ॥
बहुभिः किमुपायैस्तु प्रोक्तैर्वा ग्रन्थविस्तरैः ॥
एकमेवाभ्यसेत्तत्वं येन चित्ते वसेद्धरिः ॥ १७६ ॥
एकैव भावशुद्धिस्तु यथा स्यात्क्रियते तथा ॥
अन्यत्कुर्यान्मनस्त्वन्यद्विरुद्धमिति सर्वथा ॥ १७७ ॥
भावः स्वर्गाय मोक्षाय नरकायापि स स्मृतः ॥
तस्मात्तं शोधयेद्यत्नाच्छुचिःस्याद्भावशुद्धितः ॥ १७८ ॥
एकस्याः पुत्र-भर्तारौ हृदयोपरि योषितः ॥
भिन्नभावौ भवेतां तौ भावमेवं विशोधयेत् ॥ १७९ ॥
परिष्वक्तो नरो नार्या ह्लादमेति यथा युवा ॥
तल्पस्थोऽपि सकामां तां भावहीनो न कामयेत् ॥ १८० ॥
एको भावो हरौ कार्यो यथाऽसौ निश्चलो भवेत् ॥
तद्बुध्या पञ्चतां गच्छन् स्वर्गं मोक्षमवाप्नुयात् ॥ १८१ ॥
त्यक्त्वापि विविधान् भोगान् तपस्तप्त्वातिदुष्करम् ॥
मृत्युकाले मतिर्या स्यात्तां गतिं याति मानवः ॥ १८२ ॥
योगप्रयोगः कथितः समासात्ध्यानस्य मार्गो बहुधाऽभ्यधायि ॥
योऽभ्यस्यमानस्तु भवेद्विधानात् ब्रह्माप्तिकृद्यश्च तथा द्विजानाम् ॥१८३॥
प्रत्याहारश्च योगश्च ध्यानं विस्तरतस्तथा ॥
उक्तं द्विजहितार्थाय ब्रह्मावाप्तिकरं तथा ॥ १८४ ॥
अङ्गुल्यङ्गुष्ठयोर्नादः क्षणः स्यात्तद्द्वयं त्रुटिः ॥
द्वाभ्यां चैव लवस्ताभ्यां निमेषोऽपि लवद्वयम् ॥ १८५ ॥
तैःपञ्चदशभिः काष्ठा ताश्च त्रिंशत्कला स्मृता ॥
द्वाविंशतित्रिभागस्तु घटिकेति प्रकीर्तितः ॥ १८६ ॥
तद्द्वयं च मुहूर्तःस्यात्तात्रिंशत्तु क्षपा-दिनम् ॥
तत्पञ्चदशकं पक्षस्तद्द्वयं मास उच्यते ॥ १८७ ॥

---

१. B. and E. read देवस्वरूपकैः for दंभस्वरूपकैः. २. B. and E. read प्रासैः for प्रोक्तैः. ३. A. C. F. read क्रियतां for क्रियते. ४. C. reads नार्याः संल्हादयति यौवनम् and F. नार्या साल्हादयति यौवनः for ल्हादमेति यथा युवा, ५. B. reads °रस्य प्रयतं, E. and F. read °रस्य नियतं for °कृद्यश्च तथा. ६. B. reads त्रुटि° for लव° and तद्द्वयम् for लवद्वयम् respectively. ७. A. B. D. E. and F. read तद्विंशति° for द्वाविंशति.° ८. C. reads त्रुटिका for घटिका.

तद्द्वयं ऋतुरित्युक्तं तद्द्वयं काल उच्यते ॥
तत्सार्धमयनं प्रोक्तं तद्द्वयं वत्सरस्तथा ॥ १८८ ॥
पञ्चभिस्तैर्युगं प्रोक्तं तद्द्वाद्शकषष्ठिकम् ॥
षष्ठिकःषष्ठिगुणितो वाक्पतेर्युगमुच्यते ॥ १८९ ॥
तद्द्वयं तु कलिःप्रोक्तस्तद्द्वयं द्वापरो भवेत् ॥
कलित्रयेण त्रेता स्यात्कृतःकलिचतुष्टयम् ॥ १९० ॥
षष्ठिघ्नःसोऽपि कालज्ञैःप्रजानाथयुगः स्मृतः ॥ १९१ ॥
कलिभिर्दशभिर्ब्रम्हन्! चतुर्युगमिति स्मृतम् ॥
चतुर्युगसहस्रेण ब्रम्हाहःकल्प उच्यते ॥ १९२ ॥
अष्टयुगा भवेत्सन्ध्या सायंसन्ध्या च तावती ॥
तदेकसप्ततिगुणं मन्वन्तरमिति स्मृतम् ॥ १९३ ॥
मन्वन्तरद्वयेनेह शक्रपातः प्रकीर्तितः ॥
एतन्मानेन वर्षाणां शतं ब्रह्मक्षयः स्मृतः ॥ १९४ ॥
ब्रम्हक्षयशतेनापि विष्णोरेकमहर्भवेत् ॥
एतद्दिवसमानेन शतवर्षेण तत्क्षयः ॥ १९५ ॥
तत्क्षयस्त्रिगुणोष्टाभी रुद्रस्य त्रुटिरुच्यते ॥
एवमाब्दिकमानेन प्रयातेऽब्दशते द्विजाः ॥
[1]रुद्रश्चात्मनि लीयेत निष्कलंकं निरामयम् ॥ १९६ ॥
[2]निष्प्रकम्पं जगत् व्योम व्योमातीतं परं पदम् ॥
[3]तन्निदिध्याससंशुध्या स तत्रैव विलीयते ॥ १९७ ॥
परम्पराणां परमं [4]विचिन्त्य परात्परं [5]दिष्टपदादतीतम् ॥
क्षणादिकालं क्रमशो[6]ऽब्दमेवं प्रयाति तं तत्पदमव्ययं च ॥ १९८ ।
तमात्मरूपं परमव्ययं च विश्वेश्वरं चित्तभरं प्रपद्ये ॥
शान्तिं च गत्वा विधिना च योगी प्रयाति तद्वै पदमव्ययं च ॥१९९॥

---

१. C. reads this line thus:—

रुद्रस्यात्मनि लीयंते भूतभौतिकसृष्टयः ।.

२. B. reads—

लब्धं यथानेन परं पदं तत्तद्ध्यानयोगात्स तु तत्र लीयते ।.

This line is mentioned excess in C. ३. A. F. read तत्पदध्यान° for तन्निदिध्यास.° ४. C. स्वचिन्त्यं for विचिन्त्य. D. F. also read the same. ५. D. read व्यष्टपरास्ततीतम् for दिष्टपदादतीतम्. ६. C. reads ऽप्रमत्तः for ऽब्दमेव; while D. ऽथ मत्वा and F. reads ऽष्टमेव.

कालज्ञानेन योगोऽयं योगिभिर्ध्यानकारिभिः ॥
मुमुक्षुभिःसदा ज्ञेयं निरालम्बं परं पदम् ॥ २०१ ॥

पराशरोदितं शास्त्रं चतुर्वर्णाश्रमाय च[1] ॥
वेदितव्यं प्रयत्नेन सदा ध्येयं द्विजातिभिः ॥ २०२ ॥

दश द्वादश चाष्टौ वा सप्त षट् पंच वा त्रयः[2] ॥
दैविके पैतृके वापि श्लोकाःश्राव्या द्विजातिभिः ॥ २०३ ॥

श्रावयिष्यति यः श्राद्धे ब्राम्हणान्भक्तितत्परः ॥
प्राश्यन्ति पितरस्तस्य तृप्तिं वै शाश्वतीं द्विजाः ॥ २०५ ॥

य इदं श्रुणुयाद्वापि श्रावयेत्पाठयेदपि ॥
स प्रध्वस्ततमस्तोमो[3] ब्रह्मलोकमवाप्नुयात् ॥ २०६ ॥

त्रिभिःश्लोकसहस्रैस्तु त्रिभिर्वृत्तशतैरपि ॥
पराशरोदितं धर्मशास्त्रं प्रोवाच सुव्रतः ॥ २०७ ॥

नमोऽस्तु याज्ञवल्क्याय मनवे विष्णवे नमः ॥
गौतमाय वसिष्ठाय नमः पाराशराय च ॥ २०८ ॥

इति श्री बृहत्पाराशरे धर्मशास्त्रे सुव्रतप्रोक्तायां संहितायां योगनिरूपणो नाम द्वादशोऽध्यायः ॥ १२ ॥

॥ इति बृहत्पराशरस्मृतिः समाप्ता ॥

१. C. reads °जनाश्रेरत् for °श्रमाय च. २. C. reads नव for त्रयः. ३. C. reads °समस्तैनाः for °तमस्तोमो; also D. and F. read the same.

# BOMBAY SANSKRIT & PRAKRIT SERIES.

*Edited under the superintendence of Prof. S. R. Bhandarkar, M.A., and Prof. V. S. Ghate, M.A.*

| | Rs. | a. | p |
|---|---|---|---|
| Âpastambîya Dharmasûtra, Part I., with Critical Notes and Index and various Readings of the Hiranyakeśi Dharmasûtra by Dr. G. Bühler (B. S. S. No. 44) ... | 1 | 6 | 0 |
| ,, ,, Part II., containing extracts from Haradatta's Commentary called Ujjvalâ by Dr. G. Bühler (B. S. S. No. 50) ... | 1 | 2 | 0 |
| Âtharvaṇa Upanishads and Commentaries, by Col. G. A. Jacob (B. S. S. No. 40) ... | 1 | 4 | 0 |
| Bhaṭṭi-Kâvya with Mallinâtha's Commentary. Vol. I., by K. P. Trivedi, B.A. (B. S. S. No. 56) ... ... ... | 9 | 0 | 0 |
| ,, ,, Vol. II., by K. P. Trivedi, B.A. (B. S. S. No. 57).... ... | 6 | 0 | 0 |
| Concordance to the Principal Upanishads and Bhagavadgîtâ, by Col. G. A. Jacob (B. S. S. No. 39) | 4 | 0 | 0 |
| Dasákumâracharita of Daṇḍin, Part I., with Critical Notes, etc., by Dr. G. Bühler (B. S. S. No. 10)—*Under revision.* | | | |
| ,, ,, Part II., by Dr. P. Peterson (B. S. S. No. 42) ... ... ... ... | 0 | 8 | 0 |
| Deśînâmamâlâ, Part I., Text and Critical Notes, by Prof. Pischel and Dr. G. Bühler (B. S. S. No. 17). | | | |

| | Rs. | a. | p. |
|---|---|---|---|
| Ekâvali of Vidyâdhara, with the Commentary, Tarala, of Mallinâtha, and Critical Notes, etc., by K. P. Trivedi, B.A. (B. S. S. No. 63) ... | 14 | 0 | 0 |
| Gaüḍavaho, by Vâkpati, by S. P. Pandit, M. A. (B. S. S. No. 34) ... ... | 3 | 0 | 0 |
| Hand-book to Ṛigveda, Part I., by Dr. P. Peterson (B. S. S. No. 41) ... ... ... | 1 | 8 | 0 |
| „ „ Part II., by Dr. P. Peterson, (B. S. S. No. 43) ... ... ... | 2 | 8 | 0 |
| Harshacharita, by Dr. A. A. Führer, Text and Comm. (B. S. S. No. 66) ... ... ... ... | 2 | 0 | 0 |
| Hitopadeśa of Nârâyaṇa, by Dr. P. Peterson (B. S. S. No. 33) ... ... ... ... ... | 0 | 14 | 0 |
| Hymns from the Ṛigveda, by Dr. P. Peterson and S. R. Bhandarkar, M. A. (B. S. S. No. 36) | 2 | 4 | 0 |
| Hymns from the Ṛigveda (Second Selection), by Dr. P. Peterson (B. S. S. No. 58) | 4 | 0 | 0 |
| Kâdambarî, Vol. I. (Text), by Dr. P. Peterson (B. S. S. No. 24) ... ... ... ... | 2 | 0 | 0 |
| „ Vol. II. (Introduction and Notes) by Dr. P. Peterson (B. S. S. No. 24) | 4 | 8 | 0 |
| Kîrti-Kaumudî, by A. V. Kathavate, B.A. (B. S. S. No. 25) *Copy-right restored to the Editor* ... | | | |
| Kumârapâla-Charita, by S. P. Pandit, M.A., (B. S. S. No. 60) ... ... ... ... ... ... ... | 8 | 8 | 0 |
| Mahâbhâshya of Patañjali, Vol. I., Parts I., II, and III. (together), 2nd Edn., by Dr. F. Kielhorn (B. S. S. Nos. 18–20) ... ... ... ... ... | 4 | 8 | 0 |
| Mahâbhâshya of Patañjali, Vol. I., Part II., by Dr. F. Kielhorn (B. S. S. No. 19). | 1 | 0 | 0 |
| Vol. I., Part III., by Dr. F. Kielhorn, (B. S. S. No. 20). | 1 | 0 | 0 |
| „ „ Vol. II., Parts I., II. and III. (together), 2nd Edn., by Dr. F. Kielhorn (B. S. S. Nos. 21, 22 and 26) ... ... ... ... | 9 | 0 | 0 |

| | Rs. | a. | p. |
|---|---|---|---|
| Mahâbhâshya of Patañjali Vol. III. Parts I., II., and III. ( together ), 2nd Edn., by Dr. Kielhorn ( B. S. S. No. 28–30 ) ... ... ... | 9 | 0 | 0 |
| Mahânârâyaṇa Upanishad, by Col. G. A. Jacob ( B. S. S. No 35 ) ... ... ... ... ... ... ... | 0 | 7 | 0 |
| Mâlatî-Mâdhava, with Critical Notes, etc., by Dr. R. G. Bhandarkar (B. S. S. No. 15 ), 2nd Edn. | 4 | 4 | 0 |
| Mâlavikâgnimitra, by S. P. Pandit, M. A. ( B. S. S. No. 6 ), 2nd Edn. ... ... ... ... ... ... | 2 | 2 | 0 |
| Mṛichchhakaṭika with two Commentaries and various Readings, by N. B. Godbole, B. A., ( B. S. S. No. 52 ) ... ... ... ... ... ... ... ... | 3 | 8 | 0 |
| Mudrârâkshasa, with the Commentary of Dhuṇḍirâja, by K. T. Telang, M.A. ( B. S. S. No. 27 )—*Copy-right restored to the Editor* ... ... ... | | | |
| Naishkarmyasiddhi, with the Chandrikâ of Jñânottama, by Col. G. A. Jacob ( B. S. S. No. 34 ), 2nd Edn. ... ... ... ... ... ... ... | 2 | 8 | 0 |
| Navasâhasâṅkacharita, Part I., by Pandit Vâmanshâstri Islâmpurkar ( B. S. S. No. 53 ) ... ... | 1 | 10 | 0 |
| Nîti and Vairâgya Śatakas, with notes and extracts from two Commentaries, by K. T. Telang, M. A. ( B. S. S. No. 11 )—*Copyright restored to the Editor*. ... ... ... ... ... ... ... ... ... | | | |
| Nyâyakośa, by Mahâmahopâdhyâya Bhîmâchârya Zaḷkikar. ( B. S. S. No. 49 ) ... ... ... ... | 6 | 0 | 0 |
| Pañchatantra, Book I., with Notes, by Dr. F. Kielhorn (B. S. S. No. 4.) ... ... | 0 | 6 | 0 |
| ,, Books II. and III. with Notes, by Dr. G. Bühler (B. S. S. No. 3) | 0 | 4 | 0 |
| ,, ,, IV. and V., with Notes, by Dr. G. Bühler (B. S. S. No. 1) | 0 | 4 | 0 |
| Parâśara-Smṛiti, Vol. I., Part I., by Pandit Vâmanshâstri Islâmpurkar ( B. S. S. No. 47 ) | 2 | 2 | 0 |

'अविज्ञातनिवेशत्वाद्यत्र मूलं[1] न विद्यते ।
हानिस्तत्र समा कल्प्या क्रेतृ-नाष्टिकयोर्द्वयोः' ॥

इति । [2] अस्वामी विक्रेतुरिव स्वाम्यदत्तमुपभुञ्जानस्यापि दण्डमाह नारदः—

'उद्दिष्टमेव भोक्तव्यं स्त्री पशुर्वसुधाऽपि वा ।
[3] अनर्पितं तु यो भुंक्ते भुक्तभोगं प्रदापयेत् ॥
[4] अनिर्दिष्टं तु यद्द्रव्यं [5] वासः क्षेत्रं गृहादिकम् ।
स्वबलेनैव भुञ्जानश्चोरवद्दण्डमर्हति ॥
अनड्वाहं तथा धेनुं [6] नावं दासं तथैव च ।
अनिर्दिष्टं तु[7] भुञ्जानो दद्यात् पणचतुष्टयम् ॥
दासी नौका तथा धुर्यो बन्धकं नोपयुज्यते[8] ।
उपभोक्ता तु तं द्रव्यं पण्येनैव विशोधयेत् ॥
दिवसे द्विपणं दासीं धेनुमष्टपणं[9] तथा ।
त्रयोदशमनड्वाहम[10]श्वं भूमिं[11] च षोडश ॥
नौकामश्वं च धेनुं च लाङ्गलं[12] कार्मिकस्य च ।
बलात्कारेण यो भुङ्क्ते दाप्यश्चाष्टपणं दिने[13] ॥

१. D. reads मूल्यं for मूलं. २. D. reads this sentence and the following half verse, above, between द्रव्यहानिकरंबुधैः and अविज्ञातस्थानकात्. ३. C. reads अनर्थितं for अनर्पितं. ४. C. reads अनिर्दिशं for अनिर्दिष्टं. ५. C. and D. read सक्षेत्रं च for वासः क्षेत्रं. ६. A. in margin and B. originally read अश्वं for नावं. ७. D. reads स for तु. ८. A. in margin B. and D. read °भुज्यते for °युज्यते. ९. A. and C. read अष्टापणं for अष्टपणं. १०. D. reads मत्स्यं for °मश्वं. ११. B. in margin and C. read तानेव for भूमिं. १२. B. C. and D. read लांगूलं for लांगलं. १३. C. reads °श्च सपणं समम् for °श्चाष्टपणं दिने.

ऊलूखले पणार्धं तु मुसलस्य पणद्वयम् ।
शूर्पस्य च पणार्धं तु द्वे पणे मुनिरब्रवीत्' ॥

(ना. स्मृ. ११. ३–१०.)

इति ।

**इत्यस्वामिविक्रयाख्यं पदं समाप्तम् ।**

अथ सम्भूयसमुत्थानाख्यं पदमुच्यते । तस्य स्वरूपं नारद आह—

'वणिक्प्रभृतयो यत्र कर्म सम्भूय कुर्वते ।
तत् सम्भूयसमुत्थानं व्यवहारपदं स्मृतम्' ॥

(ना. स्मृ. ३. १.)

इति । तत्राधिकारिणो दर्शयति बृहस्पतिः—

'कुलीन-दक्षा-ऽनलसैः प्राज्ञैर्नाणकवेदिभिः ।
आय-व्ययज्ञैः शुचिभिः शूरैः कुर्यात् सहक्रियाम्' ॥

इति । क्रियां कृषि-वाणिज्य-शिल्प-क्रतु-सङ्गीत-सैन्यात्मिकाम् । नाणकविज्ञानी वाणिज्यक्रियायामुपयुज्यते । आय-व्ययज्ञानमात्रं कर्षकक्रियायाम् । सङ्गीतादिशिल्पक्रियायां प्राज्ञत्वमुपयुज्यते । क्रतुक्रियायां तु कुलीनत्व-प्राज्ञत्व-शुचित्वानि । सैन्यक्रियायां शूरत्वमात्रम् । दक्षत्वा-ऽनलसत्वे तु सर्वत्रोपयुज्येते । अतएवा-ऽदक्षादीन् निषेधति स एव—

---

१. D. reads मुशलस्य for मुसलस्य. २. B. originally reads जैमिनिः; while in margin द्वैविध्यं, D. also reads द्वैविध्यं for द्वे पणे. ३. C. reads क्रमं; while D. क्रयं for कर्म. ४. D. reads °शिल्पि° for °शिल्प°. ५. C. reads °स्तैन्यात्मकाम् for °सैन्यात्मिकाम्. ६ B. and D. read °विज्ञानं for °विज्ञानी. ७. C. and D. read कृषि° for कर्षक°. ८. C. reads °शिल्पि° for °शिल्प° ९. A. omits °शुचित्वानि; while C. reads °शुचित्वादि for °शुचित्वानि. १०. C. reads चैत्य° for °सैन्य°. ११. C. reads एव दक्षादीन्; while C. एव दक्षादि for एवाऽदक्षादीन्.

'असक्ता-ऽलस-रोगार्त-मन्दभाग्य-निराश्रयैः ।
वाणिज्याद्याः सहैतैस्तु न कर्तव्या बुधैःक्रियाः' ॥

(ना. स्मृ. ३. ४.)

इति । ये तु सम्भूय वाणिज्यादिक्रियां कुर्वन्ति ते द्रव्यानुसारेण लाभभाजः । तथाच बृहस्पतिः—

'प्रयोगं कुर्वते ये तु हेम-धान्य-रसादिना ।
सम-न्यूनाऽधिकैरंशैर्लाभस्तेषां तथाविधैः' ॥

इति । लाभवदेव व्ययादिरपि तथैवेत्याह स एव—

'समो न्यूनाधिको वांशो येन क्षिप्तस्तथैव सः ।
व्ययं दद्यात् कर्म कुर्याल्लाभं गृह्णीत चैव हि' ॥

इति । द्रव्यानुसारेण लाभ इत्यस्यापवादमाह याज्ञवल्क्यः—

'समवायेन वणिजां लाभार्थं कर्म कुर्वताम् ।
लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ' ॥

(या. स्मृ. २. २५९.)

इति । संविदा समयेन । पुरुषविशेषानुसारेण कृतौ कल्पितौ

---

१. C. reads अशक्ता-ऽलस-दुर्बुद्धि° for अशक्ता-ऽलस-रोगार्त°. २. B. C. D. read तथाविधिः for तथाविधः. ३. C. reads लाभस्तेषां तथाविध; while D. ततस्तेषां तथाविधः for लाभं गृण्हीत चैव हि. ४. C. omits द्रव्या°. ५. C. reads संविदा क्रीतौ for संविदा कृतौ.

लाभालाभौ ज्ञेयौ । न तु द्रव्यानुसारेण इत्यर्थः* । सम्भूय कारिणां कर्तव्यमाह व्यासः—

'समक्षमसमक्षं वा ऽवंञ्चयन्तः परस्परम् ।
नानापण्यानुसाराच्चे प्रकुर्युः क्रय-विक्रयौ ॥
अगोपयन्तो भाण्डानि शुल्कं दद्युश्च तेऽध्वनि ।
अन्यथा द्विगुणं दाप्याः शुल्कस्थानात् बहिःस्थिताः' ॥

इति । नारदोऽपि—

'§ भांडं-पिण्ड-व्ययोद्धार-भार-साराद्यवेक्षणम् ।
कुर्युस्तेऽव्यभिचारेण समये स्वे व्यवस्थिताः' ॥
(ना. स्मृ. ३. ४.)

इति । सम्भूयकारिणां परस्परं विवादे निर्णयप्रकारमाह बृहस्पतिः—

---

* अत्र विज्ञानेश्वरः—'सर्वे वयमिदं कर्म मिलिताः कुर्म' इत्येवंरूपा सम्प्रतिपत्तिः समवायः । तेन ये वणिड्-नट-नर्तकप्रभृतयो लाभलिप्सवः प्रातिस्विकं कर्म कुर्वते तेषां लाभालाभौ उपचयापचयौ यथाद्रव्यं येन यावत् द्रव्यं पण्यग्रहणाद्यर्थं दत्तं तदनुसारेणावसेयौ । यद्वा । प्रधानगुणभावपर्यालोचनया अस्य भागद्वयं अस्य एको भागः इत्येवंरूपया संविदा समयेन यथा सम्प्रतिपन्नौ तथा वेदितव्यौ' । एतेन द्रव्यानुसारेण संविदनुसारेण वा भागकल्पनं विज्ञानेश्वरस्य सम्मतमिति स्पष्टम् ।

§ भाण्डं मूलधनं, पिण्डः क्रीतपदार्थः, व्ययः मूल्यादिरूपेण व्ययितं द्रव्यं, उद्धारो लाभः, भारः क्रीतद्रव्यस्य तुलामानं, सारः द्रव्यस्य स्थिरोंऽशः इत्यादीनां ते भागिनः अवेक्षणं कुर्युः । कृतसमयानुसारेण भागिभिः भाण्डाद्यवेक्षणं कर्तव्यमित्यर्थः

---

१. B. and D. read वंचयंत° for ऽवंचयंतः. २. B. and C. read अगोपयन्तौ for अगोपयन्तो. ३. D. reads दाप्यः for दाप्याः. ४. A. and B. read भाण्डी भाण्डव्ययोद्धार° for भाण्डपिण्ड-व्ययोद्धार°.

'परीक्षकाः साक्षिणश्च त एवोक्ताःपरस्परम् ।
सन्दिग्धेऽर्थे ऽवंचनार्था[1] न चेद्द्विद्वेषसंयुताः[2] ॥
यःकश्चिद्वञ्चकस्तेषां विज्ञातः क्रय-विक्रये ।
शपथैः स[3] विशोध्यः स्यात् सर्ववादेष्वयं विधिः' ॥

इति । दैव-राजकृतद्रव्यहानिविषयेऽप्याह स एव—

'क्षयहानिर्यदा तत्र दैव-राजकृतात्[4] भवेत् ।
सर्वेषामेव सा प्रोक्ता कल्पनीया यथांशतः' ॥

इति । क्षयायैव हानिः क्षयहानिः । नतूपचर्यार्थं[5] व्ययः । प्रातिस्विकदोषेण द्रव्यनाशे स एवाह—

'अनिर्दिष्टो वार्यमाणः प्रमादाद्यस्तु[6] नाशयेत् ।
तेनैव तद्भवेद्देयं सर्वेषां समवायिनाम्' ॥

इति । अनिर्दिष्टः समवाय्यननुज्ञातः । चोरादिभ्यः पालयितुर्लाभाधिक्यमस्तीत्याह कात्यायनः—

'चोरतः सलिलादग्नेर्द्रव्यं यस्तु समाहरेत्[7] ।
तस्यांशो दशमो देयः सर्वद्रव्येष्वयं विधिः' ॥

इति । समाहरेत्[8] स्वशक्त्या परिपालयेदित्यर्थः । बृहस्पतिरपि[9]—

---

१. B. and D. read वंचनार्या for ऽवंचनार्थाः. २. D. reads तेन चेत् द्वेष° for न चेद्द्विद्वेष°. ३. A. reads संविशोध्यः for स विशोध्यः. ४. A. reads °कृता for °कृतात्. ५. A. C. read रूपप्राप्त्यर्थं and B. क्षयाद्यर्थं; while D. प्रवासार्थं for उपचर्यार्थं. ६. A. B. read यदि for यस्तु. ७. B. has marginal reading समाहरन्. ८. B. reads समाहरन् हरेदित्यर्थः for समाहरेत् स्वशक्त्या परिपालयेदित्यर्थः. ९. D. omits बृहस्पतिरपि—

'दैव-राजभयाद्यस्तु स्वशक्त्या परिपालयेत् ।
तस्यांशं दशमं दत्वा गृह्णीयुस्ते ततः परम्' ॥

इति; while C. omits the second half and A. only the first half.

'दैव-राजभयाद्यस्तु स्वशक्त्या परिपालयेत्।
तस्यांशं दशमं दत्वा गृह्णीयुस्ते ततः परम्' ॥

इति। यस्तु समवायिभिः प्रयुक्तं धनं समवायिभिःसह प्रतिपादनादिना न साधयति तस्य लाभहानिरिति।

तदाह[1] बृहस्पतिः—

'समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत्।
न याचते च यः कश्चिल्लाभात् स परिहीयते' ॥

इति। सर्वानुमतः[2] सर्वेषां कार्यं एक एव कुर्यात्तदाह स एव—

'बहूनां सम्मतो यस्तु दद्यादेको धनं नरः।
करणं कारयेद्वापि सर्वैरेव कृतं भवेत्' ॥

इति। करणं लेख्यादिकं। सम्भूयकारिणामृत्विजां कर्तव्यमाह मनुः—

'ऋत्विजः समवेतास्तु यथा सत्रे निमन्त्रिताः।
कुर्युर्यथार्हं[3] ते कर्म गृह्णीयुर्दक्षिणां तथा'† ॥

इति। तथेति कर्मानुसारेण दक्षिणां गृह्णीयुरित्यर्थः।

तथा च स एव—

'सम्भूय स्वानि[4] कर्माणि कुर्वद्भिरिह मानवैः।
अनेन[5] विधियोगेन कर्तव्यांऽशप्रकल्पना[6]' ॥
(म. स्मृ. ८. २११.)

---

† नायं श्लोक उपलभ्यते मुद्रितपुस्तकेषु। मत्संगृहीतलिखितपुस्तके तु वर्तत एव। व्याख्यातश्च मेधातिथिना।

---

१. B. reads तदा बृहस्पतिराह for तदाह बृहस्पतिः. २. D. reads °अनुगतः for °अनुमतः. ३. A. reads यथाह तत् for यथार्हं. ४. B. originally reads स्वामि° for स्वानि. ५. A. and B. read अनेके कर्म° and C. and D. अनेकं कर्म° for अनेन विधि°. ६. D. reads कर्तव्यांशं प्रकल्पयेत् for कर्तव्यांऽशप्रकल्पना.

इति । इयं चांशकल्पना 'तस्य द्वादशशतं दक्षिणा' इत्यवं क्रतुसम्बन्धित्वमात्रतया विहितायां दक्षिणायामेव । नर्त्विग्विशेषोल्लेखेन विहितायाम् । अत एवोक्तं तेनैव—

'रथं हरेत वाध्वर्युर्ब्रह्मा ऽऽधाने च वाजिनम् ।
होता वापि हरेदश्वमुद्गाता चाप्यनः क्रये' ‡ ॥
( म. स्मृ. ८. २०९. )

इति । दक्षिणांशप्रकल्पनामाह स एव—

'सर्वेषामर्धिनो मुख्यास्तदर्धेनार्धिनो ऽपरे ।
तृतीयिनस्तृतीयांशाश्चतुर्थांशास्तु पादिनः' ॥
( म. स्मृ. ८. २१०. )

इति । सर्वेषां षोडशर्त्विजां मध्ये मुख्याश्चत्वारो होत्रध्वर्युब्रह्मोद्गातारस्ते गोशतस्य अर्धिनः । सर्वेषां भागपरिपूरणोपपत्तिवशायाताष्टचत्वारिंशद्रूपार्धेनार्धभाजः । अपरे मैत्रावरुण-

‡ केषांचित् शाखिनां आधाने अध्वर्यवे रथो देयत्वेनाम्नायते । तथैव ब्रह्मणे वेगवानश्वः । होत्रेचाश्वः । उद्गात्रे सोमक्रयवहनशकटम् अतो व्यवस्थाम्नानसामर्थ्यात् या दक्षिणा यत्सम्बन्धत्वेन श्रूयते स एव तामाददीतेत्यभिप्रायः ।

१. A. C. and D. read च for वा; while B. reads °त् तथा for वा. २. A. and C. read गृह्याधाने च for ब्रह्माधाने च. ३. A. B. read विनिद्वरं चाश्वं; while C. originally विनिद्वरं चाश्वं and D. हरेत्तथैवाश्वं for वापि हरेदश्वं. ४. B. originally reads अर्थिनो for अर्धिनो; while C. has mistake through whole the verse. ५. D. reads °पूर्णोपपत्तिवशादाया-ताष्टा° for पूरणोपपत्तिवशायाताष्टा°. ६. D. reads °रूपार्धेण for °रूपार्धेन. ७. C. reads अर्धभागः for अर्धभाजः. ८ A and C. omit अपरे मैत्रावरुण-प्रतिप्रस्थातृ-ब्राह्मणाच्छंसि-प्रस्तोतारस्तदर्धिनः धनमुख्यांशरूपार्द्धेन चतुर्विंशतिरूपेणार्धभाजः । ये पुनस्तृतीयिनो.

प्रतिप्रस्थातृ-ब्राह्मणाच्छंसि-प्रस्तोतारस्तदर्धिनः धनमुख्यांशस्याद्धेन चतुर्विंशतिरूपेणार्धभाजः। ये पुनस्तृतीयिनोऽच्छावाक-नेष्टा-ऽग्नीध्र-प्रतिहर्तारस्ते तृतीयिनो मुख्यांशस्य षोडशभाग-रूपतृतीयांशभाजः। ये तु पादिनोग्रावस्तोतृ-नेतृ-पोतृ-सुब्रह्मण्यास्ते मुख्यभागस्य चतुर्थांशेन द्वादशगोरूपेणांशभाजः। मुख्यानां चतुर्णां मिथो विभागः समत्वेनैव। एवमेव तदनंतरादीनामपि मिथो विभागः। तथा च कात्यायनसूत्रम्—

'द्वादश द्वादशाद्येभ्यः षट् षट्
द्वितीयेभ्यश्चतस्रश्चतस्रः
तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्यः'।

इति। स्वकीयकर्मकलापांशकर्तृत्वानुसारेण भागो देय इत्याह मनुः।—

'ऋत्विग्यदि वृतो यज्ञे स्वकर्म परिहापयेत्।
तस्य कर्मानुरूपेण देयोऽंशः सहकर्तृभिः'॥
(म. स्मृ. ८. २०६.)

इति। सहकर्तृभिः* सम्भूयकारिभिरित्यर्थः। कृतकर्मांशानुसारेण दक्षिणां दद्यादित्युक्तम् तस्य क्वचिदपवादमाह स एव—

*यज्ञे कृतवरणः ऋत्विक् किञ्चित् कर्म कृत्वा यदि व्याध्यादिना अशक्तः सन् कर्म त्यजति इत्यत्रानुसन्धेयम्। शाठ्यादिना त्यजति चेन्न तस्यांशः।

१. D. reads °कलापस्याशक्त्याऽकरणे कृतानुसारेण for °कलापांशकर्तृत्वानुसारेण; while C. reads °कलापांशकर्त्तृकृतानुसारेण. २. B. and C. read परिहापयेत् for परिहापयन. ३. B. and C. omit सह°.

'दक्षिणासु प्रदत्तासु स्वकर्म परिहापयन् ।
कृत्स्नमेव लभेतांशमन्येनैव च कारयेत्' ॥

(म. स्मृ. ८. २०७.)

इति । अन्येन स्वस्वगणवर्त्तिनां मध्ये प्रत्यासन्नेन । कर्म-मध्ये ऋत्विङ्मरणे[1] नारद आह—

'ऋत्विजां व्यसनेऽप्येवमन्यस्तत्कर्म विस्तरेत्[2] ।
लभते दक्षिणाभागं स तस्मात् सम्प्रकाल्पितम्' ॥

(ना. स्मृ. २. ८.)

इति । सम्भूयकारिणां कृषिकराणां[3] कर्तव्यमाह बृहस्पतिः—

'वाह्य-वाहक-बीजाद्यैः[4] क्षेत्रोपकरणेन च ।
ये समाः स्युस्तु तैः सार्धं कृषिः कार्या विजानता' ॥

इति । वाह्यं लांगलादिः । वाहको बलिवर्दादिः । क्षेत्रेषु वर्जनीयमाह स एव—

'पर्वते नगराभ्याशे तथा राजपथस्य च ।
उषरं मुषिकव्याप्तं क्षेत्रं यत्नेन वर्जयेत्' ॥

इति । वाह्येषु विवर्जनीयानाह[5] स एव—

---

१. C. reads °वरणे for °मरणे; while D. °तरणे. २. B. reads निस्तरेत, C. °भिस्तरेत् for विस्तरेत्. ३. B. and C. read कृषिकाणां for कृषिकराणां. ४. A. C. D. omit:—

'वाह्य-वाहक-बीजाद्यैः क्षेत्रोपकरणेन च ।
ये समास्युस्तु तैः सार्धं कृषिः कार्या विजानता' ॥

इति । वाह्यं लांगलादिः । वाहको बलीवर्दादिः । क्षेत्रेषु वर्जनीयमाह स एव;— while B. reads this portion after कर्तव्यमाह बृहस्पतिः. ५. C. reads वाह्येष्वपि वर्जनीयानाह for वाह्येषु विवर्जनीयानाह.

'कृशातिवृद्धं क्षुद्रं च रोगिणं प्रपलायिनम्।
काणं खञ्जं विनाऽऽदद्यात् वाह्यं प्राज्ञः कृषीवलः' ॥

इति। प्रातिस्विकदोषात् फलहानौ विशेषमाह स एव—

'वाह्य-बीजात्ययाद्यस्य क्षेत्रहानिः प्रजायते।
तेनैव सा प्रदातव्या सर्वेषां कृषिजीविनाम्' ॥

इति। वाह्य-बीजग्रहणं कृषिसाधनानामुपलक्षणार्थम्। सम्भूयकारिणां शिल्पिनां लाभविभागमाह स एव—

'हेमकारादयो यत्र शिल्पं सम्भूय कुर्वते।
कर्मानुरूप निर्वेशं लभेरंस्ते यथांशतः' ॥

इति। निर्वेशोभृतिः। कात्यायनोऽपि—

'शिल्पाऽऽकरज्ञ-कुशला आचार्यश्चेति शिल्पिनः।
एक-द्वि-त्रि-चतुर्भागान् हरेयुस्ते यथांशतः' ॥

इति। हर्म्यादिनिर्माणकृतांमध्ये मुख्यभागमाह बृहस्पतिः

'हर्म्यं देवगृहं वापि धार्मिको यत् पुराणि च।
संभूय कुर्वतां तेषां प्रमुखो द्व्यंशमर्हति' ॥

इति। शिल्पिनां स्वरूपमाह स एव—

---

१. A. reads कृताति° for कृशाति°. २. B. and C. read शुद्धं for क्षुद्रं. ३. B.and C. read च नाद्द्यात् for विनाऽऽदद्यात्. ४. C. reads वाह्यप्रज्ञः कृषीवलः for वाह्यं प्राज्ञः कृषिबलः. ५. C. reads प्रातिस्थिक° for प्रातिस्विक°. ६. C. reads °साधनानुपलक्षणार्थम् for °साधनानामुपलक्षणार्थम्. ७. A. and D. omit लाभ°. ८. C. wrongly reads निर्णयो भृतिः. ९. B. reads शिक्षकाभिज्ञ°, C. शिक्षकारिज्ञ.°; while D. शिक्षकाभिज्ञ° for शिल्पाकरज्ञ°. १०. B. reads लभेयुः. for हरेयुः. ११. B. reads यथोत्तरम् for यथांशतः. १२. A. C. D. omit the whole portion inserted in the text, which is to read after यथांशतः till स्तेनान् प्रत्याह स एव. १३. C. omits सम्भूय कुर्वतां तेषां प्रमुखो द्व्यंशमर्हति' ॥.

'हिरण्य-कुप्य-सूत्राणां काष्ठ-पाषाण-चर्मणाम् ।
संस्कर्ता तु कलाभिज्ञः शिल्पी प्रोक्तो मनीषिभिः' ॥

इति । कुप्यं हेम-रूप्यव्यतिरिक्तत्रपु-सीसकादिकम् । स्तेनान् प्रत्याह स एव—

'स्वाम्याज्ञया तु यच्चौरैः परदेशात् समाहृतम् ।
राज्ञे दत्वा तु षड्भागं भजेयुस्ते यथांशतः ॥
चतुरोंशान् भजेन्मुख्यः शूरस्त्र्यंशमवाप्नुयात्[1] ।
समर्थस्तु हरेद्व्यंशं शेषास्त्वन्ये समांशिनः' ॥

इति । परदेशाद्वैरिदेशादित्यर्थः[2] । प्रबल[3]वैरिदेशादाहृतधनविषयमेतत् । दुर्बल[4]वैरिदेशादाहृतविषये त्वाह कात्यायनः—

'परराष्ट्राद्धनं यस्य[5] चौरैश्चेदाज्ञया[6]ऽऽहृतम् ।
राज्ञे[7] दशांशमुद्धृत्य विभजेरन् यथाविधि ॥
चौराणां मुख्यभूतस्तु चतुरोंशांस्तथा हरेत् ।
शूरोंऽशांस्त्रीन् समर्थो द्वौ शेषास्त्वेकैकमेव च' ॥

इति । हानिरप्येवमेवेत्याह स एव—

'तेषां चेत्प्रसृतां यो यो ग्रहणं समवाप्नुयात् ।
तन्मोक्षणार्थं यद्दत्तं वहेयुस्ते यथांशतः' ॥

इति । नर्तकानां भागकल्पनाप्रकारमाह स एव—

१. C. reads °स्त्वंशमथाप्नुयात् for °स्त्र्यंशमवाप्नुयात्. २. C. omits परदेशात् वैरिदेशादित्यर्थः. ३. C. adds °तर° after प्रबल°. ४. B. adds °तर° after दुर्बल°. ५. C. reads यत्स्यात् for यस्य. ६. B. and C. read स्वाम्याज्ञया for °श्चेदाज्ञया. ७. C. omits राज्ञे दशांशमुद्धृत्य विभजेरन् यथाविधि ॥ इति and the following also. ८. A. C. and D. omit the following portion from चौराणां मुख्यभूतस्तु, up to the end सर्वेणामेव निर्णयः' ॥ इति that up to the end of this व्यवहारपद.

'नर्तकानामेष एव धर्मः सद्भिरुदाहृतः ।
तालज्ञो लभते ह्यर्धं गायनास्तु समांशिनः ॥
प्रमुखा द्व्यंशमर्हन्ति सोयं संभूयकुर्वताम्' ।

इति । शिल्पिनां मुख्यः प्रोक्तः । स एष धर्मो भागद्वयरूपो नर्तकादीनां संभूयकुर्वतांमध्ये मुख्यस्योदाहृतः । अयमेव विभागः पूर्वमकृतसमवायानां संभूयकारिणां द्रष्टव्यः ।

तथा च स एव—

'वणिजां कर्षणानां च चोराणां शिल्पिनां तथा ।
अनियम्यांशकर्त्तॄणां सर्वेषामेव निर्णयः' ॥

इति । इति सम्भूयसमुत्थानाख्यं पदं समाप्तम् ।

अथ संभूयसमुत्थानोपसंहारपूर्वकं[1] दत्ताप्रदानिकाख्यं व्यव-[2]हारपदमुच्यते[3] । तत्र[4] बृहस्पतिः—

'एषाऽखिलेनाभिहिता संभूयोत्थाननिष्कृतिः ।
अदेय-देय-दत्तानामदत्तानां च कथ्यते' ॥

इति । अदेयं दानानर्हं, देयंदानार्हं, दत्तं स्थिरं अनिवर्तनीयम्, अदत्तं अनिवर्तनीयम् । इत्येवं चतुर्विधानामदेयादीनां स्वरूपं कथ्यत इत्यर्थः । अतएव[5] नारदः—

दत्त्वा[6] द्रव्यमसम्यग्यः पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम तद्विवादपदं स्मृतम् ॥

---

१. A. C. and D. omit संभूय समुत्थानोपसंहारपूर्वकं. २. A. C. and D. omit व्यवहार°. ३. B. reads अनुक्रमते for उच्यते. ४. A. C. and D. omit from तत्र बृहस्पतिः । up to अत एव. ५. A. and D. substitute तत्र for अतएव ६. B. omits :—

'दत्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम तद्विवादपदं स्मृतम्' ॥;

while C. omits the same and the following :—

'अदेयमथ देयं च दत्तं चादत्तमेव च ।

अदेयमथ देयं च दत्तं चादत्तमेव च ।
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः' ॥

( ना. स्मृ. ४. १–२. )

इति । अदेयस्वरूपभेदानाह बृहस्पतिः—

'सामान्यं पुत्र-दारादि[1] सर्वस्वं न्यासयाचितम्[2] ।
प्रतिश्रुतमथान्यस्य न देयं त्वष्टधा स्मृतम्' ॥

इति । सामान्यमनेकस्वतंत्रस्वामिकं[3] रथ्यादि । नारदोऽपि—

'अन्वाहितं याचितकमाधिः साधारणं च यत् ।
निक्षेपं पुत्रदारं च सर्वस्वं चान्वये सति ॥
आपत्स्वपि हि कष्टासु वर्तमानेन देहिना ।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम्' ॥

( ना. स्मृ. ४. ४–६. )

इति । अन्वाहितादिवत् स्त्रीधनमप्यदेयम् । अतएव दक्षः—

'सामान्यं याचितं न्यास आधिर्दाराश्च[4] तद्धनम् ।
अन्वाहितं च निक्षेपं सर्वस्वं चान्वये सति ॥
आपत्स्वपि न देयानि नववस्तूनि[5] पण्डितैः ।
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः' ॥

इति । अदेयदाने प्रतिग्रहे च दण्डो मनुनाऽभिहितः—

---

१. A. and D. read °दाराधि° for °दारादि. २. C. reads °पावितं for °याचितम्. ३. A. and D. substitute °स्वत्वकं for °स्वतंत्रस्वामिकं. ४. C. wrongly reads आविर्दासाश्च for आधिर्दाराश्च. ५. C. reads तव वस्त्राणि for नव वस्तूनि.

'अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति ।
तावुभौ चोरवच्छास्यौ[1] दण्ड्यौ चोत्तमसाहसम्' † ॥

इति । अदेयग्रहणमदत्तस्याप्युपलक्षणार्थम् । अतएव नारदः—

'गृह्णात्यदत्तं यो लोभाद्[2]यश्चादेयं प्रयच्छति ।
दण्डनीयावुभावेतौ धर्मज्ञेन महीक्षिता' * ॥

( ना. स्मृ. ४. १२. )

इति । किं तर्हि देयमित्यपेक्षिते स[3] एवाह—

'कुटुम्बभरणात् द्रव्यं यत्किञ्चिदतिरिच्यते ।
तद्देयमुपरुद्ध्यन्यत् ददद्दोषमवाप्नुयात्' ॥

( ना. स्मृ. ४. ६. )

इति । भर्तव्यं कुटुम्बमुपरुद्ध्येत्यर्थः । कात्यायनोऽपि—

'सर्वस्वं गृहवर्जं तु कुटुम्बभरणाधिकम्[4] ।
यद्द्रव्यं तत् स्वकं देयमदेयं स्यादतोऽन्यथा' ॥

इति । याज्ञवल्क्योऽपि—

'स्वं कुटुम्बाविरोधेन[5] देयं दार-सुतादृते' ।

( या. स्मृ. २. १७५. )

---

† नास्त्ययं श्लोकोऽस्मद्दृष्टमुद्रीतमनुस्मृतिपुस्तकेषु । कुत्रचिदयं कात्यायनवचनत्वेनोद्धृतो दृश्यते ।

* विज्ञानेश्वरस्तु अदेयदायको दण्ड्यः तथाऽदत्तप्रतीच्छकः' । इति उति ॥

---

१. C. reads चारवत् for चोरवत् २. C. reads मोहात् for लोभात्. ३. C. reads त एव for स एव. ४. B. originally reads °दिकम् for °धिकम्. ५. C. reads स्वकुटुंब° for स्वं कुटुम्बा°.

इति । अत्र[1] सुतस्यादेयत्वं एकपुत्रविषयम् । तस्यापि दाने कृते सन्तानविच्छेदापत्तेः । अतएवैकस्य पुत्रस्य दानं निषेधति वसिष्ठः—

‘न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा । (३)
स हि सन्तानाय पूर्वेषाम्’ ॥ (४)

(व. स्मृ. १५. ३–४.)

इति । तथा कात्यायनोऽपि

‘अतश्च सुत-दाराणां वशित्वं त्वनुशासने ।
विक्रये चैव दाने च वशित्वं न सुते पितुः’ ॥

इति । एवमादीनी सुतस्यादेयत्वप्रतिपादकानि वचनान्येकपुत्रविषयाणीत्यवगम्यते । अनेकपुत्रेष्वपि माता-पितृवियोग सहनक्षम एव देयः—

‘विक्रयं चैव दानं च न नेयाः[2]स्युरनिच्छवः ।
दाराः पुत्राश्च सर्वस्वमात्मन्येव[3] तु योजयेत्’ ॥

इति कात्यायनस्मरणात् । न नेयाः स्युरनिच्छव इत्यनापद्विषयम्—

‘आपत्कालेपि कर्तव्यं दानं विक्रय एव वा ।
अन्यथा न प्रवर्तेत इति[4] शास्त्रविनिश्चयः[5]’ ॥

इति तानेवाधिकृत्य तेनैवोक्तत्वात् । पुत्रस्य प्रतिग्रह[6]-प्रकारविशेषो वसिष्ठेन दर्शितः—

१. A. and D. omit अत्र. २. C. reads अनेयाः for न नेयाः; while B. originally reads न देयाः. ३ B. and C. omit आत्मन्येव तु योजयेत्. ४. C. omits इति शास्त्रविनिश्चयः. ५. B. reads शास्त्रस्य निश्चयः for शास्त्रविनिश्चयः. ६. B. reads प्रतिग्रहे for प्रतिग्रह°

'पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि च
निवेद्य निवेशनस्यमध्ये व्याहृतिभिर्हुत्वाऽदूर-
बान्धवमसन्निकृष्टमेव गृह्णीयात्'।

( व. स्मृ. १५. ६. )

इति। अदूरबान्धवं सन्निकृष्टमातुलादिबान्धवम्। असन्निकृष्ट-सन्निकृष्टभ्रातृपुत्रादिव्यतिरिक्तमेव। स्थावरविषये देयं द्रव्यमाह प्रजापतिः—

'सप्तागमाद्गृहक्षेत्राद्यद्यत् क्षेत्रं प्रचीयते।
पित्र्यं वाऽथ स्वयं प्राप्तं तद्दातव्यं विवक्षितम्'॥

इति। सप्तभ्य आगमेभ्यो यत् प्रचीयते समधिकं स्यात्तद्दातव्यत्वेन विवक्षितमिति। स्वयं प्राप्तं द्रव्यं अविभक्तधनैर्भ्रातृभिरननुज्ञातमपि देयम्—

'स्वेच्छदेयं स्वयं प्राप्तम्'।

इति बृहस्पतिवचनात्। यत्तु तेनैवोक्तम्—

'विभक्ता वाऽविभक्ता वा दायादाः स्थावरे समाः।
एकोऽप्यनीशः सर्वत्र दानाधमनविक्रये'॥

---

१. B. reads आवेद्य for निवेद्य. २. C. reads °मातृ° for °भ्रातृ°. ३. B. and C. read देयद्रव्यम् for देयं द्रव्यम्. ४. B. and C. read सप्तारामात् for सप्तागमात्. ५. B. reads यद्यद्दत्तं; while C. यत्र क्षेत्रं for यद्यत्क्षेत्रं. ६; B. and C. read प्रदीयते for प्रचीयते. ७. B. and C. read यत् for ऽथ. ८. B. reads आरामादिभ्यो; while C. सागमादिभ्यो for आगमेभ्यो. ९. C. reads समात्रकं for समधिकं.

इति । तदविभक्तस्थावरविषयम् सप्तानाधिकस्थावरविषयं वा । सप्ताधिकस्यैव[1] देयत्वेनाभिधानात् । किंचिद्भर्त्रा भार्ययाऽनुज्ञातमेव देयम् । किंचि[3]न्मुख्येनापि भ्रात्राद्यनुज्ञातमेवदेयम् । किञ्चित् दासेन स्वार्जितमपि स्वाम्यनुज्ञातमेव देयम् । तथाच स एव—

‘ सौदा[4]यिकं क्रमायातं शौर्यप्राप्तं च यद्भवेत् ।
स्त्री-ज्ञाति-स्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयात्’ ॥

इति । सौदायिकं विवाहलब्धम् । क्रमायातं पितामहादिक्रमायातम् । स्त्री-ज्ञात्यनुमतं सावशेषं देयम् ।

‘ वैवाहिके क्रमायाते सर्वं[6] दानं न विद्यते’ ।

इति तेनैवोक्तत्वात् । इत्थं देयादेयस्वरूपं निरूपितम् ।

अथ दत्तादत्तयोस्तु स्वरूपं निरूप्यते । तत्र दत्तं सप्तविधमदत्तं षोडशात्मकम् । तथा च नारदः—

‘ दत्तं सप्तविधं प्रोक्तमदत्तं षोडशात्मकम् । ( ३ )
पण्यमूल्यं भृतिस्तुष्ट्या[7] स्नेहात् प्रत्युपकारतः ।
स्त्रीशुल्कानुग्रहार्थं च दत्तं दानविदो विदुः ॥ ( ८ )
अदत्तं तु भय-क्रोध-शोकावे[8]गरुगन्वितैः ।
तथोत्कोच-परीहास-व्यत्यास-च्छलयोगतः ॥ ( ९ )

१, B. reads °स्याददेयत्वेन for °स्यैवदेयत्वेन. २. A. and D. omit किंचिन्मुख्येनापि भ्रात्राद्यनुज्ञातमेव देयम्. ३. C. adds अन्यत् after किंचित्. ४. C. reads सौदासिकं for सौदायिकं. ५. B. originally reads °स्वामि°. ६. C. reads सर्वदानं for सर्वं दानं. ७. C. reads तुष्टा for तुष्ट्या. ८. B. originally reads °मेवरुगान्वितैः, A. °वेगानुगर्हितम्; while C. reads °वेगानुगान्वितैः for °वेगरुगान्वितैः.

बाल-मूढा-ऽस्वतन्त्रा-ऽऽर्त्त-मत्तोन्मत्तापवर्जितम् ।
कर्ता ममायं कर्मेति प्रतिलाभेच्छया च[1] यत् ॥ (१०)
अपात्रे पात्रमित्युक्ते कार्ये चाऽधर्मसंहिते[2] ।
यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतम्' ॥ (११)

( ना. स्मृ. ४. ३.–११. )

इति । पण्यस्य क्रीतद्रव्यस्य मूल्यम् । भृतिर्वेतनं कृतेकर्मणे[3] दत्तम् । तुष्ट्या[4] बन्दि-चारणादिभ्यो दत्तम् । स्नेहाद्दुहित्रादिभ्यो दत्तम् । प्रत्युपकारतः उपकृतवते प्रत्युपकाररूपेण दत्तम् । स्त्रीशुल्कं परिणयनार्थं कन्याज्ञातिभ्यो दत्तम् । अनुग्रहार्थं अदृष्टार्थे[5] दत्तम् । तदेतत् पण्यमूल्यादिसप्तविधं दत्तमेव न प्रत्याहरणीयम् । तथा च याज्ञवल्क्यः—

'देयं प्रतिश्रुतं[6] चैव दत्त्वा नापहरेत् पुनः' ।

( या. स्मृ. २. १७६. )

इति । भयेन बन्दिग्रहादिभ्यो दत्तम् । क्रोधेन पुत्रादिविषयकोपनिर्यातनायान्यस्मै दत्तम् । पुत्रवियोगादिनिमित्तशोकावेशेन[7] दत्तम् । रुगन्वितैः असाद्ध्य रोगपीडितैश्च यद्दत्तम् । उत्कोचेन कार्यप्रतिबन्धनिरासार्थमधिकृतेभ्यो दत्तम् । परिहासेनोपहासेन दत्तम् । द्रव्यव्यत्यासेन दत्तं एकः स्वं द्रव्यमन्यस्मै ददाति[8] अन्योऽपि तस्मै ददाति इति

---

१. C. reads वा for च. २. C. reads °संहितम् for °संहिते. ३. B. C. and D. read °कर्मणो for कर्मणे. ४. C. reads तुष्टा for तुष्ट्या. ५. C. and B. read अदृष्टार्थं for अदृष्टार्थे. ६. C. reads प्रतिस्तुतं for प्रतिश्रुतं. ७. B. reads शोकवशेन for शोकावेशेन. ८. A. omits ददाति अन्योऽपि तस्मै ददाति इति दानव्यत्यासेन दत्तम् । अन्यस्मै दातव्यमन्यस्मै दानम्.

दानव्यत्यासेन दत्तम् । अन्यस्मै दातव्यं अन्यस्मै दानम् । छल-योगतः शतदानमभिसन्धाय सहस्रमिति परिभाव्य दत्तम् । बालेनाप्राप्तषोडशवर्षेण दत्तम् । मूढेन लोक-वेदानभिज्ञेन दत्तम् । अस्वतन्त्रेण पुत्र-दासादिना दत्तम् । आर्त्तेन रोगोपहतेन दत्तम् । मत्तेन मदनियतेन दत्तम् । उन्मत्तेन वातिकाद्युन्मादग्रस्तेन अपवर्जितं दत्तम् । अयं मदीयमिदं कर्म करिष्यतीति प्रतिलाभेच्छया प्रतिलाभमकुर्वाणाय दत्तम् । अयोग्याय योग्योक्तिमात्रेण यथा अचतुर्वेदाय चतुर्वेदोऽहमित्युक्ते दत्तम् । यज्ञं करिष्यामीति धनं लब्ध्वा द्यूतादौ विनियुञ्जानाय दत्तम् । एवं षोडशप्रकारमपि दत्तं पुनः प्रत्याहरणीयत्वाददत्तमित्युच्यते । तथाच कात्यायनः—

'काम-क्रोधा-ऽस्वतन्त्राऽऽर्त्त-क्लीबोन्मत्त-प्रमोहितैः ।
व्यत्यासपरिहासाच्च यद्दत्तं तत् पुनर्हरेत् ॥
या तु कार्यस्य सिद्ध्यर्थमुत्कोचा स्यात् प्रतिश्रुता ।
तस्मिन्नपि प्रसिद्धेऽर्थे न देया स्यात् कथं च न ॥
अथ प्रागेव दत्ता स्यात् प्रतिदाप्यः स तां बलात् ।
दण्डं चैकादशगुणमाहुर्गार्गीयमानवाः' ॥

इति । उत्कोचस्वरूपमाह स एव—

---

१. B. C. omit अन्यस्मै दातव्यं अन्यस्मै दानम्. २. B. reads शतादिकं for शतदानम्. ३. B. originally reads °नाजात° for °नाप्राप्त°. ४. B. C. read °मत्तेन for मदनियतेन. ५. B. reads °लाभोपकुर्वाणाय for °लाभमकुर्वाणाय. ६. B. and C. read °स्वतंत्राद्य for °स्वतंत्रार्त.° ७. B. reads °प्रमत्तकैः for °प्रमोहितैः. ८. C. reads यत्तु for या तु. ९. B. C. read उत्कोचाख्या for उत्कोचा स्यात्. १०. B. C. read देयं for देया. ११. C. reads दत्तं for दत्ता.

'स्तेने-साहसिकोद्वृत्त-पारदारिकसङ्गमात्।
दर्शनोद्वृत्तनष्टस्य तथाऽसत्यप्रवर्त्तनात्॥
प्राप्तमेतैस्तु यत्किञ्चिदुत्कोचाख्यं तदुच्यते।
न दाता तत्र दण्ड्यः स्यान्मध्यस्थश्चैव दोषभाक्'॥

इति। मध्यस्थ उक्तानुवादकः। चकाराद्ग्राहकः समुच्चीयते। तावुभौ दोषभाजौ दण्डनीयावित्यर्थः। आर्तदत्तस्यदत्तत्वं धर्मकार्यव्यतिरिक्तविषयम्। तथा च स एव—

'स्वस्थेनार्त्तेन वा दत्तं श्रावितं धर्मकारणात्।
अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः'॥

इति। मनुरपि सोपाधिकदानादेर्निवर्त्तनीयतामाह—

'योगाधमनविक्रीतं योगदान-प्रतिग्रहम्।
यस्य वाऽप्युपधिं पश्येत्तत्सर्वं विनिवर्त्तयेत्' *॥

( म. स्मृ. ८. १६५. )

इति। योग उपधिः। अदेयदान-तत्प्रतिग्रहयोर्दण्डो नारदेनोक्तः—

---

* योगशब्दश्छलवाची। छलेन ये बन्धक-विक्रय-दान-प्रतिग्रहाः क्रियन्ते न तत्वतः। अन्यत्रापि निक्षेपादौ यत्र छद्म जानीयात् वस्तुतो निक्षेपादि न कृतं तत्सर्वं निवर्तत इति भावः।

---

१. B. reads स्नेह° and C. स्तेन°. २. B. originally reads °संगवान्. ३. A. and D. read दर्शनाद्वृत्त° for दर्शनोद्वृत्त°. ४. B. in margin and C. read ऽसत्पथदर्शनात् for ऽसत्यप्रवर्तनात्. ५. B. and C. read उत्कोचापादकः. ६. A. and D. read आर्तदत्तेत्यादिकं तु and C. आर्तदत्तत्वं for आर्तदत्तस्य दत्तत्वं. ७. B. originally reads सावित्रं and in marginal reading साधितं. C. also the same. ८. A. and D. read यत्र. ९. D. reads उपाधिः for उपधिः. १०. B. reads अदेयदानात्त° and C. अदेयदानात्त° for अदेयदान-तत्°.

'गृह्णात्यदत्तं यो लोभाद्यश्चादेयं प्रयच्छति ।
अदेयदायको दण्ड्यस्तथाऽदत्तप्रतीच्छकः' ॥

( ना. स्मृ. ४. १२. )

इति ।

इति दत्ताप्रदानिकम् ।

अथ वेतनस्याऽनपाकर्माख्यं विवादपदमुच्यते । तस्य स्वरूपमाह नारदः—

'भृत्यानां[1] वेतनस्योक्तो दानाऽदानविधिक्रमः ।
वेतनस्याऽनपाकर्म तद्विवादपदं स्मृतम्' ॥

( ना. स्मृ. ६. ३. )

इति । वेतनं कर्ममूल्यम् । तस्यानपाकर्म भृत्यायाऽसमर्पणं समर्पितस्य परावर्तनं वा । तत्र समर्पणे विशेषमाह नारदः—

'भृत्याय[2] वेतनं दद्यात् कर्मस्वामी यथाक्रमम् ।
आदौ मध्येऽवसाने च कर्मणो यद्विनिश्चितम्' ॥

( ना. स्मृ. ६. २. )

इति । ऐतावदहं[3] तव कर्मकरणाय दास्यामीति भाषाया अभावे विशेषमाह स एव—

'भृतावनिश्चितायां तु दशभागमवाप्नुयुः ।
लाभं[4] गो-वीर्य-शस्यानां वणिजोऽथकृषीवलाः[5]' ॥

( ना. स्मृ. ४. ३. )

---

१. B. and C. read भृतानां for भृत्यानां. २. B. C. read भृताय for भृत्याय ३. C. reads एतावदेवं तत्र कर्मकरणाय and A. and D. read एतावदेव तत्कर्मकरणात् for एतावदहं तव कर्मकरणाय. ४. A. D. read लाभगो° for लाभं गो°. ५. A. and D. read वणिग्गोप° for वणिजोऽथ.

इति । गोवीर्यं पाल्यमानगवादिप्रभवं पयःप्रभृति । यदि कर्मस्वामी भृत्याय दशमं भागं न प्रयच्छति तदासौ राज्ञा दाप्य इत्याह याज्ञवल्क्यः—

'दाप्यस्तु दशमं भागं वाणिज्य-पशु-शस्यतः ।
अनिश्चित्य भृतिं यस्तु कारयेत् स महीक्षिता' ॥
(या. स्मृ. २. १९४.)

इति । यत्तु बृहस्पतिनोक्तम्[1]—

'त्रिभागं पञ्चभागं वा गृह्णीयात् सीरवाहकः' ॥

इति तदायाससाध्या-ऽकृष्टक्षेत्रकर्तृ[2]विषयम् । तत्रापि त्रिभाग-पञ्चभागौ व्यवस्थया विकल्पितौ वेदितव्यौ । तथा च स एव—

'भक्ताच्छाद[3]भृतः सीराद्भागं गृह्णीत पञ्चकम् ।
जातशस्यो[4] त्रिभागं तु प्रगृह्णीयात्तथा[5]ऽभृतः' ॥

इति । अशनाच्छादानाभ्यां भृतः कृषीवलः क्षेत्रजातशस्यात् पञ्चमं भागं गृह्णीयात् । ताभ्यामभृतस्तृतीयं भागमित्यर्थः । एतावद्दास्यामीति परिभाषायां सत्यामपि क्वचित्ततो[6] न्यूनं स्वामिबुद्धिपरिकल्पितं वेतनं देयम् । क्वचित्ततोऽप्यधिकं देयम् । तदाह याज्ञवल्क्यः—

१. C. reads बृहस्पतिः for बृहस्पतिनोक्तम्. २. B. and C. omit °कर्तृ°. ३. B. C. read °छादन° for °छाद°. ४. B. reads जातसस्या, C. reads जातसस्य°, D. जातसस्ये for जातशस्यो. ५. B. reads °यथाऽभृतः. C. also the same for तथाऽभृतः. ६. B. reads क्वचित्तो for क्वचित्ततो.

'देशं कालं च योऽतीयाल्लाभं कुर्याच्च योऽन्यथा ।
तदा तु स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके' ॥
( या. स्मृ. २. १९५. )

इति । यः स्वाम्याज्ञामन्तरेण वाणिज्यादिलाभसाधनदेशकालातिक्रमं करोति लाभं च बहुतरव्ययकरणादल्पं करोति तस्मै स्वामी स्वेच्छानुसारेण किंचिद्दद्यात् । यस्तु स्वातन्त्र्येण बहुलाभं करोति तस्मै परिभाषितमूल्यादधिकं देयमित्यर्थः । अनेकभृत्यकर्तृकर्मणि वेतनार्पणप्रकारमाह स एव—

'यो यावत् कुरुते कर्म तावत्तस्य तु वेतनम् ।
उभयोरप्यसाध्यं चेत् साध्ये कुर्याद्यथाश्रुतम्' ॥
( या. स्मृ. २. १९६. )

इति । यदा पुनरेकं कर्म नियतवेतनमुभाभ्यां बहुभिर्वा क्रियमाणमुभयोरप्यसाध्यं* चेदुभाभ्यामेवापरिसमापितम् तदा यो यावत् कर्म करोति तस्मै तत्कर्मानुसारेण मध्यस्थकल्पितं वेतनं देयम् । न पुनः समम् । साध्येऽउभाभ्यां कर्माणि परिसमापिते तु यथाश्रुतं यथावत्परिभाषितं तावदुभाभ्यां देयम् । न पुनः प्रत्येकं कृत्स्नं वेतनं देयम् । नापि कर्मानुरूपं परिकल्प्य देयम् । भृत्यानां कर्तृत्वमाह नारदः—

---

* अत्र अपिशब्दात् बहुभिरपि इत्यनुसन्धेयम् ।

---

१. B. and C. read तत्र स्यात् for तदा तु. २. B. C. D. read °कर्तृक°. ३. B. originally reads सद्यः and in margin साध्ये. ४. B. and C. read व्याध्याद्यभिभवादुपरि° for उभाभ्यामेवापरि°. ५. C. reads कार्याणि.

'कर्मोपकरणं तेषां क्रियांप्रति यथाहितम्।
आप्तभावेन तद्रक्ष्यं न जैह्ययेन कदाचन'॥
(ना. स्मृ ६. ४.)

इति। तेषां कर्मस्वामिनां कर्मोपकरणं लाङ्गलादि क्रियामुद्दिश्य यस्मिन् भृत्ये निहितं तेन सर्वदा निःशाठ्येन रक्ष्यमित्यर्थः। बृहस्पतिरपि—

'भृतकस्तु न कुर्वीत स्वामिना शाठ्यमण्वपि।
भृतिहानिं समाप्नोति तदा वादः प्रवर्त्तते'॥

इति। यस्तु भृतिं स्वीकृत्य कर्म न करोति तं प्रत्याह स एव—

'गृहीतवेतनः कर्म न करोति यदा भृतः।
समर्थश्चेद्दमं दाप्यो द्विगुणं तच्च वेतनम्'॥

इति। अगृहीतवेतनविषये याज्ञवल्क्य आह—

'अगृहीते समं दाप्यो भृत्यै रक्ष्य उपस्करः' *॥
(या. स्मृ. २. १९३.)

---

* उपस्करः उपकरणम्। भृत्यैः लाङ्गलादीनां प्रग्रह-योक्त्रादिकं यथाशक्त्या रक्षणीयमित्यर्थः।

---

१. B. reads क्रिया प्रतिपदाहितम् for क्रियांप्रति यथाहितम्. २. C. and D. read यदा हितम् for यथाहितम्. ३. C. reads द्रव्यं for रक्ष्यं. ४. B. reads न जह्यात्तु for न जैह्ययेन; while C. wrongly reads नैहयेन for न जैह्ययेन. ५. A. and D. read कृत्ये; while C. wrongly reads तत्प or तत्ये. ६. B. reads स्वामिनः for स्वामिना. ७. B., C. D. read ततो for तदा. ८. B., C. D. read वादं for वादः. ९. C. reads तु संदाप्यो for समं दाप्यो.

इति । समं यावता वेतनेन भृत्यत्वमङ्गीकृतं तावदेव स्वामिने दद्यान्नतु राज्ञे दण्डमित्यर्थः । यद्वा[1] अत्राङ्गीकृतवेतनं दत्वा बलात् कारयितव्यः । तदाह नारदः—

'कर्मा[2]ऽकुर्वन् प्रतिश्रुत्य कार्यो दत्वा भृतिं बलात् ।
भृतिं गृहीत्वाऽकुर्वाणः द्विगुणां भृतिमाप्नुयात्' ॥
( ना. स्मृ. ६. ६. )

इति । प्रतिश्रुत्येति प्रारम्भस्याप्युपलक्षणार्थम् । तदाह कात्यायनः—

'कर्मा[3]रम्भं तु यःकृत्वा सर्वं[4] नैव तु कारयेत् ।
बलात् कारयितव्योऽसावकुर्वन् दण्डमर्हति' ॥

इति । द[5]ण्डपरिमाणमाह वृद्धमनुः—

'प्रतिश्रुत्य न कुर्याद्यः स कार्यः स्याद्बलादपि ।
स चेन्न कुर्यात्तत्कर्म प्राप्नुयाद्द्वि[6]शतं दमम्' ॥

इति । द्विशतं कार्षापणद्विशतमित्यर्थः । यत्तु मनुवचनम्—

---

१. A. originally reads यद्रा for यद्वा. २. B. reads कर्म कुर्वन् for कर्माऽकुर्वन्. ३. C. omits—

'कर्मारम्भं तु यः कृत्वा सर्वं नैव तु कारयेत् ।
बलात्कारयितव्योऽसावकुर्वन् दण्डमर्हति' ॥

इति । दण्डपरिमाणमाह वृद्धमनुः—

'प्रतिश्रुत्य न कुर्याद्यः स कार्यः स्याद्बलादपि ।
स चेन्न कुर्यात्तत्कर्म प्राप्नुयाद्द्विशतं दमम्' ॥

and instead of this omitted portion reads—

स्याद् बलादपिवेतनं न कुर्यात्तत्कर्म प्राप्नुयाद्द्विशतं दममिति ।

४. B. reads सिद्धिं for सर्वं. ५. D. omits—

दण्डपरिमाणमाह वृद्धमनुः—

'प्रतिश्रुत्य न कुर्याद्यः स कार्यः स्याद् बलादपि.

६. A. and D. read द्विगुणं for द्विशतं.

'भृत्योऽनार्तो न कुर्याद्यो दर्पात् कर्म यथोदितम् ।
स दण्ड्यः कृष्णलान्यष्टौ न देयं तस्य वेतनम्' ॥
(म. स्मृ. ८. २१५.)

इति तदर्धावशेषितविषयम् । किञ्चिन्मात्रावशेषे तु दण्डवर्जं वेतनादानम् । तदाह स एव—

'यथोक्तमार्तः स्वस्थो वा यस्तु कर्म न कारयेत् ।
न तस्य वेतनं देयमल्पोनस्यापि कर्मणः' ॥
(म. स्मृ. ८. १७.)

इति । यस्तु कालविशेषावधिकं कर्म प्रतिज्ञाय कालात् पूर्वमेव कर्म त्यजति तं प्रत्याह नारदः—

'कालेऽपूर्णे त्यजन् कर्म भृतेर्नाशमवाप्नुयात् ।
स्वामिदोषादकरणे यावद्भृतिमवाप्नुयात्' ॥

इति । स्वामिदोषात् पारुष्यकरणादिस्वामिदोषात् । नारदः—

---

१. B. and C. read भृतो° for भृत्यो°. २. A. originally and D. read यथोचितं for यथोदितम्. ३. B. reads अष्ट for अष्टौ. ४. B. reads वर्षावेतनदानम्; while C. दंडं वर्षावेतनदानम् for दण्डवर्जवेतनादानम्. ५. C. omits आह. ६. B. and C. read पूर्तावेव for पूर्वमेव. ७. B. reads भृतिनाशं; while C. भृते नाशं for भृतेर्नाशं. ८. B. reads—

पारुष्यकरणादिस्वामिदोषतः कर्मत्यागे त्वाह स एव—
'स्वामिदोषादपक्रामन् न्यायकृत्तमवाप्नुयात् ॥
इति । यस्तु प्रमादादिना दोषेण वा स्वामिद्रव्यं बलीवर्दादिकं वा नाशयति तं प्रत्याह- and C. पारुष्यकरणादिस्वामिदोषतः for स्वामिदोषादकरणे यावद्भृतिमवाप्नुयात् ।;

While D. omits इति । स्वामिदोषात् पारुष्यकरणादिस्वामिदोषात् । नारदः—
'भाण्डं व्यसनमागच्छेद्यदि वाहकदोषतः ।
दाप्यो यत्तत्र नष्टं स्याद्दैव-राजकृताद्दृते' ॥
इति । वाहकदोषतः भृतकदोषतः ।.

'भाण्डं व्यसनमागच्छेद्यदि वाहकदोषतः ।
दाप्यो यत्तत्र नष्टं स्याद्दैव-राजकृताद्दृते' ॥

( ना. स्मृ. ६. ९. )

इति । वाहकदोषतः भृतकदोषतः । वृद्धमनुः[1]—

'प्रमादान्नाशितं दाप्यः समं द्विर्द्रोहनाशितम् ।
न तु दाप्यो हृतं चोरैर्दग्धमूढं जलेन वा' ॥

इति । द्रोहनाशितं तीव्रप्रहारादिना द्रोहेण नाशितम् । द्विर्दाप्यो द्विगुणं दाप्य इत्यर्थः । प्रस्थानविघ्नकं भृत्यं प्रत्याह कात्यायनः—

'विघ्नयन् वाहको दाप्यः प्रस्थाने द्विगुणां भृतिम् ।

इति । वृद्धमनुः[2]—

'यः कर्मकाले सम्प्राप्ते न कुर्याद्विघ्नमाचरेत् ।
उद्धृत्यान्यस्तु कार्यः स्यात् स दाप्यो द्विगुणां भृतिम्' ॥

इति । याज्ञवल्क्यः—

---

१. B. reads this verse after the following:—

'प्रमादान्नाशितं दाप्यः समं द्विर्द्रोहनाशितम् ।
नतु दाप्यो हृतं चोरैर्दग्धनूढं जलेन वा' ॥
इति । द्रोहनाशितं तीव्र प्रहारादिना द्रोहेण नाशितम् ।
द्विर्दाप्यो द्विगुणं दाप्य इत्यर्थः ।.

२. C. omits वृद्धमनुः ३. B. omits—वृद्धमनुः—

'यः कर्मकाले संप्राप्ते न कुर्याद्विघ्नमाचरेत् ।
उद्धृत्यान्यस्तु कार्यः स्यात् स दाप्यो द्विगुणां भृतिम्' ॥

while C. omits this verse and the following one verse together with the preceding portion.

‘ अराजदैविकं[1] नष्टं भाण्डं दाप्यस्तु वाहकः[2] ।
प्रस्थानविघ्नकृच्चैव[3] प्रदाप्यो द्विगुणां[4] भृतिम् ॥
प्रक्रान्ते[5] सप्तमं भागं चतुर्थं पथि[6] संत्यजन् ।
भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि च[7] ’ ॥

( या. स्मृ. २. १९७–१९८. )

इति । अराजदैविकं[8] न विद्यते राज-दैविकं यस्य भाण्डस्य तद्यदि प्रज्ञाहीनतया वाहकेन नाशितं तदा[9] तन्मूल्यानुसारेण तद्भाण्डं दापनीयः । यस्तु प्रस्थानलग्नसमय एव स्वाभ्युपात्तं[10] कर्म त्यजन् प्रस्थानविघ्नं करोति तदासौ द्विगुणां भृतिं दाप्यः । यस्तु भृत्यान्तरोपादानावसरसम्भवे[11]* स्वाङ्गीकृतं कर्म त्यजति असौ भृत्यः सप्तमं भागं दाप्यः । यः पुनः पथि प्रक्रान्ते गमने वर्तमाने सति कर्म त्यजति स[12] भृतेश्चतुर्थं भागं दाप्यः । अर्धपथे त्यजन् सर्वां[13] भृतिं दापनीयः । यस्तु स्वामी भृत्यं स्वय-

*अत्र विज्ञानेश्वरः—प्रक्रान्ते अध्यवसिते प्रस्थाने स्वाङ्गीकृतं कर्म यस्त्यजति असौ भृतेः सप्तमं भागं दाप्यः । ननु—अत्रैव विषये ‘प्रस्थानविघ्नकृत्’ इत्यादिना द्विगुणभृतिदानमुक्तम् । इदानीं सप्तमो भाग इति विरोधः-इति चेत् उच्यते । भृत्यान्तरोपादानावसरसम्भवे यस्त्यजति तस्य सप्तमो विभागः । यस्तु प्रस्थानलग्नसमय एव त्यजति तस्य द्विगुणभृतिदानमित्यविरोधः ।

१. A. and D. read अराजदैवका घातं for अराजदैविकं नष्टं. २. B. reads वाहकं for वाहकः. ३. B. reads °विघ्नकः for विघ्नकृत्. ४. B. reads द्विगुणं भृतम् for द्विगुणां भृतिम्. ५. B. reads प्रक्रान्तं सप्तमं for प्रक्रांते सप्तमं. ६. A. reads परि° for पथि. ७. C. reads वा for च. ८. A. D. read अराजदैवको घातो for अराजदैविकं न विद्यते राज-दैविकं. ९. B. C. omit तदा. १०. A. D. read व्यवस्थाभ्युपगतं and स्वाभ्युपगतं for स्वाभ्युपगतं. ११. A. B. and C. read. भृत्यान्तरापादना° for भृत्यान्तरोपादान°. १२. B. reads स्व° for स. १३. A. C. D. read सर्वा भृतीः for सर्वां भृतिं.

मेव कर्म त्याजयति पूर्वोक्तप्रदेशेषु[1] असावपि पूर्वोक्तसप्तम-भागादिकं दापनीयः । एतच्चाऽव्याधितादिविषयम् । व्याधित-स्यापराधाभावात् । यदा पुनर्व्याधितो व्याध्यपगमेऽन्तरित[2]-दिवसान् परिगणय्य पूरयति तदा लभेतैव सर्वां भृतिम् । तदाह मनुः—

'आर्तस्तु[3] कुर्यात् स्वस्थः सन् यथाभाषितमादितः ।
सुदीर्घस्यापि कालस्य तल्लभेतैव[4] वेतनम्' ॥

( म. स्मृ. ८. २१६. )

इति । त्याजकस्य स्वामिनश्चतुर्थभागादिदापनमविक्री-तभाण्डविषयम् । विक्रीते तु भाण्डे विशेषो वृद्धमनुनाऽ-भिहितः—

'पथि विक्रीय तद्भाण्डं वणिग्भृत्यं त्यजेद्यदि ।
अथ[5] तस्यापि देयं स्याद्भृतेरर्धं[6] लभेत सः' ॥

इति । आसेधेन प्रतिबद्धभाण्डविषये राजाद्यपहृतभाण्ड-विषये चाह[7] कात्यायनः—

'यथा च पथि तद्भाण्डमासिद्ध्येत ह्रियेत वा ।
यावानध्वा गतस्तेन प्राप्नुयात्तावतो भृतिम्' ॥

इति । भाटक[8]स्वीकृतेन यानादिना भाण्डनेतारं[9] प्रत्याह नारदः—

१. A. C. D. read °देशेषु for °प्रदेशेषु. २. A. and D. read व्याध्यपगमे तदितर° for व्याध्यपगमेऽन्तरित°. ३. A. and D. read आर्तः स and C. आर्तस्य for आर्तस्तु. ४. B. reads स्वं लभेत for तल्लभेत. ५. A. and D. read अगतस्य for अथ तस्य. ६. C. reads भृतेरपि for भृतेरर्धं ७. A. and D. substitute वा for च. ८. B. reads तादृक् and C. तादृक for भाटक°, ९. A. omits भाण्डनेतारं.

'अनयन् भाटयित्वा तु भाण्डवान् यान-वाहने।
दाप्यो भृतेश्चतुर्भागं सर्वामर्द्धपथे त्यजन्॥
अनयन् वाहकोऽप्येवं भृतिहानिमवाप्नुयात्'।
(ना. स्मृ. ६. ७–८.)

इति। यः शकटादिकं भाटयित्वा तदेवोपकारशून्यमादाय देशान्तरं गच्छति भाटकं च न प्रयच्छति तं प्रत्याह वृद्धमनुः—

'यो भाटयित्वा शकटं नीत्वा चान्यत्र गच्छति।
भाण्डं न दद्यात् परतो दाप्यः स्यात् सोऽपि भाटकम्'॥

इति। भाटककार्योपाधिपरिक्रयमूल्यं आरूढस्यापि अकृतोपकारस्यापि स्वकृते कृत्ये समनंतरमनर्पितहस्त्यश्वादेः समर्पणपर्यंतं भाटकानिवृत्तिरित्याह कात्यायनः—

'हस्त्यश्व-गो-खरोष्ट्रादीन् गृहीत्वा भाटकेन यः।
निर्यंयेत् कृतकृत्यःसन् स्त्रीवत् दाप्यः स भाटकम्॥

---

१. A. and D. read आनीय for अनयन्. २. B. and C. read भृतिश्चतुर्भागं for भृतेश्चतुर्भागं. ३. A. and D. read भाटकः for भाटकं; while A C. D. omit the following portion—

च न प्रयच्छाति तमत्याह वृद्धमनुः—
'यो भाटयित्वा शकटं नीत्वा चान्यत्र गच्छाति।
भाण्डं न दद्यात् परतो दाप्यः स्यात् सोऽपि भाटकम्'॥
इति। भाटककार्योपाधिपरिक्रयमूल्यं आरुढस्यापि अकृतोपकारस्यापि स्वकृते कृत्ये समनंतरमनर्पितहस्त्यश्वादेः समर्पणपर्यंतं भाटकानिवृत्तिरित्याह कात्यायनः—
'हस्त्यश्व-गो-खरोष्ट्रादीन् गृहीत्वा भाटकेन यः।
निर्यंयेत्कृतकृत्यः सन् स्त्रीवद्दाप्यः सभाटकम्॥
गृहचार्थापणादीनि गृहीत्वाभाटकेनयः।
स्वामिनो नार्पयेद्यावत्तावद्दाप्यः सभाटकं'॥

गृह-वार्यर्पणादीनि गृहीत्वा भाटकेन यः ।
स्वामिनो नार्पयेद्यावत्तावद्दाप्यः स भाटकम्' ॥

इति । वारिशब्देन तदाधारो लक्ष्यते । उपकारशब्देन[1] तदाधारो लक्ष्यते । परभूमौ गृहनिर्माणाय[2] भाटकदातारं प्रत्याह नारदः—

'परभूमौ गृहं कृत्वा स्तोमं दत्वा वसेत्तु यः ।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठानि चेष्टकाम्[3]' ॥

(ना. स्मृ. ६. २०.)

इति । तथा स्तोमो भाटकम्[4] । स्तोमाप्रदाने प्राह स एव—

'[5]स्तोमाद्विना वसित्वा तु परभूमावनिश्चितः[6] ।
निर्गच्छंस्तृण-काष्ठादि[7] न गृह्णीयात् कथंचन ॥ (२१)
यान्येव[8] तृण-काष्ठानि त्विष्टका[9] विनिवेशिताः ।
विनिर्गच्छंस्तु तत्[10]सर्वं भूमिस्वामिनि वेदयेत्[11]' ॥

(ना. स्मृ. ६. २१–२२.)

---

१. B. and C. read वारिशब्देन for उपकारशब्देन. २. B. and C. read °निर्माणादि for °निर्माणाय. ३. B. reads तृण-काष्ठादिकं तथा C. reads तृण-काष्ठानि त्विष्टिकाः for तृणकाष्ठानि चेष्टकाम्. ४. A. C. D. omit स्तोमो भाटकम् । स्तोमाप्रदाने प्राह सएव. ५. C. omits the following:—

'स्तोमाद्विना वसित्वा तु परभूमावनिश्चितः ।
निर्गच्छंस्तृण-काष्ठादि न गृण्हीयात्कथंचन ॥
यान्येव तृण-काष्ठानि त्विष्टिका विनिवेशिताः ।.

६. B. reads अनिश्चितम् for अनिश्चितः. ७ B. reads °काष्ठादीन् for °काष्ठादि. ८. B. reads धान्यवत् for यान्येव. ९. B. reads इष्टकाः for त्विष्टकाः. १०. B. reads यत् for तत्. ११. A. C. D. omit वेदयेत्.

इति। अनिश्चिततृण-काष्ठादिग्रहणपरिभाषायामित्यर्थः। परिभाषिते तु यथा परिभाषा तथेति। वेदयेत् निवेदयेदित्यर्थः।[2] भाटकं दत्वा द्रव्याद्यर्पणार्थं[3] गृहीतमणिकादिपात्रभेदनादावव्याह स एव—

'स्तोमवाहीनि[4] भाण्डानि पूर्णकालान्युपानयेत्[5]।
ग्रहीतुरावहेद्[6]भग्नं नष्टं वा[7]ऽन्यत्र सम्प्लवात्'॥
(ना. स्मृ. ६. २३.)

इति। सम्प्लवः परस्परसङ्घर्षः। तेनाल्पकेन कार्त्स्न्येन वा भिन्नं पूर्ववत् कृत्वा भाण्डं वा तन्मूल्यं वा स्वामिने देयम्। सम्प्लवादन्यत्र भेदे तु भाटकग्रहीतुरेव तदित्यर्थः।[8] कृतकर्मणे भृत्याय वेतनादातारं प्रत्याह बृहस्पतिः—

'कृते कर्मणि यः स्वामी न दद्याद्वेतनं भृते[9]।
राज्ञा दापयितव्यः स्याद्विनयं चानुरूपतः'॥

इति। रुग्णं[10] भृत्यं पथि त्यजतो दण्डमाह कात्यायनः—

'त्यजेत् पथि सहायं यो श्रान्तं[11] रोगार्तमेव च।
प्राप्नुयात् साहसं पूर्वं ग्रामे त्र्यहमपालयन्'॥

इति। पण्यस्त्री तदुपभोक्तृविषये त्वाह नारदः—

१. B. reads °तृणकाष्ठादिग्रहणाग्रहणपरिभाषाविविहीन इत्यर्थः and C. °तृणकाष्ठादिग्रहणात् ग्रहणप्रतिभाषानिवेदित इत्यर्थः for °तृणकाष्ठादिग्रहणपरिभाषायामित्यर्थः. २. B. and C. omit वेदयेत् निवेदयेदित्यर्थः. ३. B. C. read द्रव्यप्रापणार्थं for द्रव्याद्यर्पणार्थं. ४. B. in margin and C. read सोमवाहीनि; while B. originally reads स्तोमवाहीनि for स्तोमवाहीनि. ५. C. reads उपातयेत् for उपानयेत्. ६. B. reads आनयेत् for आवहेत्. ७. B. substitutes च for वा. ८. B. and C. read तद्भवेदित्यर्थ; for तदित्यर्थः. ९. C. reads मृते for भृते. १०. B. reads निमग्नं for रुग्णं; while C. omits रुग्णं भृत्यं. ११. B. भृत्यं for श्रान्तं; while C. भृत्यं रोगार्तं for श्रान्तं रोगार्तं°.

'शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत् ।
अनिच्छन् शुल्कदाताऽपि शुल्कहानिमवाप्नुयात्' ॥
(ना. स्मृ. ६. १८.)

इति । एतद्व्याधितादिविषयम् । व्याधितविषये[1] तु स्मृत्यन्तरम्—

'व्याधिता[2] सम्भ्रमा व्यग्रा राजधर्मपरायणा ।
आमन्त्रिता च ना गच्छेदवाच्या वडवा स्मृता' ॥

इति । अत्यन्तावश्यकेषु[3] कार्येषु[4] जातसम्भ्रमा सम्भ्रमपदेन[5] उक्ता । तत्रैव व्याकुला व्यग्रा । वडवा दासी[6] । दासीग्रहण[7]मत्र पण्यस्त्रीप्रदर्शनार्थम् । उपभोक्तारं प्रत्याह नारदः—

'अप्रयच्छन् तथा शुल्कमनुभूय पुमान् स्त्रियम् ।
अ[8]क्रमेण तु[9] सङ्गच्छेद् घातयेद्वा[10] नखादिभिः ॥
अयोनौ यः समाक्रामेद्बहुभिर्वा[11] विवासयेत् ।
शुल्कं त्वष्टगुणं[12] दाप्यो विनयं तावदेव तु' ॥
(ना. स्मृ. ६. १९. २०.)

इति । पण्यस्त्रियोस्त्व[13]पराधे दण्डादिकं मत्स्यपुराणेऽभिहितम् ।

---

१. B. and C. read व्याधितादि° for व्याधित°. २. C. reads व्याधिना for व्याधिता. ३. D. and C. read भय-त्रासाद्यावश्यकेषु for अत्यन्तावश्य-केषु. ४. A. C. and D. omit कार्येषु. ५. C. reads संभ्रमं यदिनोक्ता for सभ्रमपदेनोक्ता. ६. C. reads दासः for दासी. ७. B. and C. read तद्ग्रहणम् for दासीग्रहणम्. ८. C. wrongly reads this line thus-अक्रमे बत संछेद्यादवंतरनखादिभिः for अक्रमेण तु संगच्छेद् घातयेद्वा नखादिभिः. ९. B. C. substitute च for तु. १०. B. reads खादन् वन्त° for घातयेद्वा. ११. B. originally reads समाक्रामेद्वृद्धिर्वापि विवासयेत्, but in margin substitutes बहुभिर्वा and तद्गतिर्वा instead of वृद्धिर्वा; while C. संक्रमेत्तद्गतिर्वा for समा-क्रामेद्बहुभिर्वा. १२. B. reads सोष्टगुणं and C. चाष्टगुणं for त्वष्टगुणं. १३. B. omits तु.

‘ गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति।
तां दमं दापयेद्[1]दद्यादितरस्यापि भाटकम्’ ॥
( म. पु. २३. ७. )

इति। अत्र निर्णय[2]माह नारदः—

‘ वेश्याप्र[3]धाना ये त[4]त्र कामुकास्तद्गृहोषिताः।
[5]तत्समुत्थेषु कार्येषु निर्णयं संशये विदुः’ ॥
( ना. स्मृ. ६. २४. )—

इति। इ[6]त्थं अभ्युपेत्याशुश्रूषाख्यविवादपदान्तर्गतवेतनस्यानपाकर्माख्यं विवादपदं मनूक्तोद्देशक्रमानुसारेणाभिहितम्।

**इति वेतनस्याऽनपाकर्माख्यं विवादपदमभिहितम्।**

[7]अथे[8]दानीमभ्युपेत्याशुश्रूषाख्यं विवादपदमाभिधीयते।

तस्य स्वरूपं नारद आह—

‘ अभ्युपेत्य च[9] शुश्रूषां यस्तां न प्रतिपद्यते।
अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते’ ॥
( ना. स्मृ. ५. १. )

इति। आज्ञाकरणं शु[10]श्रूषा। शुश्रूषकश्च पञ्चप्रकारः। तथा च स एव—

---

१. B. and C. read हन्यादित्यस्यापि for दद्यादितरस्यापि च. २. B. and C. read निर्णेतॄन् for निर्णयम्. ३. B. originally reads °प्रयाणा for °प्रधानाः ४. A. and D. read यास्तत्र for ये तत्र. ५. C. reads समुत्पन्नेषु for तत्समुत्थेषु. ६. B. omits इत्थं and C. विवादपदांत बाधितं नामकर्माख्यम् for वेतनस्यानपाकर्माख्यं. ७. C. omits अथ. ८. B. adds तदेव after इदानीं; while C. reads तदेव before इदानीं and D. and A. omit तदेव. ९. C. and D. read तु for च. १०. C. omits शुश्रूषा.

'[१]शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः ।
चतुर्विधः कर्मकरः [२]शेषा दासास्त्रिपञ्चकाः ॥ (२)
शिष्या-ऽन्तेवासि-ऽभृतकाः चतुर्थस्त्वधिकर्मकृत् ।
एते कर्मकरा ज्ञेया दासास्तु गृहजादयः ॥ (३)
सामान्यमस्वतन्त्रत्वं तेषामाहुर्मनीषिणः ।
[३]जातकर्मकरस्तूक्तो [४]विशेषो वृत्तितस्तथा ॥ (४)
कर्मापि द्विविधं ज्ञेयमशुभं शुभमेव च ।
अशुभं दासकर्मोक्तं शुभं [५]कर्मकरे स्मृतम् ॥ (५)
[६]गृहद्वारा-ऽशुचिस्थान-रथ्या-ऽवस्करशोधनम्[७] ।
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम्[८] ॥ (६)
[९]इच्छतः स्वामिनश्चाङ्गैरुपस्थानमर्थां[१०]न्ततः ।
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम्' ॥ (७)

( ना. स्मृ. ५. २–७. )

इति । तत्र शिष्यो वेदविद्यार्थी । अन्तेवासी शिल्पशिक्षार्थी । मूल्येन यः कर्म करोति स भृतकः । अधिकर्मकृत्

---

१. C. reads पुरुषकारः for शुश्रुषकः २. B. reads तेषां दासस्त्रिपंचकः; while C. तेषां दासस्त्रिपंचप्रकाराः for शेषा दासास्त्रिपंचकाः. ३. B. and C. read ज्ञातिकर्मकृतः for जातकर्मकरः. ४. C. reads शेषो for विशेषो. ५. B. reads कर्मकृता for कर्मकरे; while C. कर्म विज्ञेयमतःपरम् for कर्मकरेस्मृतम्.

६. C. omits—

गृहद्वारा-ऽशुऽचिस्थान-रथ्या-ऽवस्करशोधनम् ।
गुह्यांगस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम् ॥
इच्छतः स्वामिनश्चांगैरुपस्थानमथान्ततः ॥
अशुभं कर्म विज्ञेयं शुमन्यदतः परम् ' ॥ इति ॥

७. B. reads °साधनम् for °शोधनम्. ८. B. reads °ग्रहणोत्क्रम् for ग्रहणोज्झनम्. ९. D. reads इष्टतः स्वामिनोश्चांगे for इच्छतः स्वामिनश्चांगैः°. १० B. reads °स्थानमतां for °स्थानमथां°.

कर्मकुर्वतामधिष्ठाता । अशुचेस्थाने उच्छिष्टप्रक्षेपार्थं गर्तादिकम् । अवस्करः गृहसम्मार्जितपांस्वादिनिचयत्यागस्थानम् । भृतकश्च त्रिविधः । तदुक्तं तेनैव—

'उत्तमः कार्यकर्ता च मध्यमस्तु कृषीवलः ।
अधमो भारवाही स्यादित्येवं त्रिविधो भृतः' ॥

(ना. स्मृ. ६. ९.)

इति । दासस्वरूपमपि तेनैव दर्शितम्—

'गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
अन्नाकालभृतस्तद्वदाहितः स्वामिना च यः ॥
मोक्षितो महतश्चर्णाद्युद्धे प्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥
भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः' ॥

( ना. स्मृ. ६. १६–१८. )

इति । गृहजातः स्वगृहे दास्यां जातः । क्रीतो मूल्येन । लब्ध प्रतिग्रहादिना । दायागतो रिक्थग्राहित्वेन प्राप्तः । अन्नाकालभृतः दुर्भिक्षे दासत्वाय पोषितः । आहितः स्वामिना

१. B. and C. read °मार्जित° °संमार्जित°. २. D. and A. read °पांश्वादि° for °पांस्वादि°. ३. B and C. °निचयस्थानं उज्झनं त्यागः for °निचयत्यागस्थानम्. ४. B. and C. read आयुधीयोऽत्र for कार्यकर्ता च. ५. B. and C. read अनाकाल° for अन्नाकाल°. ६. B. originally reads महतस्सेकात् and C. महतस्स्वर्णात्. ७. B. and C. read युद्धप्राप्तः for युद्धे प्राप्तः. ८. B. originally reads वडवाभृतः for वडवाहृतः. ९. B. and C. read स्वगृहदास्यां for स्वगृहे दास्यां. १०. B. reads दायागतो भवेत्; while C. दायादभागतः for दायागतः. ११. B. and C. read अनाकाल for अन्नाकाल°.

धनग्रहणेनाधीनतां नीतः । ऋणमोक्षितः ऋणमोचन-प्रत्युपकारतया दासत्वमभ्युपगतः । युद्धप्राप्तः समरे विजित्य गृहीतः । पणे[१] विजितः दासत्वपणके[२] द्यूतादौ[३] जितः । तवाह-मित्युपगतः तव दासोऽस्मीति स्वयमेवागतः । प्रव्रज्याऽवसितः प्रव्रज्यातश्च्युतः । कृतः कृतकालः[४] एतावत्कालं त्वं मद्दास इत्युपगत[५] इति । भक्तदासः सर्वकालं भक्तार्थं एव दासत्वम-भ्युपगतः । वडवया[६] गृहदास्या आहृतः तल्लोभेन[७] तामुद्वाह्य[८] दासत्वेन प्रविष्टः । यः आत्मानं विक्रीणीते असावात्मविक्रेता । एवं पञ्चदशप्रकाराः । यत्तु मनुनोक्तम्—

'ध्वजाहृतो[९] भक्तदासो गृहजः क्रीत दत्त्रिमौ ।
पैतृको दण्डदासश्च सप्तैते दासयोनयः' ॥

( म. स्मृ. ८. ४१६. )

इति तत्तेषां दासत्वप्रतिपादनार्थम् । न तु परिसङ्ख्यार्थम्[१०] । अत्र शिष्याणां कर्मकृतौ[११] विशेषो नारदेनोक्तः—

'आ विद्याग्रहणाच्छिष्यः शुश्रूषेत् प्रयतो गुरुम् ।
तद्वृत्तिर्गुरुदारेषु[१२] गुरुपुत्रे तथैव च' ॥

( ना. स्मृ. ६. १९. )

इति । विद्या चात्र[१३] त्रयी । तदुक्तं बृहस्पतिना—

---

१. B. reads पणे कृतः for पणे विजितः. २. B. reads पण° for पणके. ३. C. reads सूतादौ for द्यूतादौ. ४. B. and C. omit कृतकालः; while D. reads कृतकालं for कृतकालः. ५. B. reads इत्यभ्युपगमितः; while C. इत्य-भ्युपगतमितः. ६. A.C. and D. omit वडवया; while C. reads वडवा यथा for वडवया. ७. C. omits तल्लोभेन तामुद्वाह्य दासत्वेन प्रविष्टः. ८. B. reads तामुद्वीक्ष्य for तामुद्वाह्य. ९. B. and D. read ध्वजाहृतो for ध्वजाहृतो; while C. omits ध्वजाहृतो भक्तदासो गृहजः. १०. C. reads अवारिसंख्यार्थम् for परिसंख्यार्थम्. ११. B. and C. read कर्मकृतो for कर्मकृतौ. १२. C. reads ततकृतिर्गुरुदारेषु for तद्वृतिर्गु दारेषु. १३. C. reads वात्र for चात्र.

'विद्या त्रयी समाख्याता ऋग्यजुः-सामलक्षणा।
तदर्थं गुरुशुश्रूषां [१]प्रकुर्याच्च प्रचोदिताम्' ॥

इति। अन्तेवासिनामपि [२]कर्मकृतौ विशेषस्तेनैवोक्तः—

'विज्ञानमुच्यते शिल्पं हेम-[३]रूप्यादिसंस्कृतिः।
[४]नृत्यादिकं च तत्प्राप्तं कुर्यात् कर्म गुरोर्गृहे' ॥

इति। नारदोऽपि—

'[५]स्वं शिल्पमिच्छन्वा [६]हर्तुं बान्धवानामनुज्ञया।
आचार्यस्य वसेदन्ते कालं कृत्वा [७]सुनिश्चितम्' ॥

(ना. स्मृ. ६. १०.)

इति। आचार्यस्याऽपि कर्तव्यमाह स एव—

'आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम्।
[८]न चान्यत् कारयेत् कर्म पुत्रवच्चैनमाचरेत्' ॥

(ना. स्मृ. ६. १३.)

इति। अन्यकर्मकारकमाचार्यं प्रत्याह कात्यायनः—

'यस्तु न ग्राहयेच्छि[९]ल्पं कर्माण्यन्यानि कारयेत्।
प्राप्नुयात् साहसं पूर्वं तस्माच्छिष्यो नि[१०]वर्तते' ॥

इति। परिभाषितकालात् प्रागेव विद्याप्राप्तावपि तावत्कालं [११]वसेदित्याह नारदः—

१. B. reads प्रकुर्याच्छात्रचोदिताम् for प्रकुर्याच्च प्रचोदिताम्: while C. शास्त्रचोदिताम् छात्रचोदिताम्. २. B. and C. read कर्मकृतो for कर्मकृतौ. ३. C. °रूप्याधि° for °रूप्यादि°. ४. B. and C. read वृत्तादिकं for नृत्यादिकं. ५. B. and C. read स्व° for स्वं. ६. B. and C. read °मिच्छन्नाहर्त्तुं for मिच्छन्वा हर्त्तुं. ७. B. reads विनिश्चितम् for सुनिश्चितम्. ८. C. reads नवाऽन्यत् for नचाऽन्यत्. ९. B. and C. read शिष्यं for शिल्पं. १०. B. originally reads निवर्तयेत्. ११. B. and C. read निवसेत् for वसेत्.

'शिक्षितोऽपि कृतं कालमन्तेवासी समापयेत् ।
तत्र कर्म च यत् कुर्यादाचार्यस्यैव तत्फलम्' ॥

( ना. स्मृ. ६. १६. )

इति । याज्ञवल्क्योऽपि—

'कृतशिल्पोऽपि निवसेत् कृतकालं गुरोर्गृहे ।
अन्तेवासी गुरुप्राप्तभोजनस्तत्फल[1]प्रदः' ॥

( या स्मृ. २. १८४. )

इति । दुष्टं प्रत्याह नारदः—

'शिक्षयन्तमदुष्टं च यस्त्वाचार्यं परित्यजेत् ।
बलाद्वासयितव्यः स्याद्वधबन्धं[2] च सोऽर्हति' ॥

इति । वधो[3]त्र ताडनादिः । परिभाषितकालसम्पूर्त्तौ कर्तव्यमाह नारदः—

'गृहीतशिल्पः समये कृत्वाचार्यं प्रदक्षिणम् ।
शक्तितश्चानुमान्यैनं अन्तेवासी निवर्तते' ॥

( ना. स्मृ. ६. ११. )

इति । भृतकानामपि भृतिकृतः कालकृतश्च विशेषो बृहस्पतिना दर्शितः—

'यो भुङ्क्ते परदासीं तु स ज्ञेयो वडवाभृतः ।
कर्म तत्स्वामिनः कुर्याद्यथान्नेन[4] भृतो नरः ॥
बहुधाऽर्थभृतः प्रोक्तस्तथा भागभृतोऽपरः ।
हीनमध्योत्तमत्वं च सर्वेषामेव चोदितम् ॥

---

१. B. reads तत्फलक° for तत्फल°. २. B. and C. read वध-बंधौ for वध-बंधं. ३. B. and C. read बंधोऽत्र for वधोऽत्र. ४. C. ecads यथाऽन्योर्थं for यथाऽन्नेन.

दिन-मासार्ध-षण्मास-त्रिमासा-ऽब्दे[1]भृतस्तथा।
कर्म कुर्यात् प्रतिज्ञातं लभते परिभाषितम्' ॥

इति। अर्थभृतस्य [2]बहुधात्वं [3]समर्थाल्पत्व-महत्त्वाभ्यां द्रष्टव्यम्। ते चाल्पत्व-महत्त्वे [4]शक्त्यनुसारतो द्रष्टव्ये। तथाच नारदः—

'भृत्यस्तु त्रिविधो ज्ञेयः उत्तमो मध्यमोऽधमः।
शक्ति-भ[5]क्त्यानुसाराभ्यां तेषां कर्माश्रया भृतिः' ॥

इति। भागभृतस्य द्वैविध्यमाह बृहस्पतिः—

'द्विप्रकारो भागभृतः कृ[6]षणो जीवितः स्मृतः।
जातसस्यात्तथा क्षीराल्लभते तु न संशयः' ॥

इति। अधिकर्मकृतस्य स्वरूपमाह नारदः—

'अर्थे[7]ष्वधिकृतो यःस्यात् कुटुम्बस्य तथोपरि।
सोऽधिकर्मकृतो ज्ञेयः स[8] न कौटुम्बिकः स्मृतः' ॥

( ना. स्मृ. ६. २२. )

इति। एवंनिरूपितेभ्यः शिष्याऽन्तेवासिभ्यः भृतकादिकर्मकरेभ्यो दासानां भेदं दासशब्दव्युत्पत्तिद[9]र्शनमुखेनाह कात्यायनः—

'स्वतन्त्रस्यात्मनो दानाद्दासत्वं दारवद्भृगुः' ॥

---

१. B. and C. read त्रिमासाद्वा for त्रिमासाद्व°. २. B. in margin and C. read बहुधाभिधानं for बहुधात्वं. ३. B. and C. read अर्थाल्प-महत्त्वाभ्यां for समर्थाल्पत्व-महत्त्वाभ्याम्. ४. B. and C. read शक्ति-भक्त्यानुसारतो for शक्त्यनुसारतो. ५. B. and C. read °भक्त्यनुरूपा च for °भक्त्यनुसाराभ्यां. ६. A. and D. read कृपणो for कृषणो; while C. कृषणाजीवितो and B. originally कृषिनो जीविका and in margin कृषणाजीवितः. ७. B. in margin and C. read अविकृतो. ८. C. reads सर्व° for स च. ९. A. omits °दर्शन° after °व्युत्पत्ति°.

इति । अयमर्थः । यथा भर्तुः सम्भोगार्थं स्वशरीरदानाद्दारत्वं तथा स्वतन्त्रस्यात्मनो दानाद्दासत्वम्—इति भृगुराचार्यो मन्यते—इति । तेन चात्यन्तपा[1]रार्थ्यदर्शनमासाद्य शु[2]श्रूषकाः दासाः । पारार्थ्य[3]मात्रमासाद्य शुश्रूषकाः कर्मकरा इत्युक्तं भवति । दासत्वं च ब्राह्मणव्यतिरिक्तेष्वेव त्रिषु वर्णेषु विज्ञेयम् ।

'दास्यं विप्रस्य न क्वचित्' ।

इति तेनैवोक्त[4]त्वात् । तेष्वपि दास्यमानुलोम्येनैवेत्याह स एव—

'वर्णानामानुलोम्येन दा[5]स्यं न प्रतिलोमतः ।
राजन्य-वैश्य-शूद्राणां त्यजतां हि स्वतन्त्रताम्' ॥

इति । प्रातिलोम्येन दासत्वप्रतिषे[6]धः स्वधर्मपरित्यागि[7]भ्यो पतितेभ्यो ऽन्यत्र द्रष्टव्यः । तथा च नारदः—

'वर्णानां प्रातिलोम्येन दासत्वं न विधीयते ।
[8]स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता ‡ ॥

( ना. स्मृ. ६. २३. )

---

‡ दारवद्दासता मता यथा दारस्वीकरणमानुलोम्येन भवति न प्रातिलोम्येन तथा दासतापीत्यर्थः ।

---

१. C. reads °पारमार्थ्य° for °पारार्थ्य°. २. B. in margin and C. read सुखैकाः for शुश्रूषकाः. ३. A, B. and D. omit °मात्र° after पारार्थ्य°. ४. C. reads येनैवोक्तम्. ५. C. omits—

'........................दास्यं न प्रतिलोमतः ।
राजन्य-वैश्य-शूद्राणां त्यजतां हि स्वतंत्रताम्' ॥
इति । प्रातिलोम्येन दासत्वप्रतिषेधः स्वधर्मपरित्यागिभ्यो पतितेभ्योऽन्यत्र द्रष्टव्यः ।
तथा च नारदः—
'वर्णानां प्रातिलोम्येन.............. ।.

६. B. reads °निषेधः for °प्रतिषेधः. ७. B. adds सनातेभ्यो for °त्यागिभ्यो; while A. and D. omit पतितेभ्यो. ८. C. reads स्वधन° for स्वधर्म.°

इति । दारवद्दासता[1] मतेति वचनात् ब्राह्मणस्य सवर्णं[2] प्रति दासत्वमाह[3] कात्यायनः—

' असवर्णे[4] तु विप्रस्य[5] दासत्वं नैव कारयेत्' ।

इति । यदि ब्राह्मणः स्वेच्छया दास्यं भजते तदाऽसौ नाशुभं कर्म कुर्यादित्याह स एव—

' श्रुताध्ययन[6]सम्पन्नं तदूनं कर्म कामतः ।
तत्रापि नाशुभं किंचित् प्रकुर्वीत द्विजोत्तमः' ॥

इति । ऊनं हीनमपि कर्म कामतो वेतनग्रहणमन्तरेण स्वेच्छया परहितार्थम् । क्षत्रिय-वैश्यविषये स्वामिनः कर्तव्यमाह मनुः—

' क्षत्रियं चैव वैश्यं च ब्राह्मणोऽवृत्तिकर्शितौ[7] ।
बिभृयादानृशंस्येन स्वानि कर्माणि कारयेत्' * ॥

( म. स्मृ. ८. ४११. )

इति । यस्तु द्विजातिं बलाद्दास्यं कर्म कारयति तस्य दण्डमाह स एव—

* अस्यार्थः—समर्थो ब्राह्मणः क्षत्रिय-वैश्यौ भृत्यभावेन करुणया स्वानि कर्माणि रक्षण-कृष्यादीनि कारयन् ग्रासाच्छादनादिना पोषयेत् । एवं बलवान् ब्राह्मणः तावुपगतौ अबिभ्रन् राज्ञा दण्डनीय इति प्रकरणसामर्थ्यात् गम्यते ।

---

१. C. reads दासता सदा for दासता मता. २. C. reads वर्णं for सवर्णं. ३. B. and C. read दासत्वप्राप्तावाह for दासत्वमाह. ४. B. reads समवर्णोऽपि; while C. असवर्णोऽपि. ५. B. and C. read विप्रं तु for विप्रस्य. ६. B. reads शीलाध्ययन°; while C. सिराध्ययन°. ७. B. and C. read वर्जितौ and गर्हितौ respectively for °कर्शितौ.

'दास्यं तु कारयेन्मोहाद्ब्राह्मणः संस्कृतान् द्विजान् ।
अनिच्छतः प्राभ[1]वत्वाद्राज्ञा दण्डयः शतानि षट्' † ॥

(म. स्मृ. ८. ४१२.)

इति । प्रभ[2]वतो भावः प्राभवत्वं तस्मादिति । शूद्रं तु यथाकथमपि दास्यं कारयेदित्याह स एव——

'शूद्रं तु कारयेद्दास्यं क्रीतमक्रीतमेव च ।
दास्यायैव हि सृष्टोऽसौ स्वयमेव स्वयम्भुवा' ॥

(म. स्मृ. ९. ४१३.)

इति । पञ्चदशप्रकाराणां दासानां मध्ये गृहजात-क्रीत-लब्ध-दायागतानां चतुर्णां दासत्वं स्वामिप्रसादादेव मुच्यते । नान्यथेत्याह नारदः——

'तत्र पूर्वश्चतुर्वर्गो दा[3]सत्वान्न विमुच्यते ।
[4]प्रसादात् स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम्' ॥

(ना. स्मृ. ९. २९.)

इति । आत्मविक्रेतुरपि दासत्वं स्वामिप्रसादादन्यतो नापैतीत्याह नारदः——

---

† प्राभवत्वात् ब्राह्मणः कृतोपनयनान् द्विजातीननिच्छतः प्रभुत्वेन लोभाद्वा दास्यकर्म पादधावन-उच्छिष्टभक्षण-वस्त्रक्षालनादि कारयन् राजा षट् शतानि दण्ड्यः । पणानामिती शेषः ।

---

१. B. and C. read प्रभावत्वात् for प्राभवत्वात्. २. B. and C. read प्रभावस्यभावः. प्राभावत्वं for प्रभवतो भावः प्राभवत्वम्. ३. C. reads दासतां न for दासत्वान्न. ४. C. reads प्रशास्यात् for प्रसादात्.

'विक्रीणीतेऽस्वतन्त्रःसन् य आत्मानं नराधमः ।
स जघन्यतमस्तेषां सोऽपि दास्यान्न मुच्यते' ॥

( ना. स्मृ. ५. ३७. )

इति । प्रव्रज्यावासितस्याऽपि दास्यमोक्षो नास्तीत्याह स एव—

'राज्ञ एव हि[3] दासः स्यात् प्रव्रज्याऽ[4]वसितो नरः ।
न तस्य प्रतिमोक्षोऽस्ति न विशुद्धिः कथंचन' ॥

( ना. स्मृ. ५. ३९. )

इति । याज्ञवल्क्योऽपि—

'प्रव्रज्यावासितो राज्ञो दास आमरणान्तिकम्'* ।

( या. स्मृ. २. १८३. )

इति । प्रव्रज्याऽवसितस्य दासत्वं ब्राह्मणेतरविषयम् । ब्राह्मणस्तु निर्वास्य इत्याह कात्यायनः—

---

* प्रव्रज्या संन्यासः ततो ऽवसितः प्रच्युतः । स यदि अनभ्युपगतप्रायश्चित्तश्चेत् मरणपर्यंतं राज्ञ एव दासो भवति । कृतप्रायश्चित्तस्य तु न दासत्वमित्यवसितोऽर्थः ।

१. B. and C. omit—

'विक्रीणीतेऽस्वतंत्रः सन् य आत्मानं नराधमः ।
स जघन्यतमस्तेषां सोऽपि दास्यान्न मुच्यते' ॥

इति. but C. omits the whole and B. except दास्यान्न मुच्यते ॥ इति. २. C. omits प्रव्रज्यावसितस्यापि दास्यमोक्षो नास्तीत्याह सएव. ३. B. and C. substitute तु for हि. ४. C. reads प्रव्रज्याध्यापितो for प्रव्रज्यावसितो.

'प्रव्रज्याऽवसिता ये तु त्रयो वर्णा द्विजातयः† ।
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रियं विशः[1]' ॥

इति । निर्वासनप्रकारमाह[2] नारदः—

'पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
[3]श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत्' ॥

( ना. स्मृ. ५. ३४. )

इति । प्रव्रज्यावसिताऽऽत्मविक्रेतृव्यतिरिक्तानामन्नाका[4]लभृतादीनां दास्यापनयनप्रकारमाह स एव—

'[5]अन्नाकालभृतो दास्यान्मुच्यते गोद्वयं[6] ददत् ।
तद्भक्षितं[7] यद्दुर्भिक्षे न तत् शुद्ध्येत कर्मणा ॥ ( ३१ )
भक्तस्योत्क्षेपणेनैव[8] भक्तदासः[9] प्रमुच्यते ।
आहितोऽपि धनं दत्वा स्वामी यद्येन[10]मुद्धरेत् ॥

---

† 'ननु—आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेत् गृहात्' इत्यादि वचनेषु ब्राह्मणस्यैव सन्यासाधिकारः तत्कथमुच्यते त्रयो वर्णा द्विजातय इति—इति चेत् न । 'यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इति श्रुतौ वर्णविशेषग्रहणाभावात् 'त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः' । इति सूत्रकारवचनात् अस्त्येवाधिकारस्त्रैवार्णिकानामिति सर्वमनवद्यम् ।

१. B. reads क्षत्रियं विशम्; while C. क्षत्रियं त्रीकम्. २. C. reads निवासन° for निर्वासन°. ३. D. reads श्वापदेन for श्वपदेन. ४. B. and C. read अनाकाल° for अन्नाकाल°. ५. B. and C. read अनाकाल° for अन्नाकाल.° ६. C. read गोयुमं ददन् for गोद्वयं ददत्. ७. B. and C. read तं भक्षित यद्दुर्भिक्षे नतु शुद्ध्येत्कर्मणा for तद्भक्षितं यत् दुर्भिक्षे न तत् शुद्ध्येत कर्मणा. ८. B. reads °क्षेपणात् सद्यो; while C. °क्षेपणात्सर्वं for °क्षेपणेनैव. ९. C. reads °दासात् for °दासः. १०. C. reads ये न त° for यद्येन.°

स्वंपर्याप्तमृणं दत्वा तद्दृणात् स विमुच्यते । ( ३२ )
तवाहमित्युपगतो युद्धे प्राप्तः पणे जितः ॥
प्रतिशीर्षप्रदानेन मुच्येरंस्तुल्यकर्मणा ।
कृतकालव्यपगमात् कृतकोऽपि विमुच्यते ॥
निग्रहाद्वडवायास्तु मुच्यते वैडवाहृतः' ॥ ( ३६ )

( ना. स्मृ. ५. ३१. ३६. )

इति । स्वामिनः प्राणरक्षणादपि गृहजातादयः सर्वे दास्यान्मुच्यन्त इत्याह नारदः—

'यश्चैषां स्वामिनं कश्चिन्मोचयेत् प्राणसंशयात् ।
दासत्वात्स विमुच्येत पुत्रभागं लभेत च' ॥

( ना. स्मृ. ५. ३१. )

इति । दासाभासानां मोचनमाह याज्ञवल्क्यः—

'बलाद्दासीकृतश्चोरैर्विक्रीतश्चापि मुच्यते' ॥

( या. स्मृ. २. १८२. )

इति । चकारादाहितो दत्तश्च गृह्यते । नारदोऽपि—

---

१. B. reads ऋणं तु सोदयं दत्वा ऋणिदास्यात्प्रमुच्यते; while C. ऋणं तु सोविमुच्येत for स्वपर्य्याप्तं ऋणंदत्वा तद्दृणात्स विमुच्यते. २. A. C. and D. omit the following :—

'तवाहमित्युपगतो युद्धे प्राप्तः पणे जितः ॥
प्रतिशीर्षप्रदानेन मुच्येरंस्तल्यकर्मणा ॥
कृतकालव्यपगमात्कृतकोऽपि विमुच्यते ॥

३. C. reads वडवाकृतः for वडवाहृतः. ४. B. C. and D. read °संरक्षणात् for °रक्षणात्. ५. C. reads यश्चैनां for यश्चैषां. ६. B. reads दत्तश्चापि and C. दत्तस्वामी for दत्तश्च.

'चोरापहृत-विक्रीता[1] ये च दासीकृता बलात् ।
राज्ञा मोचयितव्यास्ते दासत्वं तेषु नेष्यते[2]' ॥

( ना. स्मृ. ५. ३८. )

इति । यस्त्वेकस्य पूर्वं दास्यमङ्गीकृत्य परस्यापि दासत्व-मङ्गीकरोति असावपरेण विसर्जनीय इत्याह स एव—

'तवाहमिति वाऽत्मानं[3] योऽस्वतन्त्रः[4] प्रयच्छति ।
न स तं प्राप्नुयात् कामं पूर्वस्वामी लभेत तम्' ॥

( ना. स्मृ. ५. ४०. )

इति । दासविमोक्षणेतिकर्तव्यतामाह स एव—

'स्वदासमिच्छेद्यः[5] कर्तुमदासं प्रीतमानसः ।
स्कन्धादादाय तस्याऽसौ भिन्द्यात्कुम्भं सहाम्भसा' ॥ ४२

'साक्षताभिः सपुष्पाभिर्मूर्धन्याद्भिरवाकिरेत् ।
अदास इति चोक्त्वा त्रिः प्राङ्मुखस्तु तथो[6]त्सृजेत् ॥ ४३

ततः प्रभृति वक्तव्यः स्वाम्यनुग्रहपालितः[7] ।
भोज्याऽन्नोथ प्रतिग्राह्यो भवत्याभिमतः सताम्' ॥ ४४

( ना. स्मृ. ५. ४२–४४ )

इति । सत्यभ्युपेत्याऽशुश्रूषाख्यं विवादपदं समाप्तम् ।

---

१. C. reads चौरापहृत° for चोरापहृत°. २. B. and C. read नेऽष्यते and D. नेक्ष्यते. ३. B. and C. read चात्मानं for वात्मानं. ४. C. reads स्वकं च for ऽस्वतंत्रः. ५. C. reads स्वदास्यं for स्वदासम्. ६. C. reads ततः for तथा. ७. C. reads °पालिनः for °पालितः.

अथ संविद्व्यतिक्रमाख्याविवादपदस्य विधिरुच्यते। तस्यं लक्षणं नारदेन व्यतिरेकमुखेन दर्शितम्—

'पाषण्ड-नैगमादीनां स्थितिः समय उच्यते।
समयस्याऽनपाकर्म तद्विवादपदं स्मृतम्' ॥

( ना. स्मृ. ७. ३. )

इति। समयस्यानपाकर्म अव्यातिक्रमः समयपरिपालनम्। तद्व्यतिक्रममार्णं विवादपदं भवतीत्यर्थः। तदुपयोगिनमर्थमाह बृहस्पतिः—

'वेदविद्याविदो विप्रान् श्रोत्रियांश्चाग्निहोत्रिणः।
आहृत्य स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत्' ॥

इति। याज्ञवल्क्योऽपि—

'राजा कृत्वा पुरे स्थानं ब्राह्मणान् न्यस्य तत्र तु।
[1]त्रैविद्यान् वृत्तिमद्ब्रूयात् स्वधर्मः पाल्यतामिति'।

( या. स्मृ. २.–१८६. )

इति। ब्राह्मणान्[2] त्रैविद्यान् वेदत्रयसम्पन्नान् वृत्तिमत् भूरिहिरण्यादिसम्पन्नं कृत्वा स्वधर्मो व[3]र्णा-ऽश्रम-श्रुति-स्मृति-विहितो भगवद्भिरनुष्ठीयतामिति तान् ब्रूयात्। वृत्तिसम्पत्तिश्च बृहस्पतिना दर्शिता—

१. B. reads त्रैविद्यं for त्रैविद्यान्; while C. reads त्रैविध्यं वृत्तिमास्थाय स्वधर्मं प्रतिपालयेत् for त्रैविद्यान्वृत्तिमद्ब्रूयात् स्वधर्मः पाल्यतामिति' ॥. २. B. and C. read ब्राह्मणव्रातं त्रैविद्यं वेदत्रयसंपन्नम् for ब्राम्हणान् त्रैविद्यान् वेदत्रयसंपन्नान्. ३. B. adds °निमित्त° after वर्णाश्रम°,

'अनाच्छेद्यकरास्तेभ्यः प्रदद्याद्गृहभूमयः ।
भुक्तभाव्याश्च नृपतिर्लेखयित्वा स्वशासने' ॥

इति । अनाच्छेद्यकरा अग्राह्यकराः भुक्ता भाव्यास्तु न विश्रुतकराः । आगामिनृपतिभिरग्राह्यकरा या भूमयस्ताः स्वशासने लिखित्वा तेभ्यो दद्यादित्यर्थः ।

तेषां कर्तव्यमाह बृहस्पतिः—

'नित्यं नैमित्तिकं काम्यं शान्तिकं पौष्टिकं तथा ।
पौराणां कर्म कुर्युस्ते सन्दिग्धेऽर्थे च निर्णयम्' ॥

इति । याज्ञवल्क्योऽपि—

'निजधर्माविरोधेन यस्तु सामयिको भवेत् ।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥
(या. स्मृ. २. १८६.)

इति । श्रौत-स्मार्तधर्मानुपमर्देन गोत्राचारेक्षण-देवगृहपालनादिरूपो यो धर्मः समयान्निष्पन्नो भवेत् सोऽपि यत्नेन पालनीयः । तथा राज्ञा च निजधर्माविरोधेनैव यावत्पथिक-भोजनं देयम् । अस्मदरातिमण्डलं तुरङ्गादयो न प्रस्थापनीया

१. B. भुक्ता भाव्याश्च, C. मुक्ता भाव्यश्च and D. मुक्ताभाव्याश्च for भुक्तभाव्याश्च. २. C. omits—

°शासने, ॥ इति । अनाच्छेद्यकरा अग्राह्यकराः
भुक्ता भाव्यास्तु नविश्रुतकराः ॥ आगामिनृपति-
भिरग्राह्यकरा या भूमयस्ताः स्वशासने लिखित्वा;

while A. and D. omit the same portion except स्वशासने, and read instead of that only तेभ्यो दद्यादित्यर्थः. ३. B. and C. read संदिग्धे निर्णयं तथोति for संदिग्धेऽर्थे च निर्णयम्. ४. B. reads गोप्रचाररक्षण° (लक्षण) and C. गोप्रचारैः रक्षणं for गोत्राचारेक्षण°. ५. C. reads अवश्यायिक° for यावत्पथिक°. ६. B. in margin and C. read °मंडमं for °मंडलं.

इत्येवं रूपः समयनिष्पन्नः सोऽपि रक्षणीयः। एवं राजनियुक्तसमुदायविशेषस्य कर्तव्यविशेषोऽभिहितः[1]। ग्रामादिसर्वसमुदायानां तु साधारणकार्यमाह बृहस्पतिः—

'ग्राम-श्रेणी-[2]गणानां च सङ्केतः [3]समयक्रिया।
[4]बाधाकाले तु सा कार्या धर्मकार्ये तथैव च॥
[5]वाटचोरभये बाधा [6]सर्वसाधारणी स्मृता।
तत्रोपशमनं कार्यं सर्वैर्नैकेन केनचित्'॥

इति। चकारेण पाषण्ड-नैगमादीनां चोपसंग्रहः। ततश्च ग्राम-श्रेणी-गण-पाषंड-नैगमादीनां उपद्रवकाले धर्मकार्ये च यां पारिभाषिकीं समयक्रियां विना उपद्रवो दुःपरिहरः धर्मकार्यं च दुःसाध्यं सा पारिभाषिकी [7]समयक्रिया सर्वैर्मिलितैः कार्या। [8]वाटो वृकः। वाट-चोरेभ्यो भये प्राप्ते [9]तदा चोरोपशमनं सर्वैः [10]सम्भूय कर्तव्यमित्यर्थः। धर्मकार्ये तु विशेषः तेनैवोक्तः—

'सभा प्रपा देवगृहं तडागारामसंस्कृतिः।
[11]तथाऽनाथ-दरिद्राणां संस्कारो यजनक्रिया॥
कुलायनं निरोधश्च कार्यमस्माभिरंशतः।
यत्त्वेवं लिखितं पत्रं धर्म्या सा समयक्रिया॥

१. C. reads °विशेषे विहितः for विशेषोऽभिहितः २. A. reads °गजानां for °गणानां. ३. C. reads समनाक्रिया for समयक्रिया. ४. B. originally reads °कार्ये for °काले; while C. धातुःकाले for बाधाकाले. ५. B. in margin and C. read चार °for वाट.° ६. B. and C. read सर्व साधारणाः for सर्वसाधारणी. ७. A. and D. read समक्रिया for समयक्रियां. ८. A. and D. omit वाटो वृकः; while B. wrongly reads चाटो. ९. C. reads तद्वाधोप शमनं for तदा चोरोपशमनं. १०. C. omits संभूय. ११. C. reads तत्स्वानाऽथ° for तथाऽनाथ°.

पालनीया स[1]मस्तैस्तु य[2]ः समर्थो विसंवदेत् ।
स[3]र्वस्वहरणं दण्डः तस्य निर्वासनं पुरात्' ॥

इति । य[4]जनक्रिया सोमयागादिकर्तृभ्यो दानम् । कु[5]ला-यनं दु[6]र्भिक्षादिपीडितवृथागमनम्[7] । त[8]स्मिन् गते सति यत्सं-[9]विधानं विधेयं तदेव तच्छब्देनोच्यते । निरोधः दुर्भिक्षाद्यपग-मपर्यन्तं धारणम् । अशतः गृह-क्षेत्र-पुरुषादिप्रयुक्तसङ्गृहीतध-नेनाढ्यकत्वेन वा स्थितेन कार्यमिति । एवं कृता समयक्रिया न के[10]वलं समुदायिभिः पालनीया । किन्तु राज्ञाऽपीत्याह नारदः—

' पाषण्ड-नैगम-श्रेणि-पूग-व्रा[11]त-गणादिषु ।
संरक्षेत् समयं राजा दुर्गे जनपदे तथा' ॥

( ना. स्मृ. ७. ६. )

इति । पाषण्डा वेदबा[12]ह्या वेदोक्तलिङ्गधारिणो अतिरिक्ता वा सर्वे लिङ्गिनः । तेषुम[13]ध्ये अभिचरणाद्याः समयाः सन्ति । नैगमाः सार्थिका वणिग्प्रभृतयः । तेषु स[14]ंकचुक-सन्देशहर-

१. B. originally reads समर्थैः for समस्तैः. २. B. and C. omit the following यः समर्थो विसंवदेत् ॥ सर्वस्वहरणं दंडस्तस्य निर्वासनं पुरात्' ॥. ३. A. reads सर्वस्य for सर्वस्व°. ४. C. reads यजमान° for यजन°. ५. C. reads कुलायमस्माभिरंशतः and B. also the same. ६. B. and C. add तं before दुर्भिक्षा° and also read °पीडितं for °पीडितः. ७. B. and C. read °तथागमनं for °वृथागमनम्. ८. C. and D. read तस्मिन्नागते for तस्मिन्गते. ९. B. and C. read यथोक्तं विधानं for यत्संविधानं. १०. A. omits केवलं. ११. B. in margin and C. read लिंगिनो चारणादिषु for पूगव्रातगणादिषु १२. B. and C. respectively read वेदोक्तलिंगधारिव्यति-रिक्ताः and वेदोक्तलिंगव्यतिरिक्ताः for वेद बाह्या वेदोक्तलिंगधारिणो अतिरिक्ता वा. १३. B. originally reads मच्छादिभिक्षाचरणाद्याः and in margin भावा-दिभिक्षाचरणाद्याः; while C. as B. in margin, all for °मध्ये अभिचरणाद्याः. १४. B. C. read सकल्पक° for सकंचुक°.

पुरुषतिरस्कारिणो दण्ड्या इत्येवमादयो बहवःसमया विद्यन्ते। अथवा नैगमा आप्तप्रणीतत्वेन वेदप्रामाण्यमिच्छन्ति ये पाशुपतादयः, पण्य-शिल्पोपजीविनः कुविंदादयः तास्वियमनयैव-श्रेण्या विक्रेयमित्यादिकाः समयाः संति युगा हस्त्यश्वारोहकादयः। व्रात-गणशब्दयोरर्थः कात्यायनेन दर्शितः—

'नानायुधधरा व्राताः समवेतास्तु कीर्तिताः।
कुलानां तु समूहो यः गणः स परिकीर्तितः'॥

इति। पूगे व्राते चान्योन्यमुत्सृज्य समरे न गन्तव्यमित्यादयः सन्ति समयाः। गणे त पञ्चमेऽहनि पञ्चमे वा अब्दे कर्णवेधः कर्त्तव्य इत्यादिसमयाः। दुर्गे धान्यादिकं गृहीत्वा अन्यत्र यास्यता न तद्विक्रेयमित्यास्ते समयः। जनपदे तु क्वचिद्विक्रेतुर्हस्ते क्वचित् क्रेतृहस्ते शुल्कग्रहणमित्यादिकोऽस्त्यनेकविधः समयः। तत् समयजातं यथा न भ्रश्यति नच व्यतिवर्तेत तथा राजा कुर्यादित्यर्थः। समुदाये तु पुरुषविषये विशेषमाह बृहस्पतिः—

१. A. C. D. omit—

पण्यशिल्पोपजीविनः कुविंदादयः तास्वियमनयैव श्रेण्या विक्रेयमित्यादिकाः समयाः संति युगा हस्त्यश्वारोहकादयः.

२. B. reads °धना for °धरा. ३. B. reads संपरिकीर्तितः for स परिकीर्तितः. ४. C. reads पूगजातेरन्योन्यमुत्सृष्टसमरे for पूगे व्राते चान्योन्यमुत्सृज्य समरे. ५. C. wrongly reads मणे for गणे. ६. B. reads इत्येवमादिरस्ति समयः for इत्यादिसमयाः; while C. इत्येवमादिशते समयः. ७. B. reads अन्यस्मिन् यास्यतो and C. अन्यत्र यास्यतो for अन्यत्र यास्यता. ८. B. and C. read °मित्यादिरस्ति समयः for °मित्यास्ते समयः. ९. A. omits शुल्कग्रहणमित्यादिकोऽस्त्यनेकविधः समयः। तत्समयजातं यथा न and C. शुल्कग्रहणमित्यादिकाऽस्त्यनेकविधाः समयाः. १०. B. and C. read तदेतत् for तत्.

'कोशेन लेख्यक्रियया मध्यस्थैर्वा परस्परम् ।
विश्वासं प्रथमं कृत्वा कुर्युः कार्याण्यनंतरम्' ॥

इति । मध्यस्थैः प्रतिभूभिः । कार्याणि समूहकार्याणि ।
कात्यायनोऽपि—

'समूहानां तु यो धर्मस्तेन धर्मेण ते सदा ।
प्रकुर्युः सर्वकर्माणि स्वधर्मेषु व्यवस्थिताः' ॥

इति । समूहकार्यकारिषु हेयोपादेयान् विभजति
बृहस्पतिः—

'विद्वेषिणो व्यसनिनः शालीनाऽलस-भीरवः ।
वृद्धा लुब्धाश्च बालाश्च न कार्याः कार्यचिन्तकाः' ॥

'शुचयो वेदधर्मज्ञा दक्षा दान्ताः कुलोद्भवाः ।
सर्वकार्यप्रवीणाश्च कर्तव्यास्तु महत्तमाः' ॥

इति । ते च कियन्तः कर्तव्या इत्यपेक्षिते स एवाह—

---

१. A. and D. omit—

'कोशेन लेख्यक्रियया मध्यस्थैर्वा परस्परम् ।
विश्वासं प्रथमं कृत्वा कुर्यात् कार्याण्यनंतरम्' ॥

इति । मध्यस्थैः प्रतिभूभिः । कार्याणि समूहकार्याणि ।

कात्यायनोपि—

'समूहानां तु यो धर्मस्तेन धर्मेण ते सदा ।
प्रकुर्युः सर्वकर्माणि स्वधर्मेषु व्यवस्थिताः' ॥

इति । समूहकार्यकारिषु हेयोपादेयान्विभजाति बृहस्पतिः—

२. B. and C. read लुब्धातिवृद्ध॰ for वृद्धा लुब्धाश्च. ३. C. reads क्रियावंतः for कियंतः.

‘ द्वौ त्रयः पञ्च वा कार्याः समूहहितवादिनः ।
कर्तव्यं वचनं तेषां ग्राम-श्रेणि-गणादिभिः’ ॥

इति । यः समूहहितवादिनां वचनातिक्रमं करोति तस्य दंडमाह याज्ञवल्क्यः—

‘कर्तव्यं वचनं सर्वैः समूहहितवादिनाम् ।
यस्तत्र विपरीतःस्यात् स दाप्यः प्रथमं दमम्’ ॥
( या. स्मृ. २. १८८ )

इति । कात्यायनोऽपि—

‘युक्तियुक्तं च यो हन्याद्यः कार्यानवकाशदः ।
अयुक्तं चैव यो ब्रूयात् स दाप्यः पूर्वसाहसम्’ ॥

इति । बृहस्पतिरपि—

‘ यस्तु साधारणं हिंस्यात् क्षिपेत्त्रैविद्यमेव वा ।
संवित्क्रियां विहन्याच्च स निर्वास्यः ततः पुरात्’ ॥

इति । समूहिनामप्यधर्मेण द्वेषादिना कार्यकरणे दण्डमाह स एव—

---

१. A. and D. omit—
‘कर्तव्यं वचनं तेषां ग्रामश्रेणिगणादिभिः’ ॥
इति । यःसमूहहितवादिनां वचनातिक्रमं करोति तस्य दंडमाह याज्ञवल्क्यः—
‘ कर्तव्यं वचनं सर्वैः समूहहितवादिनाम् ।
while C. omits—
कर्तव्यं वचनं तेषां ग्राम-श्रेणि-गणा दिभिः’ ॥
इति । यःसमूहहितवादिनां वचनातिक्रमं करोति तस्य दण्डमाह याज्ञवल्क्यः.—

२. B. originaly reads वस्कार्योऽनवकाशतः and in margin वस्तुर्योऽवकाशतः; while C. wrongly reads वक्तुर्यो नावकाशतः. ३. C. wrongly reads क्रिये for क्षिपेत्. ४. C. reads संधिक्रियां for संवित्क्रियां. ५. B. origninally reads निर्वास्यस्तु वः पुरात् ॥ ‘इति and in margin निर्वास्यः स ततः पुरा दिति for स निर्वास्यः ततः पुरात्’ ॥ इति ।.

'बाधां कुर्युर्यदेकस्य सम्भूता द्वेषसंयुताः ।
राज्ञा सर्वं गृहीतार्थाः शास्याश्चैवानुबन्धतः' ॥

इति । अनुबंधतोऽनुसारतः न यथा समयं जह्युः । मुख्यानामौद्दण्ड्यं राजा निवारयेदित्याह स एव—

'मुख्यैः सहसमूहानां विसंवादो यदा भवेत् ।
तदा विचारयेद्राजा स्वमार्गे स्थापयेच्च तान्' ॥

इति । यस्तु मुख्यः समूहद्रव्यादिकमपहरति तस्य दण्डमाह याज्ञवल्क्यः—

'गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेत्तु यः ।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत्' ॥
(या. स्मृ. २. १८७.)

इति । मर्मोद्घाटकादीनां पुरान्निर्वासनमेव दण्डमाह बृहस्पतिः—

'अरुन्तुदः सूचकश्च भेदकृत् साहसी तथा ।
श्रेणि-पूग-नृपद्वेष्टा क्षिप्रं निर्वास्यते तदा ॥

---

१. B. reads ज्ञात्वा निर्वायास्तु and C. ज्ञात्वातिचार्यास्तु for सर्वं गृहीतार्थाः. २. A. C. and D. omit अनुबंधतोऽनुसारतः. ३. C. omits न यथा समयंजह्युः ।

मुख्यानामौद्दण्ड्यं राजा निवारयेदित्याह स एव —
मुख्यैःसह समूहानां विसंवादो यदा भवेत् ।
तदा विचारयेद्राजा........................ ॥;

while A. and D. omit—

मुख्यानामौद्दण्ड्यं राजा निवारयेदित्याह स एव—
'मुख्यैः सह समूहानां विसंवादो यदाभवेत् ।.

४. C. omits °द्रव्यादिकम्. ५. B. reads लंघयेच्च and C. लंघयच्च for लंघयेत्तु.
६. B. and C. read °द्विष्टः for °द्वेष्टा. ७. B. and C. read ततः for तदा.

पुर-श्रेणि गणाध्यक्षाः पुर-दुर्गनिवासिनः ।
वाग्धिग्दमं परित्यागं प्रकुर्युः पापकारिणः ॥
तैः कृतं यत्स्वधर्मेण निग्रहानुग्रहं नृणाम् ।
तद्राज्ञाऽप्यनुमन्तव्यं निसृष्टार्था हि ते स्मृताः' ॥

इति । निसृष्टार्था अनुज्ञातकार्या[1] इत्यर्थः । पाषण्ड्यादि-सर्वसमूहेषु यथा राज्ञा वर्त्तितव्यं तदाह नारदः—

' यो धर्मः कर्म यच्चैषामुपस्थानविधिश्च यः ।
[2]यच्चैषां वृत्युपादानमनुमन्येत तत्तथा ॥ (३)
प्रतिकूलं च यद्राज्ञः [3]प्रकृत्यवमतं च यत् । (४)
दोषवत्करणं यत् स्यादना[4]म्नायप्रकल्पितम्[5] ।
प्रवृत्तमपि तद्राजा श्रेयस्कामो निवर्तयेत्' ॥ (७)

( ना. स्मृ. १०. ३–७. )

इति । धर्मो जटावत्त्वादि[6] । कर्म [7]प्रातःपर्युषितभिक्षाटनादि । उपस्थानविधिः समूहकार्यार्थे पटहादिध्वनिमाकर्ण्य मण्डपादौ मेलनम् । [8]वृत्युपादानं जीवनार्थं[9] तापसवेषपरिग्रहः ।

---

१. C. wrongly reads °भार्या for °कार्या. २. A. and D. read यश्चैषां प्राप्नुयादर्थं for यच्चैषां वृत्यपादानम्; while B. and C. read प्रत्युपादानं. ३. B. in margin and C. read प्रकृता° for प्रकृत्य°; While the text of नारद read नानुकूलं for प्रतिकूलं and C. D. read राज्ञः for राजा. ४. C. reads अनाश्रीय° for अनाम्नाय°. ५. B. and C. read °प्रकर्षितं for °प्रकल्पितम्. ६. C. reads जटावडादिः for जटावत्त्वादिः. ७. B. and D. read प्रातः for प्रातः. ८. B. reads तस्य च प्रत्युपादानं; while C. simply प्रत्युपादानं for वृत्युपादानं. ९. B. and C. read जीवनाय for जीवनार्थं.

राज्ञः प्रतिकूलमाधिकारिकशूद्रकर्तृकं त्रैवर्णिकविवादे धर्मविवेचनम् । तस्य च प्रतिकूलत्वमुक्तं स्मृत्यन्तरेण—

'यस्य राज्ञः तु कुरुते शूद्रो धर्मविवेचनम् ।
तस्य प्रक्षुभ्यते राष्ट्रं बलं कोषं च नश्यति' ॥

इति । प्रकृत्यवमतं स्वभावत एव यदननुज्ञातं पाषण्ड्यादिषु ताम्बूलभक्षणाद्यर्थानां बाधकं रसवादादिकम् । मिथः सङ्घातकरणं उपस्थानविधेः पूर्वं पृथक्पृथगवान्तरस्तोमकरणम् आहितकलशादिकम् । परस्परोपतापः राजपुरुषाश्रयणेनान्योन्यमर्थापहरणादिः । दोषवत्करणं श्रुति-स्मृतिविरुद्धं विधवादौ वेश्यात्वादिकं पाषण्ड्यादिभिः प्रकल्पितम् । संविल्लंघने दण्डमाह मनुः—

'यो ग्राम-देश-संघानां कृत्वा सत्येन संविदम् ।
विसंवदन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत् ॥
निगृह्य दापयेदेनं समयव्यभिचारिणम् ।
चतुःसुवर्णान् षण्णिष्कान् शतमानं च राजतम् ॥

---

१. B. and C. read सार्थिकादि° for आधिकारिक°. २. B. and C. read स्मृत्यन्तरे. ३. A. and D. प्रणश्यते for प्रक्षुभ्यते. ४. B. and C. read एवावज्ञातं for एव यदननुज्ञातं. ५. After this word A. C. and D. omit the following—

णाद्यर्थानां बाधकं रसवादादिकम् । मिथःसंघातकरणं उपस्थानविधेःपूर्वं पृथक्पृथगवान्तरस्तोमकरणम् । आहितकलशा-

६. B. in margin C. and D. read निकृत्य for निगृह्य. ७. B. reads व्यतिचारिणम् for व्यभिचारिणम्. ८. B. C. and D. read °सुवर्णकं निष्कं for °सुवर्णान् षण्णिष्कान्.

एवं दण्डविधिं कुर्याद्धार्मिकःपृथिवीपतिः ।
ग्राम-जातिसमूहेषु समयव्यभिचारिणाम्[१]' ॥
( म. स्मृ. ८. २१९–२२१. )

इति । सत्येन शपथेन । एतेषां निर्वासन-चतुःसुवर्ण-षट्-निष्क-शतमानरूपाणां जाति-विद्या-गुणाद्यपेक्षया व्यवस्था कल्पनीया । समूहपूजार्थं राज्ञा समर्पितं द्रव्यं समूहाय यो न ददाति तं प्रत्याह याज्ञवल्क्यः—

'समूहकार्य आयातान् कृतकार्यान् विसर्जयेत् ।
[२]सदान-मान-सत्कारैः पूजयित्वा महीपतिः ॥
समूहकार्य[३]प्रहितो यल्लभेत तदर्पयेत् ।
एकादशगुणं दाप्यो यद्यस्मै नार्पयेत् स्वयम्' ॥
( या. स्मृ. २. १८९–१९०. )

इति । [४]समूहकार्यप्रहितेनार्पितं च धनं सर्वे समुहिनो-विभज्य गृह्णीयुः । तथा च बृहस्पतिः—

'ततो लभ्येत यत्किंचित् सर्वेषामेव तत् समम्' ।

इति । विभज्य ग्रहणमणुद्रव्यविषयम् । यस्तत्पक्षविषये स एवाह—

१. B. reads °व्यतिचारिणाम् for °व्यभिचारिणाम्. २. A. C. and D. read सदासन्मान° for सदान-मान°. ३. B. originally reads °पतितो for °प्रहितो.
४. A. C. and D. omit following:—
समूहकार्यप्रहितेनार्पितं च धनं सर्वे समूहिनो विभज्य गृण्हीयुः ।
तथा च बृहस्पतिः—
'ततो लभ्येत यत्किंचित् सर्वेषामेव तत् समम्' । इति ।

'षाण्मासिकं वत्सरं[1] वा विभक्तव्यं यथांशतः[2]।
देयं बधिर[3]-वृद्धा-ऽन्ध-स्त्री-बाला-ऽऽतुर-रोगिषु[4] ॥
सान्तानिकादिषु तथा धर्म एष सनातनः'।

इति। राज्ञः[5] प्रसादलब्धं वेटणमपि सर्वेषां सममित्याह स एव—

'यत्तैः प्राप्तं रक्षितं वा गणार्थे वा ऋणं कृतम्।
राज्ञः[6] प्रसादलब्धं च सर्वेषां तत्समाहितम्[7]' ॥

इति। एतदभक्षितविषयम्[8]। भक्षिते तु कात्यायन आह—

'गणमुद्दिश्य यत्किञ्चित् कृत्वर्णं[9] भक्षितं भवेत्।
आत्मार्थं[10] विनियुक्तं वा देयं तैरेव तद्भवेत्' ॥

इति। ये तु समुदायं प्रसाद्य तदन्तर्गता ये च समुदायक्षोभादिना ततो बहिर्भूताः तान् प्रत्याह स एव—

'गणिनां[11] शिल्पिवर्गाणां गताः स्युर्ये तु मध्यताम्।
प्राक्तनस्या[12]ऽधमर्णस्य[13] समांशाः[14] सर्व एव ते ॥

---

१. B. C. read मासिकं for वत्सरं. २. B. originally reads यथार्हतः, but corrects यथांशतः. ३. B. C. read वा निःस्व° for बधिर°. ४. B. in margin and C. read °योगिषु for °रोगिषु. ५. C. reads राज्ञां प्रसादलब्धं for राज्ञः प्रसादलब्धं; while B. reads राजप्रसादलब्धं च for राज्ञः प्रसादलब्धं. ६. B. and C. read राजप्रसादलब्धं च for राज्ञः प्रसादलब्धं च. ७. D. in margin and B. read एव तत्समम् for तत्समाहितम्; while C. for the following तत्समाहितम्' ॥ इति। एतदभक्षितविषयम् reads समूहिनां सममित्येतद्भक्षितेतरविषयम्. ८. B. reads मुख्यैः कृतं ऋणं सर्वेषां समूहिनां सममित्येतद्भक्षितेतरविषयम् for एतदभक्षितविषयम्. ९. A. and D. read कृत्यर्णं for कृत्वर्णं. १०. C. wrongly reads आमार्थं for आत्मार्थं. ११. B. originally reads गणानां for गणिनां. १२. B. originally reads प्राक्तनस्य धनर्णस्य for प्राक्तनस्याऽधमर्णस्य; while in margin reads प्रकृतस्य धनर्णस्य and D. also in margin प्राकृतस्य धनर्णस्य originally प्राकृतस्याधमर्णस्य. १३. B. and C. read धनर्णस्य for ऽधमर्णस्य. १४. C. reads समाः स्युः for समांशाः.

तथैव भोजनैर्भाव्यं[1] दान-धर्मक्रियासु च ।
समूहस्थोंऽशभागी स्यात् प्रगतस्त्वंशभागभाक्[2]' ॥

इति ।

## ॥ संविद्व्यतिक्रमाख्यं विवादपदम् ॥

---

अथ क्रीतानुशयः कथ्यते ।

तत्स्वरूपं नारदेनोक्तम्—

'क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते ।
क्रीतानुशय इत्येतद्विवादपदमुच्यते' ॥

( ना. स्मृ. ९. १. )

इति । क्रीत्वाऽनुशयानुत्पत्त्यर्थं[3] क्रेता क्रयात् प्रागेव सम्यक् परीक्षेत । तथा च स एव—

'क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः[4] ।
परीक्षाऽभिमतं क्रीतं विक्रेतुर्न भवेत् पुनः' ॥

( ना. स्मृ. ९. ४.)

इति । परीक्षाभिमतं क्रीतं तद्दोषदर्शनेऽपि ग्रहीतुरेव भवति[5] न विक्रेतुः । तथा च बृहस्पतिः—

'परीक्षितं बहुमतं[6] गृहीत्वा[7] न पुनस्त्यजेत्' ।

---

१. B. and C. read भोज्यवैभाव्य° for भोजनैर्भाव्यं. २. B. in margin reads प्रगतस्त्वंशभागिति and प्रगतस्त्वं ऋणं कृतम्; while C. प्रागतस्त्वं ऋणं कृतम् for प्रगतस्त्वंशभागभाक्; But D. in margin reads प्रगतस्त्वंशभागिति and प्रगतस्त्वंशभाङ् न तु. ३. B. originally reads क्रीत्वा° for क्रीता°. ४. A. reads °दोषभाक्. for °दोषतः. ५. B. and C. read भवेत् for भवति. ६. A. reads बहुमितं for बहुमतं. ७. C. reads ग्रहीता for गृहीत्वा.

इति। तत्कालपरीक्षितस्य पुनरर्पणाभावः सावधिविषयः[1]। तत्र सद्यः[2] परीक्षणस्य विहितत्वात्। तथा च व्यासः—

'चर्म-काष्ठेष्टका-सूत्र-धान्या-ऽऽसव-रसस्य च।
वस्त्र-रूप्य-हिरण्यानां सद्य एव परीक्षणम्'॥

इति। क्रीतानां पण्यानां द्रव्यविशेषेण परीक्षणकालावधिमाह स एव—

'त्र्यहाद्दोह्यं[3] परीक्षेत पञ्चाहाद्वाह्यमेव तु।
मणि-मुक्ता-प्रवालानां सप्ताहात् स्यात् परीक्षणम्।
द्विपदामर्धमासं[4] स्यात् पुंसां तद्विगुणं स्त्रियाः॥
दशाहात् सर्वबीजानामेकाहाल्लोह-वाससाम्।
अतोऽर्वाक्[5] पण्यदोषस्तु यदि संज्ञायते[6] क्वचित्।
विक्रेतुः प्रतिदेयं तत् क्रेता मूल्यमवाप्नुयात्'॥

इति। यथोक्तपरीक्षाकालातिक्रमे तु न प्रतिदेयमित्याह[7][8] कात्यायनः—

'अविज्ञातं तु यत् क्रीतं दुष्टं पश्चाद्विभावितम्[9]।
क्रीतं तत् स्वामिने देयं पण्यं[10] कालेऽन्यथा[11] न तु'॥

१. B. reads चर्मादिविषयः for सावधिविषयः; while C. येन अर्पणाभावश्चादिविषयः for पुनरर्पणाभावः सावधिविषयः २. B. and C. read तत् सद्यः for तत्र सद्यः; while A. originally reads तस्माद्यः and D. in margin reads अन्येषां सद्यः. ३. B. and C. read वाह्यं for दोह्यं. ४. अर्धमासे for अर्धमासं. ५. B. and C. read यतो for अतो. ६. B. C. read संजायते for संज्ञायते. ७. B. C. read प्रतिदानम् for प्रतिदेयम्. ८. C. reads °यं मिथ्येत्याह for °मित्याह. ९. C. reads यच्च for पश्चात्. १०. C. reads वर्णं for पण्यं. ११. B. originally reads क्रीत्वा for काले.

इति । [1]अविज्ञातं परीक्षया तत्वतोऽपरिज्ञातं यस्य द्रव्यस्य [2]तद्यावत्परीक्षाकालः उक्तः [3]तस्मिन् काले प्रतिदेयम् । अन्यथा तत्कालाऽतिक्रमे दुष्टतया परिज्ञातमपि क्रीतं तत्स्वामिने न देयमित्यर्थः । पण्यानां देश-कालवशादुपचयापचयौ प्रथमतो [4]ज्ञातव्यावित्याह नारदः—

‘ क्षयं वृद्धिं च जानीयात् पण्यानामागमं तथा ’ ।

( ना. स्मृ. ९. ९. )

इति । [5]अश्वादिपण्यानामस्मिन् काले अस्मिन् देशे च वृद्धिर्भविष्यतीति जानीयात् तथा आगमनं [6]कुलीनत्वादिज्ञानार्थमुत्पादक-जन्म[7]भूम्यादिकं च जानीयादित्यर्थः । एवं सम्यक्परीक्ष्य [8]गुण-दोषदर्शनादि[9]कालमन्तरेण नानुशयः[10] कार्य इत्याह याज्ञवल्क्यः—

‘ [11]क्षयं वृद्धिं च वणिजा पण्यानामविजानता ।
क्रीत्वा नाऽनुशयः कार्यः कुर्वन् षड्भागदण्डभाक्’ ॥

( या. स्मृ. २. २५८. )

---

१. B. reads आविज्ञातं परीक्षादौर्बल्यात्; while C. अविज्ञानं परीक्षा for अविज्ञातं परीक्षया. २. B. C. read यावान् for तत् यावत्. ३. C. read यस्मिन् for तस्मिन्. ४. C. reads ज्ञातत्वादित्याह for ज्ञातव्यावित्याह. ५. C. reads अवश्यादि° for अश्वादि.° ६. C. reads कुलीनत्वात् द्विजानामर्थं for कुलीनत्वादिज्ञानार्थम्. ७. B. reads °भूम्यादि for °भूम्यादिकं. ८. B. and C. read ज्ञानादोष° for गुणदोष°; while B. originally reads दासदोष for गुण-दोष°. ९. B. C. D. read °कारण° for °काल.° १०. C. reads ननु शयः for नानुशयः. ११. C. reads—

‘ ज्ञेयं वृद्धिं च वणिजां पण्यानामपि जानताम् ।
for क्षयं वृद्धिं च वणिजा पण्यानामविजानता ।.

इति । [1]परीक्षितपण्यानां क्रयकालोत्तरकालं । परिमाणतोऽर्घकृतां वृद्धिमपश्यता क्रेत्राऽनुशयो न कार्यः । विक्रेत्रा च महार्घनिबन्धनं पण्यक्षयमपश्यता नानुशयितव्यम् । क्षयवृद्धि-[2]कालपरिज्ञाने पुनः [3]क्रेतुर्विक्रेतुरनुशयो भवतीति व्यतिरेकादुक्तं भवति । पण्यदोष-तद्वृद्धि-क्षयकारणत्रितयाभावेऽनुशयकालाभ्यन्तरेऽपि यद्यनुशयं करोति तदा पण्यषड्भागं दण्डनीयः । अनुशयकारणसद्भावेऽप्यनुशयकालातिक्रमेण योऽनुशयं करोति सोऽप्येवं दण्डनीयः ।

एतच्चोपभोगाविनश्वरवस्तुविषयम् । उपभोगेन [4]विनश्वरवस्तुविषये [5]प्रत्यर्पणे ऽवधिमाह नारदः—

‘ क्रीत्वा मूल्येन यः पण्यं [6]दुष्क्रीतं मन्यते क्रयी ।
[7]विक्रेतुः प्रतिदेयं तत् [8]तस्मिन्नेवाह्न्यविक्षतम्’ ॥

( ना. स्मृ. ९. २. )

इति । द्वितीयादिदिवसप्रत्यर्पणे तु विशेषस्तेनैवोक्तः—

‘ द्वितीयेऽह्नि ददत् क्रेता मूल्यात् त्रिंशांशमावहेत् ।
द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव [9]च’ ॥

( ना. स्मृ. ९. ३. )

इति । परतोऽनुशयो न कर्तव्य इत्यर्थः । यत्तु पुनर्मनुनोक्तम्—

---

१. B. C. read परीक्षित-क्रीतपण्यानां for परीक्षितपण्यानां. २. B. वृद्धिक्षय° for क्षयवृद्धिकाल°; while क्रयकाल°. ३. B. C. read क्रेतृ विक्रेत्रोः for क्रेतुर्विक्रेतुः. ४. B. reads. अशेषु for °विनश्वर°. ५. B. reads प्रत्यर्पणावधिं and C. प्रत्यर्पणबुद्धिं for प्रत्यर्पणेऽवधि°. ६. B. C. read दुष्क्रीतां मन्यते क्रियाम् for दुष्क्रीतं मन्यते क्रयी. ७. A. reads विक्रेयं for विक्रेतुः. ८. B. C. read तस्मिन्नवाविवक्षितम् for तस्मिन्नेवाह्न्यविक्षतम्. ९. B. C. read तु for च.

'क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत् ।
सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत वा' ॥

इति तदुपभोगेनाविनश्वरगृह-क्षेत्र-यान-शयनादिविषयम् । तत्रैव दशाहादेरुक्तत्वात् । तथा च कात्यायनः—

'भूमेर्दशाहे विक्रेतुरायस्तत्क्रेतुरेव च ।
द्वादशाहः सपिण्डानामपि चाल्पमतः परम्' ॥

इति । अविनश्वरेषु स्थिरार्घेषु अनुशयकालातिक्रमेणानुशयं कुर्वतो मनुनोक्तो दंडो वेदितव्यः—

'परेण तु दशाहस्य न दद्यान्नापि दापयेत् ।
आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षट्' ॥

इति । बीजादिव्यतिरिक्तोपभोगः—
वासोविषयेऽपि नारदः—

'परिभुक्तं च यद्वासः क्लिष्टरूपं मलीमसम् ।
सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत् पुनः' ॥
(ना. स्मृ. ९. ७.)

इति । इति क्रीतानुशयः ।

---

१. A. reads यस्यैवा° for यस्येहा°. २. B. and C. read °यानशयनादि° for क्रयानुशयनादि.° ३. B. and C. read this portion
तत्रैव दशाहादेरुक्तत्वात् । तथा च कात्यायनः—
भूमेर्दशाहे विक्रेतुरायस्तत्क्रेतुरेव च । द्वादशाहः सपिंडानामपि चाल्पमतःपरम्' ।
after
वासोविषयेऽपि नारदः—
परिभुक्तं तु यद्वासः क्लिष्टरूपं मलीमसम् ।
सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत्पुनः' ॥.
४. B. reads
भूमेर्दशाहोनुशयः क्रेतुर्विक्रेतुरेवच ।
and C.
भूमेर्दशाहोनुशयः क्रेतुरेव च यद्भवेत् ।
for भूमेर्दशाहे विक्रेतुरायस्तत्क्रेतुरेव च ।.
५. B. and C. read द्वादशाहं for द्वादशाहः.

## अथ विक्रीयासम्प्रदानम् ।

तस्य स्वरूपं नारदेनोक्तम्—

'विक्रीय पण्यं मूल्येन क्रेत्रे यन्न प्रदीयते ।
विक्रीयासम्प्रदानं तद्विवादपदमुच्यते' ॥

(ना. स्मृ. ८. १.)

इति । पण्यद्वैविध्यमुक्तं तेनैव—

'लोकेऽस्मिन्द्विविधं द्रव्यं स्थावरं जङ्गमं तथा ।
क्रय-विक्रयधर्मेषु सर्वं तत्पण्यमुच्यते ॥
षड्विधस्तस्य तु बुधैः[1] दाना-ऽऽदानविधिः स्मृतः ।
गणिमं[2] तुलिमं मेयं[3] क्रियया रूपतः श्रिया' ॥

(ना. स्मृ. ८. २–३.)

इति । गणिमं[4] सङ्ख्येयं क्रमुकफलादि । तुलिमं तुलया-[5]धाप्यं हेमचन्दनादि । मेयं[6] व्रीह्यादि । क्रियया वाहन-दोहनादिक्रियोपलक्षितमश्व-महिष्यादि । रूपतः पण्याङ्गनादि । श्रिया पद्मरागादि । तदेतत्षट्प्रकारमपि पण्यं विक्रीयाऽप्रयच्छन्[7] सोदयं दाप्य इत्याह याज्ञवल्क्यः—

'गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति ।
सोदयं तस्य दाप्योऽसौ दिग्लाभं वा दिगागते' ॥

(या. स्मृ. २. २५४.)

---

१. B. reads विधः for बुधैः. २. C. reads अलिमं for गणिमं. ३. C. reads नेयं for मेयं. ४. C. reads अणिमं for गणिमं. ५. B. reads तुलाधार्यं and C. तुलया धार्यं for तुलयाधाप्यं. ६. B. reads मेयं प्रस्थादिना व्रीह्यादि and C. omits मेयं and for व्रीह्यादि reads वाह्यादि. ७. B. reads विक्रीयासंप्रयच्छन् and C. विक्रीयाद्यं प्रयच्छन्.

इति । गृहीतमूल्यं पण्यं विक्रेता यदि प्रार्थयमानाय स्वदेशवणिजे क्रेत्रे न समर्पयति तच्च पण्यं यदि क्रयकाले बहुमूल्यं सत् कालान्तरे स्वल्पमूल्येनैव लभ्यते तदा सोदयं वृद्ध्या सहितं विक्रेता क्रेत्रे दापनीयः । यदा मूल्यह्रासकृतः पण्यस्योदयो नास्ति किन्तु क्रयकाले यावदेव यतो मूल्यस्य यत्पण्यमिति प्रतिपन्नं तावदेव तदा तत्पण्यमादाय तस्मिन् देशे विक्रीणानस्य यो लाभस्तेनोदयेन सहितं द्विकं त्रिकमित्यादिनाप्रतिपादितवृद्धिरूपोदयेन सहितं दापनीयः । यथाह नारदः—

‘ अर्घश्चेदवहीयेत सोदयं पण्यमावहेत् ।
स्थायिनामेष नियमो दिग्लाभो दिग्विचारिणाम्’ ॥

(ना. स्मृ. ८. ९.)

इति । यदा त्वर्घमहत्वेन पण्यस्य न्यूनभावस्तदा तस्मिन्पण्ये वस्त्र-गृहादिके य उपभोगः तदाच्छादनसुखनिवासादिरूपो विक्रेतुः तत्सहितं पण्यमसौ दाप्यः । यथाह नारदः—

१. B. originally reads यच्च for तच्च. २. A. reads प्रति° and D. reads परि°. ३. B. reads तदा for यदा. ४. C. reads यावदेवास्य ततो for यावदेव यतो; while B. reads यावतो for यावदेव यतो. ५. C. reads °मावहेत् for °मादाय. ६. C. omits the following:—

तस्मिन्देशे विक्रीणानस्य यो लाभस्तेनोदयेन सहितं द्विकं
त्रिकं इत्यादिना प्रतिपादितवृद्धिरूपोदयेन सहितं
दापनीयः । तथाह नारदः—
अर्घश्चेदवहीयेत सोदयं पण्यमावहेत् ।

७. B. reads विक्रीतस्य for विक्रीणानस्य. ८. A. C. D. omit this—द्विकं त्रिकमित्यादिना प्रतिपादितवृद्धिरूपोदयेन सहितं. ९. B. reads अर्थश्चेत् for अर्घश्चेत्. १०. B. reads यदात्वर्थ सहत्वेन for यदा त्वर्घमहत्वेन. ११. B. C. read यदुपभोगः for य उपभोगः.

'विक्रीय पण्यं मूल्येन क्रेत्रे[1] यन्न प्रयच्छति ।
स्थावरस्योदयं[2] दाप्यो जङ्गमस्य क्रियाफलम्' ॥
(ना. स्मृ. ८. ४.)

इति । क्षयशब्देन गतभोग उक्तः । यद्यपि तस्य दानमशक्यं तथापि तदनुगुणद्रव्यं देयम् । जङ्गमानां तु तत्कर्मनिमित्तं मूल्यं दाप्यः । यदा त्वसौ क्रेता देशान्तरात्पण्यग्रहणार्थमागतस्तदा तत्पण्यमादाय देशान्तरे विक्रीतस्य यो लाभस्तेन सहितं पण्यं विक्रेता क्रेत्रे दापनीयः । विष्णुस्तु विक्रेतुर्[3]दण्डमप्याह—

'गृहीतमूल्यं यः पण्यं क्रेतुर्नैव दद्यात् तस्यासौ सोदयं दाप्यो राज्ञा चापि पणशतं दण्ड्यः' ।

इति । यस्तु विक्रीयाऽनुशयवशान्न समर्पयति यश्च क्रीत्वाऽनुशयवशान्न गृह्णाति तं[4] प्रत्याह कात्यायनः—

'क्रीत्वा प्राप्तं न गृह्णीयाद्यो न दद्याददूषितम् ।
स मूल्याद्दशभागं[5] तु दत्वा स्वं द्रव्यमाप्नुयात् ॥
अप्राप्तेऽर्थे कृच्छ्रकाले[6] क्रेते नैव प्रदापयेत् ।
एवं धर्मो दशाहात्तु परतोऽनुशयो[7] न तु' ॥

इति । अदूषितं जलादिनेति शेषः । दोह्य-वाह्यादिपण्यस्य[8] दोहनादिनेति शेषः । दोह्य-वाह्यादिपणस्य दोहनादि[9]कालो[10]-

---

१. B. C. and D. read यःक्रेतुर्न for क्रेत्रे यन्न. २. The text of Narada and C. read क्षयं for उदयं. ३. C. wrongly reads विप्रे तु for विक्रेतुः. ४. B. and C. read तौ for तं. ५. B. and C. read दशमं भागं for दशभागं तु. ६. B. reads क्रियाकाले and C. कृतं कालं for कृच्छ्रकाले. ७. C. reads ऽनुशयोचितम् for ऽनुशयो न तु. ८. B. and C. omit दोह्य-वाह्यादिपण्यस्य दोहनादिनेति शेषः. ९. B. C. read दोहन-वाहनादि° for दोहनादि°. १०. B. and C. read °काले for °कालो°.

लोऽर्थक्रियाकालः । तस्मिन् प्राप्ते[1] सति अग्रहणे अदाने वा कृती दशमभागं प्रदापयेत्[2] । किन्तु तमदत्त्वैव स्वं[3] द्रव्यमवाप्नुयात् । एष धर्मो दशाहात्प्राग्[4]वेदितव्यः । ततः परमनुशयो न कर्तव्यः । विक्रीयाऽसम्प्रयच्छतोऽपि विक्रीतं पण्यं विक्रेतृपार्श्वे[5] स्थितं तस्य यदि दैवादिना[6] नाशः स्यात्तदा विक्रेतुरेव हानिरित्याह याज्ञवल्क्यः—

‘ *दैवराजोपघातेन पण्ये दोषमुपागते[7] ।
हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः’ ॥

( या. स्मृ. २. २५६. )

इति याचितस्येति[8] विशेषणेन[9] अयाचने[10] न विक्रेतुर्हानिरित्यर्थो[11]दवगम्यते । नारदोऽपि—

‘ उपहन्येत वा पण्यं दह्येतापाह्रियेत वा ।
विक्रेतुरेव सोऽनर्थो विक्रीयो[12]ऽसम्प्रयच्छतः’ ॥

( ना. स्मृ. ८. ६. )

---

* यदा पुनः क्रेत्रा प्रार्थ्यमानमपि पण्यं विक्रेता न समर्पयति अजातनुशयोऽपि तच्च राज-दैविकेनोपहतं भवति तदाऽसौ हानिर्विक्रेतुरेव । अतोऽन्यददुष्टं पण्यं विनष्टसदृशं क्रेत्रे देयम् इत्याशयः ।

---

१. B. C. read अप्राप्ते for प्राप्ते. २. B. C. read न प्रदापयेत् for प्रदापयेत्. ३. C. reads तत् for स्वं. ४. C. reads प्रागेव for प्राक्. ५. B. reads विक्रेतुःपार्श्वे and C. विक्रेतृपात्रे for विक्रेतृपार्श्वे. ६. B. and C. read दैवात् for दैवादिना. ७. B. D. read पण्यदोष उपागते, C. पण्यशेष उपागते, for पण्ये दोषमुपागते. ८. C. reads याचितस्य for याचितस्येति. ९. B. reads विशेषणात् C. विशेषेण, for विशेषणेन. १०. B. reads आयाचिते and C. wrongly reads देयाने for अयाचने. ११. B. reads इत्याद्य॰ for इत्यर्थो॰. १२. C. reads विक्रीतायां for विक्रीयास॰.

इति। यथा याचितस्याप्रयच्छतो विक्रेतुर्हानिः तथा दीयमानपण्यमगृह्णतः क्रेतुरपीत्याह स एव—

'दीयमानं न गृह्णाति क्रीतं पण्यं च यः क्रयी।
स एवास्य भवेद्दोषो विक्रेतुर्योऽप्रयच्छतः'॥

(ना. स्मृ. ८. ९.)

याज्ञवल्क्योऽपि—

'विक्रीतमपि विक्रेयं पूर्वं क्रेतर्यगृह्णति।
हानिश्चेत् क्रेतृ[1]दोषेण क्रेतुरेव हि सा भवेत्'॥

(या. स्मृ. २. २५९.)

इति। यस्तु निर्दो[2]षं पण्यं दर्शयित्वा सदोषं विक्रीणीते यश्चान्यहस्ते विक्रीय तदन्य[3]स्मै तत् प्रयच्छति तयोः समानो दण्ड इत्याह [4]नारदः—

'निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति।
मूल्यं तद्द्विगुणं दाप्यो विनयं तावदेव च॥
[5]अन्यहस्ते च विक्रीय तथान्य[6]स्मै प्रयच्छति।
सोऽपि तद्द्विगुणं दाप्यो विनयं तावदेव तु'॥

(ना. स्मृ. ८. २१-२२.)

इति। यतद्बुद्धिपूर्वकविषयम्—

---

† यदा पुनर्जातानुशयः क्रेता पण्यं न जिवृक्षति तदा विक्रीतमपि पण्यं अन्यत्र विक्रेयम्। यदा पुनर्विक्रेत्रा दीयमानं क्रेता न गृह्णाति तच्च पण्यं राज-दैविकेनोपहतं तदा क्रेतुरेवासौ हानिर्भवेत्। पण्याग्रहण-रूपेण क्रेतृदोषेण नाशितत्वात् इति तात्पर्यम्।

---

१. C. reads कर्तृ° for क्रेतृ°. २. C reads विशेषं for निर्दोषं. ३. B. reads अन्यस्मै, and C. तदान्यस्मै for तदन्यस्मै. ४. B. C. and D. omit नारद. ५. B. and C. read तथान्यहस्ते for अन्यहस्ते च. ६. B. and C. read योन्यहस्ते for तथान्ये च: while D. reads तत् for च.

'ज्ञात्वा सदोषं पण्यं यो विक्रीणीतेऽविचक्षणः ।
तदेव द्विगुणं दाप्यस्तत्समं विनयं तथा' ॥

इति बृहस्पतिनोक्तत्वात् । अबुद्धिपूर्वके[1] तु क्रेतुः[2] अपरावर्तनमेव । अत एव एवंविधक्रयपरावर्तनं[3] स एवाह—

'मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेन वा ।
अस्वतंत्रेण मूढेन त्याज्यं तस्य पुनर्भवेत्' ॥

इति । अत एवंविधनियमो दत्तमूल्ये क्रये द्रष्टव्यः[4] । अदत्तमूल्ये पुनः पण्ये वाङ्मात्रक्रये[5] क्रेतृ-विक्रेत्रोः समयादृते प्रवृत्तौ वा न कश्चिद्दोषः । तथाच नारदः—

'दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तितः ।
अदत्तेऽन्यत्र समयान्न विक्रेतुरतिक्रमः[6]' ॥

( ना. स्मृ. ८. १०. )

इति । यत्र पुनर्वाङ्मात्रेण क्रयो मा भूदिति विक्रेतृहस्ते क्रेत्रा यत्किञ्चिद्द्रव्यं दत्तं तत्र क्रेतुर्दोषवशेन क्रयासिद्धौ आह व्यासः—

'सत्यंकारं च यो दत्वा यथाकालं न दृश्यते ।
पण्यमेव निसृष्टं तद्दीयमानमगृह्णतः' ॥

---

१, B. reads °पूर्वं for °पूर्वके. २. B. reads क्रयपरावर्तनमेव for क्रेतुरपरावर्तनमेव; while C. omits क्रेतुः. ३. A. C. D. omit—

क्रयपरावर्तनं स एवाह ।
मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेनवा ।
अस्वतंत्रेण मूढेन त्याज्यं तस्य पुनर्भवेत् ॥.

४. B. reads सर्वत्रायं विधिः for अत एव एवंविधनियमो and C. अत एवं विधः क्रम° for अत एवंविधानियमो. ५. D. omits वाङ्मात्रक्रये. ६. C. reads °रिति for °रति°.

इति । अत्र पण्यद्रव्यस्योत्सर्गः सत्यंकारद्रव्यस्योत्सर्गोऽभिमतः । अस्मिन्नेव विषये विक्रेतृदोषवशेन क्रयासिद्धौ आह याज्ञवल्क्यः—

'सत्यंकारकृतं द्रव्यं द्विगुणं प्रतिदापयेत्'* ॥

इति । क्रीत्वानुशयानुत्पत्त्यर्थं कतिपयपण्यानां विक्रयानर्हत्वमाह मनुः—

'नान्यदन्य संसृष्टरूपं विक्रयमर्हति ।
न चासारं न च न्यूनं न दूरे न तिरोहितम्'‡ ॥

( म. स्मृ. ८. २०३. )

इति । इति क्रयविक्रयानुशयाख्यं विवादपदम् ।

* नेदं वचनमुपलभ्यते याज्ञवल्क्यस्मृतौ । A. चिह्नितपुस्तके कात्यायनवचनत्वेनोद्धृतमिदम् । कात्यायनव्यवहारस्य अनुपलब्धत्वान्न निश्चेतुं शक्यमिदं कात्यायनीयं नवेति विदांकुर्वन्तु धर्मशास्त्रपारंगताः सुधियः ।

‡ अत्रेदमनुसन्धेयम्—अन्यत् अन्येन संसृष्टरूपं यथा कुङ्कुमादिद्रव्यं कुसुम्भादिना मिश्रीकृत्य न विक्रेतव्यम् । न च असारं सारमित्यभिधाय । न च तुलादिना न्यूनम् । न परोक्षावस्थितम् । न रागादिना स्थगितरूपम् । एतादृशविक्रये अस्वामिविक्रयसादृश्यात् अस्वामिविक्रयसदृशो दण्डः स्यात् ।

अथ स्वामिपालविवादपदविधिः।

तत्र तु तदभिधानप्रतिज्ञा मनुना कृता—

'पशुषु स्वामिनां[1] चैव पालानां च व्यतिक्रमे।
विवादं संप्रवक्ष्यामि यथावद्धर्मतत्त्वतः[2]'॥
(म. स्मृ. ८. २२९.)

इति। विवादं विवादापनोदमित्यर्थः। स्वामि-पालयोः कर्तव्यमाह नारदः—

'उपानयेद्गाः गोपालः प्रत्यहं रजनीक्षये[3]।
चीर्णा पीताश्च ता गावः सायाह्ने प्रत्युपानयेत्'॥
(ना. स्मृ. ६. ११.)

इति। गोग्रहणं पशुमात्रोपलक्षणार्थम्। अत एव याज्ञवल्क्यः—

'यथार्पितान्[4] पशून् गोपः सायं प्रत्यर्पयेत्तथा'।
(या. स्मृ. २. १६४.)

इति। यावन्तः प्रातः समार्पिताः तावन्तः सायं प्रत्यर्पणीया इत्यर्थः। गवादिपरिपालकस्य भृतिपरिमाणमाह नारदः—

---

१. C. reads स्वामिना for स्वामिनां. २. C. reads धर्मसंकटे for धर्मतत्त्वतः.
३. The text of Narada and A. reads—
उपानयति या गोपः प्रत्यहं रजनाक्षये.
४. A. C. and D. omit '.. ........
प्रत्यहं रजनीक्षये।
चीर्णा पीताश्च ता गावः सायाह्ने प्रत्युपानयेत्॥
इति गोग्रहणं पशुमात्रोपलक्षणार्थम् अत एव याज्ञवल्क्यः—
यथार्पितान्पशून् सायं.........................।.
५. C. omits पुनः.

'गवां शताद्वत्सतरी धेनुः स्यात् द्विशतात्[1] भृतिः ।
प्रतिसंवत्सरं गोपे सन्दोहो वाऽष्टमेऽहनि[2]' ॥

( ना. स्मृ. ६. १०. )

इति । प्रतिसंवत्सरं वत्सतरी द्विहायनी गौः भृतिः भृतके कल्पनीया । द्विशते तु[3] सवत्सा गौः । अष्टमे दिवसे दोहश्च[4] भृतित्वेन कल्पनीय इत्यर्थः । सन्दोहः सर्वदोहः ।

'तया धेनुभृतः क्षीरं लभेतैवाष्टमेऽखिलम्' ॥

इति बृहस्पतिस्मरणात् । इयं च भृतिकल्पना परिभाषितभृतिविशेषाभावविषये । परिभाषिते तु भृतिविशेषे[5] स एव देयः । मनुस्तु प्रकारान्तरेण भृतिमाह[6]—

'गोपः[7] क्षीरभृतो यस्तु सं[8] दुह्याद्दशतो वराम् ।
गोस्वाम्यनुमते[9] भृत्यः सा स्यात् पालेऽभृते भृतिः[10]' ॥

( म. स्मृ. ८. २३१. )

इति । दशतो दशदोग्ध्रीणां मध्ये वरामुत्कृष्टां गां स्वीकृत्य तत्क्षीरं क्षीरभृतो गृह्णीयात्[11] । क्षीरशून्यानां तु क्षीरमूल्यतो भृतिः कल्पनीया । यद्यसौ द्रव्यान्तरेण[12] भृतः न[13] तत्रैषा भृतिरित्यर्थः । यस्त्वेवं परिकल्पितं वेतनं गृहीत्वा पशून्

---

१. B. reads द्विशते for द्विशतात्. २. Text of Narada and C. read संदोहश्चाष्टमे for संदोहो वाष्टमे. ३. C. reads ऽनुवत्सा for तु सवत्सा. ४. B. reads दोहस्तत् for दोहश्च. ५. C. reads °विशेषः for विशेषे. ६. B. reads भृतियत्तां for भृतिं. ७. D. reads गवां for गोपः. ८. C. reads संदुह्याद्दशतो वरः for संदुह्याद्दशतो वराम्. ९. B. C. and D. read ऽनुमतो for अनुमते. १०. B. reads पालोवते भृतिः. C. reads तस्य भृते भृतिः, for पालेऽभृते भृतिः. ११. A. reads दुह्यात् for गृह्णीयात्: while B. and C. add भृत्यो arfer क्षीरभृतो. १२. B. and C. read द्रव्यान्तरेणाभृतः for द्रव्यान्तरेण भृतः. १३. B. and C. omit न.

पालयन् भृत्यः[1] स्वदोषेण पशून् मारयेद्विनाशयति वा तं प्रत्याह याज्ञवल्क्यः—

'प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः' ।
( या. स्मृ. २. १६४. )

इति । प्रमादग्रहणं[2] पालकदोषोपलक्षणार्थम् । प्रमादश्च मनुना स्पष्टीकृतः—

'नष्टं विनष्टं[3] कृमिभिः[4] श्वहतं विषमे मृतम् ।
हीनं पुरुषकारेण प्रदद्यात् पाल एव तु' ॥
( म. स्मृ. ८. २३२. )

इति । प्रसह्य चोरैरपहृतो[5] न दाप्यः । तथा च स एव—

'विघुष्य[6] तु हृतं चौरैर्न पालो दातुमर्हति ।
यदि देशे च काले च स्वामिनः स्वस्य शंसति' ॥
( म. स्मृ. ८. २३३. )

इति । व्यासोऽपि—

'पालग्रहे ग्रामघाते तथा राष्ट्रस्य विप्लवे[7] ।
यत्प्रणष्टं हृतं वा स्यान्न पालेष्वत्र किल्बिषम्[8]' ॥

इति । एतत्पुरुषकारकरणे वेदितव्यम् । पुरुषकाराकरणे[9] तु भवत्येव किल्बिषी । पुरुषकारस्य स्वरूपं नारदेन दर्शितम्—

१. B. reads भृत्यैः for भृत्यः. २. B. and C. read प्रमापणं for प्रमादग्रहणं. ३. B. C. read दृष्टं च for विनष्टं. ४. D. reads कृमिणा दंशितं for कृमिभिः श्वहतं. ५. B. and C. read ऽपहृता for ऽपहृतो. ६. B. and C. read विघृष्य; while D. विशिष्य for विघुष्य. ७. B. and C. read विभ्रमे for विप्लवे. ८. B. C. read पालस्तत्र किल्बिषी for पालेष्वत्र किल्बिषम्. ९. C. omits °कारा°.

'कृमि-चोर-व्याघ्रभयात् दरी-श्वभ्राच्च* पालयेत् ।
व्यायच्छेच्छक्तितः क्रोशेत्[1] स्वामिने तु निवेदयेत्' ॥
(ना. स्मृ. ६. १२.)

इति । व्यायच्छेत् निवारणार्थं[2] प्रयतेतेत्यर्थः । यः[3] प्रस्तुतार्थं न यतते तं प्रत्याह स एव—

'अव्यायच्छन्नविक्रोशन् स्वामिने चाऽनिवेदयन् ।
वोढुं[4]मर्हति गोपस्तां[5] विनयं[6] चैव राजनि' ॥
(ना. स्मृ. ६. १३.)

इति । विनयप्रमाणमाह याज्ञवल्क्यः—

'पालदोषविनाशे तु पाले दण्डो विधीयते ।
अर्धत्रयोदशपणः[7] स्वामिनो[8] द्रव्यमेव च' ॥
(या. स्मृ. २. १६५.)

इति । अर्धत्रयोदशपणः† सार्धद्वादशकार्षापणः । पालदोषमाह मनुः—

* श्वभ्रात् गर्तात् । निवारणासामर्थ्ये क्रोशेत् आक्रोशेत् सहायार्थमन्यानाह्वयेदित्यर्थः ।

† विज्ञानेश्वरस्तु—'अर्धाधिकत्रयोदशपणं' इति व्याख्यातवान् । तन्न । अर्धत्रयोदशपण इति अर्धरहितत्रयोदशपणः सार्धद्वादशपण इति यावत् ।

'तास्तृतीयपूर्वपदाः समानाधिकरणेन
समस्यन्त उत्तरपदलोपश्च' ।

इति वार्तिकादुत्तरपदलोपी कर्मधारयोऽत्र भवति ।

'सार्धद्विमात्रादिषु अर्धत्रिमात्रात्' ।

इति महाभाष्यकारप्रयोगदर्शनात् विज्ञानेश्वरव्याख्यानमुपेक्षणीयमिति भाति ।

१. B. and C. read क्रोशन् for क्रोशेत्. २. B. C. omit निवारणार्थं. ३. B. and C. read यस्तु तत्र for यः प्रस्तुतार्थं. ४. D. reads दातुं for वोढुं. ५. B. and D. read °स्तान्. ६. C. reads स्वामिने for विनयं. ७. D. reads °पणाः for °पणः; ८. B. C. and D. read स्वामिने for स्वामिनो.

'अजाविके[†] तु संरुद्धे वृकैः[१] पाले त्वनायति।
यां प्रसह्य वृको हन्यात्पाले तात्किल्बिषं भवेत्' ॥
( म. स्मृ. ८. २३५. )

इति। अनायति। उपद्रवनिराकरणाय अनागच्छतीत्यर्थः[२]। यां अजाविकजातीयाम्[३][४]। एतत्सुगमस्थलस्थविषयम्। दुर्गमस्थलविषये[५] तु न[६] दोष इत्याह स एव—

'तासां चेदवरुद्धानां चरन्तीनां मिथो वने।
यामुत्प्लुत्य[७] वृको हन्यान्न पालस्तत्र किल्बिषी' ॥
( म. स्मृ. ८. २३६. )

इति। अवरुद्धानां पालकेन एकत्र स्थापितानामित्यर्थः। दैवमृतानां पुनः कर्णादिकं दर्शनीयम्। तथा च मनुः—

'कर्णौ[‡] चर्म च वालांश्च वस्त्यस्थिस्नायुरोचनम्[८]।
पशुषु स्वामिनां[९] दद्यान्मृतेष्वङ्कानि[१०] दर्शयेत्' ॥
( म. स्मृ. ८. २३४. )

---

† अजाश्च अविकाश्च अजाविकम्। 'गवाश्वप्रभृतीनि च' इति द्वन्द्वैकवद्भावः।

‡ स्वयं मृतेषु पशुषु कर्ण-चर्म-लाङ्गूलप्रवालान् नाभेरधोभागस्नायुरोचनाः स्वामिनां दद्यात्। अन्यानि च चिह्नानि शृङ्गखुरादीनि दर्शयेत् इत्यर्थः।

---

१. B. C. read वृक्षैः for वृकैः. २. C. reads नागच्छति for अनागच्छति. ३. B. reads अजाविबक्रजातीयां and C. अजाविकविजातीयां for अजाविकजातीयाम्. ४. B. adds °व्यक्ति after °जातीयाम्. ५. B. reads दुर्मलस्थल°, C. दुर्भगस्थल°, for दुर्गमस्थल°. ६. A. omits न. ७. B. C. and D. read उपेत्य for उत्प्लुत्य. ८. B. reads वस्ति(अस्थि)स्नायुनिरोधनम्, C. does the same, and the text वस्तिं स्नायुं च रोचनाम् for वस्त्यस्थि-स्नायुरोचनम्. ९. A. and C. read पशुस्वामिषु for पशुषु स्वामिनां. १०. C. reads अंकाभि°; while B. originally अंकाति° and in margin शंकाभि° for अंगाभि° and B. °दर्शनम् for दर्शयेत्.

इति । स्मृत्यन्तरमपि —

‘कर्णौ चर्म च वालांश्च शृङ्ग-स्नायु[1]स्थि-रोचनम् ।
पशुस्वामिषु दद्यात्तु मृतेष्वङ्गानि[2] दर्शयेत्’ ॥

इति । गोप्रचारभूमिमाह याज्ञवल्क्यः—

‘ग्रामेच्छया गोप्रचारो[3] भूमी राजेच्छया[4]ऽपि वा’ ॥

(या. स्मृ. २. ११६.)

इति । ग्रामेच्छया ग्रामाल्पत्व-महत्त्वापेक्षया राजेच्छया वा गवां तृणादिभक्षणार्थं कियानपि भूभागोऽकृष्टः[5] कल्पनीयः । गवां प्रचारस्थानासन्नसौकर्यार्थं[6] ग्रामक्षेत्रयोरन्तरमाह स एव—

‘धनुःशतं परीणाहो ग्रामे क्षेत्रान्तरं[7] भवेत् ।
द्वे शते खर्वटस्य[8] स्यान्नगरस्य चतुःशतम्’ ॥

(या. स्मृ. २. १६७.)

इति । ग्राम-क्षेत्रयोरन्तरं धनुःशतपरिमितम् । सर्वदैवं[9]विधिना शस्यं कार्यम् । खर्वटस्य प्रचुरकण्टकसन्तानस्य ग्रामस्य द्वे शते अन्तरे[10] शस्यम् । नगरस्य च बहुजनसङ्कीर्णस्य[11] चतुःशतपरिमिते[12] अन्तरे शस्यं कार्यमिति ।

---

१. B. C. read शृंगस्नायुनिरोचनम् for शृंगस्नाय्वस्थिरोचनम्. २. C. reads मृते शंकानिराश्रयामिति and B. मृते शंकानिरा (म) श्रयमिति for मृतेष्वङ्गानि दर्शयेत्. ३. D. reads °प्रचारि for °प्रचारो. ४. The text reads राजवशेन वा for राजेच्छयापि च; A. reads यदृच्छया for राजेच्छया. ५. B. C. and the text read ऽकृतः for ऽकृष्टः. ६. C. reads °सनयोः कार्यार्थं for °सनसौकर्यार्थं. ७. C. reads ग्रामक्षेत्रान्तरा; while B. and D. ग्रामक्षेत्रान्तरं for ग्रामे क्षेत्रान्तरं. ८. D. reads खर्वटे शस्यं for खर्वटस्य स्यात्. ९. B. C. read सर्वतोदिक्षु अनुप्तशस्यं for सर्वदैवंविधिना शस्यं. १०. B. and C read अनुप्तशस्यं कार्यं for अन्तरे शस्यं. ११. B. and C. add धनुषां after संकीर्णस्य. १२, B. and C. °परिमितमनुप्तशस्यं for °परिमिते अन्तरे शस्यं.

तत्र पशुनिवारणाय वृतिरपि कल्पनीयेत्याह कात्यायनः—

'आजातेष्वेव शस्येषु कुर्यादावरणं सदा[1] ।
दुःखेन विनिवार्यन्ते लब्धस्वादुरसा मृगाः' ॥

इति नारदोऽपि—

'पथि क्षेत्रे वृतिः कार्या यामुष्ट्रो नावलोकयेत् ।
न[2] लङ्घयेत्पशुर्वाश्वो[3] न भिन्द्यात् यां[4] च सूकरः' ॥

( ना. स्मृ. ११. ४१. )

इति । एवं च पशुनिवारणे[5] कृतेऽपि तामतिक्रम्य[6] शस्यादि विनाशे सति मनुराह—

'पथि[7] क्षेत्रे परिवृते ग्रामान्तीयेऽथवा पुनः ।
सपालः शतदण्डार्हो विपालान्[8] वारयेत् पशून्' ॥

( म. स्मृ. ८. २४०. )

इति । पथि क्षेत्रे परिवृते सति तां वृतिमतिक्रम्य शस्यघाते[9] सपालः पशुकार्ये[10] पणशतदण्डार्हः । एवं ग्रामान्तीये ग्रामसमीपवर्तिनि क्षेत्रे परिवृते सति तां वृतिमतिक्रम्य शस्यघाते स पालः

---

१. C. reads महत् for सदा. २. B. C. read अलंघ्या या च पशुना for न लंघयेत्पशुर्वाश्वो. ३. D. reads नाश्वो for वाश्वो. ४. B. reads भिद्याद्या च and C. नियच्छेच्च for भिन्द्याद्यां च. ५. C. reads °निवारणोपाये for °निवारणे. ६. B. and C. read तं for ताम् ७. C. omits the verse,

'पथि क्षेत्रे परिवृते ग्रामान्तीयऽथवा पुनः ।
सपालः शतदण्डार्हो विपालान् वारयेत्पशून्' ॥

८. B. reads विपालं for विपालान् ९. B. and C. read °घाती for °घाते. १०. B. and C. read पशुः कार्षापण° for पशुकार्ये.

शतपणदण्डार्हः । तत्पशुपालकः शतदण्डेन दण्डनीय इत्यर्थः । विपालं पालकरहितं पशुं क्षेत्रिको लगुडादिना निवारयेत् । नारदोपि—

'उत्क्रम्य तु वृतिं यत्र सस्यघातो गवादिभिः ।
पालः शास्यो भवेत्तत्र न चेच्छक्त्या निवारयेत्' ॥

(ना. स्मृ. ६. ४२.)

इति । अनावृतक्षेत्रघातविषये स एवाह—

'ग्रामोपान्ते च यत् क्षेत्रं विवीतान्ते महापथे ।
अनावृतं चेत्तन्नाशे न पालस्य व्यतिक्रमः' ॥

(ना. स्मृ. ६. ४३.)

इति । विवीतशब्देन तृणकाष्ठसमृद्धः परपरिगृहीतः प्रदेश उच्यते । व्यतिक्रमनिषेधेनार्थाद्दण्डाभावः सूचितः । तदनेन अपरिवृते पालस्य दण्डाभावः सूचितः । मनुस्तु साक्षाद्दण्डं निषेधति—

---

१. B. omits—

तत्पशुपालकः शतदण्डेन दण्डनीय इत्यर्थः ।
विपालं पालकरहितं पशुं क्षेत्रिको लगुडादिना निवारयेत् ॥ नारदोपि—
दुकूरयति कृतं यस्यात्सस्यघातो गवादिभिः ॥
पालः शास्यो भवेत्तत्र न चेच्छक्त्या निवारयेत् ॥
अनावृतक्षेत्रघातविषये स एवाह—
ग्रामोपान्ते च यत्क्षेत्रं विवीतांते महापथे ॥
अनावृतं चेत्तन्नाशे न पालस्य व्यतिक्रमः ।

इति । विवीतशब्देन तृणकाष्ठसमृद्धः परपरिगृहीतः प्रदेश उच्यते । व्यतिक्रमनिषेधेनार्थाद्दण्डाभावः सूचितः । तदनेन अपरिवृते पालस्य दण्डाभावः सूचितः. C. also omits this.

'तत्रापरिवृतं धान्यं विहिंस्युः[1] पशवो यदि ।
न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम्[2]' ॥

(म. स्मृ. ८. २३८.)

इति । एतददीर्घकालप्रचारविषयम् । दीर्घकालप्रचारेतु दण्डमर्हति । अत एवाल्पकालप्रचारे दोषाभावमाह विष्णुः—

'पथि ग्रामप्रान्ते[3] च न दोषोऽल्पकालम्' ।

(वि. स्मृ. ३. १६.)

इति । दण्डपरिमाणं तु पशुविशेषेण दर्शितं याज्ञवल्क्येन—

'माषानष्टौ तु महिषी शस्यघातस्य कारिणी ।
दण्डनीया तदर्धं तु गौस्तदर्धमजाविकम् ॥
भक्षयित्वोपविष्टानां यथोक्तात्[4] द्विगुणो दमः ।
सम[5]मेषां विवीते[6]ऽपि खरोष्ट्रं महिषीसमम्' ॥

(या. स्मृ. २. १५९–१६०.)

इति । परशस्यघातकारि[7]महिषीस्वामी प्रति[8]महिष्यष्टौ माषान् दण्डनीयः । चतुरो माषान् गोस्वामी । मेष[9]स्वामी द्वौ द्वौ माषौ । एषामेव पशूनां शस्यभक्षणादारभ्य यावच्छयनमनिवारितानां स्वामी यथोक्तदण्डात् द्विगुणं दण्डनीयः ।

---

१. D. reads प्रहिंस्युः for विहिंस्युः. २. C. and D. read °रक्षिणं for °रक्षिणाम्. ३. B. reads विंपीतांते, and C. पतिते for °प्रांते; while the original text and B. read पतिग्रामसीमांते न दोषोऽनावृते चाल्पकानामिति for पथि ग्रामप्रान्ते च न दोषोऽल्पकालम्. ४. D. reads यथोक्त° for यथोक्तात्. ५. C. reads साम° for सम°. ६. C. reads विवीतोऽपि for विवीतेऽपि. ७. B. and C. read °कारिण्या महिष्या for °कारिमहिषी.° ८. C. omits प्राति, and reads महिष्या for °माहिषि. ९. B. adds छाग before मेष.

विवीतस्थ‡तृणाद्युपघाते पशुस्वामी शस्यक्षेत्रोपघातवद्दण्डनीयः। खरोष्ट्रस्वामी† महिषीस्वामिवद्दण्डनीयः । एतदज्ञानविषयम् ।

'पणस्य पादौ द्वौ गां तु द्विगुणं महिषीं तथा ।
तथाऽजाविक-वत्सानां पादो दण्डः प्रकीर्तितः' ॥

इति स्मृत्यन्तरोक्तं वेदितव्यम् । माषाश्चात्र ताम्रिकपणस्य विंशतितमो भागः ।

'माषो विंशतिमो[2] भागः पणस्य परिकीर्तितः' ।
(ना. स्मृ. ३. ७.)

इति नारदस्मरणात् । भक्षयित्वोपविष्टसवत्सविषये यथोक्ताच्चतुर्गुणो दण्डः । तदुक्तं स्मृत्यन्तरे—

'वत्सानां[3] द्विगुणः प्रोक्तः सवत्सानां चतुर्गुणः' ।

इति । यत्पुनर्नारदेनोक्तम्—

'माषं गां दापयेद्दण्डं द्वौ माषौ महिषं तथा ।
तथा[4]ऽजाविक-वत्सानां दण्डः स्यादर्धमाषिकः' ।
(ना. स्मृ. ११. ३१.)

---

‡ विशेषेण वीतः प्रचुरतृण-काष्ठो रक्ष्यमाणः परिगृहीतो भूप्रदेश विवीत इत्युच्यते । तत्रस्थितस्य तृणादिकस्योपघाते इति व्याख्येयम् ।

† खरोष्ट्रं खराश्च उष्ट्राश्च खरोष्ट्रम् । सस्योपरोधकत्वेन खरोष्ट्रयोः प्रत्येकं महिषीतुल्यत्वात् दण्डस्य चापराधानुसारित्वात् खरोष्ट्रमिति समाहारो न विवक्षितः । तयोः स्वामी ।

---

१, A. C. and D. omit—

विवीतस्थतृणाद्युपघाते पशुस्वामी शस्यक्षेत्रोपघातवद्दण्डनीयः । खरोष्ट्रस्वामी महिषीस्वामीवद्दण्डनीयः । एतदज्ञानविषयम् ।

पणस्य पादौ द्वौ गां तु द्विगुणं महिषीं तथा ।.

२. C. reads विंशतिको for विंशतिमो. ३. B. and C. read वसतां for वत्सानां. ४. The text of नारद reads अजाविके सवत्से तु for तथाऽजाविक-वत्सानां.

इति तन्मुहूर्तमात्रभक्षणविषयम्* । अतएवाहतुः शङ्ख-लिखितौ—

‘रात्रौ चरन्ती गौः पञ्च माषान् ।
दिवा[1] त्रीन् । मुहूर्ते माषम् । दण्डं ग्रासे’ ॥

इति । आतुरपशुविषये तु न दण्ड इत्याह नारदः—

‘राज[2]ग्रहगृहीतो वा वज्राशनिहतोऽपि वा ।
अपि सर्पेण वा दष्टो वृक्षाद्वा[3] पतितो भवेत् ॥
व्याघ्रादिभिर्हतो वाऽपि व्याधिभिर्वाप्युपद्रुतः ।
न तत्र दोषः पालस्य न च दोषोऽस्ति गोमिनाम्’ ॥

( ना. स्मृ. ११. ३६–३७. )

इति । अनातुरेष्वपि केषुचित्पशुषु दण्डा[4]भावमाह स एव—

‘गौः प्रसूता दशाहं च[5] महोक्षो[6] वाजि[7]-कुञ्जरौ[8] ।
निवार्याः स्युः प्रयत्नेन तेषां स्वामी न दण्डभाक्’ ॥

( ना. स्मृ. ११. ३०. )

---

*विज्ञानेश्वरस्तु—पुनःप्ररोहयोग्यमूलावशेषभक्षणविषयमेतन्नारद-वाक्यमिति मन्यते ।

---

१. D. reads त्रिमुहूर्ते for दिवा त्रीन् मुहूर्ते. २. B. C. and D. read जरा° for राज°. ३. B. reads वृक्षादापतितो for वृक्षाद्वा पतितो. ४. B. reads दण्डमाह for दण्डाभावमाह. ५. B. C. and D. read तु for च. ६. C. reads महोर्जेष्वपि कुञ्जरः for महोक्षो वाजि-कुञ्जरौ. ७. B. and D. read वाऽपि° for वाजि°. ८. B. and C. read °कुञ्जरः; while D. °कुञ्जराः.

इति। मनुरपि—

'अनिर्दशाहां गां सूतां वृषान् देवपशूंस्तथा।
सपालान् वा विपालान् वा न दण्ड्यान्मनुरब्रवीत्'।

(म. स्मृ. ८. २४२.)

इति। वृषा महोक्षाः। अथवा वृषोत्सर्गविधानेनोत्सृष्टाः। याज्ञवल्क्योऽपि—

'महोक्षोत्सृष्टपशवः सूतिकाऽऽगन्तुकादयः।
पालो येषां न ते मोच्या दैवराजपरिप्लुताः' *॥

(या. स्मृ. २. १६६.)

इति। आगन्तुकः स्वयूथात् परिभ्रष्टः। आदिशब्देन मृतवत्सादयो गृह्यन्ते। अत एवोशनाः—

* महांश्चासौ उक्षा च महोक्षः वृषः सेक्ता। उत्सृष्टपशवः वृषोत्सर्गादिविधानेन देवतोद्देशेन वा त्यक्ताः। सूतिका प्रसूता अनिर्दशाहा। आगन्तुकः स्वयूथात् परिभ्रष्टो देशान्तरादागतः। अत्र आदिशब्दग्रहणात् हस्त्यश्वादयो गृह्यन्ते। ते च उशनसा दर्शिताः—

'अदण्ड्या हस्तिनो ह्यश्वाः प्रजापाला हि ते स्मृताः।
'अदण्ड्यौ काण-कुब्जौ च ये शश्वत् कृतलक्षणाः'॥

१. C. wrongly reads अपालत्वात् विपालत्वात्र दद्यान्मनुरब्रवीत् for सपालान्वा विपालान्वा न दण्ड्यान्मनु रब्रवीत्. २. B. and C. read वृषोत्सर्जनविधानेनोत्सृष्टाः and D. वृषोत्सर्जनविधाने तु सृष्टाः. ३. C. reads °मनुकादयः for °गंतुकादयः. ४. B. originally, C. and D. read च for न. ५. C. reads °परिभ्रष्टः for °परिप्लुतः. ६. B. and D. omit आगन्तुकः स्वयूथात् परिभ्रष्टः; while C. reads °शक्रात् for °यूथात्.

'अदण्ड्या मृतवत्सा च खंजा[1] रोगवती कृशा ।
अदण्ड्याऽऽगन्तुकी[2] गौश्च सूतिका चाभिसारिणी[3] ॥
अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च' ।

इति । परशस्यविनाशे न केवलं स्वामी दण्डनीयः अपि तु शस्यमपि[4] दापनीयः । तथा च बृहस्पतिः—

'शस्यान्[5]निवारयेद्यास्तु चीर्णे[6] दोषद्वयं[7] भवेत् ।
स्वामी शतदमं[8]* दाप्यः पालस्ताडनमर्हति ॥
शदश्च[9] सदमं चीर्णे समूले कार्षभक्षिते' ॥

इति । अतएव नारदः—

'समूलशस्यनाशे तु तत्स्वामी प्राप्नुयाच्छतम्[10] ।
वधेन गोपो मुच्येत दण्डं स्वामिनि पातयेत्' ॥

( ना. स्मृ. ११. ३१. )

इति । तत्स्वामी शस्यस्वामी शदश्च सामन्तादिभिः[11] परिकल्पितो[12] देयः । तथा च स एव—

---

१. C. and D. read संज्ञा for खंजा. २. C. reads गन्तुका for गन्तुकी. ३. B. and C. read चाति° for चाभि°. ४. B. reads दशदम् while C. शदम् for शस्यम्. ५. C. wrongly reads सभ्यां for शस्यात्. ६. C. reads चीर्णौ for चीर्णे. ७. B. C. read दोषो द्वयोर् for दोषद्वयम्. ८. B. and C. read शददमं for शतदमं, ९. B. reads शदश्च दमश्च शददमं । चीर्णे समूलघाते भक्षिते सतीत्यर्थः and C. शदश्च सददमं चीर्णे समूलकर्षे भक्षिते सतीत्यर्थः for शदश्च सदमं चीर्णे समूले कार्षभक्षिते. १०. B. reads शदम् for शतम्. ११. B. reads समन्तादिभिः for सामन्तादिभिः. १२. B. reads कल्पितो for परिकल्पितः.

'गोभिस्तु भक्षितं शस्य यो नरः प्रतियाचते ।
सामन्तानुमते देयं [1]धान्यं यत्तत्र भक्षितम्' ॥

( ना. स्मृ ११. ३८. )

इति । यस्तूशनसा शदयाचननिषेधोऽर्थात्कृतः—

'गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते ।
पितरस्तस्य नाश्नन्ति नाश्नन्ति त्रिदिवौकसः' ॥

इति स ग्रामादिसमीपस्थानावृतक्षेत्रविषयः ।

इति स्वामिपालाख्यं विवादपदम् ।

अथ सीमाविवादनिर्णयः ।

तत्र तावत् सीमा चतुर्विधा । जनपदसीमा ग्रामसीमा गृहसीमा क्षेत्रसीमा च इति । सा च यथाक्रमं पञ्चलक्षणा । तदुक्तं नारदेन—

'ध्वजिनी मत्स्यनी चैव नै[2]धानी भयवर्जिता ।
राजशासननीता च सीमा पञ्चविधा स्मृता' ॥

( ना. स्मृ. १२. ३.)

इति । ध्वजिनी वृक्षादिलक्षिता । मत्स्यनी जललिङ्गान्विता । नैधा[3]नी निखात[4]तुषाङ्गारादिमती भय[5]वर्जिता अर्थिप्र-

१. B. and C. read धान्यं यत्तत्र वापितम् and D. धान्यं यत्तत्र कल्पितम् for धान्यं यत्तत्र भक्षितम्. २. C. reads नैधिनी for नैधानी. ३. C. reads नैधिनी for नैधानी. ४. A. reads तुषारांगारा° for तुषांगारा°. ५. B. reads भयरहिता for भयवर्जिता.

त्यर्थिपरस्परविषया[1]पत्तिनिर्मिता । राजशासननीता ज्ञातृचिह्नाद्यभावे राजेच्छया निर्मिता[2]* । तथा च व्यासः—

'ग्रामयोरुभयोः सीम्नि वृक्षा यत्र समुन्नताः[3] ।
समुच्छ्रिता ध्वजाकारा ध्वजिनी सा प्रकीर्तिता ॥
स्वच्छन्दगा बहुजला मत्स्य-कूर्म-समन्विता ।
प्रत्यक्[4]प्रवाहिनी यत्र सा सीमा मत्स्यिनी मता ॥
तुषाङ्गारकपालैस्तु कुम्भै[5]रायतनैस्तथा ।
सीमाऽत्र[6] चिह्निता कार्या नैधानी सा निगद्यते' ॥

इति । वृक्षाश्च न्यग्रोधादयः । तदाह मनुः—

---

* एवंभूतायां सीमायां षोढा विवादः संभवति । यथाह कात्यायनः

'आधिक्यं न्यूनता चांशे अस्तिनास्तित्वमेव च ।
अभोगभुक्तिः सीमा च षड् भूवादस्य हेतवः' ॥

तथाहि—'ममात्र पञ्चनिवर्तनाया भूमेरधिका भूरस्ति'—इति केनचिदुक्ते पञ्चनिवर्तनैव नाधिका—इति आधिक्ये विवादः । चतुरस्रद्विशतपरिमितभूभागस्य निवर्तनमिति संज्ञा । पञ्चनिवर्तना मदीया भूमिरित्युक्तेन ततो न्यूनैवेति न्यूनतायां विवादः । पञ्चनिवर्तनो ममांश इत्युक्ते अंश एव नास्ति इति अस्तिनास्तित्वविवादः संभवति । मदीया भूः प्रागविद्यमानभोगैव भुज्यते इत्युक्तेन संतता चिरंतन्येव मे भुक्तिः इति अभोगभुक्तौ विवादः । इयं मर्यादा इयं वा ? इति सीमाविवादः । इति षट्प्रकार एव विवादः संभवति ।

---

१. B. reads संप्रतिप्रत्यन्विता; while C. संवितिपत्तिनिर्मिता for विषयापत्तिनिर्मिता. २. B. reads निर्णीता for निर्मिता. ३. B. and C. read समन्ततः for समुन्नताः. ४. B. C. read नित्यं for प्रत्यक्; while B. and C. read प्रवाहिणी for प्रवाहिनी. ५. D. reads कुब्जैः for कुम्भैः. ६. B. and C. read प्रचिह्निता for अत्र चिह्निता.

‘सीमावृक्षांस्तु कुर्वीत न्यग्रोधा-ऽश्वत्थ-किंशुकान् ।
शाल्मली-साल-तालांश्च क्षीरिणश्चैव पादपान्’ ॥

(म. स्मृ. ८. २४६.)

इति । प्रत्यक्[2]प्रवाहिनीत्यनेन वाप्यादीनि प्रकाशचिह्नान्युपलक्ष्यन्ते । तानि च बृहस्पतिना दर्शितानि—

‘वापी-कूप-तडागानि[3] चैत्या-ऽऽराम-सुरालयाः ।
स्थल[4]निम्न-नदीस्रोतः[5]-शर-गुल्म-नगादयः ॥
प्रकाशचिह्नान्येतानि सीमायां कारयेत् सदा’ ।

इति । तुषाङ्गार-कपालैरिति करीषादीनां[6] गुप्तलिङ्गानामप्युपलक्षणम् । तानि च तेनैव दर्शितानि—

‘करीषा-ऽस्थितुषाङ्गार[7]शर्करा-ऽश्म-कपालिकाः ।
सिकतेऽष्टक-गोबाल-कार्पासा-ऽस्थीनि भस्म च ॥
प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेत्’ ।

इति । तानि च सीमालिङ्गानि स्थविरैर्बालानां दर्शनीयानि । तथा च बृहस्पतिः—

---

१. D. reads शालवृक्षांश्च for सालतालांश्च. २. B. C. read नित्य° for प्रत्यक्°. ३. B. C. read तटाकानि for तडागानि. ४. B. C. read स्थल निम्न for स्थल-निम्न°. ५. B. in margin reads °लता°. ६. C. reads करीषादीनांगुल° for करीषादीनां गुप्त°. १०. C. omits—

करीषास्थितुषांगारशर्कराश्मकपालिकाः ।
सिकतेष्टकगोबालकार्पासास्थीनि भस्म च ॥
प्रक्षिप्य कुंभेष्वेतानि सीमान्तेषु निधापयेत् ।

इति । B. originally reads °शर्वभस्म° and in margin शावभस्म for शर्कराश्मक°.

'ततः पौगण्ड-बालानां प्रयत्नेन प्रदर्शयेत्।
वार्धके च शिशूनां ते दर्शयेयुस्तथैव च॥
एवं परंपराज्ञाते सीमाभ्रान्तिर्न जायते'।

इति। एवं निरूपितैर्लिङ्गैः सीमा-विवादनिर्णयं कुर्यादित्याह मनुः—

'एतैर्लिङ्गैर्नयेत् सीमां राजा विवदमानयोः।
पूर्वभुक्त्या च सततमुदकस्यागमेन च॥
यदि संशय एव स्याल्लिङ्गानामपि दर्शने।
साक्षिप्रत्यय एव स्यात् सीमावादविनिर्णयः॥
साक्ष्यभावे तु चत्वारो ग्रामाः सामन्तवासिनः†।
सीमाविनिर्णयं कुर्युः प्रयता राजसंनिधौ'॥

( म. स्मृ. ८. २५२-३, २५८. )

इति। प्रथमं तावदर्थि-प्रत्यर्थिप्रदर्शितैः लिङ्गैः सीमाविवादनिर्णयः। अथात्राप्यविश्वासस्तदा लिङ्गविषयकात् सीमाविषयकाद्वा साक्षिप्रत्ययान्निर्णयः। यदा साक्षिनामभावस्तदा सामन्तैर्विनिर्णय इत्यर्थः।

---

† चतुर्दिशं समन्तभवाः सामन्ताः तद्वासिनश्चत्वारो ग्रामवासिनः।

---

१. B. and C. read °ज्ञाने for °ज्ञाते. २. B. and D. omit पूर्वभुक्त्या च सततमुदकस्यागमेन च॥. ३. B. reads सीमान्त° for सामन्त°. ४. C. अर्थिप्रदर्शितैः for अर्थिप्रत्यर्थिप्रदर्शितैः; while D. omits °प्रदर्शितैः. ५. B. reads अथार्थिन्यपि and C. अर्थार्थिनि for अथात्रापि.

'तेषामभावे सामन्ताः'—

इति कात्यायनेनोक्तत्वात् । के पुनः सामन्ता‡ इत्यपेक्षिते स एवाह—

'संसक्तकास्तु[1] सामन्तास्तत्संसक्तास्तथोत्तराः ।
संसक्तसक्तसंसक्ताः पद्माकाराः प्रकीर्तिताः' ॥

इति । विप्रतिपन्नसीमकस्य क्षेत्रस्य चतसृषु[2] दिक्षु सन्निहितग्रामादिभोक्तारः संसक्ताः[3] । एत एव सामन्तशब्दाभिधेयाः । यदा पुनरदुष्टसंसक्तका न सन्ति तदा संसक्तसंसक्ततत्संसक्तैः[4] निर्णयः कार्यः । तदाह स एव—

'स्वार्थसिद्धौ च दुष्टेषु[5] सामान्तेष्वर्थगौरवात् ।
तत्संसक्तैस्तु कर्तव्य उद्धारो नात्र संशयः ॥
संसक्तसक्तदोषे तु तत्संसक्ताः प्रकीर्तिताः ।
कर्तव्यास्त्वविदुष्टास्तु[6] राज्ञा धर्मं विजानता ॥

‡ समन्ताद्भवाः सामन्ताः । चतसृषु दिक्षु अनन्तरग्रामादयः । ते च प्रतिसीमं व्यवस्थिताः ।

यथाह कात्यायनः—

'ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्तितम् ।
गृहं गृहस्य निर्दिष्टं समन्तात् परिरभ्य हि' ॥

इति । ग्रमादिशब्देन तत्स्थाः पुरुषा लक्ष्यन्ते ।

१. C. omits संसक्तकास्तु सामन्तास्तत्°. २. B. reads चतुर्षु for चतुसृषु. ३. C. reads संसक्तकाः for संसक्ताः. ४. B. reads संसक्तसंसक्तैः for संसक्तसंसक्ततत्संसक्तैः; while D. संसक्तमसंसक्तैः. ५. B. reads प्रदुष्टेषु for च दुष्टेषु. ६. B. reads कर्तव्यातुप्रदुष्टास्तु. C. reads कर्तव्यास्तु प्रदुष्टास्तु for कर्तव्यास्त्वविदुष्टास्तु.

तेषामभावे सामन्ता मौल-वृद्धोद्धृतादयः ।
स्थावरे षट्प्रकारे-पि कार्या नाऽत्र विचारणा ' ॥

इति । वृद्धादिलक्षणं तत्रैवोक्तम्—

' निबध्यमानं यैर्दृष्टं तत्कार्यं सुगुणान्वितैः ।
वृद्धा वा यदि वाऽवृद्धास्ते च वृद्धाः प्रकीर्तिताः ॥
ये तत्र पूर्वं सामन्ताः पश्चाद्देशान्तरं गताः ।
तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्तिताः ॥
उपश्रवण-संभोग-भयस्थानोपचिह्निताः ।
उद्धरन्ति पुनर्यस्मादुद्धृतास्ते ततः स्मृताः' ॥

इति । साक्षिप्रभृत्युद्धृतपर्यन्तानामभावे मनुराह—

' सामन्तानामभावे तु मौलानां सीमसाक्षिणाम्* ।
इमानप्यनुयुञ्जीत पुरुषान् वनगोचरान् ॥

---

* साक्षिधर्मेण राजसमक्षमनुभवेन निर्णयमकुर्वतां ग्रामवासिनां ग्रामनिर्माणकालादारभ्य मौलानां पुरुषक्रमेण तद्ग्रामस्थानां सिमासाक्षिणामभावे इमान् वक्ष्यमाणान् व्याधशाकुनिकादीन् संनिहितवनचारिणः पुरुषानपि अनुयुञ्जीत पृच्छेदित्यर्थः। मृगवधेनाजीवन्तो व्याधाः, शकुनिनां पक्षिणां वधेन जीवन्तः शाकुनिकाः, कैवर्तान् धीवरान्, वृक्षगुल्मादीनां मूलखननेनाजीवन्तो मूलखानकाः, व्यालग्राहान् अहितुण्डिकान्, क्षेत्रापणमार्गादिषु पतितधान्यकणग्रहणमुञ्छम् । तेन वृत्तिर्येषां ते उञ्छवृत्तयो वानप्रस्थाः ।

---

१, B. reads नृगुण° for सुगुण°; while C. त्रिगुण° for सुगुण°. २. B. originally reads °कार्याख्यानोप° and in margin °यथास्थानो प° also C. °यथास्थानोप° for °भयस्थानोप°. ३. C. and the text of Manu read सीम्नि for सीम°

व्याधान् शाकुनिकान् गोपान् कैवर्तान् मूलखानकान् ।
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान्' ॥

(म. स्मृ. ८. २५९–२६०.)

इति । अन्यांश्चेति चकारेण सीमाकर्षका[1] उपलक्ष्यन्ते ।
तथा च याज्ञवल्क्यः—

'सीम्नो विवादे क्षेत्रस्य सामन्ताः स्थविरादयः ।
गोपाः सीमाकृषाणा* ये[2] सर्वे[3] च वनगोचराः ।
नयेयुरेते सीमानं स्थला-ऽङ्गार-तुष-द्रुमैः ।
सेतु-वल्मीक-निम्नास्थि-चैत्याद्यैरुपलक्षिताम्' ॥

(या. स्मृ. २. १५०–१५१.)

इति । नारदोऽपि—

ग्रामसीमासु च बहिर्ये च[4] स्युः कृषिजीविनः
गोपाः शाकुनिका व्याधा ये चान्ये वनगोचराः' ॥

(ना. स्मृ. ११. ३.)

इति । ते[5] च शपथैः[6] शापिता एव निर्णयं ब्रूयुः । तथा च
बृहस्पतिः—

---

* सीमाकृषाणाः सीमासंनिहितक्षेत्रकर्षका इत्यर्थः ।

---

१. C. Reads °कर्षकान् for °कर्षकाः and omit उपलक्ष्यन्ते, instead of which reads °भन्यतरान्. २. C. reads °कषाणाश्च for °कृषाणा ये. ३. B. and D. substitute च for ये ४. The text of Nârada reads

' .............. ये स्युस्तत्कृषिजीविनः ॥
गोपशाकुनिकव्याधा ये चान्ये वनजीविनः' ॥

for

' ......... .....ये च स्युः कृषिजीविनः ।
गोपाः शाकुनिका व्याधा ये चान्ये वनगोचराः' ॥

५. B. and C. read एते च for ते च. ६. C. adds स्तैःafter शपथैः.

'शापिताः शपथैः स्वैः स्वैर्ब्रूयुः सीमाविनिर्णयम् ।
दर्शयेयुश्च लिङ्गानि तत्प्रमाणमिति स्थितिः' ॥

इति । स्वैः स्वैरिति—

'सत्येन शापयेद्विप्रं क्षत्रियं वाहनाऽऽयुधैः' ।

इत्यादिलोकव्यवस्थया प्रतिपादितैः इत्यर्थः । मनुरपि—

'ग्रामीयकुलानां च समक्षं सीम्नि साक्षिणः ।
प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः ॥
ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निश्चयम् ।
निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः ॥

(म. स्मृ. ८. २५४–२५५.)

इति । सीमासाक्षिणां तु लक्षणमाह बृहस्पतिः—

'आगमं च प्रमाणं च भोगं कामं च नाम च ।
भूभागलक्षणं चैव ये बिदुस्तेऽत्र साक्षिणः ॥

इति । यदा पुनश्चिह्नानि न सन्ति विद्यमानानि वा लिङ्गालिङ्गतया संदिग्धानि तदा निर्णयोपायमाह याज्ञवल्क्यः—

---

१. C. omits शापिता. २. B. reads इत्यादिनोक्तव्यवस्थया for इत्यादिलोकव्यवस्थया. ३. C. and D. read ग्रामेयक° for ग्रामायिक°. ४. B. C. and D. read तु for च. ५. B. C. and D. read सीम° for सीम्नि. ६. D. reads तथैव च for तयोश्चैव. ७. B. C. and D. read

'...... ... सीमासंधिषु लक्षणम् ।
तत्तथाख्यापयेत् रजा धर्मेण ग्रामयोर्द्वयोः' ॥
for 'समस्ताः सीम्नि निश्चयम् ।
निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः' ॥

But D. substitutes स्थापयेत् for ख्यापयेत्. ८. B. reads कालं for कामं. ९. B. originally reads भिन्नतया for लिङ्गालिङ्गतया. १०. C. reads तथा for तदा.

'सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा ।
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः' ॥

(या. स्मृ. २. १५२.)

इति । सामन्ता वेति विकल्पाभिधानं स्मृत्यन्तरोक्तसाक्ष्याद्यभिप्रायम् । समग्रामाः प्रत्यासन्नग्रामीणाः चत्वारोऽष्टौ दश वेत्येव समसंख्याका रक्तस्रग्विणो रक्ताम्बरधरा मूर्ध्न्यारोपितक्षितिखण्डाः सीमां प्रदर्शयेयुः । स्वैः स्वैः शपथैः शापिताः सन्तः सीमां नयेयुः । तथा च मनुः—

'शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः ।
†सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम्' ॥

(म. स्मृ. ८. २५६.)

इति । नयेयुरिति बहुवचनमपि अविवक्षितम् । एकस्याऽपि सीमाप्रदर्शकस्य बृहस्पतिना दर्शितत्वात् ।

'ज्ञातृचिह्नैर्विना साधुरेकोऽप्युभयसंमतः ।
रक्तमाल्याम्बरधरो मृदमादाय मूर्धनि ॥
सत्यव्रतः सोपवासः सीमानं दर्शयेन्नरः' ।

इति । यत्तु नारदेनोक्तम्—

---

† यदस्माकं सुकृतं तन्निष्फलं स्यात् इत्येवमात्मीयैः सुकृतैः शापिताः सन्तः समञ्जसम् यथाज्ञानतः सत्येन सीमां निर्णयेयुरित्यर्थः ।

---

१. B. originally and C. read °ग्रावा for °ग्रामाः. २. A. and D. omit
सामन्ता वेति विकल्पाभिधानं स्मृत्यन्तरोक्तसाक्ष्याद्यभिप्रायम् ।
समग्रामाः प्रत्यासन्नग्रामीणाः चत्वारोष्टौ दश वेत्येव समसंख्याकाः.
३. B. reads धर्मा° for मूर्ध्न्या°.

'नैकः समुन्नयेत् सीमां नरः प्रत्ययवानपि ।
गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता' ॥
( ना. स्मृ. ११. ९. )

इति । तदुभयानुमतधर्मविद्व्यतिरिक्तविषयम् । स्थलादिचिह्नाभावेऽपि साक्षिसामन्तादीनां सीमाज्ञान उपायविशेषमाह नारदः—

'निम्नगाऽपहृतोत्सृष्टनष्टचिह्नासु भूमिषु ।
तत्प्रदेशानुमानाच्च प्रमाणाद्भोगदर्शनात्' ॥
( ना. स्मृ. ११. ६. )

इति । निम्नगया नद्या अपहारेणोत्सृष्टानि नष्टानि स्वस्थानाच्च्युतानि यासु मर्यादाभूमिषु तत्र तत्र देशानुमानात् दृष्टस्वचिह्नानां प्राचीनप्रदेशानुभावात् प्रयोगात् ग्रामादारभ्य सहस्रदण्डपरिमितं क्षेत्रमस्य ग्रामस्य पश्चिमो भाग इत्येवंविधात् परिमाणात्, भोगदर्शनात् प्रत्यर्थिसमक्षमविप्रतिपन्नाया अस्मार्तकालोपलक्षितभुक्तेर्वा निश्चिनुयुरित्यर्थः । एतेषां साक्षिसामन्तप्रभृतीनां सीमाचङ्क्रमणदिनादारभ्य यावत्त्रिपक्षं यदि

१. C. and D. read महत्त्वात् for गुरुत्वात्. २. B. originally and A. in margin read नित्यैषा, for क्रियैषा, but it seems wrong. ३. The text of Nârada and B. read प्रमाणैर्भोगदर्शनैः. ४. A. C. and D. omit
निम्नगया नद्या अपहारेण उत्सृष्टानि नष्टानि स्वस्थानाच्च्युतानि यासु मर्यादाभूमिषु तत्र तत्र देशानुमानात् दृष्टस्वचिह्नानां प्राचीनप्रदेशानुभावात् प्रयोगात् ग्रामादारभ्य सहस्रदण्डपरिमितं क्षेत्रमस्य ग्रामस्य पश्चिमो भाग इत्येवंविधात्परिमाणात् भोगदर्शनात्.
५. B. reads °विप्रतिपन्नायाः for °विप्रतिपन्नायाः. ६. B. reads °दाना° for °दिना°. ७. B. C. omit यदि.

राज-दैविकव्यसनं नोत्पद्यते तदा तत्प्रदर्शनात् सीमानिर्णयः। तथा च कात्यायनः—

'सीमाचङ्क्रमणे कोशे पादस्पर्शे तथैव च ।
त्रिपक्ष-पञ्चसप्ताहं[1] दैव-राजैकमिष्यते[2]' ॥

इति । यस्तत्र[3] निषेधः स्मृत्यन्तरेऽभिहितः—

'वाक्पारुष्ये महीवादे दिव्यानि परिवर्जयेत्' ॥

इति स[4] उक्तलक्षणपुरुषाभावविषय इत्यविरोधः । कथं तर्ह्यत्र निर्णय इत्यपेक्षिते आह नारदः—

'यदा तु[5] न स्युर्ज्ञातारः सीमायाश्च न[6] लक्षणम्' ॥
तदा राजा द्वयोः सीमामुन्नयेदिष्टतः स्वयम्' ॥

(ना. स्मृ. ११. ११.)

इति । इष्टतः इच्छातः । याज्ञवल्क्योऽपि—

'अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्तिता' ।

(या. स्मृ. २. १५३.)

इति । ज्ञातॄणां सामन्तादीनां चिह्नानां वृक्षादीनामभावे राजैव सीम्नः प्रवर्तयिता[7] । ग्रामद्वयमध्यवर्तिनीं विवादास्पदीभूतां भुवं समं प्रविभज्य उभयोर्ग्रामयोः समर्प्य तन्मध्ये सीमालिङ्गानि कारयेत् । यदा तस्या भूमेर्यत्रैवो[8]पकारातिशयो दृश्यते तदा तस्यैव ग्रामस्य सकला भूः समर्पणीया । तथाह[9] मनुः—

---

१. C. reads मासत्रिपक्ष° for त्रिपक्षपञ्च°; while B. त्रिपक्षपक्ष°. २. B. reads °राजिकम् for °राजकम्; while C. reads राज-दैविकम्. ३. D. reads यस्त्वत्र for यस्तत्र. ४. C. reads सीमाया for स. ५. Text of Nârada and C. reads यदि च for यदा तु. ६. B. reads न च, and D. °श्चापि for °श्च न. ७. C. reads प्रवर्तयितव्यः for प्रवर्तयिता. ८. B. reads यत्रैषो° for यत्रैवो°. ९. C. reads यथाह for तथाह.

'सीमायामविषह्यायां स्वयं राजैव धर्मवित्।
प्रदिशेद्भूमिमेकेषां उपकारादिति स्थितिः'* ॥

( म. स्मृ. ८. २६५. )

इति। अविषह्यायां ज्ञातृज्ञापकशून्यायामित्यर्थः। ऋणादिनिर्णयवत् सीमानिर्णयो नावेदनानन्तरमेव कार्यः। किन्तु प्रकाशितेषु सेत्वादिषु। तदाह स एव—

'सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयोः।
ज्येष्ठे मासे नयेत् सीमां सप्रकाशेषु सेतुषु'† ॥

( म. स्मृ. ८. २४५. )

इति। ग्रामग्रहणं नगरादेरप्युपलक्षणार्थम्। अतएव कात्यायनः-

*धर्मवित् पक्षपातरहितो राजा ग्रामद्वयमध्यवर्तिनीं विवादविषयां भूमिं येषामेव ग्रामवासिनां उपकारातिशयो भवति तद्व्यतिरेकेण च न निर्वाहः तेषामेव दद्यादिति शास्त्रव्यवस्था इत्यभिप्रायः।

†द्वयोर्ग्रामयोः मर्यादां प्रति विप्रतिपत्तौ उत्पन्नायां ज्येष्ठे मासि ग्रीष्मरवितापसंशुष्कतृणत्वात् प्रकटीभूतेषु सीमालिङ्गेषु राजा सीमां निश्चिनुयात्। यस्मिन् देशे ज्येष्ठमासि पर्जन्यबाहुल्येन सेत्वादीनां न सम्यक् ज्ञानं भवितुं शक्यं तत्र वैशाखेऽपि कार्यम्। सर्वथा सेत्वादीनां स्पष्टतया ज्ञानं यस्मिन् काले भवति तत्रैव सीमानिर्णयः कर्तव्य इत्यपेक्षितम्। न ज्येष्ठादिमासापेक्षा इत्यलं पल्लवितेन।

१. C. wrongly reads प्रविशेद्ग्राममेकेषां for प्रदिशेद्भूमिमेकेषां. २. C. reads प्रविषह्यायां for अविषह्यायां. ३. °ज्ञापकाशून्या° for ज्ञापकशून्या°. ४. C. reads सम्यगावेदना° for आवेदना.° ५. D. reads ज्यैष्ठे for ज्येष्ठे.

'सीमान्तवासिसामन्तैः[1] कुर्यात् क्षेत्रादिनिर्णयम् ।
ग्रामसीमादिषु तथा तद्वन्नगर-देशयोः' ॥

इति । यदा रागलोभादिवशात् सीमासाक्षिणो निर्णयं न कुर्युः तदा दण्डनीया इत्याह स एव—

'बहूनां तु गृहीतानां न सीमानिर्णयं[2] यदि ।
कुर्युर्भयाद्वा लोभाद्वा दाप्यास्तूत्तमसाहसम्' ॥

इति । एतज्ज्ञानविषयम् अज्ञानविषये तु[3] नारदः ।

'अथचेदनृतं ब्रूयुः सामन्ताः सीमनिर्णये[4] ।
सर्वे पृथक् पृथक् दण्ड्या राज्ञा मध्यमसाहसम्' ॥ (७)
सामन्तात्परतो ये स्युस्तत्संसक्ता मृषोदितैः[5] ।
संसक्तसक्तसक्तास्तु विनेयाः पूर्वसाहसम् ॥ ( ८ )
मौल[6]वृद्धादयस्त्वन्ये दण्डं दाप्याः[7] पृथक् पृथक् ।
विनेयाः प्रथमेनैव साहसेन[8] व्यवस्थिताः' ॥ ( ९ )

( ना. स्मृ. ११. ७–९. )

इति । साक्षिणां[9] मिथो वैमत्याभिधाने[10] दण्डमाह कात्यायनः—

'कीर्तिते[11] यदि भेदः स्याद्दण्ड्यास्तूत्तमसाहसम्' ॥

इति । सीमाचङ्क्रमणकर्तॄणामपि दण्डमाह स एव—

---

१. B. C. and D. read सामन्तभावे for सीमान्तवासि°. २. C. wrongly reads स्वर्णयं for सीमानिर्णयं. ३, B. and C. omit तु. ४. The text of Nârada and C. read तद्विनिश्चये for सीमानिर्णये. ५. B. C. and D. read मृषोदिते for मृषोदितैः. ६, The text of Narada and B. read गण°for मौल°. ७. B. reads दण्डगत्या for दंडं दाप्याः while the text of Narada दण्डं दद्युः for दण्डं दाप्याः ८, The text of Narada and D. read साहसेनानृते स्थिताः for साहसेन व्यवस्थिताः. ९. C. reads साक्षिणो for साक्षिणां. १०. B. and C. read वैमत्येनाभिदाने for वैमत्याभिधाने. ११. B. and C. read कारिते for कीर्तिते.

'यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः।
विपरीतं नयन्तस्तु दाप्यास्तु[1] द्विशतं दमम्' ॥

इति। आज्ञानादनृतवचने[2] साक्ष्यादीन् दण्डयित्वा पुनर्विचारः प्रवर्तयितव्यः। तथा च कात्यायनः—

'अज्ञानोक्तान्[3] दण्डयित्वा पुनः सीमां विचारयेत्।
त्यक्त्वा दुष्टांस्तु सामन्तानन्यैन्[4]मौलादिभिः सह ॥
संमील्य[5] कारयेत् सीमामेवं धर्मविदो विदुः' ॥

इति। नद्युत्सृष्ट[6]क्षेत्रविषये निर्णयमाह बृहस्पतिः—

'अन्यग्रामात्समाहृत्य दत्तान्यस्य यदा मही।
महानद्या ऽथवा राज्ञा कथं[7] तत्र विचारणा?॥
नद्योत्सृष्टा राजदत्ता यस्य तस्यैव सा मही।
अन्यथा न भवेल्लाभो नराणां राजदैवकः॥
क्षयोदयौ जीवनं च दैव-राजवशान्नृणाम्।
तस्मात् सर्वेषु कार्येषु तत्कृतं न विचालयेत्[8] ॥
ग्रामयोरुभयोर्यत्र मर्यादा कल्पिता नदी[9]।
कुरुते[10] दानहरणं भाग्याभाग्यवशान्नृणाम्' ॥

१. B. reads स्युः for °स्तुः. २. B. reads अनृतवादिनः and C, अनृतवदने for अनृतवचने. ३, B. reads अज्ञानोक्ते and C, अज्ञानोक्तौ for अज्ञानोक्तान्. ४, C. and D. read तस्मात् or अन्यान्. ५, B. originally reads समीक्ष्य and in margin संप्रीत्या for संमील्य; while विज्ञानेश्वर reads सम्मित्य for the same. ६. B. reads नद्याद्युत्सृष्ट° and C. तथाह्युत्सृष्ट for नद्युत्सृष्ट.° ७. B. in margin and C. read कार्या for कथं. ८, B. and C. read विचारयेत् for विचालयेत्. ९. C. reads कुरुते तदा for कल्पिता नदी. १०. C. reads.

दानहरणं न कर्तव्यं भाग्याभाग्यवशं यतः।
for
कुरुते दानहरणं भाग्या भाग्यवशात् नृणाम् ॥

'एकत्र कूलपातं[1] तु भूमेरन्यत्र संस्थितिम्[2]।
नदीतीरे प्रकुरुते तस्य तां न विचालयेत्' ॥

इति। एतदभ्युप्तशस्यतीरविषयम्[3]। उप्तशस्यविषये तु स एवाह—

'क्षेत्रशस्यं[4] समुल्लङ्घ्य भूमिश्छिन्ना यदा भवेत्।
नदीस्रोतःप्रवाहेण पूर्वस्वामी लभेच्च[5] ताम्' ॥

इति। तां सशस्यां भूमिं पूर्वस्वामी यावदुप्तशस्यफलप्राप्तिस्तावल्लभेतेत्यर्थः। फलप्राप्तेरूर्द्ध्वं तु पूर्ववचनविषयसमानता। राजदत्तविषये क्वचिदपवादमाह स एव—

'या राज्ञा क्रोध-लोभेन छलान्यायेन[6] वा हृता।
प्रदत्ताऽन्यस्य[7] तुष्टेन न सा सिद्धिमवाप्नुयात्' ॥

इति। एतच्च[8] स्वत्वहेतुप्रमाणवत्क्षेत्रविषयम्। प्रमाणाऽभावे तु स एवाह—

'प्रमाणरहितां[9] भूमिं भुञ्जतो[10] यस्य या हृता।
गुणाधिकाय वा दत्ता तस्य तां न विचालयेत्'

इति। गृहादिविषये निर्णयस्तेनैव दर्शितः,—

'निवेश[11]कालादारभ्य गृहवार्यापणादिकम्।
येन यावद्यथा भुक्तं तस्य तन्न[12] विचालयेत् ॥

1. B. originally reads जलपात्रं for कूलपातम्. 2. B. reads संस्थितम् for संस्थितिम्. 3. B. and C. read अनुप्त° for अभ्युप्त°. 4. B. and C. read क्षेत्रं ससस्यमुल्लंघ्य for क्षेत्रशस्यं समुल्लंघ्य. 5. B. and C. read लभेत for लभेच्च. 6. D. reads छलन्यायेन; while B. originally reads छलेनान्येन for छलान्यायेन. 7. C. reads अन्यत्र for अन्यस्य. 8. B. omits च. 9. C. reads प्रमाणरहिता भूमिः for प्रमाणरहितां भूमिं. 10. B. and C. read भजतो for भुंजतो. 11. B. originally reads विशेष°, but in margin reads निवेश°. 12. C. reads तेन for तन्न.

वातायनं प्रणालीश्च तथा निर्यूहवेदिकाः ।
चतुःशालं स्यन्दनिकां प्राङ्निविष्टां न चालयेत्' ॥

इति । वातायनं गवाक्षः । प्रणाली काष्ठादिमयो जलनिर्गमोपायः । निर्यूहो गृहकोणो नागदन्तको वा । वेदिका रथ्यादिप्रदेशसंस्कृता उन्नता भूमिः । चतसृणां शालानां समाहारश्चतुःशालम् । तस्मात्स्यन्दनिका वृष्टिजलनिपातः ।

निवेशकालादूर्ध्वं प्रातिवेश्यानिष्टकारि वातायनादिकं न कार्यमित्याह कात्यायनः—

'निवेशसमयादूर्ध्वं नैते योज्याः कदाचन ।
दृष्टिपातं प्रणालीं च न कुर्यात् परवेश्मसु' ॥

इति । दृष्टिपातो गवाक्षः । परवेश्मसु परवेश्माभिमुख्येन । बृहस्पतिरपि—

'वर्चःस्थानं वह्निचयं गर्तोच्छिष्टाम्बुसेचनम् ।
अरत्यारात् परकुड्यस्य न कर्तव्यं कथंचन' ॥

इति । अरत्निद्वयमुत्सृज्य कर्तव्यमित्याह कात्यायनः—

'विण्मूत्रोदकचक्रं च वह्निश्वभ्रनिवेशनम् ।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत्' ॥

इति । अवस्कारादिभिश्चतुष्पथादिकं न रोधयेदित्याह नारदः—

१. The whole portion from here to वह्निश्वभ्रनिवेशनम् in l. 14 inclusive is omitted in A. C. and D. २. C. reads अटवि° for अरत्नि°.

'†अवस्कर-स्थल-श्वभ्र-भ्रम-स्यन्दनिकादिभिः ।
चतुष्पथ-सुरस्थान-राजमार्गान्न रोधयेत् ' ॥

( ना. स्मृ. ११. १९. )

इति । बृहस्पतिः—

' यान्त्यायान्ति जना येन पशवश्चानिवारिताः ।
तदुच्यते संसरणं न रोद्धव्यं तु केनचित् ' ॥

इति । यस्तु संसरणे श्वभ्रादिकं करोति तस्य दण्डमाह स एव—

' यस्तत्र संसरे श्वभ्रं वृक्षारोपणमेव वा ।
कामात् पुरीषं कुर्याच्चेत्तस्य दण्डस्तु माषकः' ॥

इति । राजमार्गे तु पुरीषकर्तुर्दण्डमाह मनुः—

' समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि ।
स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत् ॥

† अवस्करो पुरीषाद्यमेध्यम् । स्थलं कौशल्यनिबद्धं स्थानम् । श्वभ्रो गर्तः । भ्रमः जलानयनाद्यर्थयोजितनालिकादिः । स्यन्दनिका पटलप्रान्तः । इत्यादिभिः चतुष्पथादीनि न रोधयेत् इत्यर्थः ।

---

१. C. स्यन्दनका°. २. B. and C. read राजमार्गे, while the text of Nārada reads रथ्यामार्गान् for राजमार्गान्. ३. C. reads संसरणं for संसरणे. ४. B. reads संकरं and C. संकरश्वभ्रं for संसरे श्वभ्रं. ५. C. reads पुरीषं for पुरीष°. ६. B. reads दण्डाधिक्यम् for दण्डम्.

आपद्गतोऽथवा वृद्धो गर्भिणी बाल एव वा ।
परिभाषणमर्हन्ति* तच्च शोध्यमिति स्थितिः' ॥

( म. स्मृ. ९. २८२–२८६. )

इति । अमेध्यादिना तडागादिषु[1] दोषं कुर्वतां दण्डमाह कात्यायनः—

'तडागोद्यान-तीर्थानि[2] योऽमेध्येन विनाशयेत् ।
अमेध्यं शोधयित्वा तु दण्डयेत् पूर्वसाहसम् ॥
दूषयन्[3] सिद्धतीर्थानि स्थापितानि[4] महात्मभिः ।
पुण्यानि पावनीयानि प्राप्नुयात् पूर्वसाहसम् ॥

इति । मर्यादाभेदनादौ दण्डमाह याज्ञवल्क्यः—

'मर्यादायाः प्रभेदे च[5] सीमाऽतिक्रमणे[6] तथा ।
क्षेत्रस्य हरणे दण्डा अधमोत्तम-मध्यमाः[7] ' ॥

( या. स्मृ. २. १५५. )

इति । अनेकक्षेत्रव्यवच्छेदिका साधारणी भूमर्यादा । तस्याः प्रकर्षेण भेदने सीमानमतिलङ्घ्य कर्षणे क्षेत्रस्य तथा[8] निन्दितप्रदर्शनेन हरणे यथाक्रमेणाधमोत्तम-मध्यमसाहसा

---

* परिभाषणं पुनस्त्वयेदृशं कर्म न कर्तव्यमित्याज्ञाकरणम् । एतेन आपद्गतादीनां दण्डो न कर्तव्यः इति सूचितं भवति ।

---

१. C. reads तडागादिदूषकस्य for तडागादिषु दोषं कुर्वतां. २. C. reads दशकोद्यानि, for तडागोद्यान°, while B. originally reads तथा कोद्यानि, in margin दशकोद्यानि, and in correction तटाका नानि. ३. B. and C. read दूषयेत् for दूषयन्. ४. B. and C. read ख्यापितानि for स्थापितानि. ५. B. C. and D. read तु for च. ६. C. reads संगाति° for सीमाति°. ७. D reads °मध्यमम् for °मध्यमाः. ८. B. reads भयादिप्रदर्शनेन for तथा निन्दितप्रदर्शनेन.

दण्डा वेदितव्याः। क्षेत्रग्रहणं गृहारामाद्युपलक्षणार्थम् [1]। अज्ञानात् क्षेत्रादिहरणे अधम एव दण्डो वेदितव्यः [2]। अत एव मनुः—

'गृहं तडागमारामं क्षेत्रं वा भीषया हरन्।
शतानि पञ्च दण्ड्यः स्यादज्ञानाद्विशतो दमः [3]'॥
(म. स्मृ. ८. २६४.)

---

गृहारामादिषु याज्ञवल्क्य आह—

'आरामायतनग्राम-निपानोद्यान-वेश्मसु।
एष एव विधिर्दृष्टो वर्षाम्बुप्रवहादिषु'॥
(या. स्मृ. २. १५४.)

इति। आरामः पुष्प—फलोपचयहेतुभूभागः। आयतनं निवेशनं पलालादिककुट्टनाद्यर्थं विभक्तो भूप्रदेशः। ग्रामः प्रसिद्धः। ग्रामग्रहणेन नगराद्युपलक्ष्यते निपानं पानीयस्थानं वापी—कूपतडागादि। उद्यानं क्रीडावनम्। वेश्म गृहम्। एतेष्वारामादिष्वयमेव पूर्वोक्तः सामन्त—साक्ष्यादिलक्षणो विधिर्ज्ञातव्यः। तथा प्रवर्षणोद्भुतजलप्रवाहेषु अनयोर्गृहयोर्मध्येन जलौघः प्रवहति अनयोर्वा इत्येवंप्रकारे विवादे आदिग्रहणात् प्रासादादिष्वपि प्राचीन एव विधिर्वेदितव्यः। तथा च कात्यायनोऽपि—

'क्षेत्र-कूप-तडागानां केदाराऽऽरामयोरपि।
गृह-प्रासादा-ऽवसथ-नृप-देवगृहेषु च'॥

इति। प्राचीन एव विधिरिति भावः।

---

१. C. reads क्षेपणादि° for क्षेत्रादि°. २. B. omits अधम एव दंडो वेदितव्याः; अत एव मनुः. while C. अधम एव मनुः and D. स एवाह for अधम एव दण्डो वेदितव्यः। अत एव मनुः. ३. B. reads द्विशतोत्तमः and C. द्विशतं दमः.

इति। ये[1] तु बलादपह्रियमाणक्षेत्रादिभूमयस्तेषामुत्तमो[2][3] दण्डः प्रयोक्तव्यः। उत्तमसाहसं यथा—

'वधः[4] सर्वस्वहरणं पुरान्निर्वासनाङ्कने।
तदङ्गच्छेद इत्येको[5] दण्ड उत्तमसाहसः' ॥

इति स्मरणात्। यत्तु शङ्ख-लिखिताभ्यां सीमातिक्रमणे[6] दण्डाधिक्यमुक्तम्—

'सीमाव्यतिक्रमे त्वष्टसहस्रम्'।

इति तत् समग्रसीमातिक्रमविषयम्। सीमासन्धिषूत्पन्न-वृक्षादिविषये कात्यायनः—

'सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः।
फलं पुष्पं च सामान्यं क्षेत्रस्वामिषु निर्दिशेत्' ॥

इति। अन्यक्षेत्रे जातवृक्षादिविषये स एव—

'अन्यक्षेत्रे[7] तु जातानां शाखा यत्रान्यसंस्थिता[8]।
स्वामिनं तं[9] विजानीयाद्यस्य क्षेत्रे तु संस्थिता'[10] ॥

इति। परक्षेत्रे प्रार्थनया क्रियमाणसेतु-कूपादिकं[11] क्षेत्रस्वा-मिना न[12] निषेद्धव्यम्। तदाह याज्ञवल्क्यः—

१. B. C. omit ये तु बलात्. २. B. reads भूमयस्त्वे and °भूमयस्ते for °भूमयस्तेषां. ३. B. C. read उत्तमोपि for उत्तमो. ४. B. reads बलात् for वधः. ५. B. reads इत्युक्तं for इत्येको. ६. B. reads सीमातिक्रमे for सीमातिक्रमणे. ७. B. reads अन्यक्षेत्रे for अन्यक्षेत्रे तु. ८. B. originally reads °संश्रिताः. ९. B. reads तं and C. तत्. १०. B. originally reads संश्रिताः. ११. B. and C. read क्रियमाणं for क्रियमाण°. १२. B. reads नासेद्धव्यं and C. नासंबद्धव्यम् for न निषेद्धव्यम्.

'न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः ।
परभूमिं[1] हरन् कूपः स्वल्पक्षेत्रो बहूदकः'* ॥

( या. स्मृ. २. १५६. )

इति । यत् स्वल्प[2]बाधकं महोपकारकं क्षेत्रादिकं च भवति तत्क्षेत्रं स्वामिना न निषे[3]द्धव्यम् । यत् पुनर्बहुबाधकं स्वल्पोपकारकं च त[4]न्निषेद्धव्यं भवति । । नारदोऽपि—

'[5]परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिबध्यते ।
महागुणोऽल्पबाध[6]श्चेद्[7]वृद्धिरिष्टा [8]क्षये सति' ॥

( ना. स्मृ. ११. १७. )

इति । सेतुश्च द्विविधः । तथा च स एवाह—

---

* परकीयां भूमिमपहरन्नपि सेतुर्जलप्रवाहबन्धः क्षेत्रस्वामिना न प्रतिषेध्यः स चेत् ईषत्पीडाकरो बहूपकारकश्च भवति । कूपश्चाल्पक्षेत्रव्यापित्वेन अल्पबाधो बहूदकत्वेन कल्याणकारकश्च अतो बहूदको नैव निवारणीयः । कूपग्रहणं च वापी-पुष्कारिण्याद्युपलक्षणार्थम् । यदा पुनरसौ समग्रक्षेत्रप्रवर्तिया बहुबाधो नद्यादिसमीपक्षेत्रवर्तितया वा अल्पोपकारकः तदाऽसौ निषेध्य इत्यर्थादुक्तं भवति इति भावः ।

१. D. reads °भूमौ for °भूमिं. २. C. reads यद्यस्य for यत्स्वल्प°. ३. B. and C. read नासेद्धव्यं for न निषेद्धव्यम्. ४. B. and C. read तदासेद्धव्यं for तन्निषेद्धव्यं. ५. C. reads परक्षेत्रे सत्यमध्ये for परक्षेत्रस्य मध्ये तु. ६. B. C. and D. read °दोष° for °बाध° ७. B. in margin read सृष्टिः for वृद्धिः. ८. B. originally क्षयासति and in margin जये सति; while C. जये सति for क्षये सति.

'सेतुस्तु द्विविधो ज्ञेयः खेयो [1]बन्ध्यस्तथैव च ।
तोयप्रवर्तनात् [2]खेयो [3]बन्ध्यः स्यात्तन्निवर्तनात्' ॥

( ना. स्मृ. ११. १८. )

इति । [4]सेत्वादिसंस्कारविषये नारदः—

'पूर्व[5]प्रवृत्तम[6]उत्सन्नम[7]पृष्ट्वा स्वामिनं तु यः ।
सेतुं प्रवर्तयेत् कश्चिन्न स तत्फलभाग्भवेत् ॥
मृते तु स्वामिनि पुनस्तद्वंश्ये वाऽपि मानवे ।
राजानमामन्त्र्य ततः [8]प्रकुर्यात् सेतुकर्म तत् ।

( ना. स्मृ. ११. २०–२१. )

इति । क्षेत्रस्वामिनम[9]नभ्युपगम्य तदभावे राजानं वा, सेत्वादिप्रवर्तने याज्ञवल्क्यः—

'स्वामिने योऽनिवेद्यैव [10]क्षेत्रे सेतुं प्रवर्तयेत् ।
उत्पन्ने स्वामिनो भोगः तदभावे महीपतेः' ॥

( या. स्मृ. २. १५७. )

इति । प्रार्थनयार्थदानेन [11]वा लब्धानुज्ञः सन्नेव परक्षेत्रे सेतुं प्रवर्तयेदित्यस्य तात्पर्यम् । न [12]तु सेतुप्रवर्तकस्य [13]फल-

---

१. B. originally reads बद्ध while D. reads बध्य; and C. सेध्यः.२.C. wrongly reads तोयो for खेयो. ३. B. C. and D. read बध्यः for बंध्यः. ४. B. reads जीर्णत्वादि° for सेत्वादि°. ५. B. and D. read °प्रवृत्ति° for °प्रवृत्त°. ६. C. reads उत्संभं and D. उच्छिन्नं. ७. B. and D. read न पृष्ट्वा for अपृष्ट्वा; while C. न दृष्टस्वामिनं for अपृष्ट्वा स्वामिनं. ८. B. C. and D. read कुर्यात् सेतुप्रवर्तनम् for प्रकुर्यात् सेतुकर्म तत्. ९. B. reads अभ्युपगमय्य, and C. उपगमय्य for अनभ्युपगम्य १०. C. reads क्षेत्रसेतुं for क्षेत्रे सेतुं. ११. C. reads बलाच्चानुज्ञानान्नैव for वा लब्धानुज्ञः सन्नेव. १२. C. reads ननु for न तु. १३. B. reads पालनाकृषिनिषेधे. C. reads पालनाच्चानिषेधे for फलभाक्त्वनिषेधे.

भाक्त्वनिषेधे तात्पर्यम्* । तस्याप्रसक्तत्वात् । अथ वा दृष्टला-[1]भफलभोक्तृत्वनिषेधे तात्पर्यमस्तु । कात्यायनोऽपि—

‘ अस्वाम्यनुमतेनैव[2] संस्कारं कुरुते तु यः ।
गृहोद्यान-तडागानां संस्कर्ता लभते न तु ॥
व्ययं[3] स्वामिनि चायाते[4] न निवेद्यं[5] नृपे यदि ।
अथावेद्य प्रयुक्तस्तु तद्गतं लभते व्ययम् ’ ॥

इति । क्षेत्रस्वामिपार्श्वे क्षेत्रमिदमहं कर्षामीतीदमङ्गीकृत्य[6] प-श्चाद्यो न कर्षति[7] अन्येन वा न[8] कर्षयति तं प्रत्याह याज्ञवल्क्यः—

‘ फालाहतमपि क्षेत्रं न कुर्याद्यो[9] न कारयेत् ।
स[10] प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत् ’ ॥
( या. स्मृ. २. १५८. )

इति । यद्यपि फालाहतं ईषद्धलेन[11] विदारितं न सम्यग्[12]बी-जावापार्हं तथाप्यकृष्ट[13]क्षेत्रस्य फलं यावद्यत्रोत्पत्त्यर्हं[14] सामन्तादि-

---

* विज्ञानेश्वरस्त्वत्र ‘क्षेत्रस्वामिनमनभ्युपगम्य तदभावे राजानं वा यः परक्षेत्रे सेतुं प्रवर्तयति असौ फलभाङ् न भवति । अपि तु तदुत्पन्न-फले क्षेत्रस्वामिनो भोगः । तदभावे ‘राज्ञः’ इति व्याचख्यौ ।

---

१. B. and C. read कृष्टरूपफलभाकत्वनिषेधे and कृष्टरूपफलभाक् च निषेधे respectively for कृष्टलाभफलभोक्तृत्वनिषेधे. २. C. reads अनुगतेनैव for अनु-मतेनैव. ३. B. originally reads स्वयं in margin व्ययं; while C. स्वयं and some other books देयं for व्ययं. ४. B. originally reads वा-ऽऽयाते and in margin राजा वा; while C. राजा तत् for चायाते. ५. B. and C. read निवेद्यं for निवेद्य. ६. B. reads कर्षिष्यामि for कर्षामि. ७. C. B. read कृषति for कर्षति. ८. C. omits न. ९. B. C. and D. read यो न कुर्यान्न कारयेत् for न कुर्याद्यो न कारयेत्. १०. B. and C. read तं प्रदाप्याऽकृष्टशदं; while D. स प्रदाप्योऽकृष्टशदं for स प्रदाप्यः कृष्टफलं. ११. B. originally and D. read ईषत्फलेन for ईषद्धलेन. १२. B. and C. read सम्यक् for सस्य°. १३. B. C. read व्याकृष्ट° for व्यकृष्ट°. १४. C. and D. read उत्पत्त्यर्थं for उत्पत्त्यर्हं.

कल्पितं तावदसौ स्वामिने दापनीयः। तच्च क्षेत्रं पूर्वकर्षकादाच्छिद्यान्येन तत्कारयेत्। बृहस्पतिरपि—

'क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्यान्न च कारयेत्।
स्वामिने स शदं दाप्यो राज्ञे दण्डं च तत्समम्'॥

इति। स्वामिने कियान् शदो देय इत्यपेक्षिते स एवाह—

'चिरावसन्ने दशमं कृष्यमाणे तथाऽष्टमम्।
सुसंस्कृते तु षष्ठं स्यात् परिकल्प्य यथाविधि'॥

इति। चिरावसन्ने चिरकालमकृष्टे क्षेत्रे कर्षामीति स्वीकृत्योपेक्षिते यावत्फलमनुपेक्षिते लभ्यते तस्य दशमं भागं दाप्यः। कृष्यमाणे सुचिरावसन्ने स्वीकृत्योपेक्षिते त्वष्टमं भागं दाप्यः। सुसंस्कृते क्षेत्रे उपेक्षिते तु षष्ठं भागं दाप्य इत्यर्थः। अशक्त-प्रेत-नष्टक्षेत्रविषये नारदः—

'अशक्त-प्रेत-नष्टेषु क्षेत्रिकेष्वनिवारितैः।
क्षेत्रं चेद्विकृषेत् कश्चिदश्नुवीत स तत्फलम्'॥

---

१. B. and C. read °कर्षकादाकृष्य and D. कर्षकादौ विधाय for कर्षकादाच्छिद्य. २. B. C. and D. read शतं for शदं. ३. C. reads चिरावलंबने for चिरावसन्ने. ४. C. reads अकृष्यमाणे for कृष्यमाणे. ५. B. and C. read सुसंस्कृतेषु for सुसंस्कृते तु. ६. B. reads चिरकालाकुष्टे for चिरकालमकृष्टे. ७. B. reads कृष्यामि and C. कृषामि for कर्षामि. ८. C. reads अनुपेक्षितं for अनुपेक्षिते. ९. C. reads मूल्यद्वारेण before दाप्यः. १०. A. C. D. omit कृष्यमाणे सुचिरावसन्ने स्वीकृत्योपेक्षिते त्वष्टमं भागं दाप्यः. ११. B. reads अचिरावसन्ने for सुचिरावसन्ने. १२. C. reads सप्तमं for षष्ठं. १३. B. reads अशक्त-प्रेतनष्ट-क्षेत्रिक° and C. अशक्तके प्रेते नष्टे क्षेत्रे° for असक्तप्रेतनष्टक्षेत्र°. १४. B. and C. read असक्त° for अशक्त°. १५. B. reads क्षेत्रिकेषु निवापितः while C. क्षेत्रिकेषु निवारितः for क्षेत्रिकेष्वनिवारितः. १६. B. reads अनर्हति च. and C. अश्नुवीत स for अश्नुवीत स.

‘[1]कृष्यमाणेषु क्षेत्रेषु क्षेत्रिकः पुनराव्रजेत् ।
[2]खिलोपचारं तत्सर्वं दत्वा क्षेत्रमवाप्नुयात्’ ॥
(ना. स्मृ. ११. २१–२२.)

इति । खिलोपचारः खिलभञ्जनार्थो व्ययः । तस्येयत्तावधारणार्थं [3]विचारं तस्याह स एव—

‘संवत्सरेणार्धखिलं खिलं स्याद्वत्सरैस्त्रिभिः ।
पञ्चवर्षावसन्नं तु क्षेत्रं स्यादटवीसमम्’ ॥
(ना. स्मृ. ११. २६.)

इति । यदा पुनः खिलोपचारं स्वामी न ददाति तदाप्याह कात्यायनः—

‘अशक्तितो न [4]दद्याच्चेत् [5]खिलार्थे यः कृतो व्ययः ।
[6]तदष्टभागहीनं तु कर्षकः फलमाप्नुयात् ॥
[7]वर्षानष्टौ स भोक्ता स्यात्परतः स्वामिने तु तत्’ ।

इति ॥ इति सीमाविवादनिर्णयः समाप्तः ॥

अथ दण्डपारुष्यम् । तत्स्वरूपं नारदेनोक्तम्—

‘परगात्रेष्वभिद्रोहो हस्त-पादाऽऽयुधादिभिः ।
[8]भस्मादिनामुपक्षेपैर्दण्डपारुष्यमुच्यते’ ॥
(ना. स्मृ. १९. ४.)

१. B. reads विक्रूष्यमाणे क्षेत्रे तु, and C. कृष्यमाणे च क्षेत्रे तु for कृष्यमाणेषु क्षेत्रेषु. २. C. reads खिलोपचारतः सर्वं for खिलोपचारं तत्सर्वं. ३. B. reads खिलतारतम्य; while C. wrongly reads विलवारतस्य for विचारं. ४. C. reads दद्याद्यो for दद्या चेत्. ५. C. reads खिलार्थो for खिलार्थे. ६. C. reads तदर्थ° for तदष्ट°; while D. reads तदाष्ट° for तदष्ट°. ७. B. reads वर्षाण्यष्टौ° for वर्षानष्टौ. ८. B. C. and D. read भस्मादिभिश्चोपघातो for भस्मादीनामुपक्षेपैः.

इति । *परगात्रेषु [1]स्थावरजङ्गमादेरनेकद्रव्येषु । [2]हस्त-पादा-युधादिभिरित्यादि[3]ग्रहणाद्भावादिभिः । द्रोहो हिंसनम् । तथा [4]भस्मादिभिः भस्म-रजः-पङ्क-पुरीषाद्यैः उपघातः संस्पर्शरूपं मनोदुःखोत्पादनम् । तदुभयं दण्डपारुष्यम् । तस्य त्रैविध्य-माह स एव—

'तस्याऽपि दृष्टं त्रैविध्यं हीन[5]-मध्योत्तमक्रमात् ।
अव[6]गूरण-निः[7]शङ्कपातन-क्षतदर्शनैः ॥
हीनमध्योत्तमानां तु द्रव्याणामनतिक्रमात् ।
त्रीण्येव साहसान्याहुस्तत्र कण्टकशोधनम्' ॥

(ना. स्मृ. १९. ५–६.)

इति । निः[8]शङ्कपातनं निःशङ्कप्रहरणम् । त्रीण्येव साहसानि [9]साहसीकृतानि दण्डपारुष्याणीत्यर्थः । दण्डपारुष्ये पञ्च प्रकारा विधयस्तेनैवोक्ताः—

'विधिः पञ्चविधस्तूक्तः एतयोरुभयोरपि ।
पारुष्ये सति संरम्भादुत्पन्ने क्षु[10]ब्धयोर्द्वयोः ॥

* दण्ड्यतेऽनेनेति दण्डो देहः तेन यत् पारुष्यं विरुद्धाचरणं जङ्गमादेर्द्रव्यस्य तद्दण्डपारुष्यम् ।

---

१, B. reads स्थावरजंगमात्मकद्रव्येषु and C. स्थावरजंगमानेकद्रव्येषु for स्थावरजंगमादेरनेकद्रव्येषु. २. B. reads हस्त-पादायुधैः and C. हस्त-पादायुधः for हस्त-पादायुधादिभिः. ३. B. reads आदिग्रहणेन for आदिग्रहणात्. ४. D. reads भस्मभिः for भस्मादिभिः. ५. The text of Narada reads मृदुमध्योत्तमं for हीनमध्योत्तम°. ६. The text of Narada reads अवगोरण; while C. अवस्तरण° for अवगूरण°. ७. B. and C. read निःसंग° for निःशंक°. ८. B. and C. read निःसंगपातनं for निःशंकपातनं. ९. B. and C. read सहसाकृतानि for साहसीकृतानि. १०. B. originally reads लुब्धयोः and in margin क्रुद्धयोः for क्षुब्धयोः; while C. तु द्वयोः for क्षुब्धयोः.

स मान्यते यः क्षमते दण्डभाग्योऽतिवर्तते[1] ।
पूर्वमाक्षरयेद्यस्तु[2][†] नियतं[3] स्यात् स दोषभाक् ॥
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ।
द्वयोरापन्नयोस्तुल्यमनुबध्नाति[5] योऽधिकम्[6] ॥
स तयोर्दण्डमाप्नोति पूर्वो वा यदि वोत्तरः[7] ।
पारुष्यदोषावृतयोर्युगपत् संप्रवृत्तयोः ॥
विशेषश्चेन्न लक्ष्येत[8] विनयः स्यात् समस्तयोः ।
श्वपाक-षण्ढ[9]-पाषण्ड-व्यङ्गेषु बधिरेषु[10] च ॥
हस्तिप-व्रात्य-दासेषु[11] गुर्वाचार्यान्तिकेषु[12] च ।
मर्यादातिक्रमे सद्यो घात एवाऽनुशासनम् ॥
यमेव ह्यतिवर्तेत[13] नीचः सन्तं जनं नृषु ।
स एव विनयं कुर्यान्न तद्विनयभाङ् नृपः ॥

---

† आक्षारणं प्रहरणम् । यः पूर्वमाक्षारयेत् स नियमेन दोषभाग्भवति । नायं नियमः । यदि मया प्रथमं प्रहारो न कृतश्चेत् प्रतिपक्षी मां मारयिष्यति इति निश्चयेनानुमितं कृत्वा तेन पूर्वमाक्षारणं कृतं चेत् स दोषभाजनं भवितुं नार्हं इति गम्यते ।

---

१. B. originally and C. read निवर्तते for ऽतिवर्तते. २. C. reads आसारयेत् आक्षारयेत्. ३. C. reads नियतः for नियतं. ४. C. reads आपतयोः for आपन्नयोः. ५. C. reads अनुवल्लाति for अनुबध्नाति. ६. B. reads पुनः for ऽधिकम्. ७. B. and C. read वेतरः for वोत्तरः. ८. The text of Narada reads दृश्येत for लक्ष्येत. ९. Text of Narada reads °मेद° for षण्ढ. १०. B. C. read °वधवृत्तिषु for °बधिरेषु च. ११. B. originally and Narada text read दारेषु for दासेषु. १२. B. C. read अंतकेषु; while Narada text अंतिगेषु for अंतिकेषु. १३. B. reads ह्यतिवर्तरन्नेते; while D. व्यतिरेकेरन्नेते for ह्यतिवर्तेत नीचः.

मला ह्येते[1] मनुष्याणां धनमेषां मलात्मकम्।
अतस्तान्[2] घातयेद्राजा नार्थदण्डेन दण्डयेत्' ॥

(ना. स्मृ. १६. ७–१४.)

इति। यस्तु पश्चात्[3]प्रवृत्तस्यापराधाभावो[4] बृहस्पतिना दर्शितः–

'आकृष्टस्तु समाक्रोशन् ताडितः प्रतिताडयन्।
हत्वाऽपराधिनं चैव नाऽपराधी[5] भवेन्नरः' ॥

इति। योऽपि[6] पश्चात्प्रवृत्तस्य दण्डः कात्यायनेन दर्शितः–

'अभीषणेन दण्डेन प्रहरेद्यस्तु मानवः।
पूर्वं वा पीडितो वाऽथ स दण्डयः परिकीर्तितः' ॥

इति। सोऽपि पूर्वप्रवृत्तदण्डादल्पदण्डार्थः। दण्डपारुष्य-सन्देहे[7] निर्णयकारणमाह याज्ञवल्क्यः—

'असाक्षिकहते[8] चिह्नैर्युक्तिभिश्चागमेन च।
द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृतो भयात्' ॥

(या. स्मृ. २. २१२.)

इति। यदा कश्चिद्रहस्यनेनाहं ताडितः इति राज्ञे निवेदयति तदा चिह्नैस्तद्गात्रगत[9]श्रमादिभिः कारणप्रयोजनप-

१. The text of Narada reads मनुष्येषु for मनुष्याणां. २. Narada text reads अपि for अतः. ३. C. reads एतत्° for पश्चात्. ४. B. reads °प्रवृत्तस्यापराभवो, and C. °प्रवृत्तस्य पराभवो for °प्रवृत्तस्यापराधाभावो. ५. C. wrongly reads मापराध्यो for नापराधी. ६. B. and C. omit– योपि पश्चात्प्रवृत्तस्य दण्डः कात्यायनेन दर्शितः—

'अभीषणेन दण्डेन प्रहरेद्यस्तु मानवः।
पूर्वं वा पीडितो वाथ स दण्डयः परिकीर्तितः'।

७. B. originally reads °संदेहनिर्णयकरणं for संदेहे निर्णयकारणम्. ८. C. wrongly reads °रजे for °हते. ९. B. reads °गतैः for °गत°. B. reads °चिन्हैः for °श्रमादिभिः; while C. wrongly reads °गतेश्रियमभि कारण्य° for °गतश्रमादिभिः कारण°.

र्यालोचनरूपाभिर्युक्तिभिः आगमेन जनप्रवादेन च शब्दा-दिव्येन च कूटचिह्नकरण[1]सम्भावनाभयात् परीक्षा कार्येत्यर्थः[2] । राजशासन[3]द्रव्यविशेषेण दण्डविशेषमाह स एव—

'[4]भस्म-पङ्क-रजःस्पर्शे दण्डो दशपणः स्मृतः ।
अमेध्य-पार्ष्णि-निष्ठ्यूत[5]स्पर्शने द्विगुणः स्मृ[6]तः ॥
स[7]मेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च ।
हीनेष्वर्धदमो मोह-मदादिभिरदण्डनम्' ॥

( या. स्मृ. २. २१३–२१४. )

इति । अमेध्यशब्देन[8] श्लेष्म-नख-कर्णादिदूषिका-शुक्रोच्छिष्टादिकं गृह्यते * । पुरीषादिस्पर्शे कात्यायनः—

'छर्दि-मूत्र-पुरीषाद्यैः पादादौ[9] च चतुर्गुणः ।
षड्गुणः कायमध्ये तु मूर्ध्नि त्वष्टगुणः[10] स्मृतः' ॥

---

* पार्ष्णिः पादस्य पश्चिमो भागः । निष्ठ्यूतं मुखनिःसारितं जलम् । तैः स्पर्शने ततः पूर्वात् दशपणाद्द्विगुणो विंशतिपणो दण्डो वेदितव्यः ।

---

१. B. reads °कारण° for करण°. २. B. reads परीक्षां कारयेत् for परीक्षा कार्या. ३. B. reads साधन° for राजशासन°. ४. C. reads समे and D. न्यूने for भस्म°. ५. D. reads °केशादि° for °निष्ठ्यूत°. ६. C. D. read ततः for स्मृतः. ७. C. and D. read समेष्वेव for समेष्वेवं. ८. B. reads. अश्रुश्लेष्मनखकर्णकेशविड्दूषिकाभुक्तोच्छिष्टादिकं, and C. अस्नुश्लेष्मणः सकर्णानिदूषका भुक्तोच्छिष्टादिकं, for श्लेष्मनखकर्णादिदूषिकाशुक्रोच्छिष्टादिकं. ९. B. reads originally आपाद्यः स चतुर्गुणम् and in margin पादाद्यैश्च चतुर्गुणम् while C. कार्यापार्श्वा चतुर्गुणम् for पादादौ च चतुर्गुणः. १०. C. reads °गुणं स्मृतम् for °गुणः स्मृतः.

इति। आदिशब्देन वसाशुक्रासृङ्मज्जानो गृह्यन्ते †।
ताडनार्थं हस्तोद्यमने ताडने च दण्डमाह स एव—

‘उद्गूरणे तु हस्तस्य कार्यो द्वादशको दमः।
स एव द्विगुणः प्रोक्तः पातनेषु स्वजातिषु’॥

इति। याज्ञवल्क्योऽपि—

‘उद्गूर्णे हस्तपादे तु दश-विंशतिकौ दमौ।
परस्परं तु सर्वेषां शस्त्रे मध्यमसाहसः’॥

( या. स्मृ. २. २१६. )

इति। हस्ते पादे वा ताडनार्थमुद्यते सति यथाक्रमं दश-विंशतिपणकौ दमौ। परस्परवधार्थं शस्त्रे उद्यते सति सर्वेषां वर्णानां मध्यमसाहसो दण्ड इत्यर्थः। काष्ठादिभिस्ताडने स एव—

---

† एवंभूतः पूर्वोक्तो दण्डः सवर्णविषये द्रष्टव्यः। परभार्यासु चाविशेषेण। तथोत्तमेषु स्वापेक्षयाऽधिकश्रुत-वृत्तेषु पूर्वोक्ताद्दशपणात् विंशतिपणाच्च दण्डात् द्विगुणो दण्डो वेदितव्यः। हीनेषु स्वापेक्षया न्यूनवृत्त-श्रुतादिषु पूर्वोक्तस्यार्धो दमः पञ्चपणो दशपणश्च वेदितव्यः। मोहश्चित्तवैकल्यम्। मदो मद्यपानजन्योऽवस्थाविशेषः। आदिग्रहणात् ग्रहावेशादिकम्। एतैर्युक्तेन भस्मादिस्पर्शने कृतेऽपि दण्डो न कर्तव्य इति भावः।

---

१. B. reads वसाशुक्रमज्जानो for वसा-शुक्रा-ऽसृङ्-मज्जानो. २. A. and D. omit स एव द्विगुणः प्रोक्तः पातनेषु स्वजातिषु। याज्ञवल्क्योपि—उद्गूर्णे हस्तपादे तु दश विंशतिकौ दमौ।. ३. B. in margin reads °विंशतिकः क्रमात्. ४. B. reads शस्त्रमध्यम° for शस्त्रे मध्यम°, and C. शास्ता मध्यमसाहसम् for शस्त्रे मध्यमसाहसः. ५. C. reads शुध्यते for उद्यते. ६. B. C. read अवधार्थं for वधार्थं. ७. B. reads शस्त्र उद्यते; while C. wrongly reads अर्थशास्त्रे उच्यते for शस्त्रे उद्यते.

'शोणितेन विना दुःखं कुर्वन् काष्ठादिभिर्नरः ।
द्वात्रिंशतं पणान्[१] दण्ड्यो द्विगुणं दर्शनेऽसृजः' ॥
( या. स्मृ. २. २१८. )

इति । त्वगादि[२]भेदे दण्डमाह[३] मनुः—

'त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः ।
मांसच्छेदे[४] शतं[५] निष्कान् प्रवास्यस्त्वस्थिभेदकः'* ॥
( म. स्मृ. ८. २८४. )

इति । पदाद्याकर्षणादौ याज्ञवल्क्यः—

पाद-केशांशुक[६]-करोल्लुञ्चनेषु[७] पणान् दश ।
पिण्डा[८]कर्षांशुकावेष्टपादाध्यासे† शतं दमः ॥
कर-पाद-दतो[९] भङ्गे छेदने कर्ण-नासयोः ।
मध्यो दण्डो[१०] व्रणोद्भेदे मृतकल्पहते तथा ॥

* चर्ममात्रभेदकर्ता समानजातिः । न तु शूद्रः । ब्राह्मणस्य दण्डलाघवम् । पणशतं दण्ड्यः । एवमेव रक्तोत्पादकोऽपि शतमेव । मांसभेदी षण्निष्कान् दण्ड्यः । अस्थिभेदकस्तु देशान्निर्वास्यः । एतत्सर्वं समानजातीयानामेव ।

† पीडा च कर्षश्च अंशुकावेष्टश्च पादाध्यासश्च पीडाकर्षांशुकावेष्टपादाध्यासम् । तस्मिन् समुच्चिते सति शतं दण्ड्यः इति व्याख्येयम् ।

१. B. and C. read पणं for पणान्. २. C. reads अंगादि° for त्वगादि°. ३. B. C. omit दण्डमाह. ४. B. reads °भेत्ता and C. °भेदः. ५. B. originally reads षण्निष्कान् and C. स वै निष्कान्; while the text of Manu reads मांसभेत्ता तु षण्निष्कान् for मांसच्छेदे शतं निष्कान्. ६. D. °केशादिषु for °केशांशुक°. ७. B. originally, and C. D. read °कराकर्षणे तु for °करोल्लुञ्चनेषु. ८. B. in margin, and D. read पीडा° for पिण्डा°. ९. D. reads °दन्त° for °दतो. १०. B. C. read मध्यदण्डो for मध्यो दण्डः.

चेष्टा-भोजनवाग्रोधे[1] नेत्रादिप्रतिभेदने ।
कंधरा-बाहु-सक्थ्नां[2] च भङ्गे मध्यमसाहसः ॥
एकं घ्नतां बहूनां च यथोक्ताद्द्विगुणो दमः' ।

( या. स्मृ. २. २१७–२२१. )

इति । अवमत्य[3] केशं गृहीत्वा यो झटित्याकर्षति असौ दशपणं दण्ड्यः स्यात् । यः[4] पुनरंशुकेनावेष्ट्य गाढमापीड्याऽऽकृष्य पादेन घट्टयति[5] असौ शतपणान्[6] दण्ड्यः । कर-पाददन्तानां प्रत्येकं भङ्गे कर्ण-नासिकयोश्च च्छेदने मृतकल्पहते च मध्यमसाहसो दण्डः§ । गमन-भोजन-भाषणनिरोधे[7] नेत्रप्रतिभेदने ग्रीवा-हस्त-व्रणभङ्गे मध्यमसाहसो दण्डः । मिलित्वैकस्याङ्गभङ्गं कुर्वतां बहूनां एकस्यापराधे[8] यो दण्ड उक्तः तत्र तस्माद्द्विगुणो दण्डः प्रत्येकं वेदितव्य इत्यर्थः‡ । कात्यायनोऽपि—

---

§ अनुबन्धादिना विषयस्य साम्यमत्रापादनीयम् ।

‡ अतिक्रूरत्वात्तेषां प्रातिलोम्यानुलोम्यापराधयोरप्येतस्यैव सवर्णविषयेऽभिहितस्य दण्डजातस्य वाक्पारुष्योक्तक्रमेण हानिं वृद्धिं च कल्पयेत्—

'वाक्पारुष्ये य एवोक्तः प्रातिलोम्यानुलोमतः ।
स एव दण्डपारुष्ये दाप्यो राज्ञा यथाक्रमम्' ॥

इति स्मरणात् ।

---

१. C. reads वेश्याभोजनवातोये for चेष्टा-भोजन-वाग्रोधे. २. B. originally reads कर्ण-नास-स्कंध-बाहु° and D. ग्रीवादिव्रणभंगे च दण्डो for कंधरा-बाहु-सक्थ्नां च भङ्गे. and C. कंधराबाहुसक्तां च दण्डो for कंधरा-बाहु-सक्थ्ना च भङ्गे. ३. B. reads पाद-केश-वस्त्र-करणानामन्यतमं for अवमत्य केशं; while D. wrongly reads मत्यं तसं. ४. C. omits यः. ५. B. C. read चार्ढयति for घट्टयति. ६. B. C. read शतपणं for शतपणान्. ७. C. reads °भाषणाविधे° for° भाषणनिरोधे. ८. B. reads यस्मिन् for एकस्य; while C. यत्किंचन for एकस्य.

'कर्णोष्ठ-घ्राण-पादादिजिह्वा-नासा-करस्य च ।
छेदने चोत्तमो दण्डो भेदने मध्यमो भृगुः ॥
मनुष्याणां पशूनां च दुःखाय प्रहृते[1] सति ।
यथा यथा भवेद्दुःखं[2] दण्डं कुर्यात्तथा तथा' ॥

इति । प्रातिलोम्येन[3] प्रहारे दण्डमाह याज्ञवल्क्यः—

'विप्रपीडाकरं[4] छेद्यमङ्गमब्राह्मणस्य तु ।
उद्गूर्णे प्रथमो दण्डः संस्पर्शे तु तदर्धिकः[5]' ॥
(या. स्मृ. २. २१९.)

इति । ब्राह्मणपीडाकरमब्राह्मणस्य क्षत्रियादेरङ्ग-करचर[6]णादिकं छेत्तव्यम् । ब्राह्मणग्रहणमुत्तमवर्णोपलक्षणार्थम्** । अत-एव मनुः—

'येन केनचिदङ्गेन[7] हिंस्याच्चेच्छ्रेष्ठमन्त्यजः[8]
छेत्तव्यं तत्तदेवास्य[9] तन्मनोरनुशासनम्' ॥
(म. स्मृ. ८. २७९.)

---

** तेन क्षत्रिय–वैश्ययोरपि पीडां कुर्वतः शूद्रस्य अङ्गच्छेदनमेव । अग्रिममनुवाक्येन द्विजातिमात्रस्यापराधे शूद्रस्य अंगच्छेदविधानात् ब्राह्मणस्य क्षत्रिय–वैश्य–शूद्रापराधे, क्षत्रियस्य वैश्य–शूद्रापराधे, वैश्यस्य शूद्रापराधे अयमेव येनाङ्गेन उत्तमवर्णस्य पीडां करोति तदङ्गच्छेदनरूपो दण्डः समान एव । तुल्यन्यायत्वात् इति तात्पर्यम् ।

---

१. B. and C. read प्रहृते for प्रहृते. २. B. reads महादुःखं, and C. महद्दुःखं for भवेद्दुःखं. ३. B. reads प्रातिलोम्यापराधे, and C. प्रातिलोम्यप्रकारे for प्रातिलोम्येन प्रहारे. ४. C. reads विप्रपीडाकरच्छेद्यम् for विप्रपीडाकरं छेद्यम्. ५. B. and C. read तदर्धकं for तदधिकः; while D. तदर्धकः. ६. C. omits °आदिकं छेत्तव्यम् । ब्राह्मणग्रहणम्. ७. C. reads अंशेन for अङ्गेन. ८. B, C. and D. read °च्छ्रेयांसम् for °चेच्छ्रेष्ठम्. ९. C. omits तत्.

इति । उद्गूर्णे वधार्थं[1]मुद्यते शस्त्रादिके प्रथमसाहसो वेदितव्यः । शूद्रस्य तत्रापि च्छेदनमेव हस्तादेः । तदाह मनुः—

‘ पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति ।
पादेन[2] प्रहरन् कोपात् पादच्छेदनमर्हति ’ ॥
( म. स्मृ. ८. २८०. )

इति । उद्गूरणार्थं शस्त्रादिसंस्पर्शे[3] प्रथमसाहसादर्धदण्डो वेदितव्यः । भस्मादिस्पर्शने[4] तु पुनः क्षत्रिय-वैश्ययोः प्रातिलोम्यापवादेषु द्विगुणो दमः[5] । यथाह याज्ञवल्क्यः—

‘ प्रातिलोम्यापवादेषु द्विगुणत्रिगुणा दमाः ।
वर्णानामानुलोम्येन तस्मादर्धार्धहानितः’ ।
( या. स्मृ. २. २०७. )

इति वाक्पारुष्योक्तन्यायेन दण्डः कल्पनीयः । कात्यायनः—

‘ वाक्पारुष्ये यथैवोक्तः[6] प्र[7]तिलोमानुलोमतः ।
त[8]थैव दण्डपारुष्ये पा[9]त्यो दण्डो यथाक्रमम् ’ ॥

इति त[10]त्रापि शू[11]द्रविषये विशेषमाह मनुः—

‘ अवनिष्ठीवतो दर्पात् द्वावोष्ठौ छेदयेन्नृपः ।
अवमूत्रयतो मेढ्रमव[12]शार्धयतो गुदम् ॥

---

१. C. reads च वार्थं for वधार्थं°. २. C. and D. omit the following:—
पादेन प्रहरन्कोपात्पादच्छेदनमर्हति ।.

३. B. reads शस्त्रादिदर्शने and C. शस्त्रादिना for शस्त्रादिसंस्पर्शे. ४. C. reads तस्मात् हनिस्पर्शने for भस्मादिस्पर्शने. ५. B. C. read द्विगुणा दमाः for द्विगुणो दमः. ६. B. C. read य एवोक्तः. for यथैवोक्तः. ७. C. reads प्राति° for प्रति°. ८. B. reads स एव for तथैव. while C. त एव for तथैव. ९. B. C. read दाप्यो दण्डो for पात्यो दण्डो. १०. B. originally reads अत्रापि; while C. omits this. ११. B. and C. read शूद्रस्य अंगच्छेद एव तदाह for शूद्रविषयेविशेषमाह. १२. D. reads पुरीषकरणे for अवशार्धयतो.

केशेषु गृह्णतो हस्तौ छेदयेदविचारयन् ।
पादयोर्दाढिकायां च ग्रीवायां वृषणेषु च ॥
सहासनमभिप्रेप्सुरुत्कृष्टस्याऽपकृष्टजः ।
कट्यां कृताङ्को निर्वास्यः स्फिचं वाऽस्यावकर्तयेत्' * ॥

(म. स्मृ. ८. २८१–२८३.)

इति । अङ्गच्छेदनादौ विशेषमाह कात्यायनः—
'देहेन्द्रियविनाशे तु यदा दण्डं प्रकल्पयेत् ।
तदा तुष्टिकरं देयं समुत्थानं च पण्डितैः' ॥

इति । तुष्टिकरं व्रणतुष्टिकरम् । समुत्थानं व्रणारोपणम् । तन्निमित्तकश्च व्ययो व्रणगुरुत्वानुसारेण पण्डितैरौषधार्थं व्ययं च कल्पितमानं व्रणारोपणं देयम् ।

* अत्रायमभिसन्धिः—ओष्ठच्छेदनादि स्फिचोऽवकर्तनान्तोऽयं दण्डः दर्पेणावमानयत एव । न पुनः प्रमादादिना निष्ठीवनादि कुर्वतः । तथा शूद्रविषय एवाऽयं दण्डः । द्विजातिष्वपि उत्तमवर्णविषयः । तेन ब्राह्मणस्य क्षत्रिय–वैश्यनिष्ठीवने, क्षत्रियस्य वैश्यनिष्ठीवने च नास्य ओष्ठच्छेदनादिरूपस्य दण्डस्य प्रसक्तिरिति भावः । तप्तलोहकृतचिह्नापदेशो निर्वासनीयः । स्फिक् कटिभागस्थितो मांसपिण्डः तं अवकर्तयेत् यथा न म्रियेत तथा छेदयेत् । सर्वमप्यवयवच्छेदनं यथा मरणप्रयोजकं न भवेत् तथा विधेयमिति निष्कर्षः ।

१. B. reads नासिकायां originally, and नालिकायां, दाढिकायां in margin; while C. reads नालिकायां for नासिकायां. २. C. स्फिकं and D. स्फिचौ for स्फिचं. ३. B. C. and D. read वाऽस्य निकृन्तयेत् for वा स्यावकर्तयेत्. ४. B. C. read यथा for यदा. ५. B. C. read तथा for तदा. ६. C. wrongly reads पुष्टिकरं for तुष्टिकरम्. ७. C. reads व्रणरोपणं for व्रणारोपणं. ८. B. C. read पथ्यार्थं for व्ययार्थं. ९. B. reads कल्पित भाव्रणरोपणं, and C. कल्पितमाज्यारोपणं for कल्पितमानं व्रणारोपणं.

'समुत्थानं व्ययं चासौ दद्यादाव्रणरोपणम्' ।

इति तेनैवोक्तत्वात् । बृहस्पतिरपि—

'अङ्गावपीडने चैव छेदने पीडने तथा ।
समुत्थानव्ययं दाप्यः कलहापहृतं च यत्' ॥

इति । याज्ञवल्क्योऽपि—

'कलहापहृतं देयं दण्डश्च द्विगुणस्तथा ॥
दुःखमुत्पादयेद्यस्तु स समुत्थानकं व्ययम् ।
दाप्यो दण्डं च यो यस्मिन् कलहे समुदाहृतः' ॥

( या. स्मृ. २. २२१–२२२. )

इति । ग्राम्यपशुपीडायां दण्डमाह विष्णुः—

'ग्राम्यपशुघाते कार्षापणं दण्ड्यः । पशुस्वामिने तु तन्मूल्यं दद्यात्' ।

इति । मूल्यदानं तु मृतपशुविषयम् । मरणाभावे तु समुत्थानव्ययं दद्यात् । तथा च स एव—

'सर्वे च पुरुषपीडाकराः समुत्थानव्ययं दाप्या ग्राम्यपशुपीडाकराश्च' ।

---

१. C. reads समुत्थान व्ययं for समुत्थानं व्ययं. २. C. reads वासौ for चासौ. ३. B. and C. read °रोपणात् for °रोपणम्. ४. C. reads अंसावपीडने for अङ्गावपीडने. ५. B. C. and D. read भेदने for पीडने. ६. B. reads समुत्थानं व्ययं for समुत्थानव्ययं. ७. B. C. read दाप्यं for दाप्यः. ८. B. and C. read कलहेऽपहृतं for कलहापहृतं. ९. B. originally reads समुत्थानजं for समुत्थानकं. १०. B. C. read °पश्वभिद्रोहे for °पशुपीडायां. ११. B. C. read °घाती for °घाते. १२. B. in margin reads तदुत्थान°. १३. B. in margin reads दद्युः for दाप्याः.

इति । प्राणिघातनिमित्तको दण्डः क्वचिदशक्य[1]प्रतिकार-विषये नास्तीत्याह मनुः—

'छि[2]न्ननास्ये भग्नयुगे तिर्यक्प्रतिमुखागते ।
अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च ॥
छे[3]दने चैव यन्त्राणां योक्त्र-रश्म्योस्तथैव च ।
आक्रन्दे[4] चाप्यपैहीति [5]न दण्डं मनुरब्रवीत् '* ॥
( म. स्मृ. ८. २९१.–२९२. )

इति । शक्यप्रति[6]कारोपेक्षकस्य दण्डमाह स एव—

'यत्रापवर्तते युग्यं वैगुण्यात् [7]प्राजकस्य तु ।
तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमम्' ॥
( म. स्मृ. ८. २९३. )

* नासायां भवं नास्यम् । शरीरावयवत्वाद्यत् । सा चेह बलीवर्द-नासासम्बन्धिनी रज्जुः । छिन्ननास्यरज्जौ बलीवर्दादिके, भग्ने युगाख्ये काष्ठे, रथादौ भूमिवैषम्यादिना तिरश्चीनं वा गते, तथा चक्रान्तःप्रविष्टाक्षकाष्ठभङ्गे, यन्त्राणां चर्मबन्धनानां छेदने, योक्त्रस्य पशुग्रीवारज्जोः रश्मेः प्रहरणस्य च छेदने, अपसरापसरेत्युच्चैः शब्दे सारथ्यादिना कृते च यानेन प्राणिहिंसा–द्रव्यनाशयोः कृतयोः सारथ्यादेर्दण्डो नास्तीति मनुराह ।

---

१. B. in margin and C. read अन्यत्र for अशक्य°. २. B. originally reads छिन्ने नष्टे युगे भग्ने and in margin छिन्ने नास्ये युगे भग्ने, C. छिन्ने नस्ये युगे भग्ने; while D. like B. originally, for छिन्ननास्ये भग्नयुगे. ३. B. C. and D. read भेदने for छेदने, while C. reads छेदनेनैव गात्राणां for छेदने चैव यन्त्राणां. ४. C. reads वा for च. ५. B. reads न दण्डभाक्; while C. तम-ब्रवीत् for न दण्डं. ६. B. C. read °प्रतीकारे तूपेक्षकस्य for °प्रतिकारो-पेक्षकस्य. ७. B. C. read ब्राजकस्य for प्राजकस्य.

इति । प्राजकः[1] शकटादिनेता । वैगुण्यं नाम वैकल्यं[2] वेतनलाघवार्थं स्वाम्यनुमतम् । यत्र समर्थप्राजक[3]दोषेण प्राणिहिंसा तत्र न स्वामिनो दण्डः किन्तु प्राजकस्यैवे[4]त्याह स एव—

'प्राजकश्चेद्[5]भवेदाप्तः प्राजको[6] दण्डमर्हति' ।

(म. स्मृ. ८. २९४.)

इति । आप्तः समर्थ इत्यर्थः । पशुभिद्रोहे दण्डमाह याज्ञवल्क्यः—

'दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा ।
दण्डः क्षुद्रपशूनां तु द्विपणप्रभृतिः क्रमात् ॥
लिङ्गस्य छेदने मृत्यौ मध्यमो मूल्यमेव च ।
महापशूनामेतेषु स्थानेषु द्विगुणो दमः' ॥

(या. स्मृ. २. २२५–२२६.)

इति । क्षुद्रपशूनामजाविप्रभृतीनां दुः[7]खोत्पादने शोणितो[8]त्पादने । शाखाशब्देन शृङ्गादिकं लक्ष्यते । अङ्गानि करचरणादीनि । तेषां छेदे[9] वा यथाक्रमं द्विपण[10]प्रभृतिर्दण्डः ।

१. B. C. read व्राजकः for प्राजकः. २. B. and C. read अङ्ग° before वैकल्यं, while in margin B. reads गोवैकल्यं for अङ्गवैकल्यं. ३. B. C. read व्राजक° for प्राजक°. ४. B. and C. read व्राजकस्य for प्राजकस्य. ५. B. and C. read व्राजकश्चेत् for प्राजकश्चेत्. ६. B. and C. read व्राजकः for प्राजकः. ७. B. reads दुःखे ताडनेन before दुःखोत्पादने. ८. B. reads शोणितोत्पादे for शोणितोत्पादने. ९. B. reads छेदने for छेदे. १०. B. and C. read द्विगुण° for द्विपण°.

द्विपण-चतुष्पण-षट्पणा-ऽष्टपण[1] इत्यादिरूपः[2] । तेषां लिङ्गच्छेदने मृत्युकरणे[3] वा[4] मध्यमसाहसो दण्डः मूल्यदानं च । महापशूनां गो-गज[5]-वाजि[6]प्रभृतीनामेतेषु स्थानेषु पूर्वोक्त[7]दण्डाद्द्विगुणदण्डो वेदितव्य इत्यर्थः । कार्षापणशतदण्ड[8] इत्यनुवृत्तौ विष्णुरपि—

'पशूनां पुंस्त्वोपघातकारी तथा गजाश्वोष्ट्र-गो-घाते[9]ऽप्येकपादः । मांसविक्रयी च ग्राम्यपशुघाती च कार्षापणम्[10] । पशु[11]स्वामिनश्च पशु[12]मूल्यं दद्यात् । आरण्यपशुघाती पञ्चाशतं[13] कार्षापणान् । पक्षिघाती मत्स्यघाती च दश कार्षापणान् । कीटोपघाती कार्षापणम्' ।

इति । कात्यायनोऽपि—

१. B. and C. read अष्टापण° for अष्टपण°. २. B. and C. read इत्येवं-रूपः for इत्यादिरूपः. ३. B. and C. read मरणे for मृत्युकरणे. ४. B. and C. substitute च for वा. ५. B. omits °गज°. ६. C. reads °गवादि° for °वाजि.° ७. B. and C. read पूर्वोक्ताद्दण्डात् for पूर्वोक्तदण्डात्. ८. B. and C. read कार्षापणशतं दण्ड इति for कार्षापणशतदण्ड इति. ९. B. orignally reads °घातकारी एकपादः and in margin °घातीस्वेककरपादः; while C. °घातिष्वेकपादः for °घातेऽप्येकपादः. १०. B. and C. read कार्षापणशतं दण्ड्यः for कार्षापणम्. ११. A. and D. omit पशुस्वामिनश्च पशुमूल्यं दद्यात् । आरण्यपशुघाती पंचाशतं कार्षापणान् । पक्षिघाती मत्स्यघाती च दश कार्षापणान्' । कीटोपघाती कार्षापणम्' इति ।. १२. C. omits पशु°. १३. C. omits पंचाशतं.

‘[1]द्विपणो द्वादशपणो [2]वधे तु मृग-पक्षिणाम्।
सर्प-मार्जार-नकुल-श्व-सूकरवधे नृणाम्’॥

इति। मनुरपि—

‘[3]गोकुमारी-देवपशून[4]क्षमं वृषभं तथा।
[5]वाहयन् साहसं पूर्वं प्राप्नुयादुत्तमं [6]वधे* ॥
मनुष्यमारणे क्षिप्रं चौरवत् किल्बिषं भवेत्।
प्राणभृत्सु [7]महत्स्वर्धं गो-गजोष्ट्र-[8]हयादिषु॥
क्षुद्रकाणां पशूनां [9]तु [10]हिंसायां [11]द्विशतो दमः।
पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु॥

---

* नास्त्ययं श्लोकः मुद्रितमनुस्मृतिपुस्तकेषु। अस्मत्सङ्गृहीत प्राचीनतमपुस्तके वर्तते। तत्र तु—
‘गां कुमारीं ग्राम्यपशूनुक्षाणं वाजिनं तथा।
दारयन् साहसं त्वर्धं प्राप्नुयात् घातने समम्’॥
इत्येवं पाठो दृश्यते।

---

१. B. originally reads त्रिपणो; while C. विपणो. २. C. wrongly reads द्वादशपणो वधे उष्ट्रपक्षिणाम् for वधे तु मृगपक्षिणाम्. ३. B. and C. read यः for गो°. ४. C. reads रक्षिणं, and B. उक्षाणं for अक्षमं. ५. B. and C. read वाहयेत् for वाहयन्. ६. C. reads वधं for वधे. ७. B. C. and D. read महत्पूर्वं for महत्स्वर्धं. ८. B. originally reads °खरादिषु for °हयादिषु. ९. B. C. and D. read च for तु. १०. B. reads हिंसने and C. D. read हिंसतो for हिंसायां. ११. B. in margin reads द्वादशो; while C. द्वादशतो and D. दशतो for द्विशतो.

गर्दभाजाविकानां तु[1] दण्डः स्यात्पञ्चमाषिकः[2] ।
माषिकस्तु[3] भवेद्दण्डः श्व-सूकरनिपातने[4]† ॥

(म. स्मृ. ८. २१६–२१८.)

इति । राज्ञो दण्डदानवत् स्वामिनः प्रतिरूपकं मूल्यं वा दद्यादित्याह कात्यायनः—

'प्रमापणे[5] प्राणभृतां दद्यात् तत्प्रतिरूपकम् ।
तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः' ॥

इति । स्थावरप्राणिपीडाकारिणां दण्डमाह मनुः—

'वनस्पतीनां सर्वेषामुपभोगो यथायथा[6] ।
तथातथा दमः कार्यो हिंसायामिति धारणा' ॥

(म. स्मृ. ८. २८५. )

† गोकुमारी वत्सतरी, देवपशुः देवोद्देशेनोत्सृष्टा वृषभादयः, अक्षमं अशक्तं वृषभं वाहयन् प्रथमसाहसरूपं दण्डं, वधे तु उत्तमसाहसं प्राप्नुयात् । मनुष्यमारणे प्राजकस्य अनवधानात् यानेन कृते शीघ्रमेव चौरदण्डोत्तमसाहसं भवेत् । न तु मारणरूपो दण्डः । 'प्राणभृत्सु महत्स्वर्धम्' इति स्मरणात् गोगजादिषु महत्सु प्राणिषु मारितेषु उत्तमसाहस्यार्धं पञ्चशतपणो दण्डो भवेत् । क्षुद्रकाणां पशूनां जातितो विशेषापदिष्टेतरेषां वनचरादीनां वयसा च किशोरादीनां मारणे द्विशतो दण्डः स्यात् । शुभेषु रुरुपृषतादिषु, पक्षिषु च शुक-हंस-सारसादिषु हतेषु पञ्चाशद्दण्डो भवेत् । गर्दभ-छागैडकादीनां पुनर्मारणे पञ्चरूप्यमाषकपरिमाणो दण्डः स्यात् । न चात्र हैरण्यमाषग्रहणम् । उत्तरोत्तरलघुदण्डाभिधानात् । श्व-सूकरमारणेषु रौप्यमाषपरिमाणो दण्डः भवेत् ।

१. B. C. and D. read च for तु. २. B. C. and D. °माषकः for °माषिकः. ३. B. C. and D. read माषकः for माषिकः. ४. B. reads °विपातने for °निपातने. ५. C. reads प्रमापणं for प्रमापणे. ६. B. originally reads तथा.

इति। फल-पुष्पोपभोगतारतम्यानुरोधेनोत्तम-मध्यमादयो दण्डाः कल्पनीयाः। तथा च दण्ड्य[1] इत्यनुवृत्तौ विष्णुः—

'फलोपभोग[2]द्रुमच्छेदी[3] तूत्तमं साहसम्। पुष्पोपभोग[4]द्रुम-[5]च्छेदी मध्यमं साहसम्। वल्लीगुल्मलता[6]च्छेदी कार्षापणशतम्। तृणच्छेद्ये[7]कम्। सर्वे च तत्स्वामि[8]नां तदुत्पात्तम्'।

इति। फ[9]ल-पुष्पोपभोगद्रुमच्छेदकादयः छिन्न[10]द्रुमस्वामिनां तदुत्पत्ति[11] पुनः प्रतिरोपित[12]द्रुमफलादिभोगकालपर्यन्तं दाप्या इति शेषः। अत्र विशेषमाह याज्ञवल्क्यः—

'प्ररोहिशाखिनां शाखास्कन्ध[13]सर्वविदारणे।
उपजीव्यद्रुमाणां च विं[14]शतेर्द्विगुणो दमः‡'॥

‡ प्ररोहिशाखिनामिति। प्ररोहा अङ्कुराः तद्वन्त्यः शाखाः प्ररोहिण्यः याः शाखाः छिन्नाः पुनरुप्ताः प्रतिकाण्डं प्ररोहन्ति ता शाखा येषां वटादीनामिति व्याख्येयम्। यतो मूलशाखाः निर्गच्छन्ति स स्कन्धः।

---

१. B. reads दण्ड for दण्ड्य. २. D. reads° योग° for °भोग°. ३. B. omits °द्रुमच्छेदी; C. omits तु. ४. D. reads °योग°; while C. omits पुष्पोपभोगद्रुमच्छेदी मध्यमसाहसम्। वल्लीगुल्मलताच्छेदी कार्षापणशतम्। तृणच्छेद्येकम्। सर्वे च तत्स्वामिनां तदुत्पत्तिम् इति। फल°. ५. B. omits °द्रुमच्छेदी. ६. B. omits °गुल्म-लताच्छेदी. ७. एकैकम् for एकम्. ८. reads स्वामिना for स्वामिनाम्. ९. B. reads सर्वे फलो° for फलपुष्पो°. १०. B. adds तत्स्वामिनां before छिन्नद्रुम°; while C. reads स्वतः स्वामिनां before छिन्नद्रुम°; and for छिन्नद्रुमस्वामिनां, B. and C. both read छिन्नद्रुमादिस्वामिनाम्. ११. B. and C. respectively read फलपुष्पोपभोगद्रुमोत्पत्ति and फलपुष्पोपभोगद्रुमादुत्पत्ति after तदुत्पत्ति. १२. B. C. read °द्रुमादि° for °द्रुमफलादि°. १३. B. C. read °पर्व° for °सर्व°. १४. C. reads विंशतोऽर्धगुणो दमः for विंशतेर्द्विगुणो दमः.

चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये ।
जातद्रुमाणां द्विगुणो दमो वृक्षेऽथ विश्रुते ॥[1]
गुल्म-गुच्छ-क्षुप-लता-प्रतानौषधि-वीरुधाम्[2] ।
पूर्वस्मृतादर्धदण्डः स्थानेषूक्तेषु कर्तने ' ॥

( या. स्मृ. २. २२७–२२९. )

इति । प्ररोहिशाखिनां वटादीनां शाखाच्छेदने स्कन्धच्छेदने[3] च यथाक्रमं विंशतिपणाद्दण्डादारभ्य पूर्वस्मात् पूर्वस्मादुत्तर उत्तरो दण्डो द्विगुणः । विंशतिपण-चत्वारिंशत्पणा-ऽशीतिपणा इत्येवंरूपः । [4]अप्ररोहिशाखिनामाम्रादीनामुप[5]जीव्यद्रुमाणां पूर्वोक्तेषु स्थानेषु चैत्यादिस्थानेषूत्पन्नानां वृक्षाणां शाखादिच्छेदने [6]अश्वत्थपलाशादीनां शाखादिच्छेदनेऽपि पूर्वोक्ताद्दण्डाद्द्विगुणो दण्डः[7] । [8]गुल्मा मालत्यादयः । गुच्छाः कुरण्टकादयः । क्षुपाः करवीरादयः । लता द्राक्षाऽतिमुक्तादयः । [9]प्रतानाः काण्डप्ररोहै[10]रहिताः । ओषध्यः फलपाकान्ताः शालिप्रभृतयः । वीरुधो गुडूचिप्रभृतयः । एतेषु[11] स्थानेषु विकर्तने पूर्वोक्ताद्दण्डादर्धदण्डो वेदितव्यः । कुड्याभिघाते[12] गृहे कण्टकादिप्रक्षेपणे च दण्डमाह याज्ञवल्क्यः—

---

१. B. reads दण्डः स्यादथ, C. दण्डाद्वृत्तोऽथ, D. दण्डो वृक्षेऽथ, and the text of Yâjñav. दमो वृक्षे च, for दमो वृक्षेऽथ. २. C. reads ओषधीनां च वीरुधाम् for °प्रतानौषधि-वीरुधाम्. ३. B. and C. add समूलछेदने after स्कन्धछेदने च. ४. C. reads आरोहि° for अप्ररोहि.° ५. C. adds तु after आम्रादीनाम्. ६. B. reads विश्रुताश्वत्थ° and C. विच्छित्याऽश्वत्थ°. ७. B. and C. omit दण्डः and read द्विगुणः before it. ८. C. reads गुल्मसात-त्यादयः for गुल्मा मालत्यादयः. ९. C. reads प्रणवाः for प्रतानाः. १०. C. reads °प्ररोहि°. ११. B. reads एतेषां पूर्वोक्तस्थानेषु for एतेषु स्थानेषु. १२. B. and C. read कुड्यादिघाते for कुड्याभिघाते.

'अभिघाते तथा छेदे भेदे कुड्यावपातने ।
पणान् दाप्यः पञ्च दश विंशतिं तद्वयं तथा ॥
दुःखोत्पादि गृहे द्रव्यं क्षिपन् प्राणहरं तथा ।
षोडशाद्यः पणान् दाप्यो द्वितीयो मध्यमं दमम्' ॥
( या. स्मृ. २. २२३–२२४. )

इति । मुद्गरादिना कुड्यस्याभिघाते विदारणे द्वैधीकरणे यथाक्रमं पञ्चपणो दशपणो विंशतिपणश्च दण्डः । अवपातने पुनस्त्रयो दण्डाः समुच्चिताः । कुड्यसंपादनार्थं धनमपि देयम् । परगृहे कण्टकादिप्रक्षेपणे षोडशपणो दण्डः । विषभुजङ्गादिप्रक्षेपणे मध्यमसाहसो दण्ड इत्यर्थः ।

॥ इति दण्डपारुष्यम् ॥

अथ वाक्पारुष्यम् । तस्य लक्षणं नारदेनोक्तम्—
'देश-जाति-कुलादीनामाक्रोश-न्यङ्गसंयुतम् ।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते' ॥
( ना. स्मृ. १९. १. )

इति । कलहप्रिया गौडा इति देशाक्रोशः । अतिलोलुपा ब्राह्मणा इति जात्याक्रोशः । क्रूरचित्ता वैश्वामित्रा इति कुला-

१. D. reads भेदे छेदे for छेदे भेदे. २. D. reads तद्द्वयं, C. तद्वेयं, for तद्वयं. ३. B. originally reads क्षिप्तं. ४. D. reads पणं for पणान्. ५. B. C. D. read मध्यसाहसम् for मध्यमं दमम्. ६. C. reads पुनस्तु यो दण्डः समुचितः for पुनस्त्रयो दण्डाः समुच्चिताः. ७. C. reads बंधनम for धनम्. ८. C. reads च after लक्षणं. ९. B. and C. read क्रूरवित्ता for क्रूरचित्ताः. १०. C. reads वैश्वामित्रकुलाक्रोशः for वैश्वामित्रा इति कुलाक्रोशः

क्रोशः । [१]आक्रोश उच्चैर्भाषणं [२]न्यङ्गमवद्यं तदुभययुक्तं यदुद्वेगजननार्थं वाक्यं तद्वाक्पारुष्यमित्यर्थः । तस्य त्रैविध्यमाह स एव—

'निष्ठुरा-ऽश्लील-तीव्रत्वात्तदपि त्रिविधं स्मृतम् ।
[३]गौरवानुक्रमात्तस्य दण्डोऽप्यत्र क्रमाद्गुरुः ॥
साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंयुतम् ।
पातनीयैरुपक्रोशैस्तीव्रमाहुर्मनीषिणः' ॥
(ना. स्मृ. १५.२–३.)

इति । कात्यायनोऽपि—

'[४]यस्त्वसत्संज्ञितैरङ्गैः [५]परस्याक्षिपति क्वचित् ।
[६]अमूलैर्वाऽथ मूलैर्वा निष्ठुरा वाक् स्मृता बुधैः ॥
न्यग्भावकरणं वाचा क्रोधात्तु कुरुते [७]यदा ।
[८]वृत्तैर्देश-कुलानां वाऽप्यश्लीला सा बुधैः स्मृता ॥
महापातकयोक्त्री च राग-द्वेषकरी च या ।
जातिभ्रंशकरी वाऽथ तीव्रा सा प्रथिता तु [९]वाक्' ।

इति । प्रथम-मध्यमोत्तमभे[१०]देन त्रैविध्यमाह बृहस्पतिः—

'देश-ग्राम-कुलादीनां क्षेपः पापेन योजनम् ।
[११]इष्टं विना तु प्रथमं वाक्पारुष्यं [१२]तदुच्यते ॥

---

१. B. and C. omit आक्रोश उच्चैर्भाषणं. २. C. reads कर्मवद्यं for न्यङ्गमवद्यं. ३. B. C. and D. omit गौरवानुक्रमात्तस्य दण्डोऽप्यत्र क्रमाद्गुरुः. ४. C. reads यात्वसत्° for यस्त्वसत्°. ५. B. reads परमाक्षिपति for परस्याक्षिपति. ६. B. C. read अभूतैर्वाथ भूतैर्वा. for अमूलैर्वाथ मूलैर्वा. ७. B. C. read यथा for यदा. ८. C. reads वृत्तैर्देश for वृत्तैर्देश°. ९. C. reads वा for वाग्. १०. C. reads °भेदैः for °भेदेन. ११. B. and C. read द्रव्यं for इष्टं. १२. B. C. and D. read तयोच्यते for तदुच्यते.

भगिनी-मातृसम्बन्धमुपपातकशंसनम् ।
पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः ॥
अभक्ष्या-ऽपेयकथनं महापातकदूषणम् ।
पारुष्यमुत्तमं प्रोक्तं तीव्रं मर्माभिघट्टनम्' ॥

इति । निष्ठुराक्रोशे दण्डमाह याज्ञवल्क्यः—

'सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम् ।
क्षेपं करोति चेद्दण्ड्यः पणानर्धत्रयोदशान्'* ॥
(या. स्मृ. २. २०४.)

इति । सत्येनासत्येनान्यथास्तोत्रेण न्यूनाङ्गादीनां तर्जनी-तर्जनं यः करोति असावर्धाधिकद्वादशपणं §दण्डनीयः । एतत्स-मेवर्णगुणविषयम् । तथा च बृहस्पतिः—

'समजातिगुणानां तु वाक्पारुष्ये परस्परम् ।
विनयोऽभिहितः शास्त्रे पणानर्धत्रयोदश' ॥

इति । यत्तु मनुवचनम्—

---

* निष्ठुराक्रोशे सवर्णविषये दण्डमाह—सत्यासत्येति । न्यूनाङ्गाः कर-चरणादिविकलाः । न्यूनेन्द्रिया नेत्रश्रोत्रादिरहिताः । रोगिणो दुश्चर्मप्रभृतयः । तेषां सत्येन असत्येन वाऽन्यथास्तोत्रेण च निन्दार्थया स्तुत्या । यत्र नेत्रयुगुलहीन एषोऽन्ध इत्युच्यते तत्सत्यम् । यत्र पुनः चक्षुष्मानेव अन्ध इत्युच्यते तदसत्यम् । यत्र विकृताकृतिरेव दर्शनीय-स्त्वमसि इत्युच्यते तदन्यथास्तोत्रम् ।

§ विज्ञानेश्वरस्तु—अर्धत्रयोदशानित्यनेन अर्धाधिकत्रयोदशपणान् दण्डनीय इति वदति । तत्र अर्धसहिताः त्रयोदश इति व्याख्येयम् ।

---

१. B. reads °सम्बन्धात् for °सम्बन्धं; while C. reads °सम्बन्ध उपपातक° for °सम्बन्धमुपपातक°. २. B. C. read सवर्ण° for समवर्ण-गुण°. ३. B. reads पणाः for पणान्.

'काणं वाऽप्यथ-वा खञ्जमन्यं वाऽपि तथाविधम् ।
तथ्येनापि ब्रुवन् दाप्यो दण्डं[1] कार्षापणावरम्[2]' ॥
(म. स्मृ. ८. २७४.)

इति तदपि दुर्वृत्त[3]विषयम् । मात्राद्याक्षेपकं प्रत्याह मनुः-
'मातरं पितरं जायां भ्रातरं श्वशुरं[4] गुरुम् ।
आक्षारयन् शतं दाप्यः पन्थानं वाऽददद्गुरोः[5]' ॥
(म. स्मृ. ८. २७५.)

इति । एतच्चापराधिषु मात्रादिषु जायायां वा[6] निरपराधायां[7] वेदितव्यम् । स्वस्राद्याक्षेपे[8] दण्डमाह बृहस्पतिः—
'क्षिपन् स्वस्रादिकं दद्यात् पञ्चाशत्पणिकं दमम्' ।

इति । प्रातिलोम्यानुलोम्याभ्यामाक्रोशे दण्डमाह मनुः—
'शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ।
वैश्योऽप्यर्धशतं[9] द्वे वा शूद्रस्तु वधमर्हति† ॥
पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने ।
वैश्ये स्यादर्ध[10]पञ्चाशत् शूद्रे द्वादशको दमः' ॥
(म. स्मृ. ८. २६७-२६८.)

† द्विजस्य चोर इत्याक्षेपरूपं परुषमुक्त्वा क्षत्रियः पणशतं दण्डमर्हति । एवं सार्धशतं द्वे वा शते लाघव-गौरवापेक्षया वैश्यः । शूद्रोऽप्येवं ब्राह्मणाक्रोशे ताडनादिरूपं वधमर्हति । एवं ब्राह्मणोऽपि क्षत्रिय-वैश्य-शूद्राक्रोशे क्रमेण पञ्चाशत् पञ्चविंशतिर्द्वादशपणात्मकं दण्डमर्हति इति भावः ।

१. D. reads दण्ड° for दण्डं. २. C. reads कार्षापणं दश for कार्षापणावरम्. ३. C. reads दुर्वृत्तस्य° for दुर्वृत्त°. ४. Manu text तनयं for श्वशुरं. ५. B. reads चाऽश्वत् for वाऽश्वत्. ६. C. reads च for वा. ७. C. omits निरपराधायां. ८. B. reads स्वस्राद्यधिक्षेपे and C. स्वसाद्यधिक्षेपे for स्वस्राद्याक्षेपे. ९. B. C. and D. read °ऽप्यर्धशतं देयः for °ऽप्यर्धशतं द्वे वा. १०. B. reads स्याच्चार्ध° for स्यादर्ध°.

इति। बृहस्पतिरपि[1]—

'वैश्यस्य क्षत्रियाक्रोशे दण्डनीयः प्रदो भवेत्।
तदर्धं क्षत्रियो वैश्यं क्षिपन् विनयमर्हति॥
शूद्राक्रोशे क्षत्रियस्य पञ्चविंशतिको दमः।
बृहत्त्वे[2] द्विगुणं तत्र शास्त्रविद्भिरुदाहृतम्॥
वैश्यमाक्षारयन्[3] शूद्रो दाप्यः स्यात् प्रथमं दमम्।
क्षत्रियं मध्यमं चैव विप्रमुत्तमसाहसम्'॥

इति। बाह्वादिच्छेदन[4]-निष्ठुराभिभाषणे याज्ञवल्क्यः—

'बाहु-ग्रीवा-नेत्र-सक्थिविनाशे वाचिके[5] दमः।
शत्यस्तदर्धिकः[6][7] पाद-नासा-कर्ण-करादिषु॥
अशक्तस्तु वदन्नेवं दण्डनीयः पणान् दश।
तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु'॥

(या. स्मृ. २. २०८–२०९.)

इति। बाह्वादीनां विनाशे तव बाहू[8] छिनद्मीत्येवं वाचा प्रतिपादिते प्रत्येकं शतपरिमितो दण्डः। पाद-नासादिषु तु

---

१. C. and D. omit बृहस्पतिरपि—

वैश्यस्य क्षत्रियाक्रोशे दण्डनीयः प्रदो भवेत्।
तदर्धं क्षत्रियो वैश्यं क्षिपन्विनयमर्हति॥
शूद्राक्रोशे क्षत्रियस्य पञ्चविंशतिको दमः।.

२. B. reads वैश्यस्य चैतत् द्विगुणं; while C. बृहस्यन्नैव द्विगुणं for बृहत्त्वे द्विगुणं तत्र. ३. B. C. read °माक्षारयेत् for °माक्षारयन्. ४. B. adds °विषये after °छेदन°. ५. B. originally and C. read चाधिको for वाचिके. ६. C. reads सत्यः for शत्यः. ७. C. and D. read तदधिकः for तदर्धिकः. ८. B. and C. read बाहुं for बाहू.

वाचिके तदर्धिकः[1] पञ्चाशत्पणादिको[2] दण्डः । अशक्तस्त्वेवं वदन् दश-पणान्[3] दण्डनीयः । शक्तः पुनः क्षीणशक्तिं एवं वदन् शतपणाद्यात्मकं दण्डं दत्वा तस्य क्षेमाय प्रतिभुवं दद्यादित्यर्थः । अश्लीलभाषणे दण्डमाह स एव—

'अभिगन्ताऽस्मि भगिनीं मातरं वा तवेति च[4] ।
शपन्तं[5] दापयेद्राजा पञ्चविंशतिकं दमम्' ॥

(या. स्मृ. २. २०९.)

इति । तीव्राक्रोशे दण्डमाह स एव—

'पतनीयकृते[6] क्षेपे[7] दण्डो मध्यमसाहसः ।
उपपातकयुक्ते तु दाप्यः प्रथमसाहसम्'† ॥

(या. स्मृ. २. २१०.)

इति । मनुरपि—

'पापोपपापवक्तारो[8] महापातकशंसकाः ।
आद्यमध्योत्तमान्[9] दण्डान् दद्युस्त्वेते[10] यथाक्रमम्*' ॥

(म. स्मृ. ८. २६९.)

† तीव्राक्रोशे दण्डमाह—पातित्यहेतुभिर्ब्रह्महत्यादिभिः वर्णिनामाक्षेपे कृते मध्यमसाहसं दण्डः । उपपातकसंयुक्ते पुनः—गोघ्नः त्वमसि इत्येवमादिरूपे क्षेपे प्रथमसाहसं दण्ड्यः ।

* नास्त्ययं श्लोको मुद्रितमनुस्मृतिपुस्तकेषु । अस्मत्संगृहीतगोविन्दराजकृतटीकासहिते लिखितपुस्तके दृश्यते । व्याख्यातश्च तेन ॥ [ मण्डलिकशोधितेऽस्मिन्ग्रन्थे तु नोपलभ्यते । ( R. G. B. ) ].

१. D. reads तदधिकः for तदर्धिकः. २. B. and C. read पञ्चाशत्पणात्मकः; while D. पञ्चाशत्पणाधिकः for पञ्चाशत्पणादिकः. ३. C. reads दशपणं for दश पणान्. ४. B. C. read ह for च. ५. D. reads शतं प्रदापयेत् for शपन्तं दापयेत्. ६. D. reads पतनीये कृते for पतनीयकृते. ७. C. reads क्षेत्रे for क्षेपे. ८. B. and C. read महापापोपवक्तारो for पापोपपापवक्तारो. ९. C. reads अधो° for आद्य°. १०. B. reads °स्ते तु and C. °स्ते ते for °स्त्वेते.

इति। त्रैविद्याद्यधिक्षेपे[1] याज्ञवल्क्यः—

'त्रैविद्य-नृप-देवानां क्षेपे[2] उत्तमसाहसः।
मध्यमो जाति-पूगानां प्रथमो ग्राम-देशयोः'॥

(या. स्मृ. २. २११.)

इति। जातयः ब्राह्मणादयः। पूगाः संघाः। शूद्रमधिकृत्याहतुर्मनु-नारदौ—

'एकजातिर्द्विजातींस्तु वाचा[3] दारुणया क्षिपन्।
जिह्वायाः प्राप्नुयाच्छेदं जघन्य[4]प्रभवो हि सः॥
मध्यमो जाति-पूगानां प्रथमो ग्राम-देशयोः।
नामजातिग्रहं चैषामभिद्रोहेण कुर्वतः॥
निक्षेयोऽयोमयः शंकुर्ज्वलन्[5]नास्ये दशाङ्गुलः'।

(म. स्मृ. ८. २७०–२७१.)

इति। बृहस्पतिरपि—

'धर्मोपदेशं धर्मेण[6] विप्राणामस्य कुर्वतः।
तप्तमासिञ्चयेत्[7]तैलं वक्त्रे श्रोत्रे च पार्थिवः'॥

इति। क्वचिद्वाक्पारुष्य-दण्डापवादमाह स एव—

'सच्छूद्रस्यायमुद्दिष्टो विनयोऽनपराधिनः।
गुणहीनस्य पारुष्ये ब्राह्मणो नापराध्नुयात्'॥

इति।

॥ इति वाक्पारुष्यम्॥

---

१. B. and C. read °द्याक्षेपे for °द्यधिक्षेपे. २. B. originally and D. read दण्ड for क्षेप; while C. दण्डा उत्तमसाहसाः for क्षेप उत्तमसाहसः. ३. C. reads विवदेत् गुणया for वाचा दारुणया. ४. C. reads प्रदात्य° for जघन्य°. ५. B. reads शूलं नाऽस्ये for ज्वलन्नाऽस्ये. ६. B. reads दर्पेण for धर्मेण. ७. D. reads आसेचयत् for आसिंचयेत्.

## अथ स्तेयम् ।

तल्लक्षणमाह मनुः—

'स्यात् साहसं त्वन्वयवत् प्रसभं कर्म यत् कृतम् ।
निरन्वयं भवेत् स्तेयं हृत्वापव्ययते यदि' ॥

(म. स्मृ. ८. ३३२.)

इति । अस्यार्थः-द्रव्यरक्षक-राजाध्यक्षादिसमक्षं बलावष्टम्भेन यत् परद्रव्यापहारादिकं क्रियते तत् साहसम् ।* स्तेयं पुनरसमक्षं वञ्चयित्वा यत् परद्रव्यग्रहणं तदिति । यत्तु राजाऽध्यक्षादिकमाहृत्य न मयेदमपहृतमिति भयान्निह्नुते तदपि स्तेयं भवति । अत एव नारदः—

'उपायैर्विविधैरेषां छलयित्वाऽपकर्षणम् ।
सुप्त-मत्त-प्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः' ॥

(ना. स्मृ. १४. १७.)

इति तदपि क्षुद्रमध्योत्तमद्रव्यापेक्षया त्रिविधं । तदाह स एव—

* सहो बलं तद्भवं साहसमित्युच्यते.

१. C. reads तु त्वयवत् प्रशंसं for त्वन्वयवत् प्रसभं. २. B. reads ध्यक्षादिसमक्षं for ध्यक्षादिकम्. ३. B. in margin and C. read तुलयित्वा for छलयित्वा. ४. A. C. and D. omit from स्तेयमाहुर्मनीषिणः to द्रव्याण्याह हारीतः.

'तदपि त्रिविधं ज्ञेयं द्रव्यापेक्षं मनीषिभिः ।
'क्षुद्र-मध्यम-मुख्यानां [1]द्रव्याणामपहारतः' ॥

( ना. स्मृ. १४. १३. )

इति । क्षुद्र-मध्योत्तमद्रव्याण्याह हारीतः—

मृद्भाण्डा-ऽऽसन-[2]खट्वा-ऽस्थि-[3]तन्तु-चर्म-तृणादि यत् ।
शमीधान्यं कृतान्नं च क्षुद्रं [4]द्रव्यमुदाहृतम् ॥
वासः कौशेयवर्जं तु गोवर्जं पशवस्तथा ।
हिरण्यवर्जं लोहं च [5]मद्य-व्रीहि-[6]यवादिकम् ॥
हिरण्य-रत्न-कौशेय-स्त्री-[7]पुंस-गज-वाजिनः ।
देव-ब्राह्मण-राज्ञां च विज्ञेयं द्रव्यमुत्तमम्' ॥

( ना. स्मृ. १४. १४–१६. )

इति । तस्करज्ञानोपायमाह याज्ञवल्क्यः—

'ग्राहकैर्गृह्यते चोरो [8]लोप्त्रेणाथ पदेन वा ।
पूर्वकर्मापराधी च तथा [9]चाशुद्धवासकः ॥
अन्येऽपि शङ्कया ग्राह्या जाति-नामादि[10]निह्नवैः ।
द्यूत-स्त्री-पानसक्ताश्च शुष्क-भिन्नमुखस्वराः ॥
परद्रव्य-[11]गृहाणां च प्रच्छका गूढचारिणः ।
निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः' ॥

( या. स्मृ. २. २६६–२६८. )

---

१. B. omits द्रव्याणामपहारतः. २. C. reads °श्वञ्चास्ति° for °खट्वास्थि°. ३. B. reads °दारु°; while C. °दातु° for °तन्तु°. ४. B. reads तत्समुदाहृतम्. for द्रव्यमुदाहृतम्. ५. B. and C. read मध्यं for मद्य°. ६. B. reads यवादि च for यवादिकं. ७. B. reads °पुंगो° for °पुंस°, while C. °पुंयो° for पुंस. ८. C. reads लोप्त्रेणा प्रपदेनवा. for लोप्त्रेणाथ पदेन वा. ९. C. reads ऽशुद्धवासन्न: for चाऽशुद्धवासकः. १० D. reads °निह्नवे for °निह्नवैः. ११. C. reads ग्रहाणां for गृहाणाम्.

इति । ग्राहकै राजपुरुषैर्लोप्त्रेणापहृतभाजनादिना चौर्य-[1]चिह्नेन नष्टद्रव्यदेशादारभ्य† चोरपादानुसारेण वा चोरा ग्रहीतव्याः । पूर्वकर्मापराधी प्राक् प्रख्यातचौर्यः । अशुद्धवासक अप्रज्ञातस्थानवासी । जातिनिह्नवो नाहं शूद्र इति । नामनिह्नवो नाहं डित्थ इति । आदिग्रहणात् स्वदेश-ग्राम-कुला-[3]द्युपलक्ष्यते । नष्टद्रव्यविक्रयाः भिन्नभाजनजीर्णवस्त्राद्यनिर्ज्ञातस्वामिकविक्रयकारिणः । एवंविधलिङ्गैः पुरुषान् गृहीत्वा चोरा भवन्ति न वा इति सम्यक् परीक्षेत । न तावता स्तेनं[4] निश्चिनुयात् । तदाह नारदः—

'अन्यहस्तात् परिभ्रष्टमकामादुत्थितं[5] भुवि ।
चोरेणापि परिक्षिप्तं लोप्त्रं[6] यत्नात् परीक्षयेत् ॥
असत्याः सत्यसंकाशाः सत्याश्चाऽसत्यसन्निभाः ।
दृश्यन्ते विविधा भावाः तस्माद्युक्तं[7] परीक्षणम्' ॥
(ना. स्मृ. १२. १०–११.)

इति । तस्करोऽपि[8] द्विविधः । तदाह बृहस्पतिः—

'प्रकाशाश्चाऽप्रकाशाश्च तस्करा द्विविधाः स्मृताः ।
प्रज्ञा-सामर्थ्य-मायाभिः प्रभिन्नास्ते[9] सहस्रधा ॥

† नाशदिवसादारभ्य चोरपदानुसारेण वेति विज्ञानेश्वरः

१. B in margin and C. read °धैर्य° and °धौर्य° respectively for °चौर्य°. २. B, C. omit नष्ट°. ३. B. C. read कुलाद्यपलापो for कुलाद्युप°. ४. B. and C. read तावन्मात्रेण for तावता स्तेनं. ५. C. reads प्रकामात् for अकामात्. ६. C. reads लोभ्रं for लोप्त्रं. ७. C. reads यस्मात् for तस्मात्. ८. C. reads तस्करा अपि विविधाः for तस्करोऽपि द्विविधः. ९. C. reads प्रविग्नास्ते for प्रभिन्नास्ते.

नैगमा वैद्य-कितवाः सभ्योत्कोचक-वञ्चकाः।
दैवोत्पातविदो भद्राः शिल्पज्ञाः प्रतिरूपकाः॥
अक्रियाकारिणश्चैव मध्यस्थाः कूटसाक्षिणः।
प्रकाशतस्करा ह्येते तथा कुहकजीविनः'॥

इति। प्रतिरूपकाः प्रतिरूपकारा इत्यर्थः। तथा च नारदः-

'प्रकाशवञ्चकास्तत्र कूटमान-तुलाऽश्रिताः।
उत्कोचकाः सोपधिकाः कितवाः पण्ययोषितः॥
प्रतिरूपकराश्चैव मङ्गलादेशवृत्तयः।
इत्येवमादयो ज्ञेयाः प्रकाशास्तस्करा भुवि'॥
(ना. स्मृ. १६. २-३.)

इति। अप्रकाशतस्कराणां स्वरूपमाह बृहस्पतिः—

'सन्धिच्छिदः पान्थमुषो द्विचतुष्पदहारिणः।
उत्क्षेपकाः सस्यहरा ज्ञेयाः प्रच्छन्नतस्कराः'॥

इति। व्यासोऽपि—

'साधनाङ्गान्विता रात्रौ विचरन्त्यविभाविताः।
अविज्ञातनिवासाश्च ज्ञेयाः प्रच्छन्नतस्कराः'॥
उत्क्षेपकः सन्धिभेत्ता पान्थ-उद्ग्रन्थिकादयः।
स्त्री-पुंसयोः पशुस्तेयी चोरा नवविधाः स्मृताः'॥

इति। उत्क्षेपको धनिनामनवधानमवधार्य तद्धनमुत्कृत्य ग्राहकः। सन्धिभेत्ता गृहयोः सन्धौ स्थित्वा तत्रत्यभित्तिभेत्ता।

---

१ B. in margin and C. read °त्कोचक-वकाः for °त्कोचक-वञ्चकाः. २. B. and C. read °स्मृताः for °श्रिताः. ३. B. originally reads मंडला° and in margin संगता°; while C. आगता दश° for मंगलादेश.° ४. B. C. read संविच्छिदः for संधिच्छिदः. ५. B. C. read स्त्री-पुंगोश्च° for स्त्री-पुंसयोः. ६. C. reads जनम् for तद्धनम्.

पान्थः[1] यः कान्तारादौ पथिकानां प्रत्यक्षापहारकः । परीधानादि-ग्रथितं धनं ग्रहीतुं तद्ग्रन्थि[2] मोचयति स उद्ग्रन्थिकः । प्रकाश-तस्कराणां नैगमादीनां दण्डमाह बृहस्पतिः—

'संसर्गचिह्नरूपैश्च विज्ञाता राजपूरुषैः ।
प्रदाप्यापहृतं दण्ड्या दमैः शास्त्रप्रचोदितैः ॥
प्रच्छाद्य दोषं व्यामिश्रं[3] पुनः संस्कृत्य विक्रयी ।
पण्यं तद्द्विगुणं दाप्यो वणिग्दण्ड्यश्च[4] तत्समम् ॥
अज्ञातौषधि-मन्त्रस्तु यश्च व्याधिरतत्त्ववित् ॥
रोगिभ्योऽर्थं[5] समादत्ते स दण्ड्यश्चोरवद्भिषक् ॥
कूटाक्षदेविनः[6] क्षुद्रा राजभार्याहराश्च ये ।
गणका वञ्चकाश्चैव दण्ड्यास्ते कितवाः स्मृताः ॥
अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।
विश्वस्तवञ्चकाश्चैव[7] निर्वास्याः सर्व एव ते ॥
ज्योतिर्ज्ञानं तथोत्पातमविदित्वा तु ये नृणाम् ।
श्रावयन्त्यर्थलोभेन[8] विनेयास्ते प्रयत्नतः ॥
दण्डाजिनादिभिर्युक्तमात्मानं दर्शयन्ति ये ।
हिंसन्तश्छद्मना नृणां वध्यास्ते[9] राजपूरुषैः ॥
अल्पमूल्यं तु संस्कृत्य नयन्ति बहुमूल्यताम् ।
स्त्री-बालकान् वञ्चयन्ति दण्ड्यास्तेऽर्थानुसारतः ॥

१. A. and D. omit पान्थः. २. B. and C. read तद्ग्रन्थिमोचकः for तद्ग्रन्थि मोचयति. ३. C. reads व्यामिश्य for व्यामिश्रं. ४. B. C. read वणिग्दण्डं for वणिग्दण्ड्यः. ५. B. reads रोगिभ्यो and C. रोगिन्यो. ६. B. C. read कूटाक्षणदेवितः and D. कूटाक्षदेवितः. for कूटाक्षदेविनः. ७. C. reads विशस्त-पञ्चकाः for विश्वस्तवञ्चकाः ८. B. reads भावयन्ति for श्रावयन्ति. ९. C. wrongly reads व्ययास्ते for वध्यास्ते.

हेम-रत्न-प्रवालाद्यान् कृत्रिमान् कुर्वते तु ये ।
क्रेतुर्मूल्यं प्रदाप्यास्ते राज्ञा तद्द्विगुणं दमम् ॥
मध्यस्था वञ्चयन्त्येकं स्नेहलोभादिना यदा ।
साक्षिणश्चान्यथा ब्रूयुर्दाप्यास्ते द्विगुणं दमम्' ॥

इति । अप्रकाशतस्कराणां सन्धिच्छिदादिकानां च दण्डमाह स एव—

'सन्धिच्छेदकृतो ज्ञात्वा शूलमाग्राहयेत्[1] प्रभुः ।
तथा पान्थमुषो[2] वृक्षे गलं बध्वाऽवलम्बयेत् ॥
मनुष्यहारिणो राज्ञा दग्धव्यास्ते[3] कटाग्निना* ।
गोहर्तुर्नासिकां छिन्द्यात् बध्वा वाऽम्भसि मज्जयेत् ॥
उत्क्षेपकस्तु संदंशैर्भेत्तव्यो राजपूरुषैः[4] ।
धान्यहर्ता दशगुणं दाप्यः स्याद्द्विगुणं दमम्' ॥

इति । ग्रन्थिभेदकस्य दण्डमाह मनुः—

'अङ्गुलीर्ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे ।
द्वितीये हस्तचरणौ तृतीये वधमर्हति'† ॥

( म. स्मृ. ९. २७७. )

---

* कटं तृणं तेन योऽग्निः प्रदीप्यते स कटाग्निः । अपराधिनोऽङ्गं तृणेनावेष्ट्य तदग्निना प्रज्वाल्य दाहयितव्य इत्यर्थः ।

† वधशब्देनात्र ताडनादिकं ग्राह्यम् । न पुनः प्राणवियोगरूपो व्यापारः ।

---

१. B. reads आरोपयेत् and C. आघ्रापयेत् for आग्राहयेत्. २. C. reads पाञ्चमुखे वृत्ते for पान्थमुषो वृक्षे; B. C. read गले for गलं. ३. B. C. read तु for ते. ४. B. C. read उत्क्षेपकस्य संदेशः छेत्तव्यो राजपूरुषैः for उत्क्षेपकस्तु संदंशैर्भेत्तव्यो राजपूरुषैः ।.

इति । अङ्गुलीः तर्जन्यङ्गुष्ठौ । अत एव नारदः—

'प्रथमे[1] ग्रन्थिभेदानां अङ्गुल्यङ्गुष्ठयोर्वधः‡ ।
द्वितीये चैव यच्छेषं तृतीये वधमर्हति[2]' ॥
(ना. स्मृ. १८. ३२.)

इति । बन्दिग्राहादीनां दण्डमाह याज्ञवल्क्यः—

'बन्दिग्राहान् तथा वाजि-कुञ्जराणां च हारिणः ।
प्रसह्य घातकांश्चैव[3] शूलानारोपयेन्नरः'* ॥
(या. स्मृ. २. २७३.)

इति । अयमङ्गुलिच्छेदनादिप्राणान्तिको दण्ड उत्तमसाहसप्राप्तियोग्यद्रव्याविषयः ।

‡ अङ्गुल्यङ्गुष्ठयोः वधः छेदनमित्यर्थः ।

* बन्दिग्राहादीन् बलावष्टम्भेन घातकांश्च नरान् शूलानारोपयेत् । अयं च वधप्रकारोपदेशः—

'कोष्ठागारा-ऽयुधागार-देवतागारभेदकान् ।
हस्त्यश्व-रथहर्तॄंश्च हन्यादेवाविचारयन्' ॥
(म. स्मृ. ९. २८०.)

इति मनुवचनादेवेत्यवगन्तव्यम् । राजसम्बन्धि कोष्ठागार-आयुधागार-देवतागृहस्य बहुधनव्ययसाध्यस्य विनाशकान् हस्त्यश्व-रथस्य चापहर्तॄन् शीघ्रमेव हन्यात् । यत्तु—

'सङ्क्रम-ध्वजयष्टीनां प्रतिमानां च भेदकः ।
प्रतिकुर्याच्चतत्सर्वं पञ्च दद्याच्छतानि च' ॥ (म. स्मृ. ९. २८५.)

इति मनुनैवोक्तं तत् सङ्क्रम-ध्वजचिह्न-मृदादिक्षुद्रप्रतिमाविनाशकविषयम् । तेन पञ्चशतपणान् राज्ञे दण्डं दत्वा विनाशितं सर्वं पुनर्नवं कर्तव्यमित्यर्थः ।

१. C. reads प्रथमं for प्रथमे. २. The text of Nârada reads तज्ज्ञैर्दण्डः पूर्वस्तु साहसः. ३. B. reads घातिनः for घातकान्.

'वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने[1]।
तदङ्गच्छेद इत्युक्तः दण्ड उत्तमसाहसे' ॥
(ना. स्मृ. १२. ३०.)

इति नारदस्मरणात्। क्षुद्र-मध्यमोत्तमद्रव्येषु प्रथम-मध्यमोत्तमसाहसरूपदण्डनियमो नारदेन दर्शितः।

'साहसेषु य[2] एवास्ते त्रिषु दण्डो मनीषिभिः।
स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमात्' ॥
(ना. स्मृ. १२. २८.)

इति। जात्यादिभेदेन दण्ड[3]तारतम्यमाह मनुः—

'अष्टापाद्यं[4] तु शूद्रस्य स्तेये भवति किल्बिषम्।
षोडशैव तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य च ॥
ब्राह्मणस्य चतुःषष्टिः पूर्णं[5] वाऽपि शतं भवेत्।
द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि सः ॥
(म. स्मृ. २. ३३७–३३८.)

धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं[6] वधः।
शेषेऽप्येकादशगुणं दाप्यस्तस्य च तद्धनम् ॥
सुवर्णरजतादीनामुत्तमानां च वाससाम्।
रत्नानां[7] चैव सर्वेषां शतादभ्यधिकं[8] वधः ॥

१. B. and C. substitute-
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे
for वधः सर्वस्वहरणं पुरान्निर्वासमाङ्कने।
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहस इति।.

२. B. C. read य एवोक्तः for य एवास्ते. ३. A. C. and D omit दण्ड°. ४. B. reads अष्टापद्यं; while C. अष्टापायं for अष्टापाद्यं. ५. B. C. read तज्ज्ञानगुणवेदिनः for तद्दोषगुणविद्धि सः. ६. C. reads °भ्यधिको for °भ्यधिकं. ७. The text of Manu reads तथाधरिममेयानां for रत्नानां चैव सर्वेषां. ८. B. reads °भ्यधिके for °भ्यधिकं.

पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते ।
शेषेत्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् ॥
पुरुषाणां कुलीनानां नारीणां च विशेषतः ।
रत्नानां चैव मुख्यानां हरणे वधमर्हति ' ॥

(म. स्मृ. ८. ३२०–३२३.)

इति । यस्मिन्नपहारे यो दण्ड उक्तः स शूद्रकर्तृकेऽ[1]ष्टगुणः, वैश्यकर्तृके षोडशगुणः, क्षत्रियकर्तृके द्वात्रिंशद्गुणः, ब्राह्मणकर्तृके चतुःषष्टिगुणः शतगुणो वा अष्टाविंशत्युत्तरशतगुणो वा । शेषेषु [2]स्वल्पमूल्येषु मूल्यादेकादशगुणं दण्डं कल्पयेत् । क्षुद्रद्रव्याणां माषात् न्यूनमूल्यानां मूल्यात् पञ्चगुणो दण्डः । तथा च नारदः—

'काष्टभाण्डतृणादीनां मृण्मयानां तथैव च ।
वेणु-वैणवभाण्डानां [3]तथा स्नाय्वस्थि-चर्मणाम् ॥
[4]शाकानामार्द्रमूलानां हरणे फल-मूलयोः ।
गोरसेक्षुविकाराणां तथा लवण-तैलयोः ॥
पक्वान्नानां कृतान्नानां [5]मत्स्यानामामिषस्य च ।
स[6]र्वेषामल्पमू[7]ल्यानां मूल्यात् पञ्चगुणो दमः ' ॥

(ना. स्मृ. १८. २२–२४.)

इति । यत्पुनर्मनुनोक्तम्—

१. B. and C. add तस्मिन् before ऽष्टगुणः and add आपादनीयः after अष्टगुणः. २. B. C. read °अल्प° for स्वल्प°. ३. The text of Narada reads वेतसस्य for तथा स्नायु°. ४. The text of Nârada reads शाक हरित for शाकानामार्द्र°. ५. The text of Narada reads मद्यानाम् for मत्स्यानाम्. ६. A. B. C. and D. read एव मूलानां for अल्पमूल्यानां. ७. B. C. read °कल्यानां for °मूल्यानां.

'सूत्र-कार्पास-किण्वानां गोमयस्य गुडस्य च।
दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च॥
वेणु-वैणवभाण्डानां लवणानां तथैव च।
मृन्मयानां च हरणे मृदो भस्मन एव च॥
अजानां पक्षिणां चैव तैलस्य च घृतस्य च।
मांसस्य मधुनश्चैव यच्चान्यत् पशुसम्भवम्॥
अन्येषां चैवमादीनां मद्यानामोदनस्य च।
पक्वान्नानां च सर्वेषां तन्मूल्याद्द्विगुणो दमः'॥

( म. स्मृ. ८. ३२६–३२९. )

इति। तदल्पप्रयोजनविषयम्। स्वल्पप्रयोजनद्रव्यापहारे पान्थादीनां न दण्ड इत्याह मनुः—

'द्विजोऽध्वगः क्षीणवृत्तिः द्वाविक्षू द्वे च मूलके।
आददानः परक्षेत्रान्न दण्डं दातुमर्हति।'

( म. स्मृ. ८. ३४१. )

चणक-व्रीहि-गोधूम-यवानां मुद्ग-माषयोः।
अनिषिद्धैर्ग्रहीतव्यो मुष्टिरेका पथि स्थितैः॥
तथैव सप्तमे भक्ते भक्तानि षडनश्नता।
अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः'॥

इति। महापराधेऽपि ब्राह्मणस्य न वधदण्ड इत्याह याज्ञवल्क्यः—

१. B. originally reads भक्तस्य and in margin तक्रस्य २. The text of Manu reads °वैदल° for °वैणव°. ३. B. originally reads मत्स्यानां: also the text of Manu reads मत्स्यानां. ४. B. reads आद्यानां for मद्यानां. ५. B. C. read अल्प° for स्वल्प°. ६. B. C. read अपहारे द्विजादीनां and अपहारे खाण्डवा (षाण्डवा) दीनां for अपहारे पान्थादीनां. ७. A. C. and D. read देयं for दण्डं. ८. D. reads ग्रहीतव्या for ग्रहीतव्यो.

'सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत्।
महापराधिनमपि ब्राह्मणं नैव घातयेत्'* ॥

(या. स्मृ. २. २७९.)

इति। अपि तु ललाटे चिह्नं कृत्वा[1] स्वदेशान्निर्वासयेत्[2]। तथा च मनुः—

'गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः।
स्तेये च श्वपदं[3] कार्यं ब्रह्महण्यशिराः[4] पुमान्†' ॥

(म. स्मृ. ९. २३७.)

इति। एतच्चाङ्कनादि प्रायश्चित्तमकुर्वतां दण्डोत्तरकालम् न तु प्रायश्चित्तं चिकीर्षताम्। तथा च मनुः—

---

* इदमुत्तरार्धं मुद्रितयाज्ञवल्क्यस्मृतिपुस्तकेषु नोपलभ्यते। मत्सङ्गृहीततालपत्रविलिखितपुस्तके तु वर्तते एव। व्याख्यातं चैतत् विज्ञानेश्वरेण। तस्य नासंमतमिति प्रतिभाति। [मुद्रितमिताक्षरायां पुनर्नोपलभ्यते. R.G.B.]

† नाङ्क्या राज्ञा ललाटे स्युः (म. स्मृ. ९. २४०) इति वक्ष्यमाणत्वात् ललाटमेवाङ्कनस्थानमवगम्यते। तत्र गुरुपत्नीगमने यावज्जीवस्थायि तप्तलोहेन ललाटे भागाकृतिं गुरुपत्नीगमनचिह्नं कार्यम्। एवं सुरापाने कृते पातुर्दीर्घं सुराध्वजाकारं, सुवर्णापहारे सति अपहर्तुः कुक्कुरपादरूपं चिह्नं कार्यम्। ब्रह्महणि अशिराः शिरोरहित एव पुमान् कार्यः इति भावः।

---

१. B. and C. read अङ्कयित्वा for चिह्नं कृत्वा. २. B. reads निष्कामयेत् and C. निष्कासयेत्. ३. C. reads श्वयदं for श्वपदं. ४. C. reads ब्राह्मणस्य शिराः, while D. ब्रह्मघ्नस्याशिराः for ब्रह्महण्यशिराः.

'[1]प्रायश्चित्तं तु कुर्वाणाः सर्वे वर्णा यथोदितम् ।
नाङ्क्या राज्ञा ललाटे स्युः दाप्यास्तूत्तमसाहसम्' ॥

( म. स्मृ. ९. २४०. )

इति । [2]भक्तावकाशादिदानेन चौरोपकारिणं[3] प्रत्याह याज्ञवल्क्यः—

'भक्ता-ऽवकाशा-ऽग्न्युदक-शस्त्रोपकरणं[4]-व्ययान् ।
द[5]त्त्वा चौरस्य वा हन्तु[6]र्जानतो दम उत्तमः' ॥

( या. स्मृ. २. २७६. )

इति । कात्यायनोऽपि—

'चोराणां भक्तदा ये स्युस्तथा[7]ऽग्न्युदकदायकाः ।
क्रेता[8]रश्चैव भाण्डानां प्रतिग्राहि[9]ण एव च ॥
समदण्डाः स्मृता ह्येते ये च प्रच्छादयन्ति तान्'* ।

*अन्नदानादिना चोराणां पोषकाः, तेषां मृतानामग्न्युदकदानादिकर्तारः। तैश्चौर्येणानीतभाण्डानां वस्तूनां क्रेतारः, तेभ्यः प्रतिग्रहगृहीतारः, ये च चोरान् छादयन्ति एते सर्वे समानदण्डाः । चौर्यरूपापराधे साहित्यकारित्वात् समान एव एषामपराधः ।

१. D. reads.

प्रायश्चित्तमकुर्वाणाः पूर्वे वर्णा यथोदितम् ।
अङ्क्या राज्ञा ललाटे तु दाप्याश्चोत्तमसाहसम् ।
for प्रायश्चित्तं तु कुर्वाणाः सर्वे वर्णा यथोदितम् ।
नाङ्क्या राज्ञा ललाटे स्युर्दाप्यास्तूत्तमसाहसम् ।.

२. B. reads अशनावकाशदानेन for भक्ता-ऽवकाशादिदानेन. ३. B. C. add अचोरं after चोरोपकारिणं. ४. C. reads °करणं व्ययात् for °करणव्ययान्. ५. B. C. and D. read चोरस्य ददतो for दत्त्वा चोरस्य वा. ६. D. reads ज्ञानतो for जानतो. ७. B. C. read तथाप्युदक° for तथाग्न्युदक°. ८. B. reads भेत्तारश्चैव and C. छेत्तारः तत्र for क्रेतारश्चैव. ९. D. reads प्रतिग्रहणम् for प्रतिमाहिणः.

इति । चोरोपेक्षिणं[1] प्रत्याह नारदः—

'शक्ताश्च य उपेक्षन्ते तेऽपि तद्दोषभागिनः[2] ।
उत्क्रोशतां जनानां तु ह्रियमाणे धने तथा ॥
श्रुत्वा ये नाभिधावन्ति तेऽपि तद्दोषभागिनः'† ।

( ना. स्मृ. १२. २६–२७. )

इति । चोरादर्शने द्रव्यप्राप्त्युपायमाह याज्ञवल्क्यः—

'घातिते[3]ऽपहृते दोषो ग्रामभर्तुरनिर्गते ।
विवीत[4]भर्तुस्तु पथि चोरोद्धर्तुरवीतके ॥
स्वसीम्नि दद्याद्ग्राम[5]स्तु पदं वा यत्र[6] गच्छति ।
पञ्चग्रामी[7] बहिः क्रोशा[8]द्दशग्राम्यथ वा पुनः' ॥

( या. स्मृ. २. २७१–२७२. )

इति । अयमर्थः । यदा ग्राममध्येऽपि[9] वधो द्रव्यहरणं वा जायते तदा ग्रामपतेरेव चोरोपेक्षा[10] दोषः । तत्परिहारार्थं ग्रामपतिरेव चोरं गृहीत्वा राज्ञे समर्पयेत् । तदशक्तौ धनिने हृतं[11] दद्यात् । यदि स्वग्रामाच्चोरपदं निर्गतं न[12] दर्शयति । दर्शने[13] तु तत्पदं यत्र प्रविशति तद्विषयाधिपतिरेव चोरं धनं चार्पयेत्[14] ।

तथा च नारदः—

† अयं च दोषः शक्तौ सत्यामुपेक्षण एव । नाशक्तस्य दोषः ।

१. B. reads चोरोपेक्षकं, C. चोरापेक्षणं for चोरोपेक्षिणं. २. C. reads तद्दाय° for तद्दोष°. ३. B. originally reads पातिते and C. पतिते. ४. C. reads निवीत° for विवीत°. ५. C. reads वामस्तु for ग्रामस्तु. ६. C. reads द्यन्न for यत्र. ७. D. reads °ग्रामो for °ग्रामी. ८. B. originally and C. read °कुष्ठा for °क्रोशात्. ९. B. C. read प्राणिवधो धनापहरणं for ऽपि वधो द्रव्यापहरणं. १०. C. reads चोरापेक्षा° for चोरोपेक्षा°. ११. B. C. add धनं after हृतं. १२. C. reads च दर्शयति for न दर्शयति. १३. B. and C. read दर्शिते for दर्शने. १४. B. C. read वार्पयेत् for चार्पयेत्.

‘ गोचरे यस्य मुष्येत[1] तेन चौरः प्रयत्नतः ।
ग्राह्यो[2] दाप्योऽथ वा द्रव्यं[3] पदं यदि न निर्गतम् ॥
निर्गतं[4] पुनरेतस्मान्न[5] चेदन्यत्र याति तत् ।
सामन्तान्मार्गपालांश्च दिक्पालांश्चैव दापयेत्’ ॥

( ना. स्मृ. १८. १६–१७. )

इति । विवीते[6]§ त्वपहारे विवीतस्वामिन एव दोषः। यदा त्वध्वन्येव तद् हृतं भवति अविवीतके वा विवीता[7]दन्यक्षेत्रे तदा चोरोद्धर्तुर्मार्गपालस्य दिक्पालस्य चा[8]पराधः। यदा पुनर्ग्रामाद्बहिः सीमान्तपर्यन्ते क्षेत्रे दोषो[9] जायते तदा तद्ग्रामवासिन एव दद्युर्यदि सीम्नो बहिश्चोरपदं न निर्गतम् । निर्गते पुनर्[10]यत्र तत् प्रविशति स एव ग्रामश्चोरार्पणादिकं[11] कुर्यात्। यदा त्वनेकग्राममध्ये क्रोशमात्राद्बहिः प्रदेशे मोषादिकं[12] जायते चोरपदं च जनसम्मर्दाद्भग्नं तदा पञ्चग्रामी दशग्रामी वा दद्यात् । विकल्पस्तु प्रत्यासत्त्याद्यपेक्षया व्यवस्थितः। यदा दापयितुमशक्तो राजा तदा स्वयं दद्यात् । तथा च गौतमः—

§ विवीतं कुड्यादिना कण्टकादिना चतुर्दिक्षु संवृतः प्रदेशः। तद्विरुद्धोऽविवीतः।

१. B. reads मुष्येत्तु for मुष्येत. २. Text of Narada reads मृग्यो for ग्राह्यो. ३. The text of Narada reads मोषं for द्रव्यं. ४. B. and text of Narada read निर्गते for निर्गतं. ५. The text of Narada reads तु यदा यस्मिन्नष्टेऽन्यत्र न पातयेत् for पुनरेतस्मान्न चेदन्यत्र याति तत्. ६. B. in margin and C. read निर्वीते for विवीते. ७. B. in margin and C. read निवीता° for विवीता°. ८. B. and C. substitute वा for चा. ९. B. originally reads मोषो, while in margin, and C. reads मोक्षो for दोषो. १०. B. C. omit पुनः. ११. C. reads चोरापणादिकां for चोरार्पणादिकं. १२. B. C. read दोषादिकं for मोषादिकं.

'चोरहृतमवजित्य यथास्थानं गमयेत् । स्वकोशाद्वा दद्यात्' ।

इति । स्तेयसंदेहे निर्णयोपायमाह वृद्धमनुः—

'यदि तस्मिन् दाप्यमाने भवेन्मोषे तु संशयः ।
मुषितः शपथं दाप्यो बन्धुभिर्वाऽपि साधयेत्' ॥

इति । चोरवधप्रकारविशेषमाह नारदः—

'यांस्तत्र चोरान् गृह्णीयात्तान् विताड्याभिबन्ध्यं च ।
अवकृष्य च सर्वत्र हन्याच्चित्रवधेन† तु ॥

इति ।

( ना. स्मृ. १२. ३३. )

॥ इति स्तेयप्रकरणम् ॥

अथ साहसम् । तत्स्वरूपं नारदेनोक्तम्—

'सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः ।
तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते' ॥

( ना. स्मृ. १४. १. )

इति । ननु साहसं चौर्य-वाग्दण्डपारुष्य-स्त्रीसंग्रहणेभ्यो न व्यतिरिच्यते । तेषां तदवान्तरविशेषत्वात् । तथा च बृहस्पतिः—

† चित्रवधेन विविधप्रकारेण वधोपायेन । ते च वधप्रकाराः पूर्वं पृष्ठेऽत्र दर्शिताः ।

१. C. reads यथाख्यातं, B. यथास्थाने for यथास्थानं. २. B. reads नयेत् and C. अपि नृप:° for गमयेत्. ३. A. omits स्तेय°. ४. B. and C. read विताड्य विबन्ध्य for विताड्याभिबन्ध्य च. ५. B. and C. read अवघुष्य for अवकृष्य. ६. C. reads न तु for ननु.

'मनुष्यमारणं चौर्यं परदाराभिमर्शनम्।
पारुष्यमुभयं चैव साहसं तु चतुर्विधम्'॥

इति। तत् कथं पृथगस्य व्यवहारपदता?। सत्यम्। तथापि बलदर्पावष्टम्भोपाधितस्तेभ्यो भिद्यते इति दण्डातिरेकार्थं पृथगभिधानम्। मनुष्यमारणरूपस्य साहसस्य तेभ्योऽतिरेकात् तदर्थं वा पृथगभिधानम्। तस्य च त्रैविध्यमाह नारदः—

'तत्पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा।
उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक्॥
फल-मूलोदकादीनां क्षेत्रोपकरणस्य च।
भङ्गाक्षेपावमर्दाद्यैः प्रथमं साहसं स्मृतम्॥
वासः पश्वन्न-पानानां गृहोपकरणस्य च।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम्॥
व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम्।
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम्'॥

(ना. स्मृ. १४. ३–६.)

इति। त्रिविधेऽपि साहसे दण्डमाह स एव—

'तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः।
मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः॥
उत्तमे साहसे दण्डः सहस्रावर इष्यते।
वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने॥
तदङ्गच्छेद इत्युक्तो दण्ड उत्तम साहसे'।

(ना. स्मृ. १४. ७–९.)

---

१. B. C. read अथ for तत्. २. B. C. read °क्षेपोपमर्दाद्यैः for °क्षेपावमर्दाद्यैः.

इति । परद्र[*]व्यापहरणरूपे साहसे दण्डमाह याज्ञवल्क्यः—

‘ तन्मूल्याद्द्वि[†]गुणो दण्डो निह्नवे तु[‡] चतुर्गुणः ॥
यः साहसं कारयति स दाप्यो द्विगुणं दमम् ।
यश्चैवमुक्त्वाहं दाता कारयेत्स चतुर्गुणम् ’ ॥

(या. स्मृ. २. २३०–२३१.)

इति । साहसविशेषे[§]षु दण्डमाह याज्ञवल्क्यः—

‘ अर्घ्या[1]क्रोशातिक्रमकृत् भ्रातृभार्याप्रहा[2]रदः ।
संदिष्टस्याप्रदाता च समुद्रगृहभेदकृत् ॥
सामन्तकुलिकादीनामपका[3]रस्य कारकः ।
पञ्चाश[4]त्पणिको दण्ड एषामिति विनिश्चयः ॥
[¶]स्वच्छन्दं विधवागामी विक्रु[5]ष्टे नाभिधावकः ।
अकारणे च[6] विक्रोष्टा चण्डालश्चोत्तमान् स्पृशन्[**] ॥
[††]शूद्रप्रव्रजितानां च दैवे पित्र्ये च भोजकः ।
अयुक्तं शपथं कुर्वन्नयोग्यो योग्यकर्मकृत् ।
वृषक्षुद्रपशूनां च पुंस्त्वस्य प्रतिघातकृत् ।

*B. reads °पहार°. † A. reads द्विगुणं दण्डं for द्विगुणो दण्डो and चतुर्गुणं for चतुर्गुणः respectively. B. substitutes द्विगुणं for द्विगुणो. ‡ For तु B. reads च. § A. substitutes नु for °षु while B. reads only विशेष°. ¶ B. C. and D. read स्वच्छन्द°. ** A. reads स्पृशेत्, B. also the same but corrects as स्पृशन्. †† D. reads शूद्रः for शूद्र°.

१. B. originally reads अर्धाक्रोशाति° and in margin अध्याक्षेपादि° for अर्घ्याक्रोशाति°. २. B. reads प्रहारकः, C. D. ऽपहारकः for °प्रहारदः. ३. C. reads अपहारस्य कारकः. while D. reads गणद्रव्यस्य हारकः. ४. D. reads °पणकः for पणिकः. ५. B. and C. read विकृष्टेनाभिधावकः for विक्रुष्टे and D. निकृष्टेनाभिधायकः ६. B. in margin reads न, and C. स for च.

साधारणस्यापलापी दासीगर्भविनाशकृत्[1] ॥
पितृ[2]पुत्रस्वसृभ्रातृदम्पत्याचार्य[‡‡]र्त्विजा[3]म् ।
एषामपतितान्योन्यत्यागी[4] च शतदण्डभाक् ॥

( या. स्मृ. २. २३२–२३७. )

शस्त्रावपाते गर्भस्य पातने चोत्तमो दमः ।
उत्तमो वाऽधमो[5] वाऽपि पुरुषस्त्रीप्रमापणे ॥
विप्रदुष्टां स्त्रियं चैव पुरुषघ्नीमगर्भिणीम्[6] ।
सेतुभेदकरीं चाप्सु शिलां बद्ध्वा प्रवेशयेत् ॥
विषाग्नि[§§]दां पतिगुरुनिजापत्यप्रमापणीम् ।
विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमा[7]पयेत् ॥
क्षेत्रवेश्मवनग्रा[8]मविवीतखलदाहकाः ।
राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना ' ॥

( या. स्मृ. २. २७७–२७९, २८२. )

इति । अविज्ञातकर्तृके सा[9]हसे साहसिकज्ञानोपायमाह बृहस्पतिः—

‡‡ A. and B. in margin read °शिष्यकाः.
§§ D. reads विषाग्निदञ्जाति° for विषाग्निदां पति.
१. B. originally reads ° गर्भस्य पातने for °गर्भविनाशकृत २. A. reads पिता for पितृ°. ३. B. C. D. read शिष्यकाः for ऋत्विजाम् ४. C. reads योगीनां for त्यागी च. ५. B. originally reads मध्यमो, and in margin वाधमो. ६. B. C. read पुरुषस्त्रीं for पुरुषघ्नीं. ७. B. originally and C. read प्रवासयेत for प्रमापयेत. ८. C. reads निवीतवनदाहकः while D. निवेशनविदाहकाः for विवीतखलदाहकाः. ९. C. and D. read °कर्तृसाहासिके for °कर्तृके साहसे.

'हतः[1] संदृश्यते यत्र घातकस्तु न दृश्यते ।
पूर्ववैरानुमानेन ज्ञातव्यः स महीभुजा ॥
प्रतिवेश्यानुवेश्यौ[2] च तस्य मित्रारिबान्धवाः ।
प्रष्टव्या राजपुरुषैः सामादिभिरुपक्रमैः ॥
विज्ञेयो[3]ऽसाधुसंसर्गाच्चिह्नाद्यै[4]श्च लक्षणैः ।
एषोदिता घातकानां तस्कराणां च भावना' ॥

इति । याज्ञवल्क्योऽपि—

'अविज्ञातहतस्या[5]ऽपि कलहं सुतबान्धवाः ।
प्रष्टव्या[6] योषितश्चास्य परपुंसि रताः पृथक् ॥
स्त्रीद्रव्यवृत्तिकामो[7] वा केन वा[8]यं गतः सह ।
मृत्युदेशसमासन्नं[9] पृच्छेद्वापि जनं शनैः' ॥

( या. स्मृ. २. २८०—२८१. )

इति । उक्तज्ञानोपायासंभवे तु[10] कात्यायनः—

'विना चिह्नैस्तु यत्कार्यं साहसाख्यं प्रवर्तते[11] ।
शपथैः[12] स विशोध्यः स्यात्सर्ववादेष्वयं[13] विधिः' ॥

---

१. B. originally reads भतः but corrects त्रणः for हतः; C. also the same. २. B. and C. do not insert this *Verse*. ३. B. and C. read विज्ञेया for विज्ञेयो°. ४. B. originally reads चिह्नार्होछेनवातुरै and corrects चिह्नार्हेहिणवारिभिः and C. चिह्नास्रोहेनवारिभिः while D. चिह्नहोढेन मानवैः. ५. B. originally reads °हरस्यास्तु कलहं सूतबान्धवः but corrects °हतस्याशु कलहं सुतबान्धवाः, while C. reads बलहस्य तदाभूतः for कलहं सुतबान्धवाः. ६. C. reads नाततायिव्यवाधोपि परस्परप्रासिद्धता. ७. C. reads पृथगितां द्रव्यावर्त्तिकामो वा केन दायं गतः संतः. ८. B. reads चा°. ९. C. reads मृत्युपदेशे समागमनं पृच्छत्या पि जनं शनैः ( both ७ and ८ seem incorrect ). १०. B. and C. avoid तु. ११. C. reads साहसं संप्रवर्तते and D. साहसः संप्रवर्तते both for साहसाख्यं प्रवर्तते. १२. C. reads शपथः for शपथैः. १३. C. and D. read °बाधेषु for वादेषु.

इति । साहसिकवधे विशेषमाह व्यासः—

‘ ज्ञात्वा तु घातकं सम्यक्ससहायं सबान्धवम् ।
हन्याच्चित्रवधोपायैरुद्वेजनकरैर्नृपः ’ ॥

इति । बृहस्पतिरपि—

‘ प्रकाशवधका ये तु तथा चोपांशुघातकाः ।
ज्ञात्वा सम्यग्धनं हृत्वा हन्तव्या विविधैर्वधैः ’ ॥

इति । एतद्ब्रह्मक्षत्रियादिविषयम् । तदाह बौधायनः—

‘ क्षत्रियादीनां ब्राह्मणवधे वधः सर्वस्वहरणं च । तेषामेव तुल्यापकृष्टवधे यथाबलमनुरूपं दण्डं प्रकल्पयेत् ’ ॥
( बौ. स्मृ. १. १०. १८. १९—२०. )

इति । बहूनामेकघातार्थे प्रवृत्तानां दोषानुरूपदण्डाभिधानार्थमाह कात्यायनः—

‘ एकं चेद्बहवो हन्युः संरब्धाः पुरुषं नराः ।
मर्मघाती तु यस्तेषां स घातक इति स्मृतः ’ ॥

इति । यो मर्मघातकः स एव वधानुरूपदण्डभाग्भवतीत्यर्थः । तथा च घातकव्यतिरिक्तानामपि दण्डस्तेनैवोक्तः ।

---

१. B. and C. read साहसिकं for साहसिकवधे. २. B. originally reads पातकं for घातकं. ३. A. reads उद्वेगजनकैः for उद्वेजनकरैः. ४. B. reads °वधकार्येषु and C. °बाधका ये तु for °वधका ये तु. ५. C. reads °दिना ब्राह्मणवधः. ६. C. reads तुल्यः प्रकृष्ट° for तुल्यापकृष्ट°. ७. C. reads °रूपं. ८. B. originally reads यथोक्तं दापयेद्दमं and omits स एव वधानुरूपदण्डभाक् भवति इत्यर्थः. ९. B. and C. read वधः परापदंडभाक्. १०. A. C. and D. omit च घातकव्यतिरिक्तानामपि दण्डस्तेनैवोक्तः; C. omits also तथा.

[1]आरम्भकृत्सहायश्च तथा धर्मानुदेशकः ।
‘आश्रयः शस्त्र[2]दाता च भक्त[3]दाता वि[4]कर्मिणाम् ।
[5]युद्धोपदेशकश्चैव [6]तद्विनाशप्रवर्तकः ॥
उपे[7]क्षाकारकश्चैव दोषवक्तानुमोदकः ।
अनिषेद्धा क्षमो यः स्यात्[8]सर्वे तत्कार्यकारिणः ॥
यथाशक्त्यनुरूपं तु दण्डं तेषां प्रकल्पयेत्’ ।

इति । अनुरूपं दोषानुरूपम् । मर्महन्तुर्दोषभागित्वं द्वयोर्दर्शयति स एव—

‘आरम्भकृत्सहायश्च दोषभाजौ तदर्धतः’ ॥

इति । एवं [9]मार्गानुदेशकानां कालान्तरेऽपि दोषलाघवमूह्यम् । साहससदृशापराधेष्वपि[10] दण्डमाह याज्ञवल्क्यः—

‘वसानस्त्रीन् पणान् दण्ड्यो नेजकस्तु परांशुकम् ।
विक्रयावक्रयाधानयाचितेषु पणान् दश’ ॥

(या. स्मृ. २. २३८.)

इति । अवक्रये[11]ः एतावत्कालमुपभोगार्थं वस्त्रं दास्यामि त्वं

---

१. B.C.D. do not insert आरम्भकृत्सहायश्च तथा धर्मानुदेशकः. २. B. reads originally शास्त्र° and corrects शस्त्र°. ३. C. reads भक्ती° for भक्त°. ४. D. reads विकर्मणाम्. ५. C. reads शुद्धो° for युद्धो°. ६. B. originally reads दण्डादीनां प्रदर्शकः and corrects तद्विनाशप्रवर्तकः. ७. B. reads उपेक्षाकारी शक्तश्च and C. उपेक्षाकारी उक्तश्च. ८. C. reads सह्येतत् for सर्वे तत्. ९. B. reads originally मर्मा° and corrects मार्गा° and reads देशकादेरपि omitting कालांतरे. C. also the same. १०. A. D. read °राधेपि. ११. D. omits अवक्रयः while C. reads अविक्रयः.

मह्यमेतावद्धनं देहीति समयं कृत्वा वस्त्रप्रदानम् नेजकस्य नियमातिक्रमे[1] दण्डप्राप्त्यर्थं नियममाह मनुः—

‘ शाल्मलीफलके[2] श्लक्ष्णे नेनिज्यात्[3] नेजकः शनैः ।
न च वासांसि वासोभिर्निर्हरेन्न च वासयेत् ’ ॥

( म. स्मृ. ८. ३९६. )

इति । प्रमादान्नाशने नारदः—

‘ मूल्याष्टभागो[4] हीयेत[5] सकृद्धौतस्य वाससः ।
द्विः पादस्त्रिस्तृतीयांशश्चतुर्धौतेऽर्धमेव[6] च ॥
अर्धक्षयात्तु[7] परतः पादांशापचयः क्रमात् ।
यावत्[8]क्षीणदशं जीर्णं जीर्णस्यानियमः क्षयः ’ ॥

( ना. स्मृ. ९. ८–९. )

इति । अष्टपणक्रीतस्य[9] सकृद्धौतस्य वस्त्रस्य नाशने एकपण[10]-न्यूनं मूल्यं देयम् । द्विर्धौतस्य[11] पणद्वयोनं[12] त्रिर्धौतस्य[13] त्रिपणोनं[14] चतुर्धौतस्य पणचतुष्टयम् । ततः परं प्रतिनिर्णेजनमवशिष्टं मूल्यं शिष्ट[15]पादपादापचयेन यावज्जीर्णं देयम् । जीर्णस्य नाशने

१. C. reads विषमातिक्रमे. २. C. and D. read शाल्मले. ३. B. originally and C. and D. read निज्याद्वासांसि नेजकः. ४. B. in correction and C. and D. read साध्या°. ५. D. reads दीयेत for हीयेत, while C. स्तेयेन for the same. ६. A. reads द्विः पादस्त्रिस्त्रिभागस्तु चतुःकृत्वोऽर्धमेव च and D. द्वितीयांशस्त्रितीयांशश्चतुर्थांशोऽर्धमेवच, while B. originally द्विपादःस्त्रितीयांश्चतुर्थौते तमेवच. ७. D. reads °त्तूपरमः. ८. C. reads कीर्णं तावत्स्यान्नियतक्षयः and D. reads the whole line यावत्तु क्षीणसंकीर्णे तावत्स्यान्नियतक्षयः ।. ९. D. inserts तेन after अष्टपणक्रीतस्य. १०. D. reads °पणेन न्यूनं. ११. C. and D. द्विधौतस्य. १२. C. and D. पणद्वयेन. १३. C. and D. त्रिधौतस्य. १४. C. and D. त्रिपणेन. १५. C. and D. do not insert शिष्ट°.

त्विच्छातो मूल्यदानं कल्पनीयमित्यर्थः । पितापुत्रविरोधे साक्ष्यादीनां दण्डमाह स एव—

'पितापुत्रविरोधे तु साक्षिणस्त्रिपणो दमः ।
अन्तरेण तयोर्यः स्यात्तस्याप्यष्टगुणो दमः' ॥

(या. स्मृ. २. २३९.)

इति । पितापुत्रयोः कलहे यः साक्ष्यमङ्गीकरोति न पुनः कलहं वारयति स पणत्रयं दण्ड्यः । यश्च तयोः सपणे विवादे पणदाने प्रतिभूर्भवति कलहं वा वर्धयति स तु त्रिपणादष्टगुणं चतुर्विंशतिपणं दण्डनीय इत्यर्थः । अन्येष्वपि तत्सदृशापराधेषु दण्डमाह स एव—

तुलाशासनमानानां कूटकृन्नाणकस्य च ।
एभिस्तु व्यवहर्ता यः स दाप्यो दममुत्तमम् ॥
अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम् ।
स नाणकपरीक्षी तु दाप्य उत्तमसाहसम् ॥
भिषङ् मिथ्या चरन् दण्ड्यस्तिर्यक्षु प्रथमं दमम् ।
मानुषे मध्यमं राजपुरुषेषूत्तमं दमम् ॥
अबध्यं यश्च बध्नाति बद्धं यश्च प्रमुञ्चति ।
अप्राप्तव्यवहारं च स दाप्यो दममुत्तमम् ॥

१. C. and D. read °दानकल्पनं for दानं कल्पनीय°. २. D. reads साक्षिणां, the text of याज्ञवल्क्य is the same but the plural is not taken by the commentators. ३. B. reads °पणान्. ४. A. substitutes च for तु. ५. B. reads योऽकूटं for अकूटं and C. यः कूटंकुटकम् for अकूटं कूटकम्. ६. B. and C. read नाणकानां परीक्षासु while C. adds तु after दाप्यः. ७. B. C. and D. read दाप्यः for दंड्यः. ८. B. C. and D. read °मानुषेषू for °पुरुषेषु. ९. D. reads बध्यं for बद्धं. १०. B. reads बध्यं.

मानेन तुलया वाऽपि योंऽशमष्टमकं हरेत् ।
दण्डं[1] स दाप्यो[3] द्विशतं वृद्धौ हानौ च कल्पितम् ॥
भेषजस्नेहलवण[2]गन्धधान्यगुडादिषु ।
पण्येषु प्रक्षिपन् हीनं पणान् दण्ड्यस्तु षोडश ॥
मृच्चर्ममणिसूत्रायःकाष्ठवल्कलवाससाम् ।
अजातौ जातिकरणे विक्रेयाष्टगुणो दमः ॥
समुद्रपरिवर्तं च सारभाण्डं च कृत्रिमम् ।
आधानं विक्रयं च[4]ऽपि नयतो दण्डकल्पना ॥
[5]हीने पणे तु पञ्चाशत् पणे तु शतमुच्यते ।
द्विप[6]णे द्विशतो दण्डो मूल्य[7]वृद्धौ तु वृद्धिमान् ॥
संभूय कुर्वतामर्घं सबाधं कारुशिल्पिनाम् ।
अर्घस्य ह्रासं वृद्धिं वा जान[8]तां दम उत्तमः ॥
संभूय वणिजा पण्यमनर्घे[9]णोपरुन्धताम् ।
विक्रीणतां च विहितो दण्ड उत्तमसाहसः ॥
राजनि स्थाप्यते योऽर्घः प्रत्यहं तेन विक्रयः ।
क्रयो वा निः[10]स्रवस्तस्माद्वणिजां लाभकृत् स्मृतः ॥
स्वदेशपण्ये तु शतं वणिग्गृह्णीत पञ्चकम् ।
दशकं पौर[11]देश्ये तु यः सद्यः क्रयविक्रयी ॥

---

१. C. substitutes च for स. २. B. reads भेषजं स्नेहलवणं. ३. A. B. and C. read दाप्यः for दण्ड्यः. ४. A. and C. substitute वा for च. ५. A. and text of याज्ञवल्क्य read भिन्ने; the commentator विज्ञानेश्वर explains भिन्ने न्यूने. ६. A. reads द्विपणो for द्विपणे and B. द्विगुणे for the same. ७. B. reads मूल° for मूल्य while A. substitutes च for तु and C. reads बुद्धिमान् for वृद्धिमान्. ८. A. reads जानतो and C. जानता. ९. C. reads समार्घेणोपसंध्यताम्. १०. B. originally reads निन्हवः and C. विक्रयः for निःस्रवः. ११. D. reads परदेश्ये.

पण्यस्योपरि संस्थाप्य व्ययं पण्यसमुद्भवम् ।
अर्घोऽनुग्रहकृत्कार्यः क्रेतुर्विक्रेतुरेव च[1] ॥

( या. स्मृ. २. २४०—२६३. )

इति । तुला तोलनदण्डः । प्रस्थादि परिमाणम् । नाणकं मुद्राचिह्नितं [2]द्रम्मनिष्कादि । एतेषां कूटकृद्देशप्रसिद्धपरिमाणादन्यथाकृत्[3] । न्यूनत्वमाधिक्यं वा द्रम्मादेर्[4]व्यवहा[5]रिकमुद्रितत्वं वा ताम्रादिगर्भत्वं वा करोति । यश्च [6]त्रपुसीसादिरूपैस्तैर्व्यवहरति तावुभौ प्रत्येकमुत्तमसाहसं दण्डनीयौ । यः पुनर्नाणकपरीक्षकः सम्यगेव[7] कूटमिति ब्रूते असम्यग्वा सम्यगिति सोऽप्युत्तमसाहसं दण्डनीयः । यः पुनर्वैद्यः आयुर्वेदानभिज्ञ एव जीवनार्थं चिकित्[8]साज्ञोऽहमिति तिर्यङ्मनुष्यराज[9]पुरुषेषु चिकित्सां करोति स यथाक्रमं प्रथममध्यमोत्तमसाहसं दण्डनीयः । [10]योऽप्यनपराधिनं राजाज्ञया विना बध्नाति बद्धं तया विना मुञ्चति व्यवहारार्थमाहूतं अनिर्वृत्तव्यवहारं चोत्सृजति सोऽपि उत्तमसाहसं दण्डनीयः । योऽपि वणिग्व्रीहिकार्पासादेः पण्यस्याष्टमांशं कूटमानेन कूटतुलया वाऽपहरति

१. B. originally reads क्रेतुरेव स एव च for क्रेतुर्विक्रेतुरेव च. २. B. and C. omit द्रम्म°. ३. C. and D. do not add. °कृत्. ४. B. and C. read रुक्मादे°. ५. C. reads व्यावहारिकमुद्रितत्वं वा ताम्रादिभगत्वं वा करोति. ६. B. reads यस्तैर्न्यूनैरेव कूटैस्तैर्वा व्यवहराति and gives in margin यश्च त्रपुसीसादिरूपैस्तैर्व्यवहराति while C. यस्तन्न्यूनंवेरकुटैस्तैर्व्यवहराति. ७. B. reads सम्यक्त्वंकूटकं while C. सः पंचकूटक. ८. B. and C. read चिकित्सित° for चिकित्सा°. ९. B. and C. read °मनुष्येषु for पुरुषेषु. १०. C. and D. omit the following योऽप्यनपराधिनं राजाज्ञया विना बध्नाति बद्धं तया विना मुंचति व्यवहारार्थमाहूतं अनिर्वृत्तव्यवहारं चोत्सृजाति सोऽपि उत्तमसाहसं दंडनीयः

असौ पणानां द्विशतं दण्डनीयः। अपह्नियमाणद्रव्यस्य पुनर्वृद्धौ हानौ च दण्डस्याऽपि वृद्धिहानी कल्पनीये। भेषजमौषधद्रव्यम्। स्नेहो घृतादिः। गन्धद्रव्यमुशीरादि। एतेष्वसारद्रव्यं विक्रयार्थं मिश्रयतः षोडशपणो दण्डः। न विद्यते बहुमूल्या जातिर्यस्मिन् मृच्चर्मादिके तदजाति तस्मिन् जातिकरणे विक्रयार्थं गन्धवर्णरसान्तरसंचारणेन बहुमूल्यजातीयसादृश्यसंपादने विक्रेयस्यापादितसादृश्यस्य मृच्चर्मादेः पण्यस्याष्टगुणो दण्डः। समुद्रकस्य करण्डकादेः परिवर्तनं व्यत्यासः। योऽन्यदेव मुक्तानां पूर्णं करण्डकं दर्शयित्वा अन्यदेव स्फटिकानां पूर्णं हस्तलाघवात् समर्पयति यश्च सारभाण्डं कस्तूरिकादिकं कृत्रिमं कृत्वा विक्रयमाधिं वा नयति तस्यैवं दण्डकल्पना। कृत्रिमकस्तूरिकादेर्मूल्यभूते पणे हीने न्यूने न्यूनपणमूल्ये इति यावत्। तस्मिन् कृत्रिमे विक्रीते पञ्चाशत्पणो दण्डः। पणमूल्ये तु शतं द्विपणमूल्ये तु द्विशतो दण्डः। एवं मूल्यवृद्धौ दण्डवृद्धिरुन्नेया। राजनिरूपितार्घस्य ह्रासं वृद्धिं वाऽपि जानन्तो वणिजः मिलित्वा[1] कारुशिल्पिनां[2] कारूणां रजकादीनां शिल्पिनां चित्रकारादीनां पीडाकरं अर्घान्तरं लाभलोभात्कुर्वन्तः पणसहस्रं दण्डनीयाः। ये पुनर्देशान्तरादागतं पण्यं हीनमूल्येन प्रार्थयमाना उपरुन्धन्ति महार्घेण वा विक्रीणते[3] तेषामुत्तमसाहसो दण्डः।

१. C. and D. omit मिलित्वा. २. B. and C. do not insert कारुशिल्पिनां. ३. A. and D. read विक्रीणीते for विक्रीणते.

राजनि संनिहितेऽपि सति यस्तेनार्घो निरूप्यते तेनार्घेण क्रयो वा विक्रयो वा कार्यः । निःस्रवः निर्गतः स्रवः अवशेषः। तस्माद्राजनिरूपितादर्घात् यो निःस्रवः स एव वणिजां लाभकारी न पुनः स्वच्छन्दपरिकल्पितादर्घात् । अर्घकरणे विशेषमाह मनुः—

'पञ्चरात्रे पञ्चरात्रे पक्षे पक्षेऽथवा गते¹ ।
कुर्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृपः' ॥

(म. स्मृ. ८. ४०२.)

इति । स्वदेशपण्ये शतपणमूल्ये पञ्चकं लाभार्थं गृह्णीयात् । पारदेश्ये² तु दशपणं³ लाभं गृह्णीयात् यस्य पण्यग्रहणदिवस एव विक्रयः । यः पुनः कालान्तरे विक्रीणीते तस्य कालोत्कर्षवशाल्लाभोत्कर्षः कल्प्यः । देशान्तरादागते पण्ये देशान्तरगमनप्रत्यागमनभाण्डग्रहणशुल्कादिस्थानेषु प्रयुक्तमर्थं परिगणय्य पण्यमूल्येन सह मेलयित्वा यथा शतपणमूल्ये दशपणो लाभः संपद्यते तथा क्रेतृविक्रेत्रोरनुग्रहकारी राज्ञा स्थापनीयः ।

इति साहसप्रकरणम् ॥

१. B. reads पंचपक्षे पंचमासे तथा गते. A. and C. read सप्तरात्रे पक्षे मासे तथा गते. and D. सप्तरात्रे पक्षे मासे तथा गते. २. B. and D. read परदेश्ये. ३. B. reads दशपणान् and C. शतपणं.

## अथ स्त्रीसंग्रहणम्.

तस्य त्रैविध्यमाह बृहस्पतिः—

‘ पापमूलं संग्रहणं त्रिप्रकारं निबोधत[१] ।
बलोपाधिकृते[२] द्वे तु तृतीयमनुरागजम् ॥
अनिच्छया[३] त्वपकृतं मत्तोन्मत्तकृतं तथा ।
प्रलये यत्तु रहसि बलात्कारकृतं तु तत् ॥
छद्मना गृहमानीय दत्वा वा मदकारणम् ।
संयोगः क्रियते यत्तु तदुपाधिकृतं[४] विदुः ॥
अन्योन्यमनुरागेण[५] दूतसंप्रेषणेन वा ।
कृतं रूपार्थलोभेन[६] ज्ञेयं तदनुरागजम् ’ ॥

इति । पुनरपि त्रैविध्यमाह स एव—

‘ तत्पुनस्त्रिविधं प्रोक्तं प्रथमं मध्यमोत्तमम् ।
अपाङ्गप्रेक्षणं[७] हास्यं दूतसंप्रेषणं तथा ।
स्पर्शो[८] भूषणं वस्त्राणां प्रथमः संग्रहः स्मृतः ॥
प्रेषणं गन्धमाल्यानां धूपमध्वान्न[९]वाससाम् ।

---

१. C. reads °मिवोच्यते for निबोधत. २. C. reads बलोपधि°. B. originally बलोपाधि but corrects बलोपधि. ३. B. originally reads अनिच्छन्त्या यत्क्रियते मत्तोन्मत्तप्रमत्तया । प्रलपन्त्या तु रहसि बलात्कारं तु तस्य तत् । but corrects अनिच्छया त्वपकृते मत्तोन्मत्तप्रमत्तया । प्रलपंत्यां तु रहसि बलात्कारकृतं तु यत् while C. reads अनिच्छिया पापकृते मत्तोन्मत्तप्रमत्तया । प्रलपंत्या तु रहसि बलात्कारकृतं तु यत् ।. ४. C. reads त्ततुपाधि°. ५. B. originally reads अन्नयोन्यचसुरागेण and corrects अन्योन्यचक्षुरागेण. C. also substitutes अन्योन्यचक्षुरागेण and reads द्रुत° for दूत. ६. B. originally reads भूपार्थ° and corrects रूपार्थ°. ७. B. originally reads प्रेषणं and substitutes तदा for तथा. ८. C. reads संस्पर्शो भूषणस्त्रीणां and D. स्पर्शश्च भूषणं स्त्रीणां and substitutes प्रथमं for प्रथमः. ९. D. reads °भूषण° for मध्वान्न.

संभाषणं रहसि च मध्यमं संग्रहं विदुः ॥
एकशय्यासनं क्रीडा चुम्बनालिङ्गनं तथा ।
एतत्संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः' ॥

इति । योषित्संग्रहणज्ञानोपायमाह याज्ञवल्क्यः—

'पुमान् संग्रहणे ग्राह्यः केशाकेशि परस्त्रिया ।
सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा ॥
नीवीस्तनप्रावरणसक्थिकेशावमर्शनम् ।
अदेशकालसंभाषा सहैकस्थानमेव च' ॥

( या. स्मृ. २. २८३–२८४. )

इति । स्त्रीपुंसयोर्मिथुनीभावः संग्रहणम् । तत्र प्रवृत्तः परभार्यया सह केशाकेशिक्रीडनेन सद्य अभिनवैः कामजैः कररुहदशनादिकृतव्रणलिङ्गैः द्वयोः संप्रतिपत्त्या वा ग्राह्यः । योऽपि परदारपरिधानग्रन्थिप्रदेश–कुचप्रावरण–जघन–शिरोरुहादिस्पर्शनं साभिलाष इवं करोति निर्जनदेशे जनाकीर्णेऽप्यन्धकाराकुले अकाले संलापं करोति परभार्यया सहैकत्र मञ्चकादौ तिष्ठति सोऽपि ग्राह्यः । मनुरपि—

'स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तयोः ।
परस्परस्यानुमते सर्वं संग्रहणं स्मृतम् ॥

( म. स्मृ. ८. ३५८. )

१. B. reads °शन for °सनं. २. A. B. C. read °स्त्रियाः. ३. B. and C. read प्रतिपत्तेः. ४. C. reads तयोः for तथा. ५. D. reads °मर्षणम् for °मर्श. ६. A. reads °संभाषं for संभाषा. ७. A. reads सहैकासनं for सहैकस्थान°. ८. B. reads साभिनयैः. ९. C. reads °विप्रदेश° for ग्रंथिप्रदेश. १०. C. substitutes च्च for इव. ११. B. C. and D. read तथा for तया.

दर्पाद्वा यदि वा मोहाच्छ्लाघया वा स्वयं वदेत्।
पूर्वं मयेयं भुक्तेति तच्च संग्रहणं स्मृतम्'॥

इति। तत्र दण्डमाह याज्ञवल्क्यः—

'सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः।
प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्तनम्'॥
( या. स्मृ. २. २८६. )

इति। चतुर्णामपि वर्णानां बलात्कारेण सजातीयगुप्तपरभार्यागमने साशीतिपणसहस्रो दण्डः। यदा त्वानुलोम्येन हीनवर्णगुप्तपरभार्यागमनं तदा मध्यमसाहसो दण्डः। यदा पुनः सवर्णामगुप्तामानुलोम्येन गुप्तां वा व्रजति तदा मनुना विशेष उक्तः—

'सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन्।
शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह संगतः॥
सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन्।
शूद्रायां क्षत्रियविशोः सहस्रं तु भवेद्दमः'॥
( म. स्मृ. ८. ३७८, ३८३. )

इति। एतद्गुरुसखिभार्यादिव्यतिरिक्तविषयम्। तत्र दण्डान्तरविधानात्। तदाह नारदः—

---

१. This verse here quoted as मनु's does not appear in any text of मनु but it can be seen in नारद, *vide* (१२, ६१) J. Jolly's edition. २. D. reads लाघवाद्वा. ३. A. reads मयेयं भुक्तपूर्वेति. ४. B. originally reads अजाता° and corrects स्वजाता°, while C. and D. स्वजाता°. ५. C. and D. read आनुलोम्येषु for आनुलोम्ये तु. ६. B. originally inserts but in correction omits गुप्त°, C. also omits. ७. D. reads °सहस्रं for °सहस्रो. ८. A. reads° साहस्रो वै.

'माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥
दुहिताऽऽचार्यभार्या च सगोत्रा शरणागता ।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥
आसामन्यतमां गच्छे[1]न् गुरुतल्पग उच्यते ।
शिश्नस्योत्कर्तनं तस्य[2] नान्यो दण्डो विधीयते' ॥

(ना. स्मृ. १२. ७३–७५.)

इति । प्रतिलोम्येन उत्कृष्टस्त्रीगमने क्षत्रियादेर्वधः । एतद्गुप्ताविषयम् । अन्यत्र धनदण्डः । तथा च मनुः—

'उभावपि तु[3] तावेव ब्राह्मण्या गुप्तया सह ।
वि[4]प्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥
ब्राह्मणीं यद्यगुप्तां तु गच्छे[5]तां वैश्यपार्थिवौ ।
वैश्यं पञ्चशतं कुर्यात् क्षत्रियं तु सहस्रिणम्' ॥

(म. स्मृ. ८. ३७७, ३७६.)

इति । शूद्रस्यागुप्तोत्कृष्टस्त्रीगमने लिङ्गच्छेदनसर्वस्वहरणे [6]गुप्तागमने तु वधसर्वस्वापहारौ । तथा च स एव—

---

१. A. reads गत्वा. २. C. D. read तत्र for तस्य. ३. B. C. and D. substitute हि for तु. ४. B. C. read विप्लवे. ५. B. reads सेवेते and C. सेवेताम् for गच्छेताम् while D. reads सेवेतान्यः पुमान्यदि for गच्छेताम् वैश्यपार्थिवौ, but it does not give any proper sense. ६. D. reads गुप्त°. for गुप्ता°.

‘ शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्ण[1]मावसन् ।
अ[2]गुप्तैकाङ्गसर्वस्वी गुप्तं सर्वेण हीयते ’ ॥
(म. स्मृ. ८. ३७४.)

इति । अत्रैव विषये बृहस्पतिरपि—

‘ सहसा कामयेद्यस्तु धनं तस्याखिलं हरेत् ।
उत्कृत्य लिङ्गवृषणौ भ्रामयेद्गर्दभेन तु ’ ॥

इति । शूद्रस्येत्यनुवृत्तौ गौतमः—

‘ आर्यस्त्र्य[3]भिगमने लिङ्गोद्धा[4]रः सर्वस्वहरणं च ’ ।
(गौ. स्मृ. १२. २.)

इति । नार्याः पुनर्हीनवर्णगम[5]ने नासादिकर्तनम् । अयं वधाद्युपदेशो राज्ञः तस्यैव पालनाधिकारात् न द्विजातिमात्रस्य ।

‘ ब्राह्मणः[*] परीक्षार्थमपि शस्त्रं नाददीत ’ ।
(आ. ध. सू. १. १०. २९. ६.)

---

१. B. originally reads °माप्नुयात् but corrects मावसन्. २. B. reads अगुप्तैकांगसर्वस्वे गुप्तौ and gives in margin अगुप्तमंगसर्वस्वैर्गुप्तं, while C. reads अगुप्तैकांगसर्वस्वं गुप्तौ, and D. substitutes only गुप्तौ for गुप्तं. ३. B. reads °स्त्रियोभि° and C. D. °स्त्रियाभि°. ४. B. and C. read लिङ्गोद्धारसर्वस्व° and all except A. omit च. ५. B. originally reads °महणे.

* The commentator माधवाचार्य does not say from what text he has quoted this "Sûtra" but मेधातिथि in his commentary on मनुस्मृति says this "Sûtra" is quoted from the text of आपस्तंब. (See मनुस्मृति VIII. 348 Commentary). It appears in आपस्तंबधर्मसूत्र but the reading there is quite different परीक्षार्थोऽपि ब्राह्मण आयुधं नाददीत. मेधातिथि—reads न ब्राह्मणः परीक्षार्थमपि शस्त्रमाददीत. The meaning, however, of these different readings is the same.

इति शस्त्रग्रहणस्य निषेधात् । यदा तु राज्ञो निवेदने कालातिपातशङ्का[1] तदा द्विजातिमात्रस्याऽपि वधाधिकारोऽस्त्येव—

'शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ।
नाततायिवधे दोषो हन्तुर्भवति कश्चन' ।
प्रकाशं वाऽप्रकाशं वा मन्युस्तं मन्युमृच्छति'॥

(म. स्मृ. ८. ३४८,३५१.)

इति । शस्त्रग्रहणाभ्यनुज्ञानात्[2] । क्षत्रियवैश्ययोरन्योन्यस्याभिगमने[3] यथाक्रमं सहस्रपञ्चशतपणात्मकौ[4] दण्डौ । तदाह मनुः—

'वैश्यश्चेत्[5] क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् ।
यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः' ॥

(म. स्मृ. ८. ३८२.)

इति । साधारणस्त्रीगमने दण्डमाह याज्ञवल्क्यः—

'अवरुद्धासु दासीषु भुजिष्यासु तथैव च ।
गम्यास्वपि पुमान् दाप्यः पञ्चाशत्पणिकं[6] दमम्' ॥

(या. स्मृ. २. २९०.)

इति । उक्तलक्षणा वर्णस्त्रियो दास्यः । ता एव स्वामिना शुश्रूषाहानिव्युदासार्थं गृह एव स्थातव्यमित्येवं पुरु-

---

१. B. reads कार्याति° for कालाति°. २. B. substitutes °ध्य° for °भ्य°. ३. B. and C. read अन्यान्यस्याभिगमने for अन्योन्यस्याभिगमने. ४. B. and C. omit पण. ५. C. reads वैश्यस्तु. ६. B. and D. read °पणकं.

षान्तरभोगतो निरुद्धाः अवरुद्धाः । नियतपुरुषपरिग्रहाः-भुजिष्याः । यदा दास्योऽवरुद्धा भुजिष्या वा भवेयुः तासु तासु[1] । चशब्दाद्वेश्यास्वैरिणीनामपि साधारणस्त्रीणां भुजिष्याणां ग्रहणम् । तासु च सर्वपुरुषसाधारणतया गम्यास्वपि गच्छन् पञ्चाशत्पणं दण्डनीयः । परपरिगृहीतत्वेन तासां परदारतुल्यत्वात् । एतदेवाभिप्रेत्य नारदोऽपि—

> 'स्वैरिण्यब्राह्मणी वेश्या दासी निष्का[2]सिनी च या ।
> गम्याः स्यु[3]रानुलोम्येन स्त्रियो न प्रतिलोमतः ॥
> आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत् ।
> गम्या[4] अपि हि नोपेया यत्ताः परपरिग्रहाः' ॥
>
> ( ना. स्मृ. १२. ७८–७९. )

इति । निष्का[5]सिनी स्वाम्यनवरुद्धा दासी । अनवरुद्धदास्या[6]द्यभिगमने याज्ञवल्क्यः—

> 'प्रसह्य दास्यभिगमे दण्डो दशपणः स्मृतः ।
> बहूनां यद्यकामाऽसौ चतुर्विंशतिकः पृथक्' ॥
>
> ( या. स्मृ. २. २९१. )

इति । पुरुषसंभोगजीविकासु दासीषु स्वैरिण्यादिषु च शुल्कदानमन्तरेण बलात्कारेणाभिगच्छतो दशपणो दण्डः । अनिच्छन्तीमेकां गच्छतां बहूनां प्रत्येकं चतुर्विंशतिपणात्मको दण्डः । कन्याहरणे दण्डमाह याज्ञवल्क्यः—

---

१. B. and C. do not repeat this word. २. C. reads निष्क्रासनी. ३. C. adds च after स्युः. ४. B. C. and D. read गम्यास्त्वपि हि नोपेयाऽऽ यतस्ताः सपरिग्रहाः. ५. B. reads निष्काशनी. ६. B. reads °दास्यभि° for °दास्याद्यभि°.

'अलंकृतां ह[1]रन् कन्यामुत्तमं ह्यन्यथाऽधमम् ।
दण्डं दद्यात्सवर्णासु प्रातिलोम्ये वधः स्मृतः' ॥
[2]सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः' ।

( या. स्मृ. २. २८७–२८८. )

इति । अलंकृता विवाहाभिमुखी[3] तां क[4]न्यामपहरन् उत्तमसाहसं दण्डनीयः । तदनभिमुखीं सवर्णामपहरन् प्रथमसाहसं दण्डनीयः । उत्तमवर्णजां कन्यामपहरतः क्षत्रियादेर्वध एव । आनुलोम्येन स[5]कामामपहरन् न दण्डभाक् भवति । अ[6]कामामपहरन् प्रथमसाहसं दण्डनीयः । कन्या-

तु[7] दण्डमाह स एव——

'दूषणे तु करच्छेद उत्तमायां वधः स्मृतः ।
शतं स्त्रीदूषणे दद्याद्द्वे तु मिथ्याभिशंसने ॥
पशून् गच्छन् शतं दाप्यो हीन[8]स्त्रीं गां च मध्यमम्' ॥

( या. स्मृ. २. २८८–२८९. )

इति । यद्यकामां कन्या बलात्कारेण नखक्षतादिना तदा तस्य करच्छेदः । उ[9]त्तमाया दूषणे वधः । कन्यायाः यदि कश्चिद्विद्यमानानेवापस्मारराजयक्ष्मादि-

१. A. reads ह्वरेत् for हरन्. २. B. and C. do not insert this line ( सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः ). but the Commentator माधवाचार्य gives explanation of this line below. ३. D. reads अलंकृतां विवाहाभिमुखीं कन्यां and omits ताम्. ४. D. omits कन्याम्. ५. D. reads सकामापहारे तु दण्डो न भवति. ६. C. reads सकामा° for अकामा°, but it gives quite contrary meaning. ७. B. and C. omit तु. ८. A. reads हीनां स्त्रीम् and D. reads हीनस्वां स्त्री च, while C. reads पशूनां चेच्छतं for पशून् गच्छन् शतम्. ९. C. and D. do not insert this portion from उत्तमाया दूषणे वधः to मध्यमसाहसं दण्डनीय इत्यर्थः.

दोषान्प्रकाश्येयमकन्येति दूषयत्यसौ शतं दाप्यः। मिथ्याभिशंसने तु पुनरविद्यमानदोषाविष्कारेण दूषणे द्विशते दापनीयः। गोव्यतिरिक्तपशुगमने पणशतं दाप्यः। तथा हीनां स्त्रियमन्त्यावसायिनीं गां च गच्छन् मध्यमसाहसं दण्डनीय इत्यर्थः। यदा पुनस्तामेव अङ्गुलीप्रक्षेपेण योनिक्षतं कुर्वन् दूषयति तदा विशेषमाह मनुः—

'अभिषह्य तु यः कन्यां कुर्याद्दर्पेण मानवः।
तस्याशु कर्त्ये[1] अङ्गुल्यौ दण्डं चार्हति षट्शतम्॥
सकामां दूषयंस्तुल्यो[2] नाङ्गुलिच्छेदमर्हति[3]।
द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये॥
कन्यैव कन्यां या[4] कुर्यात्तस्याः स्याद्द्विशतो दमः।
शुल्कं च द्विगुणं दद्यात् शिफाश्चैवाप्नुयाद्दश॥
या तु कन्यां प्रकुर्यात् स्त्री सा सद्यो मौण्ड्यमर्हति।[5]
अङ्गुल्योरेव वा[6] [7]च्छेदं खरेणोद्वहनं[8] तथा'॥

(म. स्मृ. ८. ३६७–७०.)

इति। यदा पुनरुत्कृष्टजातीयां[9] कन्यां सानुरागामकामां[10] गच्छति तदा तस्य क्षत्रियादेर्वधः। यदा सवर्णां सकामां

---

१. C. reads कर्त्ये for कर्त्ये. २. B. reads दूषयित्वा तु and gives in margin दूषयंस्तुल्यो. ३. A. reads °माप्नुयात् for °मर्हति. ४. C. substitutes यः for या, B. and C. substitute तु for स्यात् while B. and C. omit the following one line शुल्कं च द्विगुणं दद्यात्शिफाश्चैवाप्नुयाद्दश. ५. B. omits या तु कन्यां प्रकुर्यात्स्त्री सा सद्यो मौण्ड्यमर्हति. ६. D. substitutes च for वा. ७. B. and C. च्छेदः for च्छेदं. ८. B. and C. उद्वाहनं for उद्वहनं. ९. C. reads कृष्ण° for उत्कृष्ट. १०. C. substitutes सकामां, B. also originally अकामां but corrects सकामां and inserts स after this.

अभिगच्छति तदा गोमिथुनं शुल्कं तत्पित्रे दद्यात् । अनिच्छति पितरि दण्डरूपेण राज्ञे दद्यात् । सवर्णामकामां तु गच्छतो वध एव । तदाह मनुः—

‘ उत्तमां सेवमानस्तु जघन्यो वधमर्हति ।
शुल्कं दद्यात्सेवमानः समां[1]मिच्छेत्पिता यदि ॥
योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति ।
सकामां दूषयंस्तुल्यो[2] न वधं प्राप्नुयान्नरः ’ ॥

( म. स्मृ. ८. ३६६, ३६४. )

इति । चण्डाल्यादिगमने दण्डमाह स एव—

‘ अन्त्याऽभिगमने त्वङ्क्यः कुबन्धेन[3] प्रवासयेत् ।
शूद्रस्तथाऽङ्क्य एव स्यादन्त्यस्यार्यागमे वधः ॥
अयोनौ गच्छतो योषां पुरुषं वा[4]ऽपि मेहतः ।
चतुर्विंशतिको दण्डस्तथा प्रव्रजितासु[5] च ’ ॥

( या. स्मृ. २. २९४, २९३. )

इति । अन्त्या चाण्डाली । तां गच्छन्तं त्रैवर्णिकं तास्[illegible]
श्चित्तानभिमुखं    दय-

‘ सहस्रं त्वन्त्यजस्त्रियम् ’ ।

( म. स्मृ. ८. ३८५. )

१. B. reads सयाम् and C. सम्यक् for समां. २. B. and C. read दूषमांनस्तु for दूषयंस्तुल्यो. ३. B. and C. read कबंधेन. ४. B. and C. substitute च for वा. ५. B. reads प्रव्रजितागमे. and C. प्रव्रजिता नरः.

60

इति। मनुवचनानुसारेण सहस्रं दण्डयित्वा कुत्सितवर्णेन[१] भगाकारेणाङ्कयित्वा स्वराष्ट्रान्[२]निर्वासयेत्। शूद्रः पुनश्चण्डालीं गच्छन्नङ्क्य एव। अन्त्यज[३] इति पाठे चण्डाल एव भवति। चण्डालस्य तूत्कृष्टजातिस्त्रिया[४]भिगमने वध एव। योषां मुखादावभिगच्छतः पुरुषं वा मुखे मेहतः प्रव्रजितां गच्छतः चतुर्विंशतिपणो दण्डः। वञ्चनया स्त्रीसंग्रहणे[५] दण्डमाह बृहस्पतिः—

'[६]छद्मनाकारयेद्यस्तु तस्य सर्वहरो दमः।
अङ्कयित्वा भगाङ्केन पुरान्निर्वासयेत्ततः'॥

इति।

इति स्त्रीसंग्रहणम्।

## अथ स्त्रीपुंसयोगाख्यं विवादपदम्।

तस्य स्वरूपमाह नारदः—

'विवाहादिविधिः स्त्रीणां यत्र पुंसां च कीर्त्यते।
स्त्रीपुंसयोगसंज्ञं[७] तद्विवादपदमुच्यते'॥

(ना. स्मृ. १२. १.)

इति। स्त्रीरक्षणमाह मनुः—

---

१. D. reads °बंधेन. २. D. reads पुरात् for स्वराष्ट्रात्, while C. substitutes विप्रवासयेत् for निर्वासयेत्. ३. D. reads अन्त्य for अन्त्यज. ४. B. and C. omit °स्त्रिया° and read °ज्यात्यभिगमे. ५. D. reads °संग्रहे for °संग्रहणे. ६. C. and D. do not insert this verse and the following up to नारदः; owing to this the both प्रकरण *i. e.*, स्त्रीसंग्रहणम् and स्त्रीपुंसयोगाख्यं are mixed together. ७. A. reads °नामैतत् for °संज्ञंत°.

'अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् ।
विषयेषु च सज्जन्त्य[1]ः संस्थाप्या ह्यात्मनो वशे ॥

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः ।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥

इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम् ।
यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि ॥

स्वां प्रसूतिं चरित्रं[2] च कुलमात्मानमेव च ।
स्वं च धर्मं प्रयत्नेन[3] जायां रक्षन् हि रक्षति ॥

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् ।
एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम् ॥

अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् ।
शौचे धर्मेऽन्नपक्त्यां[4] च पारिणाह्यस्य चेक्षणे[5]' ॥

(म. स्मृ. ९. २, ५–७, १०–१२.)

इति । स्वैः पुरुषैः भर्तृभिः सर्वदा अस्वतन्त्राः कार्याः । विषये गीतादौ आसक्तास्ततो व्यावर्तनीयाः । अरक्षितास्तु दुश्चरितेन भर्तृपितृकुलयोः शोकं कुर्युः । तस्मात्कुलद्वयवृद्ध्यर्थं रक्ष्यास्ताः[6] । यद्यपि प्रसह्यावरुध्य[7] रक्षितुमशक्या-

---

१. C. and D. read विषये सज्जमानाश्च; B. also reads the same but in margin विषयेषु च सज्जन्त्यः. २. D. substitutes प्रसूतिं च वित्तं च and B. in margin gives the same; while C. तां प्रसूतिं च वित्तं च. ३. B. and C. read प्रजाश्चैव for प्रयत्नेन; but B. gives margin reading प्रयत्नेन. ४. B. and C. read धर्मेण पक्त्यां for धर्मेऽन्नपक्त्यां. ५. D. reads रक्षणे for चेक्षणे and substitutes पारिणाय्यस्य for पारिणाह्यस्य. ६. B. omits ताः. ७. D. omits अवरुध्य.

स्तथाप्यर्थसंग्रहादौ नियोजनेन पुरुषान्तरचिन्तनावसरस्याप्रदानेन रक्षेदित्यर्थः। बृहस्पतिरपि—

'सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यो निवार्या स्त्री स्वबन्धुभिः।
श्वश्र्वादिभिर्गुरुस्त्रीभिः पालनीया दिवानिशम्'॥

इति। दोषरहितस्त्रीपरित्यागिनं प्रत्याह नारदः—

'अनुकूलामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम्।
त्यजन् भार्यामवस्थाप्यो राज्ञा दण्डेन भूयसा'॥

(ना. स्मृ. १२. ९५.)

इति। दण्डेन स्थापयितुमशक्ये त्वाह याज्ञवल्क्यः—

'आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम्।
त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः'॥

(या. स्मृ. १. ७६.)

इति। बुध्वा स्त्रियं त्यजेदित्याह नारदः—

'अन्योन्यं त्यजतोरागः स्यादन्योन्यविरुद्धयोः।
स्त्रीपुंसयोर्न चोढाया व्यभिचारादृते स्त्रियाः'॥

(ना. स्मृ. १२. ९० ).

इति। विवाहसंस्काररहितयोर्हीनजातीयस्त्रीपुंसयोर्विरोधेनान्योन्यं त्यजतो दोषो नास्ति। विवाहसंस्कृतायास्तु व्यभिचारादेव त्यागो न विरोधमात्रेण। एतच्च स्वच्छन्दव्यभिचारिणीविषयम्—

१. C. reads स्वस्रा° for श्वश्र्वा°. २. B. originally reads नारीं and gives marginal reading भार्यां. ३. B. C. and D. read धर्मः for आगः. ४. D. reads °विशुद्धये for °विरुद्धयोः. ५. A. reads निगूढाया. B. तनूढाया for न चोढाया. ६. D. reads अत्यन्त for हीन.

'स्वच्छन्दगा तु या नारी तस्यास्त्यागो विधीयते' ।

इति । यमस्मरणात् । शिष्यगाद्या अपि संत्याज्याः[1] ।

तथा च वसिष्ठः—

'चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा तथा ।
पतिघ्नी तु विशेषेण जुङ्गितोपगता[2] तथा' ॥

(व. स्मृ. २१. १०.)

इति । हारीतोऽपि ।

'गर्भघ्नीं अधमवर्णां[3] शिष्यसुतगामिनीं पानव्यसनासक्तां धनधान्यविक्रयकरीं विवर्जयेत्' ।

(हा. स्मृ. १३. २१.)

इति । विवर्जनं च व्यवहारपरित्यागः । तथा च वसिष्ठः—

'व्यवाये[4] तीर्थगमने धर्मेभ्यश्च[5] निवर्तते' ।

(व. स्मृ. २१. ९.)

इति । व्यवायः संभोगः । तीर्थगमनशब्देन स्मार्तं कर्म लक्ष्यते । धर्मशब्देन श्रौतम् । चशब्देन संभाषणादिकम् । व्याधितादीनां तु संभोगमात्रस्य त्याग इत्याह देवलः—

'व्याधितां स्त्रीप्रजां वन्ध्यामुन्मत्तां विगतार्तवाम् ।
अदुष्टां[6] लभते त्यक्तुं तीर्थान्न त्वेव कर्मणः' ॥

(देवल.)

---

१. B. reads त्याज्याः for संत्याज्याः. २. B. reads उज्झितोपगता and gives in margin जुङ्गितोपगता. ३. C. and D. read अधमवर्णशिष्य° for अधमवर्णां शिष्य°. ४. D. reads व्यवायतीर्थिगमन° and C. व्यवायतीर्थखनन and gives in margin व्यवायसीर्थमनु. ५. A. substitutes तु for च. ६. B. reads अभक्तां.

इति। तीर्थात्संभोगादित्यर्थः। तथा च नारदः—

'वन्ध्यां स्त्रीजननीं निन्द्यां प्रतिकूलां च सर्वदा।
कामतो नाभिनन्देत कुर्वन्नेवं न दोषभाक्* ॥
[1]अनर्थशीलां सततं तथैवाप्रियवादिनीम्।
पूर्वाशिनीं च या भर्तुः क्षिप्रं निर्वासयेद्गृहात्।
स्त्रीं [2]धनभ्रष्टसर्वस्वां गर्भविध्वंसिनीं तथा॥
भर्तुश्च वधमिच्छन्तीं स्त्रियं निर्वासयेत्[3]पुरात्' ॥

(ना. स्मृ. १२. ९४, ९३, ९२.)

इति। बौधायनोऽपि—

अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत्।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम्।

(बौ. स्मृ. २. २-४-६.)

इति। संभोग इति शेषः—

---

* after this B. has the following:—

इति। बौधायनोऽपि—

अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत्।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम्॥

इति संभोग इति शेषः

C. inserts only बौधायनोपि अप्रजां दशमे वर्षे संभोग इति शेषः while D. omits the whole above portion.

१. D. has mistaken throughout; it takes the last word of the first half of this verse *viz*: वादिनीम् and mixes it in the second half and composes only one line वादिनीं पूर्वाशिनीं च भर्ता निर्वासयेद्गृहात्। for the whole verse as given; while C. omits only first half of the verse. २. B. C. and D. read धन° for वध°. ३. B. C. and D. read गृहात् for पुरात्.

'भर्तुः प्रतिनिविशेनं[1] या भार्या स्कन्दयेदृतुम् ।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं निर्धमेद्गृहात्[2] ।

(बौ. स्मृ. ४. १-१२-२०.)

अशुश्रूषाकरीं नारीं बन्धकीं पतिहिंसकाम्[3] ।
त्यजन्ति पुरुषाः प्राज्ञाः क्षिप्रमप्रियवादिनीम् ' ॥

इति । त्यागश्च वधप्रतिनिधित्वेन[4] कार्यः । तथा च यमः—

'स्वच्छन्दव्यभिचारिण्याः विवस्वांस्त्यागमब्रवीत् ।
न वधं न च वैरूप्यं वधं स्त्रीणां विवर्जयेत् ॥
न चैव स्त्रीवधं कुर्यान्न चैवाङ्गविकर्तनम् ' ॥

इति । स्त्रीणां वधं कुर्वन् तासां विवर्जनं कुर्याद्भर्ता न कर्णनासादिकर्तनमित्यर्थः । अन्ये[5] च स्त्रीपुंधर्मा आचाराध्याये प्रपञ्चिता इति नात्र प्रपञ्चिताः ।

इति स्त्रीसंग्रहः ।

---

## अथ दायभागाख्यं व्यवहारपदं कथ्यते ।

तल्लक्षणं[6] नारदेनोक्तम्—

'विभागोऽर्थस्य पैत्र्यस्य[7] पुत्रैर्यत्र प्रकल्प्यते ।
दायभाग इति प्रोक्तं व्यवहारपदं[8] बुधैः ' ॥

(ना. स्मृ. १३. १.)

---

१. D. reads °निषेधेन for °निविशेन. २. B. C. and D. read तु °नये° for निर्धमे°. ३. C. and D. read परि° for पति°. ४. D. reads अनिधनेन for वधप्रतिनिधित्वेन. ५. B. originally reads अयं स्त्रीधर्मः for अन्ये च स्त्रीपुंधर्माः । and for the same D. अयं च स्त्रीपुंधर्मः । ६. D. reads तत्र नारदः. ७. C. reads पैत्रस्य and D. पित्र्यस्य for पैत्र्यस्य ८. A. reads तद्विवादपदम्.

इति। दायो नाम यद्धनं स्वामिसंबन्धादेव अन्यस्य स्वं भवति* तदुच्यते। स द्विविधः। अप्रतिबन्धः सप्रतिबन्धश्चेति। पितृधनं पितामहधनं वा अप्रतिबन्धो दायः। †पुत्रादिधनं तु पित्रादीनां सप्रतिबन्धो दायः। तस्य §वि[3]भागो दायविभाग इत्युच्यते। अत एव [1]योगीश्वरः दायशब्देन पितृद्वाराऽऽगतं मातृद्वाराऽऽगतं [2]च द्रव्यमेवोच्यते इति। संग्रहकारश्च—

'पितृद्वाराऽऽगतं द्रव्यं मातृद्वाराऽऽगतं च यत्।
कथितं दायशब्देन तद्विभागोऽधुनोच्यते'॥

इति। विभागकालमाह मनुः—

'ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः सम[4]म्।
भजेरन् पैतृकं ऋक्थमनीशास्ते हि जीवतोः'॥

(म. स्मृ. ९. १०४.)

---

* स्वामिनः धनस्वामिनः संबन्धः स्वामिसंबन्धः। स च दायभागप्रकरणोक्तः पुत्रत्वादिरूप एव ग्राह्यः न तु क्रेतृत्वादिः। तेन स्वामिनः सकाशात् क्रीतं धनं न दायः।

† अत्र विज्ञानेश्वरः। पितृव्यभ्रात्रादीनां तु पुत्राभावे स्वाम्यभावे च स्वं भवतीति पुत्रसद्भावः स्वामिसद्भावश्च प्रतिबन्धस्तदभावे पितृव्यत्वेन भ्रातृत्वेन च स्वं भवतीति सप्रतिबन्धो दायः। एवं तत्पुत्रादिष्वप्यूहनीयः।

§ विभागो नाम द्रव्यसमुदायविषयाणामनेकस्वाम्यानां तदेकदेशेषु द्रव्यस्य व्यवस्थापनम्।

---

१. C. and D. omit योगीश्वरः. २. B. originally substitutes वा for च. ३. D. reads तस्य भागो. ४. B. reads originally तथा and giv in margin as सह. C. and D. read सह for समम्.

इति । ऊर्ध्वं पितुरिति पितृधनविभागकालः । मातुरूर्ध्व-मिति मातृधनविभागकालः । ततश्चैतदुक्तं भवति । पितु-रूर्ध्वं मातरि जीवन्त्यामपि पितृधनविभागः कार्यः । तथा मातुरूर्ध्वं पितरि जीवितेऽपि मातृधनविभागः कार्य एव । अन्यतरधन¹विभागे उभयोरूर्ध्वकालप्रतीक्षणानुपयोगादिति । तदुक्तं संग्रहकारेण—

'पितृद्रव्यविभागस्य जीवन्त्यामपि मातरि ।
अस्वतन्त्रतयाऽस्वाम्यं यस्मान्मातुः पतिं विना ॥
मातृद्रव्यविभागोऽपि तथा पितरि जीवति ।
सत्स्वपत्येषु यस्मान्न स्त्रीधनस्य पतिः पतिः' ॥

इति । अयमर्थः । पतिमरणे पितृभार्यायाः पत्युपरमात् पत्युर्धने² यस्मात् अस्वातन्त्र्येण न स्वामित्वम् यस्माच्चापत्येषु विद्यमानेषु भार्याधनस्य भार्यामरणेऽपि पतिर्न स्वामी तस्मा-त्तयोरन्यतरास्मिन् जीवत्यप्यन्यतरधनविभागो युक्त इति । ए³तेन जीवतोस्तत्तद्द्रव्यविभागेषु पुत्राणां न स्वातन्त्र्यमित्य-र्थादुक्तं भवति । तथा च⁴ शङ्खः—

'न जीवति पितरि पुत्रा रिक्थं भजेरन् ।
यद्यपि स्यात्पश्चादधिगतं तैः⁵ अनर्हा एव पुत्राः ।
अर्थधर्मयोः अस्वातन्त्र्यात्' ।

इति । अस्यायम⁶र्थः । यद्यपि जन्मानन्तरमेव पुत्राः पितृ-धने स्वामित्वं⁷ प्रतिपन्नाः तथापि पितरि जीवति तद्धनं न

१. B. and C. omit °धन°. २. D. omits पत्युर्धने यस्मात्. ३. B. reads तथा for एतेन. ४. D. omits च. ५. D. ते अ°. ६. C. D. omit अयम्. ७. D. reads °धननिमित्तम् and C. न° निमित्तम् for स्वामित्वम्.

विभजेरन्। यतो धर्मार्थयोरस्वातन्त्र्याद्विभागकरणेऽनर्हाः। अर्थास्वातन्त्र्यम्[1] नाम तदादानप्रदानयोरस्वातन्त्र्यम्—इति। तदाह[2] हारीतः—

'जीवति पितरि पुत्राणां अर्थादानविसर्गाक्षेपेष्व-
स्वातन्त्र्यम्'।

(हा. स्मृ. १७. २१.)

इति। अर्थादानमर्थोपभोगः[3]। विसर्गो व्ययः। आक्षेपो भृत्यादेः शिक्षार्थमधिक्षेपादिः[4]। धर्मास्वातन्त्र्यं पृथगिष्टापूर्तादावप्रवृत्तिः। यत्तु देवलेनोक्तम्—

'पितर्युपरते पुत्रा[5] विभजेरन् पितुर्धनम्।
अस्वाम्यं हि भवेत्तेषां निर्दोषे[6] पितरि स्थिते'॥

इति। तदप्यस्वातन्त्र्यप्रतिपादनपरम्। पितृधने पुत्राणां जन्मना स्वाम्यस्य लोकसिद्धत्वात्। ननु शास्त्रैकसमधिगम्यस्य स्वत्वस्य कथं लोकसिद्धता। शास्त्रसिद्धत्वं च—

'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु।
ब्राह्मणस्याधिकं लब्धम्।
क्षत्रियस्य विजितम्।
निर्विष्टं वैश्यशूद्रयोः'।

(गौ. स्मृ. १०. ३९–४२.)

---

१. B. C. read अस्वातंत्र्यम् for अर्थास्वातंत्र्यम्. २. D. reads तथा च for तदाह. ३. C. reads अर्थदान for अर्थादान. ४. B. reads धनम् for अधिक्षेपादिः. ५. C. D. read तत्र for पुत्राः. ६. C. reads विशेषे for निर्दोषे.

इति गौतमवचनादवगम्यते । अप्रतिबन्धो दायो ऋक्थं [1]न सप्रतिबन्धो दायः । संविभागः सप्रतिबन्धो दायः । अ[2]नन्यपूर्वस्य जलतृणकाष्ठादेः स्वीकारः परि[3]ग्रहः । निध्यादिप्राप्तिरधिगमः । एतेषु निमित्तेषु सत्सु स्वामी भवति । ब्राह्मणस्य प्रतिग्रहादिना यल्लब्धं तदधिकमसाधारणम् । क्षत्रियस्य विजयदण्डादिलब्धं य[4]त्तदसाधारणम् । वैश्यस्य कृषिगोरक्षादिलब्धं निर्विष्टं तदसाधारणम् । शूद्रस्य द्विजशुश्रूषादिना भृतिरूपेण यल्लब्धं तदसाधारणम् । एवमनुलोमप्रतिलोमजानां स्वस्ववि[5]हिताश्वसारथ्यादिना यल्लब्धं तदधिकमित्यर्थः । अ[6]त्रैव संग्रहकारो न्यायमाह—

‘वर्तते यस्य यद्धस्ते तस्य स्वामी स एव तु[7]’ ।
[8]अन्यस्वमन्यहस्तेषु चौर्याद्यैः किं न वर्तते ।

इति । अन्य[9]स्वस्यान्यहस्ते स्थितस्य दर्शनेन तस्यैव स्वामित्वापत्तेः । [10]अतः शास्त्रैकसमधिगम्यं स्व[10]त्वत्वम्। किंच यदि यस्यान्तिके यद्धनं दृष्टं तस्य स एव स्वामी तर्हि अस्य स्वमनेनापहृतं इति न ब्रूयात्। यस्यैवान्तिके दृष्टं तस्य स्वामित्वात् । स्वत्वस्य लौकिकत्वे—

---

१. B. and C. omit न सप्रतिबन्धो दायः. २. C. reads अन्य° for अनन्य°. ३. C. reads पितृगृहः for परिग्रहः. ४. B. and C. omit यत् तत्. ५. B. originally reads °विहितसूताद्यश्व° while C. omits °अश्व°. ६. D. substitutes तत्रैव for अत्रैव, while C. reads ग्रन्थकारो for संग्रहकारो. ७. D. substitutes न for तु. ८. C. D. omit this line अन्यस्वमन्यहस्तेषु चौर्याद्यैः किन्न वर्तते. ९. B. omits अन्यस्वस्यान्यहस्ते स्थितस्य दर्शनेन तस्यैव स्वामित्वापत्तेः. १०. C. reads तस्माच्छास्त्रत एव स्वत्वं स्यात् स्वाम्यंगानुरूपयीति अयमर्थः । यस्यहस्ते for अतः शास्त्रैकसमधिगम्यं स्वत्वत्वम् । किंच यदि यस्यान्तिके.

'योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम् ।
याजनाध्यापनेनाऽपि यथा स्तेनस्तथैव सः' ॥

(म. स्मृ. ८. ३४०.)

इति । याजनादिना अदत्तादायिनः सकाशाद्द्रव्यमर्जयतो दण्डविधानमनुपपन्नं स्यात् । तस्माच्छास्त्रैकसमधिगम्यं स्वत्वम् । इति

मैवम् । लौकिकमेव स्वत्वं लौकिकार्थक्रियासाधनत्वात् । व्रीह्यादिवत् । आहवनीयादीनां वैदिकादीनामपि लौकिकपाकादिसाधनत्वमस्तीत्यनैकान्तिको हेतुः—इति चेत् । न । न हि तेषामाहवनीयादिरूपेण पाकादिसाधनत्वं किं तर्हि लौकिकाग्न्यादिरूपेणेत्यस्ति वैषम्यम् । किंच पामराणामपि स्वत्वव्यवहारदर्शनात् स्वत्वस्य लौकिकत्वमवगम्यते ।

यत्तु गौतमवचनम् ।

'स्वामी रिक्थक्रयसंविभागेषु'

(गौ. स्मृ. १०. ३९.)

इत्याद्यनुपपन्नमित्युक्तम् । तन्न । प्रतिग्रहाद्युपायकस्य स्वत्वस्य लौकिकत्वे स्थिते ब्राह्मणादीनां प्रतिग्रहाद्युपायनियमार्थत्वात् शास्त्रस्य । यदप्युक्तमन्यस्य स्वमन्येनापहृतम्—इति न ब्रूयादिति । तदसत् । स्वत्वहेतुभूतक्रयादिसदहात् स्वत्वसंदेहोपपत्तेः । यदपि चोक्तं । 'योऽदत्तादायिनः' —

इति अदत्तादायिनः सकाशाद्याजनादिना द्रव्यमर्जयितुर्दण्डविधानमनुपपन्नमिति । तदप्यसत् । प्रतिग्रहादिनियतोपायकस्यैव स्वत्वस्य लौकिकत्वात् नियमातिक्रमेण द्रव्यमर्जयतो दण्डविधानमुपपद्यते । एवं

'तस्योत्सर्गेण शुध्यन्ति' इति प्रायश्चित्तविधानमपि । एवं च स्वत्वस्य लौकिकत्वे असत्प्रतिग्रहादिलब्धं धनं तत्पुत्रादीनां दायत्वेन स्वमिति विभाज्यम् । न तेषां दोषसंबन्धश्च ।

'सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च' ॥
(म. स्मृ. १०. ११५.)

इति । मनुस्मरणात्—

इदमत्र चिन्तनीयम् । विभागात्स्वं स्वस्य[१] वा विभागः । इति । अत्रायं पूर्वपक्षः । विभागात्स्वं जन्मनैव स्वत्वे उत्पन्नमात्रस्य पुत्रस्याऽपि स्वं साधारणमिति द्रव्यसाध्येष्वाधानादिषु पितुरधिकारविधिर्न स्यात् । किंच ।

'†भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत् ।
सा यथाकाममश्नीयाद्दद्याद्वा[२] स्थावरादृते' ॥

इति । प्रीतिदानवचनमप्यनुपपन्नं[३] स्यात् । यदपि—

† The Commentator in the next paragraph says, this verse is quoted from विष्णुस्मृति but in the printed edition of Dr. J. Jolly of विष्णुस्मृति it does not appear anywhere.

१. B. reads स्वत्वं स्वस्य सतो वा for स्वं स्वस्य वा; while C. स्वत्त्वस्य स्वस्य वा for the same. २. C. reads यावमाकाशमश्नीयात् यावद्वा—but it seems to be a mistake. ३. C. omits वचनम्.

‘ मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः ।
स्थावरस्य तु सर्वस्य न पिता न पितामहः ॥
पितृप्रसादाद्भुज्यन्ते वस्त्राण्याभरणानि च ।
स्थावरं तु न भुज्येत प्रसादे सति पैतृके ’ ॥

इति । तत्पितामहोपात्तस्थावरविषयम् । तस्मात्स्वामिनाशाद्विभागाद्वा स्वत्वं न जन्मनैव ।

राद्धान्तस्तु । जन्मनैव स्वत्वं लोके प्रसिद्धम् । विभागशब्दश्च बहुस्वामिकधनविषये लोके[1] प्रसिद्धो नान्यदीयधनविषयो न प्रहीणविषयः । किंच ।

‘ उत्पत्त्यैवार्थं[2] स्वामित्वाल्लभेतेत्याचार्याः ’—

इति गौतमवचनाज्जन्मनैव स्वत्वमवगम्यते ।

यदुक्तम् मणिमुक्ताप्रवालानां—इत्यादिवचनं पितामहोपात्तस्थावरविषयमिति । तदयुक्तम् । न पिता न पितामह इति वचनात् पितामहस्य हि स्वार्जितमपि धनं पुत्रपौत्रयोः सतोरदेयमिति वचनम् जन्मना स्वत्वं गमयतीति ।

यदप्युक्तम् । अर्थसाध्येष्वाधानादिषु पितुरनधिकार इति । तदयुक्तम् । वचनादेवाधिकारावगमात् । यदपि चोक्तं जन्मनैव स्वत्वे भर्त्रा प्रीतेन यद्दत्तमित्यादि विष्णुवचनं नोपपद्यते । इति । तदप्ययुक्तम् । साधारण्येऽपि द्रव्यस्य वचनादेव

---

१. B. and C. omit लोके and read विषयः प्रसिद्धो. २. This सूत्र does not appear in the printed edtion of A. F. Stenzler of the गौतमधर्मशास्त्र.

प्रीतिदाने पितुरधिकारोपपत्तेः । स्थावरादौ तु स्वार्जितेऽपि पुत्रादिपारतन्त्र्यमेव—

'स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम् ।
असंभूय सुतान् सर्वान्न दानं न च विक्रयः ॥
ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः ।
वृत्तिं च तेऽभिकाङ्क्षन्ति न दानं न च विक्रयः' ॥

इत्यादिवचनात् । आपदादौ तु स्वातन्त्र्यमस्त्येव—

'एकोऽपि स्थावरे कुर्याद्दानाधमनविक्रयम् ।
आपत्काले कुटुम्बार्थे धर्मार्थेषु[1] विशेषतः' ॥

इति । स्मरणात्[2] । तस्मात्सुष्ठूक्तं[3] जन्मनैव स्वत्वमिति । प्रकृतमनुसरामः । अपरमपि विभागकालमाह याज्ञवल्क्यः—

'विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान् ।
ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः' ॥

(या. स्मृ. २. ११४.)

इति । यदा पिता विभागं कर्तुमिच्छति तदा पुत्रानात्मनः सकाशादिच्छया विभजेत् । इच्छया विभागप्रकारः ज्येष्ठं वा श्रेष्ठभागेनेति । श्रेष्ठभागः सोद्धारविभागः[4] । उद्धारप्रकारः स्मृत्यन्तरे दर्शितः—

---

१. B. originally reads धर्मार्थेषु but in margin धर्मार्थे च and C. reads the same. २. B. and C. omit स्मरणात्. ३. B. substitutes साधू° for सुष्ठू°. ४. B, C. do not insert श्रेष्ठभागः सोद्धारविभागः.

'[1]ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम्।
ततोऽर्धं मध्यमस्य स्यात्[2]तुरीयं तु यवीयसः' ॥

(म. स्मृ. ९. ११२.)

इति। अथवा। [3]सर्वे ज्येष्ठादयः पुत्राः समांशभाजः [4]कार्याः स्युः। अथ च विषमो भागः स्वार्जितद्रव्यविषयः। क्रमागते [5]तु सर्वेषामपि [6]समस्वाम्यात् समांशः स्यात्। पितुरिच्छया विषमविभागस्यायुक्तत्वात्। नारदोऽपि कालान्तरमाह—

'[7]अत ऊर्ध्वं पितुः पुत्रा वि[8]भजेयुर्धनं समम्।
मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ॥
निवृत्ते वाऽपि रमणे पितर्युपरतस्पृहे' ॥

(ना. स्मृ. १३. २–३.)

---

* अयमर्थः। ज्येष्ठस्याविभक्तसाधारणधनादुद्धृत्य विंशतितमो भागः सर्वद्रव्येभ्यश्च यच्छ्रेष्ठं तद्दातव्यम्। मध्यमस्य चत्वारिंशत्तमो भागो देयः। कनिष्ठस्य पुनरशीतितमो भागो दातव्यः। अवशिष्टं धनं समं कृत्वा विभजनीयम्।

§ अत्रायं प्रयोगः। विभागस्य त्रयः कालाः। तत्र यदा पितुर्विभागेच्छा स तावदेकः कालः। अपरोऽपि जीवत्यपि पितरि द्रव्यनिःस्पृहे निवृत्तरमणे मातरि च निवृत्तरजस्कायाम् पितुरनिच्छायामपि पुत्रेच्छयैव विभागो भवति। एष द्वितीयः कालः। पितरि जीवत्यपि विभागं कर्तुमिच्छति चेत् विभागो भवति। एष तृतीयः कालः।

---

† The commentator माधवाचार्य does not mention particular name of the text from which this verse is quoted, but it appears in मनु.

१. A. reads ज्येष्ठस्य समुद्धरंशम् for ज्येष्ठस्य विंश उद्धारः. २. A. substitutes तृतीयम् for तुरीयम्. ३. B. omits सर्वे. ४. C. and D. do not insert कार्याः स्युः. ५. A. reads क्रमागतेऽपि and B. क्रमायाते तु, while C. क्रमात्त्येतु. ६. D. omits समस्वाम्यात् while B. and C. omit समांशः स्यात्. ७. A. reads पितर्यूर्ध्वंगते for अत ऊर्ध्वं पितुः। ८. A. substitutes विभजेरन् and क्रमात् for विभजेयुः and समम् respectively.

इति। शङ्खोऽपि—

'अकामे[1] पितरि ऋक्थविभागो वृद्धे विपरीत-
चेतसि दीर्घरोगिणि च'॥

इति। अस्यार्थः। अकामे विभागमनिच्छति पितरि अतिवृद्धे विपरीते[2]चेतसि[3] अप्रकृतिस्थे दीर्घरोगिणि अचिकित्स्यरोगग्रस्ते च पुत्राणामिच्छयैव विभागो भवतीत्यर्थः। दीर्घरोगग्रहणमतिकुपितादेरुपलक्षणम्। अत एव नारदः—

'व्याधितः कुपितश्चैव विषयासक्तमानसः।
अन्यथा[4]शास्त्रकारी च न विभागे पिता प्रभुः'॥
(ना. स्मृ. १३. १६.)

इति। पित्रा समविभागकरणे विशेषमाह याज्ञवल्क्यः—

'यदि कुर्यात्समानंशान् पत्न्यः कार्याः समांशिकाः।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा'॥
(या. स्मृ. २. ११५.)

इति। यदि स्वेच्छया पिता पुत्रान् समभागिनः करोति तदा अदत्तस्त्रीधनाः पत्न्योऽपि पुत्रसमांशभाजः कार्याः। दत्ते तु स्त्री-धने—

'दत्ते त्वर्धं प्रकल्पयेत्[5]'।
(या. स्मृ. २. १४८.)

---

¶ पूर्वोक्तात् कालत्रयादन्योऽयं चतुर्थो विभागकालः।

---

१. D. reads विपरीते चेतसि, for विपरीतचेतसि. २. C. and D. read विपरीतेऽप्रकृतिस्थे, while B. originally reads विपरीते अप्रकृतिस्थे चेतसि. ३. C. D. omit चेतसि. ४. D. reads अयथा° for अन्यथा°. ५. A. reads त्वर्धांशहारिणीम् while the text of याज्ञवल्क्य reads त्वर्धं प्रकीर्तितम्.

इति। पुत्रांशादर्धांशभाजो भवन्ति‡। पितुरूर्ध्वं धर्मविवृद्ध्यर्थं विभागः कर्तव्य इत्याह प्रजापतिः—

'एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया।
पृथग्विवर्धते धर्मस्तस्माद्धर्म्या पृथक्क्रिया'[1]।

(म. स्मृ. ९. १११.)

इति। बृहस्पतिरपि—

'एकपाकेन वसतां पितृदेवद्विजार्चनम्।
एकं भवेद्विभक्तानां तदेव स्याद् गृहे गृहे'॥

इति। पित्रोरूर्ध्वं विभागे प्रकारनियम[2]माह याज्ञवल्क्यः—

‡ इदं असंगतमिव प्रतिभाति यतः भगवता योगीश्वरेण अधिविन्नस्त्रिविषयोऽयं निर्णयः कृतः। तथा च।

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम्।
न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्धं प्रकीर्तितम्॥

(या. स्मृ. २-१४८.)

इति। व्याख्यातं चैतत् विज्ञानेश्वरेण। यथा—

"यस्या उपरि विवाहः साधिविन्ना सा चासौ स्त्री चेत्यधिविन्नस्त्री तस्यै अधिविन्नस्त्रियै आधिवेदनिकं अधिवेदननिमित्तं धनं समं यावदधिवेदनार्थं व्ययीकृतं तावद्दद्यात्। यस्यै श्वशुरेण भर्त्रा वा स्त्रीधनं न दत्तम्। दत्ते पुनः स्त्रीधने आधिवेदनिकद्रव्यस्यार्धं दद्यात्। अर्धशब्दश्चात्र समविभागवचनो न भवति। अतश्च यावता तत्पूर्वदत्तमाधिवेदनिकसमं भवति तावद्देयामित्यर्थः"।

अतः 'दत्ते त्वर्धं प्रकल्पयेत्' इति नियमः आधिवेदनिकसमत्वार्थः न तु पुत्रांशन्यूनत्वार्थः।

---

१. This verse does not appear in प्रजापति, but occurrs in मनु.
२. C. omits °नियम°.

'विभजेयुः सुताः पित्रोरूर्ध्वमृक्थमृण समम्' ।
(या. स्मृ. २. ११७.)

इति । ननु पित्रोरूर्ध्वं विभागेऽपि विषमविभागो मनुना दर्शितः—

'ऊर्ध्वं पितुश्च मातुश्च'
(म. स्मृ. ९. १०४.)

इत्युपक्रम्य—

'ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः ।
शेषास्तमुपजीवेयुर्यथैव पितरं तथा ॥
ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् ।
ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः' ॥

इति । तथा—

'उद्धारेऽनुद्धृते[1] तेषामियं स्यादंशकल्पना ।
*एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं ततोऽनुजः ।
अंशमंशं यवीयांस इति धर्मो व्यवस्थितः' ॥
(म. स्मृ. ९. १०५, ११२, ११६–११७.)

इति । गौतमोऽपि ।

'विंशतिभागो ज्येष्ठस्य मिथुनमुभयतोदद्युक्तो
रथो गोवृषः ।

---

* अस्यार्थः । एकाधिकमंशं द्वावंशाविति यावज्ज्येष्ठपुत्रो गृह्णीयात् । अधिकमर्धं यत्रांशे सार्धमंशं ज्येष्ठादनन्तरजातो गृह्णीयात् । कनिष्ठाः पुनरेकैकमंशं गृह्णीयुरिति व्यवस्थितो धर्मः । इदं तु ज्येष्ठतदनुजयोर्विद्यादिगुणवत्त्वापेक्षया कनिष्ठानां च निर्गुणवत्त्वे बोद्धव्यम् । ज्येष्ठतदनुजयोराधिकदानदर्शनात् ।

---

१. B. reads तूद्धृते for ऽनुद्धृते.

काणः खोडे[1]ः कूटः वण्डो मध्यमस्यानेके[2]श्चेत्।
अविर्धान्या[3]यसी गृहमनोयुक्तं चतुष्पदां
चैकैकं यवीयसः।
समं चेतरत्[4] सर्वम्'।

( गौ. स्मृ. २८. ६–८. )

इति। अयमर्थः। सर्वस्मात् पितृधनाद्विंशतितमो भागो ज्येष्ठस्य। मिथुनं गोमिथुनं प्रसिद्धम्। उभयतोदतोऽश्वाश्वतरगर्दभाः तेषां यथासंभवं अन्यतराभ्यां युक्तो रथः। खोडो[5] वृद्धः। कूटः शृङ्गविकलः। वण्डो[6] विलोपितवालधिः। अविशेषितत्वाद्गवाश्वादीनां यथासंभवं अन्यतरस्योद्धारः कर्तव्यो मध्यमस्य। यवीयसस्तु धान्यं व्रीह्यादि अयो लोहम्। अनोयुक्तं शकटयुक्तम्। चतुष्पदां गवादीनामेकैकं पृथक् पृथगेवा[7]नुपूर्व्येण यवीयस उद्धारः।

बृहस्पतिरपि—

'जन्मविद्यागुणैर्ज्येष्ठो[8] द्व्यंशं दायादमाप्नुयात्'।

इति। कात्यायनोऽपि—

'यथा यथा विभागास्तं[9] धनं यागार्थतामियात्।
तथा तथा विधातव्यं विद्वद्भिर्भागगौरवम्'॥

---

१. B. originally reads चौरः and in margin as खोरः while A. reads काणखोरकूटवण्टाः and B. and C. substitute षंडो for वण्डो. २. B. and C. read अनेकाश्चेत्. ३. B. reads originally हविर्धान्या° and gives in margin अहविर्धान्या°. ४. D. reads इतरतः while the text (Printed edition of A. F. Stenzler) reads समधेतरत्सर्वम्. ५. B. here also reads originally as चोरः and in margin श्वोरः, C. also reads श्वोरो for the same. ६. Here also B. reads शण्डो and C. शण्ठो. ७. B. C. and D. omit एव. ८. D. reads गुणश्रेष्ठो. ९. C. reads विभागास्तं and D. reads विभागोत्थधनं.

इति। जीवद्विभागेऽपि विषमविभागो नारदेनोक्तः—

'पितैव वा स्वयं पुत्रान् विभजेद्वयसि स्थितः।
§ज्येष्ठं[1] श्रेष्ठविभागेन यथा वास्य मतिर्भवेत्[2]॥
पित्रैव तु विभक्ता ये समन्यूनाधिकैर्धनैः।
तेषां स एव धर्मः[3] स्यात्सर्वस्य हि पिता प्रभुः*।
† द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता'॥

(ना. स्मृ. १३. ४, १५, १२.)

§ अत्र जीमूतवाहनः—

ज्येष्ठस्य श्रेष्ठभागमभिदाय पुनर्यथा वास्य मतिर्भवेदित्यनेन यादृशे न्यूनाधिकविभागे पितुः पूर्वोक्तकारणात्कर्तव्यमतिर्भवेदिति पृथगभिधानात् श्रेष्ठभागादन्य एवायं न्यूनाधिकविभागः प्रतीयते॥

* एतद्वचनम् अग्रे उक्तं 'समन्यूनाधिका भागाः' इत्यादि बृहस्पतिवचनं च—पुत्राविनिर्मोकेण पित्रार्जितपरं भ्रातृणामिति मनुवचनं च सर्वपुत्रसहकारेण पित्रर्जितधनविषयकमतो न विरोध इति चण्डेश्वरादीनां मतम्॥ पुत्राणां विभागप्रार्थनस्थले एव मनुवचनं नेयं पितुः स्वेच्छास्थल एव बृहस्पतिवचनमिति जीमूतवाहनादीनां मतम्। नारदः। पित्रैव तु....॥ इति नारदवचनम्॥ न्यूनाधिकविभक्तानां धर्मः पितृकृतः स्मृत इति याज्ञवल्क्यवचनं च बृहस्पतिवचनसमानविषयकमेव मन्तव्यम्॥

† अत्र केचित्तु परस्परतुल्यगुणयोगि किंचिन्न्यूनगुणकनिष्ठभ्रातृसमुदायस्यात्यल्पधनविभागविषयकमिदमेकद्रव्यरूपोद्धारदानासामर्थ्यात्। उत्कृष्टभागदानेनैव तत्संबन्धनं निर्गुणत्वेन न्यूनत्वाच्च निकृष्टभागदानं कनिष्ठायेत्याहुः। चण्डेश्वरस्तु आधिकोंऽशः विभागे योंऽशो लभ्यते

---

१. B. reads ज्येष्ठ° for श्रेष्ठ while A. reads वा श्रेष्ठभागेन for श्रेष्ठविभागेन. २. B. C. read स्वमतिः for °स्यमतिः. ३. D. reads धर्म्यः for धर्मः.

इति । बृहस्पतिरपि—

'समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः ।
तथैव ते पालनीया विनेयास्ते स्युरन्यथा'[1] ॥

इति । तस्माज्जीवद्विभागे अजीवद्विभागे[2] च विषमविभागोऽस्तीति[3] कथं सुताः सममेव विभजेरन्निति नियम्यते । मैवम् । सत्यं शास्त्रतो विषमविभागोऽस्ति तथापि लोकविद्विष्टत्वादनुबन्ध्यादिवत्[4] नानुष्ठीयते । उक्तं च संग्रहकारेण—

'यथा नियोगधर्मोऽयं[5] नानुबन्ध्यावधोऽपि[6] वा ।
तथोद्धारविभागोऽपि[7] नैव संप्रति वर्तते' ॥

---

तस्मादन्यः ज्येष्ठत्वनिबन्धनं देयः । कनिष्ठायावर इति तन्न्यूनः तत्पादोनस्तदर्धं तत्पादो वा । इदं च कनिष्ठस्य गुणवत्त्वे गुणं विविच्यैव देयमित्यभिप्रैति । शेषा मध्यमा निर्गुणाः समांशभागाः । समांशं गुणादिनिबन्धनाधिक्यरहितेंऽशे भागः भजनं स्वामित्वं येषाम् । अप्रदत्ता भगिनी अंशभागिनी न तु समांशभागिनी तस्याः समांशित्वनिषेधस्य वक्ष्यमाणत्वात् । यद्वा समांशभागिनी आधिक्यरहितभागस्वामिनी यथा । समस्तत्र विभागः स्यादिति स चांशो वक्ष्यमाणश्चतुर्थभागः प्रकाशकारेण तु कनिष्ठायावर इति स्थाने श्रेष्ठाय च वर इति पठितं व्याख्यातं च प्रथमोत्पन्नस्यांशद्वयं श्रेष्ठः कुटुम्बकर्मण्युपयुक्तः तस्य वरं श्रेष्ठं किंचिद्देयमिति । औरसेषु यदुक्तं क्षेत्रजेष्वपि एष व्यवहारः अतिदेश्य इत्याह । क्षेत्रजेष्विति । धर्मतो जातेषु क्षेत्रजेषु तद्वदौरसपुत्रवत् । तथा च या या व्यवस्था औरसपुत्रे उक्ता ज्येष्ठाद्यंशविषयेषु क्षेत्रजेष्वपि सति संभवे तास्ता ग्राह्या इति भावः ।

---

१. B. reads ते तथान्यथा and C. स्युरतोन्यथा. २. C. and D. omit अजीवद्विभागे and read जीवद्विभागेन च. ३. C. reads °विभागे सति for °विभागोऽस्तीति. ४. C. reads अनुवद्ध्यादिवत्. ५. B. reads नियोगो धर्मो नो for नियोगधर्मोयम्. ६. D. reads °बन्ध्या° for °ब्रन्ध्या°. ७. C. reads ततो° for तथो°.

इति । आपस्तम्बोऽपि—

‘ जीवन् पुत्रेभ्यो दायं विभजेत्समम् ’ ।

( आ. स्मृ. २. ६. १४. १. )

इति । स्वमतमुपन्यस्य—

‘ [2]ज्येष्ठो दायाद इत्येके ’ ।

( आ. स्मृ. २. ६. १४. ६. )

इत्येकीयमतेन कृत्स्नधनग्रहणं ज्येष्ठस्योपन्यस्य—

‘ देशविशेषे सुवर्णं कृष्णा गावः कृष्णं भौमं ज्येष्ठस्य ।
रथः पितुः [3]परीभाण्डं च [4]गृहे ।
अलंकारो भार्याया ज्ञातिधनं चेत्येके ’ ।

( आ. स्मृ. २. ६. १४. ७–९. )

इत्येकीयमतेनैवोद्धारविभागं दर्शयित्वा—

‘ [5]तच्छास्त्रविप्रतिषिद्धम् ’ ।

( आ. स्मृ. २. ६. १४. १०. )

इति [6]निराकृतवान् । तं [7]च शास्त्रप्रतिषेधं स्वयमेव दर्शितवान्—

‘ मनुः पुत्रेभ्यो दायं व्यभजदित्यविशेषेण श्रूयते ’ ।

( आ. स्मृ. २. ६. १४. ११. )

---

१. D. adds एव after जीवन्. २. B. and C. omit ‘ज्येष्ठो दायाद इत्येके’ इत्येकीयमतेन कृत्स्नधनग्रहणं ज्येष्ठस्योपन्यस्य. ३. Except A. all read as परि° for परी°. ४. D. intermixes both sûtras and reads as गृहेऽलंकारो. ५. A. reads शास्त्रैः for शास्त्र° and D. शास्त्रप्रति° for शास्त्रविप्रति° B. C. read आपस्तंबेनाऽपि. ६. B. C. read निराकृतम्. ७. B. C. omit तं च शास्त्रप्रतिषेधं स्वयमेव दर्शितवान्.

इति । तस्माद्विषमविभागः शास्त्रसिद्धोऽपि लोकविरोधाच्छ्रुतिविरोधाच्च नानुष्ठेयः । इति सममेव विभजेरन्निति नियमो घटते ।

स्वयं द्रव्यार्जनसमर्थतया पितृद्रव्यमनिच्छतोऽपि यत्किंचिद्दत्वा दायविभागः कर्तव्यः तत्पुत्रादीनां दायग्रहणेच्छानिवृत्त्यर्थमित्याह याज्ञवल्क्यः—

'शक्तस्यानीहमानस्य किंचिद्दत्वा पृथक् क्रिया'।

(या. स्मृ. २. ११६.)

इति । पुत्राणां मातृधनविभागो दुहित्रभावे द्रष्टव्यः तथाच स एव—

'मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः'।

(या. स्मृ. २. ११७.)

इति । मातृकृतर्णापाकरणावशिष्टं मातृधनं दुहितरो विभजेरन् । अतश्च मातृकृतर्णसमं न्यूनं च मातृधनं दुहितॄणां सद्भावेऽपि पुत्रा एव विभजेरन्—इत्यर्थादवगम्यते§ । अत्र गौतमेन विशेषो दर्शितः।

---

§ एतदुक्तं भवति । मातृकृतं ऋणं पुत्रैरेवापाकरणीयं न दुहितृभिः। ऋणावशिष्टं तु धनं दुहितरो गृह्णीयुः । युक्तं चैतत् ।

पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः'।

इति । स्त्र्यवयवानां दुहितृषु बाहुल्यात् स्त्रीधनं दुहितृगामि । पितृधनं पित्रवयवानां पुत्रेषु बाहुल्यात् पुत्रगामि इति ।

---

१. C. reads अयम्. २. C. reads ° करणवैशिष्ट्यम् for करणावशिष्टम्.

'स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च'।

(गौ. स्मृ. २८. २४).

इति। ऊढाऽनूढदुहितृसमवाये मातृधनमनूढानामेव। ऊढास्वपि सधननिर्धनदुहितृसमवाये निर्धनानामेवेत्यर्थः। पैतामहे पौत्राणां विभागे विशेषमाह याज्ञवल्क्यः—

'अनेकपितृकाणां तु पितृतो भागकल्पना'।

(या. स्मृ. २. १२०).

इति। यदा पितृतः अविभक्ता भ्रातरः पुत्रानुत्पाद्य मृताः तत्रैकस्य द्वौ पुत्रौ अन्यस्य त्रयः अपरस्य चत्वारः। तत्र पौत्राणां पैतामहे द्रव्ये यद्यपि जन्मनैव स्वत्वं पुत्रैरविशिष्टं तथापि पित्र्यंशं द्वावेकं त्रयोऽप्येकं चत्वारोऽप्येकं लभन्ते इत्यर्थः। एतदेवाभिप्रेत्य बृहस्पतिरपि—

'तत्पुत्रा विषमसमाः पितृभागहराः स्मृताः'।

इति। तत्पुत्राः प्रमीतपितृकाणामेकैकस्य पुत्राः विषमसमाः न्यूनाधिकसंख्याः स्वं स्वं पैतृकं भागमेव लभन्ते इत्यर्थः। यदा स्वसुतयोरविभक्तयोर्मध्ये कश्चिद्भ्राता मृतः तत्सुतस्तु पितामहादप्यप्राप्तांशः पितामहोऽपि नासीत् तदा त्वाह कात्यायनः—

'अविभक्तेऽनुजे प्रेते तत्सुतं ऋक्थभागिनम्।
कुर्वीत जीवनं येन लब्धं नैव पितामहात्।

१. B. C. D. read दायकल्पना. २. B. originally reads तथा while in margin reads तदा. ३. B. reads originally भागिनं and gives in margin as जीवनं.

लभेतांशं स पित्र्यं तु पितृव्यात्तस्य वा सुतात् ।
स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत् ।
लभेत तत्सुतो वाऽपि निवृत्तिः परतो भवेत् ' ॥

इति । लभेत तत्सुतो वा इत्यस्य अयमर्थः । तस्यापि विभाज्य धनस्वामिपौत्रस्य सुतोऽपि पितुरभावे तद्भागं लभेत तत ऊर्ध्वं तत्सन्ततौ वृद्धप्रपितामहधनविभागकरणनिवृत्तिः– इति । तथा च देवलः—

' अविभक्तविभक्तानां कुल्यानां वसतां सह ।
भूयो दायविभागः स्यादा चतुर्थादिति स्थितिः ॥
तावत्कुल्याः सपिण्डाः स्युः पिण्डभेदस्ततः परम् ' ॥

इति । जीवत्पितृकस्य पुनः पित्रा सह कथं पैतामहधनविभाग इत्याकाङ्क्षायामाह बृहस्पतिः—

' द्रव्ये पितामहोपात्ते जङ्गमे स्थावरेऽपि वा ।
सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि ' ॥

इति । याज्ञवल्क्योऽपि—

' भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ।
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः ' ॥

( या. स्मृ. २. १२१ ).

इति । भूः शालिक्षेत्रादिका । निबन्धः एकस्य पर्णभारस्य इयन्ति पर्णानि तथैकस्य क्रमुकफलभारस्य इयन्ति

१. B. and C. add स before लभेतांशम् but it will then break the rules of meter. २. B. and C. add इत्यर्थः after °निवृत्तिः. ३. D. reads कुलानां while A. substitutes गृहे for सह. ४. C. reads क्रीत° for जीवत्°. ५. B. C. D. omit °फल° while C. substitutes °भावस्य for °भारस्य.

क्रमुकफलानीत्याद्युक्तलक्षणः । द्रव्यं सुवर्णरजतादि यत्पितामहेन प्रतिग्रहविजयादिलब्धं तत्र पितुः पुत्रस्य च स्वाम्यं लोकप्रसिद्धमिति विभागोऽस्ति । यस्मात्सदृशं समानं स्वाम्यं तस्मान्न पितुरिच्छयैव विभागो नापि पितुर्भागद्वयम् । ततश्च पितृतो भागकल्पनेत्येतत्स्वाम्ये समानेऽपि वाचनिकम् । अतः—

'द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता' ।

( ना. स्मृ. १३. १२ ).

इति । एवमादिकं युगान्तरे विषमविभागप्रतिपादनतया स्थापितम् । स्वार्जितद्रव्यविषयं वा । पैतामहधनविषये तु न क्वापि विषमविभागः । इति । तथा अविभक्तेन पित्रा पैतामहे द्रव्ये दीयमाने विक्रीयमाणे वा पौत्रस्य निषेधेऽप्यधिकारोऽस्तीति गम्यते ।

---

* अत्र विज्ञानेश्वरः—'विभागं चेत् पिता कुर्यात्' इत्येतत्स्वार्जितविषयम् । तथा 'द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता' इत्येतदपि स्वार्जितविषयम् । 'जीवतोरस्वतन्त्रः स्याज्जरयापि समन्वितः' इत्येतदपि पारतन्त्र्यं मातापित्रर्जितद्रव्यविषयम् । तथा 'अनीशास्ते हि जीवतोः' इत्येतदपि । तथा सरजस्कायां मातरि सस्पृहे च पितरि विभागमनिच्छत्यपि पुत्रेच्छया पैतामहद्रव्यविभागो भवति । तथाऽविभक्तेन पित्रा पैतामहे द्रव्ये दीयमाने विक्रीयमाणे वा पौत्रस्य निषेधेऽप्यधिकारः । पित्रर्जिते तु न निषेधाधिकारः । तत्परतन्त्रत्वात् । अनुमतिस्तु कर्तव्या । तथाहि । पैतृके पैतामहे च स्वाम्यं यद्यपि जन्मनैव तथापि पैतृके पितृपरतन्त्रत्वात् पितुः स्वार्जकत्वेन प्राधान्यात् पित्रा विनियुज्यमाने स्वार्जिते द्रव्ये पुत्रेणानुमतिः कर्तव्या । पैतामहे तु द्वयोः स्वाम्यमविशिष्टमिति निषेधाधिकारोऽप्यस्तीति विशेषः । अग्रे मनुवाक्ये प्रदर्श्यते ।

पैतामहोपात्तेऽपि क्वचित्पितुरिच्छयैव स्वार्जितवद्विभागो भवतीत्याह मनुः—

'पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात् ।
न तत्पुत्रैर्भजेत्सार्धमकामः स्वयमर्जितम्' ॥

( म. स्मृ. ९. २०९. )

इति । यत्पितामहार्जितं केनाप्यपहृतं यदि पितोद्धरति तदा स्वार्जितमिव पुत्रैः सार्धमकामतः स्वयं न विभजेत् । इति । एवं चै सति पितामहोपार्जिते न स्वेच्छया विभाग इत्युक्तं भवति । बृहस्पतिरपि—

'पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम् ।
विद्याशौर्यादिनौ प्राप्तं तत्र स्वाम्यं पितुः स्मृतम्' ।

इति । कात्यायनोऽपि—

'स्वशक्त्यापहृतं द्रव्यं स्वयमाप्तं च यद्भवेत् ।
एतत्सर्वं पिता पुत्रैर्विभागं नैव दाप्यते' ॥

इति । यत्परैरपहृतं क्रमायातं स्वशक्त्यैवोद्धृतं यन्नष्टं क्रमायातं यच्च विद्याशौर्यादिना स्वयमेवार्जितं तत्सर्वं पिता विभागे पुत्रैर्न दाप्य इत्यर्थः । विभागोत्तरकालोत्पन्नस्य पुत्रस्य भागकल्पनाप्रकारमाह याज्ञवल्क्यः—

---

१. C. reads उपहृतम्. २. C. adds °विषयं वा । पैतामहधनविषये तु क्वापि विषमविभाग इति । तथापि । अविभक्तेन पितृपैतामहे द्रव्येऽपि चादीयमाने विक्रीयमाणे वा and omits इव only. ३. C. omits च. ४. C. reads तत्प्राप्तम् for °ना प्राप्तम्. ५. B. reads नष्टम्. ६. B. reads विभागे. ७. C. reads क्रमागतम्. ८. B. C. read यदि for यत्. ९. D. reads विभागम्. १०. D. omits पुत्रस्य.

'विभक्तेषु सुतो जातः सवर्णायां विभागभाक्' ।

(या. स्मृ. २. १२२.)

इति । अयमर्थः । विभक्तेषु पुत्रेषु सवर्णायां भार्याया जातः पुत्रः पित्रोर्विभागं भजते इति विभागभाक्-इति । मातृभागं चासत्यां दुहितरि—

'ताभ्य ऋतेऽन्वयः' ।

(या. स्मृ. २. ११७.)

इत्युक्तत्वात् । असवर्णायां जातस्तु स्वांशमेव पित्र्याल्लभते मातृकं तु सर्वमेव । अतएव मनुः—

'ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्' ।

(म. स्मृ. ९. २१६.)

इति । पित्रोरिदं पित्र्यम् ।

'[1]अनीशाः पूर्वजाः पित्रोः भ्रातृभागे विभक्तजाः' ।

इति । स्मरणात् । मातापित्रोर्भागे विभागात्पूर्वमुत्पन्नो न स्वामी पित्रा सह पूर्वं विभक्तत्वात् । विभक्तजश्च भ्रातु[2]र्धने न स्वामीत्यर्थः । विभागोत्तरकालं पित्रा स्वयमर्जितं विभागोत्तरकालमुत्पन्नस्यैव । तथा च मनुः—

"पुत्रैः सह विभक्तेन पित्रा यत् स्वयमर्जितम् ।

विभक्तजस्य तत्सर्वमनीशाः [3]पूर्वजाः स्मृताः ।

इति । ये च विभक्ताः पुनः पित्रा सह संसृष्टास्तेषां विभागोत्तरकालमुत्[4]पन्नेन सह विभागोऽस्तीत्याह मनुः—

१. C. reads in singular form अनीशः पूर्वजः and विभक्तजः. २. B. substitutes भागे for धने, and C. reads विभक्तजस्तु तद्धनःस्वामी. ३. B. originally reads पूर्वं एवच and in margin पूर्वजाः स्मृताः. ४. B. reads उत्पन्नो यस्तेन सह.

'संसृष्टास्तेन* वा ये स्युर्विभजेत स तैः सह' ।
( म. स्मृ. ९. २१६. )

इति । अजीवद्विभागोत्तरकालं जातस्य पुत्रस्य भागकल्पनामाह याज्ञवल्क्यः—

'दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात्' ।
( या. स्मृ. २. १२२. )

इति । पितरि मृते भ्रातृविभागसमयेऽस्पष्टगर्भायां मातरि भ्रातृविभागोत्तरकालमुत्पन्नस्य विभागः दृश्याद्भ्रातृभिर्गृहीतादायव्ययविशोधितात् उपचयापचयाभ्यां [1]अवधारितपरिमाणात् शोधिताद्धनात्किंचिदुद्धृत्य †स्वांशसमो दातव्यः स्यादित्यर्थः ।

---

* अत्र मेधातिथिः—विभागोत्तरकालं पित्रा यद्विभागे द्रव्यं गृहीतं द्वावंशौ प्रतिपद्येते तदेव सत्यां पितुरिच्छायां ग्रहीतव्यम् । पितुरूर्ध्वं वा न तत्र भ्रातृभिर्वाच्यं किमित्ययं द्वावंशौ गृह्णातीति अथ च नास्ति पितुरिच्छा तदा समं च स्वसमोऽस्य भाग उद्धर्तव्यः पितुरूर्ध्वं संसृष्टास्तेषामेव स पैतृकोंशस्तदुत्थं दद्यादपरेषां स्वांशं जातस्य च मृतस्य चेति जातस्य संसृष्टिन एव दद्युः पितुरूर्ध्वं तदीयमंशं च त एवमेव विभक्ताः सह इत्यनयानुबुद्ध्या भगिन्या आप्रसवान्नैव विभागोऽस्तीति वसिष्ठेन दर्शितम् ।

† आयः प्रतिदिवसं प्रतिमासं प्रत्यब्दं वा यदुत्पद्यते । व्ययः पितृकृतर्णापाकरणं ताभ्यां आयव्ययाभ्यां यच्छोधितं तस्माद्धनात् उद्धृत्य विभागानन्तरजातस्य भ्रातुः भागो दातव्यः । एतदुक्तं भवति । प्रातिस्विकेषु भागेषु तदुत्थमायं प्रवेश्य पितृकृतं च ऋणमपनीय अवशिष्टेभ्यः स्वेभ्यः स्वेभ्यो भागेभ्यः किंचित् किंचित् उद्धृत्य विभागानन्तरजस्य स्वसमानभागः कार्यः इति ।

---

1. C. reads संबन्धादि तत्परिमाणात् and does not repeat किंचित् while D. omits अवधारितपरिमाणात.

एतच्च मृतभ्रातृभार्यायामपि विभागसमये अस्पष्टगर्भायां विभागादूर्ध्वमुत्पन्नस्यापि वेदितव्यम् । स्पष्टगर्भायां तु प्रसवं प्रतीक्ष्यैव विभागः कर्तव्यः ।

'अथ भ्रातॄणां दायविभागो याश्चानपत्याः स्त्रियस्तासामापुत्रलाभात्' ।

(व. स्मृ. १७. ४०–४१.)

इति वसिष्ठस्मरणात् । विभक्तेभ्यः पितृभ्यामर्थदाने विभक्तजस्य पुत्रस्य निषेधाधिकारो नास्ति दत्तं च तेन न प्रत्याहर्तव्यमित्याह याज्ञवल्क्यः—

'पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत्§' ।

(या. स्मृ. २. १२३.)

इति । अजीवद्विभागे मातुरंशकल्पनामाह याज्ञवल्क्यः—

'पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत्' ।

(या. स्मृ. २. १२३.)

इति । एतच्च स्त्रीधनस्य अप्रदाने वेदितव्यम् । दत्ते त्वर्धमेव ।

§ विभक्ताभ्यां मातापितृभ्यां पूर्वं विभक्तस्य पुत्रस्य यद् अलंकारादि दत्तं भवेत् तत्तस्यैव पुत्रस्य स्यात् न विभक्तजस्य स्वं भवति । न्यायसाम्यात् विभागात् प्रागपि यस्य यद्दत्तं तत्तस्यैव । तथा सति विभक्तजे विभक्तयोः पित्रोरंशं तदूर्ध्वं विभजतां यस्य यद्दत्तं तत्तनान्यस्य इति वेदितव्यम् ।

१. A. omits स्त्रियः. २. B. reads भरणार्थे° for अर्थ°. ३. C. substitutes वेतनम् for दत्तं च तेन.

'दत्ते त्वर्धांशहारिणी'[1]

( या. स्मृ. २. १४८. )

इति स्मरणात् । अत एव स्मृत्यन्तरम्

'जनन्यस्वधना पुत्रैर्विभागेंशं समं हरेत्' ।

इति । अस्वधना प्रातिस्विकस्त्रीधनशून्या जननी पुत्रैर्विभागे क्रियमाणे पुत्रांशसममंशं हरेदित्यर्थः । जननीग्रहणं सापत्न्यादेरुपलक्षणार्थम् तथाच व्यासः—

'असुतास्तु पितुः पत्न्यः समानांशाः प्रकीर्तिताः ।
पितामह्यश्च सर्वास्ता मातृतुल्याः प्रकीर्तिताः' ।

इति । यत्तु कैश्चिदुक्तं माताप्यंशं समं हरेदिति जीवनोपयुक्तमेव धनं माता स्वीकरोति इति । तन्न । अंशसमंशब्दयोरानर्थक्यप्रसङ्गात् । अथोच्येत बहुधने जीवनोपयुक्तं गृह्णाति स्वल्पधने पुत्रसमांशमिति । तदपि न । विधिवैषम्यप्रसङ्गात् । भिन्नमातृकाणां सवर्णानां समसंख्यानां विभागप्रकारमाह व्यासः—

---

१. The text of याज्ञवल्क्य reads अर्धं प्रकीर्तितम् for अर्धांशहारिणी; our commentator does not mention the name of the text from which he quoted this sentence, but it appears in the text of याज्ञवल्क्य, and elsewhere he also mentions the same name. २. D. reads अपधना for अस्वधना. ३. B. reads अनन्यस्वधना while D reads अपधना. ४. B. omits अंशम्. ५. C. reads तनयांशस्य समशब्दयोरमाद्य°.

समानजातिसंख्या ये जातास्त्वेकेन सूनवः ।
विभिन्नमातृकास्तेषां मातृभागः प्रशस्यते ।

इति । बृहस्पतिरपि—

'येद्येकजाता बहवः समाना जातिसंख्यया ।
स्वैधनैस्तैर्विभक्तव्यं मातृभागेन धर्मतः' ॥

इति । विषमसंख्यानां तु विभागं स एवाह—

'सवर्णलिङ्गसंख्या ये विभागस्तेषु शस्यते' ।

इति । विभिन्नजातीनां पुत्राणां विभागप्रकारमाह याज्ञवल्क्यः—

'*चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः ।
क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः' ।

( या. स्मृ. २. १२८. )

---

¶ अयमाशयः—एकस्यां स्त्रियां यावन्तः पुत्रा जाताः तावन्त एव अपरस्यामपि जाताश्चेत् तदा मातुरेवायं विभाग इति कृत्वा तैः मातृभागं पृथक्कृत्य स्वविभागाः कर्तव्याः ।

* अस्यायमर्थः—तिस्रो वर्णानुपूर्व्येणेति ब्राह्मणस्य चतस्रः क्षत्रियस्य तिस्रो वैश्यस्य द्वे शूद्रस्यैकेति भार्या दर्शितास्तत्र ब्राह्मणात्मजा ब्राह्मणोत्पन्ना वर्णशः वर्णशब्देन ब्राह्मणादिवर्णाः स्त्रिय उच्यन्ते संख्यैकवचनाच्च वीप्सायामित्यधिकरणकारकादेकवचनाद्वीप्सायां शस् । अतश्च वर्णे वर्णे ब्राह्मणोत्पन्ना यथाक्रमं चतुस्त्रिद्व्येकभागाः स्युर्भवेयुः । एतदुक्तं

---

१. B. originally reads यथैकजाता and gives in margin as यद्येकजाता. २. B. originally साधनैः and in margin स्वधनैः; C. and D. read सधनैः. ३. B. reads °भिन्न° for °लिङ्ग°. ४. B. originally reads पूंसांशस्तेषु and corrects पुंभागस्तेषु. ५. C. and D. read भिन्न° for विभिन्न° and omit प्रकारम्.

इति । वर्णशो ब्राह्मणात्मजाः ब्राह्मणादिवर्णस्त्रीषु ब्राह्मणेनोत्पन्ना ब्राह्मणमूर्धावसिक्ताम्बष्ठनिषादाः । यथाक्रमं प्रत्येकं चतुस्त्रिद्व्येकभागा भवेयुः । क्षत्रियादिवर्णस्त्रीषु क्षत्रियेणोत्पन्नाः क्षत्रियमाहिष्योग्रास्त्रिद्व्येकभागाः वैश्येन वैश्याशूद्रोत्पन्नौ वैश्यकरणौ द्व्येकभागिनौ शूद्रस्यैकैव भार्येति भिन्नजातीयपुत्राभावात् तत्पुत्राणां पूर्वोक्त एक एव विभागः । मनुरपि-

'ब्राह्मणस्यानुपूर्व्येण चतस्रस्तु यदि स्त्रियः ।
ता§सां पुत्रेषु जातेषु विभागेऽयं विधिः स्मृतः' ॥

---

भवति । ब्राह्मणेन ब्राह्मण्यामुत्पन्ना एकैकशश्चतुरश्चतुरो भागांल्लभन्ते । तेनैव क्षत्रियायामुत्पन्नाः प्रत्येकं त्रींस्त्रीन् भागान् लभन्ते । वैश्यायां द्वौ द्वौ शूद्रायामेकमेकमिति । क्षत्रजाः क्षत्रियेणोत्पन्नाः वर्णशः इत्यनुवर्तते । यथाक्रमं त्रिद्व्येकभागाः क्षत्रियेण क्षत्रियायामुत्पन्नाः प्रत्येकं त्रीन् त्रीन् भागान् लभन्ते । वैश्यायां द्वौ द्वौ शूद्रायामेकमेकम् । विड्जाः वैश्येनोत्पन्नाः अत्रापि वर्णश इत्यनुवर्तते यथाक्रमं द्व्येकभागिनः वैश्येन वैश्यायामुत्पन्नाः[1] प्रत्येकं द्वौ द्वौ भागौ लभन्ते । शूद्रायामेकमेकम् । शूद्रस्यैकैवभार्येति भिन्नजातीयपुत्राभावात्तत्पुत्राणां पूर्वोक्त एव विभागः । यद्यपि चतुस्त्रिद्व्येक इत्यविशेषेणोक्तं तथापि प्रतिग्रहप्राप्तभूव्यतिरिक्तविषयमिदं द्रष्टव्यम् ।

§ सार्धसप्तधा विभक्तस्य धनस्य त्रीनंशान् ब्राह्मणीपुत्रः द्वौ क्षत्रियासुतः सार्धं वैश्यापुत्रः एकं शूद्रासुतः अनया रीत्या पितृद्रव्यं विभजेयुः । एवंच सति यत्र ब्राह्मणीक्षत्रियापुत्रौ द्वावेव विद्येते तत्र पञ्चधा कृते धने त्रयोभागा ब्राह्मणस्य द्वौ क्षत्रियापुत्रस्य । तथाच यत्र ब्राह्मणीवैश्यापुत्रौ तत्र सार्धचतुर्धा विभक्तस्य धनस्य भागत्रयं ब्राह्मणीपुत्रः सार्धभागं वैश्यापुत्रः । अनयैव दिशा ब्राह्मणीशूद्रापुत्रादौ क्षत्रियाशूद्रापुत्रादौ यथायथं विभागनियमः अनुसंधेयः ।[2]

---

१. D. वैश्यायामुत्पन्नौ. २. Except A. all others omit this.

'त्र्यंशं दायाद्धरेद्विप्रो द्वावंशौ क्षत्रियासुतः ।
वैश्याजः सार्धमेवांशमंशं शूद्रासुतो हरेत्' ॥
'सर्वं वा रिक्थजातं तद्दशधा प्रविभज्य तु ।
धर्म्यं विभागं कुर्वीत विधिनाऽनेन धर्मवित्' ॥
'†चतुरोंऽशान् हरेद्विप्रः त्रीनंशान् क्षत्रियासुतः ।
वैश्यापुत्रो हरेद् द्व्यंशं एकं शूद्रासुतो हरेत्' ॥
( म. स्मृ. ९. १४९, १५१–१५३. )

इति । एतच्च प्रतिग्रहप्राप्तभूम्यतिरिक्तविषयम् । अत एव बृहस्पतिः—

'न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै ।
यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेत्' ।

इति । प्रतिग्रहविशेषणसामर्थ्यात् क्रयादिलब्धा भूः क्षत्रियादिसुतानामपि भवत्येव । शूद्रापुत्रस्य विशेषप्रतिषेधाच्च ।

† चतसृणां विषमानेकपुत्रत्वे विप्रापुत्रलभ्यभागात्पादहीनः प्रत्येकः क्षत्रियासुतानामेवं वैश्यासुतानामर्धं शूद्रासुतानां पाद इति यथाविधि भागः पतति तथा विभजनीयमित्यर्थाल्लभ्यते । यदा तु ब्राह्मणीक्षत्रिययोरेवापत्यानि तदा सप्तांशतां कृत्वा चतुरोंशानित्यादि । यदा तु ब्रह्मविजातीयभार्यात्रयपुत्रास्तदा नवांशान्कल्पयित्वा । एवं ब्राह्मणीवैश्याशूद्रापुत्रेषु सत्सु सप्तांशान् । विप्राशूद्रापुत्रेषु सत्सु पञ्चेत्याद्यूह्यम् । एवं क्षत्रियस्य क्षत्रविट्शूद्रजातिभार्यात्रयपुत्रेषु सत्सु त्रयो द्वावेकांश इति षडंशा इत्यादि व्यवस्थोहनीया ।

१. Except A. all others do not insert this verse. २. B. C. and D. substitute तु for तत्. ३. A. reads परिकल्प्य च for प्रविभज्य तु. ४. B. and C. read अंशम् for एकम्.

'शूद्रयां द्विजातिभिर्जातो न भूमेर्भागमर्हति'।

इति। यत्तु मनुवचनम्—

'¶ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न ऋक्थभाक्।
यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत्'॥

(म. स्मृ. ९. १५५.)

¶ अत्र मेधातिथिः—न रिक्थभाग् द्विजातीनां शूद्रापुत्रः किं सदा नेत्याह। यदेवास्य पिता दद्यात्तदास्य पित्रा दशमांशकल्पना कृता तदेव तत्तस्य तदधिकं पैतृकं नान्यल्लभते। तत्रापि शंखेनोक्तं न शूद्रापुत्रोर्थभागी। यदेवास्य पिता दद्यात् स एव तस्य भागो गोमिथुनं त्वपरं दद्युर्विभागकाले भ्रातर इति वाक्यशेषः। अन्ये त्वनूढायाः शूद्रायाः पुत्रस्येमं विधिमिच्छन्ति। न ह्यत्र विवाहलिङ्गं किंचिदस्तीति। जातिविशेषवचनः शूद्राशब्दोऽतो यदेवास्य पिता दद्यात् अतो यदस्य प्रजीवनं पित्रा दत्तं तदेव दातव्यम्। अथ तेन का विभागकल्पना कृता यावज्जीवं जीवनाय तदा तदेवास्य धनं न भ्रातृभिः किंचिद्दातव्यम्। यथा गौतमः शूद्रापुत्रप्रकरण एवाह। अपरिगृहीतास्वपि शुश्रूषा चेल्लभेत वृत्तिमूलमन्तेवासिविधिनेति। तेषां मते क्षत्रियवैश्ययोरनूढयोर्जाता रिक्थहराः प्राप्नुवन्ति तत्र च कियानंश इति न ज्ञायते यावानंश ऊढयोरिति चेत्तत्रापि नोढाग्रहणं न लिङ्गं वचनं वास्ति। एक एवौरसः पुत्र इति धर्मपत्नीष्वौरसो न चानूढयोर्जातानामौरसलक्षणमस्ति उक्तं च अनियुक्तासुतश्चैवेत्यादि अभ्रातृजायाविषयमेतत्। तत्र किल नियोगे विहतेऽनियुक्तासुत इति प्रतिषेधेऽपि तद्विषया बुद्धिरुपजायते अत्राप्यस्ति तर्हि जातमात्रेष्विति तस्मात्परस्त्रीषु नियोगेन विनाऽनियुक्तासुताः सर्वेषां च तेषां प्रजीवनमुक्तम्।

१. The commentator does not mention the name of the work from which he quoted this but the व्यवहारमयूख says this line is from देवल.

इति । तत्प्रीतिदत्तधनसद्भावविषयं[1] इत्यविरुद्धम् । आनुलोम्येन जातस्यैकपुत्रस्य ऋक्थग्रहणप्रकारमाह देवलः[2]—

'आनुलोम्यैकपुत्रस्तु[3] पितुः सर्वस्वभाग्भवेत्' ।

इति । एतच्च निषादव्यतिरिक्तविषयम् । अतएवोक्तं तेनैव—

'निषाद एकपुत्रस्तु विप्रस्वस्य तृतीयभाक् ।
द्वौ सपिण्डः सकुल्यो वा स्वधादाता तु स्वं[4] हरेत्' ।

इति । यत्तु मनुवचनम्—

'यद्यपि स्यात्तु सत्पुत्रो यद्यपुत्रोऽपि[5] वा भवेत् ।
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मतः' ॥

( म. स्मृ. ९. १५४. )

इति । *तदशुश्रूषुशूद्रापुत्रविषयम् । क्षत्रियेण वैश्येन वा शूद्रायामुत्पन्नः एकः पुत्रः अर्धमेव हरेत् न निषादवत्तृतीयमंशम् । तथाच[6] विष्णुः—

---

* मेघातिथिस्तु एवं न मन्यते । यथा—

सत्पुत्रो विद्यमानपुत्रः ब्राह्मणीपुत्र एव वा विद्यमानो विवक्षितो न द्विजातिपुत्रमात्रमतश्चासति ब्राह्मणपुत्रे क्षत्रियवैश्ययोः सतोरप्यष्टमांशं लभते केवले च वैश्यपुत्रे तृतीयं अन्ये त्वविशेषेण द्विजातिपुत्राभावे पुत्रपदेनोक्त इत्याहुः अस्मिन्पक्षे सपिण्डगामिदशमांशशेषं धनं इयंतु द्रष्टृव्यवस्था बहुवचनं योगक्षेमे तदा दशमांशं हरेच्छौद्रः । अथ कतिपयंजनजीवनपर्याप्तं तदा शूद्रपुत्रस्यैव क्षत्रियादीनां समानभाव-

---

१. B. originally reads तदपि पितृदत्त° and gives in margin तत्प्रतिदत्त°. २. B. originally reads नारदः and gives in margin देवलः. ३. D. reads आनुलोम्येन for आनुलोम्यैक°. ४. D. reads संहरेत् for स्वं हरेत्. ५. The text ( Mandlik's edition ) reads दसत्पुत्रो but it seems incorrect; it may be असत्पुत्रो ( ऽप्यसत्पुत्रो Nirṇayasâgara edition. ) ६. D. omits च and C. and D. read बृहद्विष्णुः.

'द्विजातीनां शौद्रस्त्वेकः पुत्रोऽर्धहरः ।
अपुत्रस्य ऋक्थस्य या गतिः सा भागार्धस्य' ।
(वि. स्मृ. १८. ३२–३३.)

इति । प्रत्यासन्नसपिण्डस्यान्यदर्धं भवतीत्यर्थः । अजीवद्विभागे केषुचित् भ्रातृष्वसंस्कृतेषु भगिनीषु वाऽसंस्कृतासु तत्संस्कारः पूर्वसंस्कृतैर्भ्रातृभिः कर्तव्य इत्याह व्यासः—

'असंस्कृतास्तु ये तत्र पैतृकादेव ते धनात् ।
संस्कार्या भ्रातृभिः ज्येष्ठैः कन्यकाश्च यथाविधि' ।

---

जातीयास्त्रीजातानां स्मृत्यन्तरे विधिर्दर्शितः ।। क्षत्रजास्त्रिद्व्येकभागा विड्जाः स्युर्द्व्येकभागिनः ।। क्षत्रियाजातास्वजातीयविजातीयासु शूद्रपर्यन्तासु वर्णक्रमेण त्र्यादिभागहराः तदा तेन स्वधनं क्षत्रियस्य शूद्राः षष्ठमंशं लभन्ते विशश्च तृतीयम् । अन्येत्वस्य श्लोकस्य सामर्थ्यमाहुः । शूद्रपुत्राय यदा ददाति तदानेन धनं संकलय्य दशांशो दातव्यो न तदधिकः सत्यपि स्वातन्त्र्ये । यथा वक्ष्यति यदेवास्य पिता दद्यादिति अस्मिन्पक्षे सपुत्रो दद्यादिति समानाधिकरणे पदे उपपन्नतरे इतरथा यस्य सदसत्पुत्रः। पिता स दद्यादिति संबन्धो दुःश्लिष्टः स्यात् । सपुत्रपदेनास्य पुत्रादेरभिधानं दद्यादिति जीवतः पुत्रसापिण्डादेः । ततश्च यदि क्षत्रियवैश्यापुत्रौ न स्तः केवलौ ब्राह्मणशूद्रौ तदा न शूद्रस्य दशम एवांशः किं तर्ह्यत्यल्पं नाधिकतरं धनं लभते यत्र दश गावः सन्ति तत्र चतस्रो ब्राह्मणस्यैका शूद्रस्य पञ्च क्षत्रियवैश्ययोः। यदा तौ न स्तः तदा पञ्च गावस्तथैव कल्पनया ब्राह्मणशूद्राभ्यां विभजनीयाः। यदि सर्वा ब्राह्मण आदद्यान्न चांशहरः स्यान्न चतुरंशहरस्तस्माच्चतुरोंशान्हरेदिति चतुर्षु भ्रातृषु सत्सु कल्पना । शूद्रस्यापि दशमांशहरत्वं चतुर्ष्वेव द्वयोस्त्रिषु चतुर्षूभयोर्भागाधिक्यम् ।।

---

१. D. reads शूद्रः for शौद्रः. २. B. reads अर्धं हरेत for अर्धहरः. ३. B. reads पुत्रस्य, while C. omits this. ४. B. originally reads सभागस्यास्य and gives in margin सा भागार्धस्य.

इति । भगिनीसंस्कारे तु[1] विशेषमाह याज्ञवल्क्यः—

'असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।
भगिन्यश्च निजादंशाद्दत्वा त्वंशं तुरीयकम्' ॥

(या. स्मृ. २. १२४.)

इति । पितुरूर्ध्वं विभजद्भिर्भ्रातृभिरसंस्कृता भ्रातरः समुदाय-द्रव्येण संस्कर्तव्याः । भगिन्यश्चासंस्कृताः निजादंशाद्य-ज्जातीया कन्यका तज्जातीयपुत्रभागात्तुरीयं चतुर्थं भागं दत्वा संस्कर्तव्याः । अनेन पितुरूर्ध्वं दुहितरोऽप्यंशभागिन्य इति गम्यते । अत एव मनुः—

'स्वेभ्यो[2]ऽंशेभ्यस्तु कन्याभ्यः स्वं दद्युर्भ्रातरः पृथक् ।
स्वात् स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः' ।

(म. स्मृ. ९. ११८).

इति । ब्राह्मणादयो भ्रातरः ब्राह्मण्यादिभ्यो भगिनीभ्यो स्वजाति[3]विहितेभ्योंऽशेभ्यः स्वात् स्वादंशादात्मीयाद्भागाच्च-तुर्थं[4] चतुर्थं भागं दद्युः ।

एतदुक्तं भवति । यदि कस्यचिद्ब्राह्मण्येव पत्नी पुत्रश्चैकः कन्या चैका तत्र पित्र्यं द्रव्यं द्वेधा विभज्य तत्रैकं भागं चतुर्धा विभज्य तुरीयांशं कन्यायै दत्वा शेषं पुत्रो गृह्णी-यात् । अथ द्वौ पुत्रौ कन्या चैका तदा पितृधनं त्रेधा विभज्य तत्रैकं भागं चतुर्धा विभज्य तुरीयांशं कन्यायै दत्वा शेषं द्वौ पुत्रौ विभज्य गृह्णीतः । अथ त्वेकः पुत्रः द्वे कन्ये तदा पित्र्यं

---

१. B. and C. omit तु. २. C. and D. read तेभ्यः for स्वेभ्यः.
३. D. reads द्विजाति° for स्वजाति°. ४. D. reads चतुर्थभागं दद्युः.

धनं त्रिधा विभज्य तत्रैकं भागं चतुर्धा विभज्य द्वौ भागौ द्वाभ्यां कन्याभ्यां दत्वाऽवशिष्टं सर्वं पुत्रो गृह्णाति। एवं समानजातीयेषु समविषमेषु भ्रातृषु भगिनीषु च समविषमासु योजनीयम्।

यदा तु ब्राह्मणीपुत्र एकः क्षत्रियाकन्या चैका तत्र पित्र्यं द्रव्यं सप्तधा विभज्य क्षत्रियापुत्रभागान् त्रीन् चतुर्धा विभज्य तुरीयांशं क्षत्रियाकन्यायै दत्वा शेषं ब्राह्मणीपुत्रो गृह्णाति। यदा तु द्वौ ब्राह्मणीपुत्रौ क्षत्रियाकन्यैका तत्र पित्र्यं धनमेकादशधा विभज्य तेषु त्रीन् भागान् चतुर्धा विभज्य चतुर्थमंशं क्षत्रियाकन्यायै दत्वा शेषं सर्वं ब्राह्मणीपुत्रौ विभज्य गृह्णीयाताम्।

एवं जातिवैषम्ये भ्रातॄणां भगिनीनां च संख्यया वैषम्ये च सर्वत्रायं नि[1]यम इति मेधातिथेर्व्याख्यानम्। एतदेव विज्ञानेश्वरयोगिनोऽप्य[2]भिप्रेतम्। भारुचिस्तु। चतुर्भागपदेन विवाहसंस्कारमात्रोपयोगि द्रव्यं विवक्षितम्। अतो दायभाक्त्वमसंस्कृतकन्यानां नास्तीति मन्यते। एतदेव चन्द्रिकाकारस्याप्यभिप्रेतम् तदाह[3]। 'य[4]त एव न दायभागार्थमंशहरणं किन्तु विवाहसंस्कारार्थम्'। अत एव देवलेनोक्तम्—

'कन्याभ्यश्च पितृद्रव्यं देयं वैवाहिकं वसु'।

---

१. B. and C. read ऊहनीयम् for अयं नियमः. २. B. and C. read अभिमतम् for अभिप्रेतम्. ३. B. gives marginal reading तथाहि for तदाह. ४. B. and C. substitute अ° for य°.

इति । अत्र यद्युक्तियुक्तं तद्ग्राह्यम् । जीवद्विभागे तु यत्किञ्चित्पिता ददाति तदेव लभते कन्या विशेषाश्रवणात् । पित्र्यधनाभावे नारदः—

'*अविद्यमाने पित्र्येऽर्थे स्वांशादुद्धृत्य वा पुनः ।
अवश्यकार्याः संस्काराः सङ्कोचोऽत्र विवक्षितः' ॥

( ना. स्मृ. १३–३४. )

इति । भ्रातॄणां भगिनीनां च संस्काराः जातकर्माद्याः पूर्वसंस्कृतैः भ्रातृभिः पितृधनाभावेऽपि सावश्यकत्वेन कर्तव्याः। पैतृकद्रव्यविभागकाले स्वधृतालंकारादिकमपि कन्यका प्राप्नोतीत्याह शङ्खः—

'विभज्यमाने दाये कन्यालंकारमेव हि' ।
वैवाहिकं स्त्रीधनं च लभते ।

इति । मुख्यगौणपुत्राणां स्वरूपं दायग्रहणक्रमं चाह याज्ञवल्क्यः—

* पित्र्यधनाभावे स्वार्जितेन भिक्षादिलब्धेन च अवश्यं संस्कारं कुर्यादिति न वाच्यम् । जीमूतवाहनेन तथा नाङ्गीकारात् । तथा हि तस्याशयः । येषां तु न कृताः.........॥ इति येषां तेषामिति पुल्लिंगपदघटितवचनेन भ्रातृसंस्कारस्यावश्यकत्वमुक्त्वा पैतृकधनाभावे भ्रातृसंस्कारनिर्वाहार्थमुपायकथनं नारदस्य । तथाच भ्रातृसंस्कारोपक्रमत्वात् उपसंहारेऽपि भ्रातृसंस्कार एव विषयः । न तु भगिनीसंस्कारः। इति नारदीयवचनयोर्भावः ॥

१. The text of Jolly reads भ्रातॄणां पूर्वसंस्कृतैः. २. D. reads °दत्ता°, for धृता°, while C. °वृता° for the same. ३. D. reads विभज्यमाने वै दाये कन्यालंकारमेव हि giving it the form of a verse, and omitting वैवाहिकं reads किंचित्स्त्रीधनं च लभते, separately from the above quotation. ४. C. reads त्रैरूपम् for स्वरूपम्.

§ ' औरसो धर्मपत्नीजः तत्सम: पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रज़ातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥

---

§ अस्यायमर्थः—उरसो जात औरसः पुत्रः स च धर्मपत्नीजः धर्मविवाहोढा धर्मपत्नी तस्यां जात औरसः पुत्रो मुख्यः। तत्समः पुत्रिकासुतः तत्सम औरससमः पुत्रिकायाः सुतः पुत्रिकासुतः। अत एव औरससमः। यथाह वसिष्ठः—

'अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम्।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति' ॥
(व. स्मृ. १७, १७.)

अथवा पुत्रिकेव सुतः पुत्रिकासुतः सोऽप्यौरससम एव पित्रवयवानामल्पत्वात् मात्रवयवानां बाहुल्याच्च। यथाह वसिष्ठः—

'तृतीयः* पुत्रिकैवेति।

तृतीयः पुत्रः पुत्रिकैवेत्यर्थः। द्व्यामुष्यायणस्तु जनकस्य औरसादपकृष्टोऽन्यक्षेत्रोत्पन्नत्वात्। क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा। इतरेण असपिण्डेन देवरेण वा उत्पन्नः पुत्रः क्षेत्रजः ॥

गूढजः पुत्रो भर्तृगृहे प्रच्छन्न उत्पन्नो हीनाधिकजातीयपुरुषजत्वपरिहारेण पुरुषविशेषजत्वनिश्चयाभावेऽपि सवर्णजत्वनिश्चये सति बोद्धव्यः। कानीनस्तु कन्यकायामुत्पन्नः पूर्ववत्सवर्णात्स मातामहस्य पुत्रः। यद्यनूढा सा भवेत्तथा पितृगृह एव संस्थिता। अथोढा तदा वोढुरेव पुत्रः। यथाह मनुः—

---

१. B. originally reads तत्सुतः but in margin तत्समः.

* विज्ञानेश्वर reads द्वितीयः पुत्रिकैवेति but the text तृतीयः पुत्रिका विज्ञायते. This must therefore have been the correct form.

अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः ।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयंकृतः ।
दत्तात्मा तु स्वयंदत्तो गर्भे विन्नः[१] सहोढजः ॥
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः ।
पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः ' ॥

( या. स्मृ. २. १२८–१३२. )

---

' पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ।
तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ' ॥

( म. स्मृ. ९. १७२. )

पौनर्भवस्तु पुत्रोऽक्षतायां क्षतायां वा पुनर्भ्वां सवर्णादुत्पन्नः । मात्रा भर्त्रनुज्ञया प्रोषिते प्रेते वा भर्तरि पित्रा वोभाभ्यां वा सवर्णाय यस्मै दीयते स तस्य दत्तकः पुत्रः । यथाह मनुः—

' माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ' ॥

( म. स्मृ. ९. १६८. )

इति । आपद्ग्रहणादनापदि न देयः । दातुरयं प्रतिषेधः । तथा एकपुत्रो न देयः । न त्वेवैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वेति वसिष्ठस्मरणात् । तथानेकपुत्रसद्भावेऽपि ज्येष्ठो न देयः ।

' ज्येष्ठेन जातमात्रेण पुत्रीभवति मानवः ' ।

( म. स्मृ. ९. १०६. )

इति । तस्यैव पुत्रकार्यकरणे मुख्यत्वात् । पुत्रप्रतिग्रहप्रकारश्च ' पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राजनि चावेद्य निवेशनमध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसंनिकृष्ट एव प्रतिगृह्णीयात् ' इति वसिष्ठेनोक्तः । अदूरबान्धवमित्यत्यन्तदेशभाषाविप्रकृष्टस्य प्रतिषेधः । एवं क्रीतस्वयंदत्तकृत्रिमेष्वपि योजनीयम् । समानन्यायत्वात् ।

---

१. A. and the text of याज्ञवल्क्य read भिन्नः for विन्नः.

इति । एषां पुत्राणां द्वादशानां पूर्वस्य[1] पूर्वस्याभावे उत्तर उत्तरः[2] पिण्डदः श्राद्धदः अंशहरो धनहर इत्यर्थः । औरसपुत्रिकयोः[3] समवाये औरसस्यैव धनग्रहणे प्राप्ते अपवादमाह मनुः—

'पुत्रिकायां कृतायां तु यदि पुत्रोऽनु[4] जायते ।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः' ॥

( म. स्मृ. ९. १३४. )

इति । वसिष्ठोऽपि क्वचिदपवादमाह—

क्रीतस्तु पुत्रस्ताभ्यां मातापितृभ्यां मात्रा पित्रा वा विक्रीतः पूर्ववत् तथैकं ज्येष्ठं च पुत्रं वर्जयित्वा आपदि सवर्ण इत्येव । यत्तु मनुनोक्तम्—

'क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा' ॥

( म. स्मृ. ९. १७४. )

इति । तद्गुणैः सदृशोऽसदृशो वेति व्याख्येयम् । न जात्या । 'सजातीयेष्वयं प्रोक्तस्तनयेषु' इत्युपसंहारात् । कृत्रिमः स्यात्स्वयंकृतः । कृत्रिमस्तु पुत्रः स्वयं पुत्रार्थिना धनक्षेत्रप्रदर्शनादिप्रलोभेनैव पुत्रीकृतो मातापितृविहीनः । तत्सद्भावे तत्परतन्त्रत्वात् । दत्तात्मा तु पुत्रो यो मातापितृविहीनस्ताभ्यां त्यक्तो वा तवाहं पुत्रो भवामीति स्वयं दत्तत्वमुपगतः । सहोढजस्तु गर्भे स्थितो गर्भिण्यां परिणीतायां यः परिणीतः स वोढुः पुत्रः ।

अपविद्धो मातापितृभ्यामुत्सृष्टो यो गृह्यते स ग्रहीतुः पुत्रः सर्वत्र सवर्ण इत्येव ॥

१. B. originally reads पुत्रस्य and gives in margin पूर्वस्य, but does not repeat this word. २. C. does not repeat this word. ३. B. and C. read पौत्रिकयोः for पुत्रिकयोः. ४. C. substitutes न for ऽनु.

'तस्मिंश्चेत्प्रतिगृहीते औरस उत्पद्येत ।
चतुर्थभागभागी स्याद्दत्तकः' ।

(व. स्मृ. १५. ९.)

इति ।

कात्यायनोऽपि—

'उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः ।
सवर्णा असवर्णा वा ग्रासाच्छादनभाजनाः' ॥

इति । सवर्णाः क्षेत्रजदत्तकादयः । ते औरसे सत्यपि चतुर्थांशहराः । असवर्णाः कानीनगूढोत्पन्नसहोढपौनर्भवाः औरसे सति न चतुर्थांशहराः अपि तु ग्रासाच्छादनमेव लभन्ते इत्यर्थः । यत्तु विष्णुनोक्तम्—

'अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः ।
पौनर्भवश्च ते नैव पिण्डरिक्थांशभागिनः' ।

इति । तदौरसे सति चतुर्थांशनिषेधनपरमेव । यच्च मनुनोक्तम्—

*'एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ।
शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम्' ॥

(म. स्मृ. ९. १६३.)

* व्याध्यादिना प्रथमौरसपुत्राभावे क्षेत्रजादिषु कृतेषु पश्चादौषधादिना विगतव्याधेरौरस उत्पन्ने सतीदमुच्यते औरस एवैकः पुत्रः पितृधनस्वामी शेषाणां क्षेत्रजव्यतिरिक्तानां तस्य षष्ठांशादेर्वक्ष्यमाणत्वात्पापसंबन्धपरिहारार्थं ग्रासाच्छादनं दद्यात् ।

---

१. A. and the text of वसिष्ठ add पुत्रः after this word. २. B. reads नैवैते and C. reads नैतेपि for ते नैव. ३. B. reads तूपजीवनम् for °त्तु प्रजीवनम्.

इति । तदौरसप्रशंसापरमेव न चतुर्थांशभागनिषेधपरम् । अन्यथा चतुर्थांशभाक्त्वप्रतिपादकवसिष्ठकात्यायनवचनयोरानर्थक्यप्रसङ्गात् । यदपि च तेनैवोक्तम्—

'षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् ।
औरसो विभजन् दायं पित्र्यं पञ्चममेव वा' ॥

( म. स्मृ. ९. १६४. )

इति । तत्रेयं व्यवस्था । अत्यन्तगुणवत्त्वे चतुर्थांशभागित्वं प्रतिकूलत्वनिर्गुणत्वयोः षष्ठांशभागित्वं प्रतिकूलत्वमात्रे निर्गुणत्वमात्रे च पञ्चमांशभागित्वमिति । यदपि हारीतेनोक्तम्—

---

§ अत्रायमभिसंधिः । द्विभार्यस्य बहुभार्यस्य वा एकस्यां भार्यायां अज्ञातगर्भायां भर्ता मृतः अनन्तरम् अन्या च भार्या पुत्रार्थं देवरे नियुक्ता सती पुत्रमलभत पूर्वस्यां सगर्भायां चौरसः पुत्रो जातः तदा कथं विभागः कार्य इत्याकाङ्क्षायां षष्ठन्तु क्षेत्रजस्य इत्यादिना अंशकल्पना उक्ता भवति ।

† एतत्तु बीजिनः धनस्य अप्राप्तौ विभागभाक्त्वम् । तद्धनप्राप्तौ तु नांशभाक् इति उक्तं भवति । उक्तं च मनुना—

यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ ।
यस्य यत्पैतृकं रिक्थं स तद्गृह्णीत नेतरः' ॥

( म. स्मृ. ९. १६२. )

इति । अयमर्थः । यस्य विधितः क्षेत्रजादूर्ध्वमौरसो जातः तस्य धनमौरस एव प्राप्नोति न इतरः क्षेत्रजादिः । एवं सति

---

१. B. originally reads °भाग° and in margin °भाक्त्व°, while C. reads °भाग°. २. B. reads औरसो विभजेद्दायम्. and C. औरसो पि च तं दायम् for औरसो विभजन् दायम्. ३. B. originally reads पंत्रक°.

'विभजिष्यमाण एकविंशं कानीनाय दद्यात् । विंशं पौनर्भवाय । एकोनविंशं द्व्यामुष्यायणाय । अष्टादशांशं च क्षेत्रजाय । सप्तदशांशं पुत्रिकापुत्राय । इतरदौरसाय पुत्राय दद्यात्' । इति । एतदसवर्णनिर्गुणपुत्रविषयम् ।

(हा. स्मृ. २१. १३-१८.)

यत्तु मनुना—

'औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः' ॥

(म. स्मृ. ९. १५९-१६०.)

इति । षट्कद्वयमभिधाय पूर्वषट्कस्य दायादबान्धवत्वं उत्तरषट्कस्यादायादबान्धवत्वमभिहितं तदपि स्वपितृसापिण्ड्ये समानोदकानां संनिहितरिक्थहरान्तराभावे पूर्वषट्कस्य तद्रिक्थभागहरत्वम् उत्तरषट्कस्य तु तन्नास्ति बान्धवत्वं पुनः

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥

(या. स्मृ. २. १२७.)

इत्यादियाज्ञवल्क्यवचनविरोधः स्यादिति न शङ्कनीयम् । तद्वचनं तु औरसाभावविषयम् । औरससत्त्वे तु क्षेत्रिणः स्वं औरसो हरेत् बीजिनः स्व क्षेत्रजो हरेदिति व्यवस्था ।

१. D. omits पुत्रिका°. २. This portion does not appear in C. D.—°मभिहितं तदपि स्वपितृसापिण्ड्ये समानोदकानां संनिहितरिक्थहरान्तराभावे पूर्वषट्कस्य तद्रिक्थभागहरत्वम् उत्तरषट्कस्य तु तन्नास्ति बान्धवत्वं पुनः; D has °मुक्तं for °मभिहितं. ३. D. adds तत् before पुनः.

समानगोत्रत्वेन सपिण्डत्वेन वा उदकप्रदानादिकार्यकरत्वं षट्कद्वयस्यापि सममेवेति व्याख्येयम् । पितृधनग्रहणं तु पूर्वस्य[1] पूर्वस्याभावे सर्वेषामस्त्येव ।

'न भ्रातरो न पितरः पुत्रा ऋक्थहराः पितुः' ।

( म. स्मृ. ९. १८५. )

इति । औरसव्यतिरिक्तानां पुत्रप्रतिनिधीनां सर्वेषां ऋक्थहारित्वस्य मनुनैव प्रतिपादितत्वात् । द्व्यामुष्यायणस्तु जनयितुरपि ऋक्थं भजते । तथा च याज्ञवल्क्यः—

'अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ ऋक्थी पिण्डदाता च धर्मतः ।

( या. स्मृ. २. १२७. )

इति । यदा गुर्वादिना नियुक्तो देवरादिः स्वयमप्यपुत्रः सन्नपुत्रस्य क्षेत्रे स्वपरपुत्रार्थं प्रवृत्तो यं जनयति स द्विपितृको द्व्यामुष्यायणो द्वयोरपि ऋक्थहारी पिण्डदश्च । यदा स्वयं पुत्रवान् परपुत्रार्थमेव परक्षेत्रे पुत्रमुत्पादयति तदुत्पन्नः क्षेत्रिण एव पुत्रो भवति न बीजिनः । यथोक्तं मनुना—

'क्रियाभ्युपगमात्क्षेत्रं बीजार्थं यत्प्रदीयते ।
तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ।
फलं त्वनभिसंधाय क्षेत्रिणा बीजिना तथा ।
प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसी' ॥

( म. स्मृ. ९. ५३, ५२. )

---

१. C. D. do not repeat पूर्वस्य.

इति । अस्यार्थः । अत्रोत्पन्नमपत्यमुभयोरपि भवतु – इति संविदं कृत्वा यत्क्षेत्रं स्वामिना बीजावापार्थं बीजिने दीयते तस्मिन् क्षेत्रे उत्पन्नस्यापत्यस्य बीजिक्षेत्रिणौ स्वामिनौ । यदा तु तत्रोत्पन्नमपत्यमावयोरस्त्विति संविदमकृत्वा परक्षेत्रे बीजिना यदपत्यमुत्पाद्यते तदपत्यं क्षेत्रिण एव न बीजिनः । यतो बीजाद्योनिर्बलीयसी । गवाश्वादिषु दृष्टत्वादित्यर्थः । गुर्वादिनियोगोऽपि वाग्दत्ताविषय एव । अन्यस्य नियोगस्य मनुना निषिद्धत्वात् ।

'देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्[1]नियुक्तया ।
प्रजे[2]प्सिताधिग[3]न्तव्या सन्तानस्य परिक्षये ॥
विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि ।
एकमुत्पादयेत्पुत्रं न द्वितीयं कथंचन ॥

( म. स्मृ. ९. ५९–६०. )

पुत्रे नियोगादुत्पन्ने यथावद्विधवैव सा ' ।

इ[4]ति । एवं नियोगमुपन्यस्य मनुः स्वयमेव निषेधति—

नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः ।
अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥
नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ।
न विवाहविधावुक्तं विधवावेदनं पुनः ॥
अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः ।
मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥

---

१. C. D. read सद्भिः for सम्यक्. २. D. reads बीजे° for प्रजे°, while B. originally reads यथे° and in margin प्रजे°. ३. C. substitutes °भि° for °धि°. ४. D. omits इति । नियोगमुपन्यस्य मनुः स्वयमेव निषेधति.

स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा ।
वर्णानां संकरं चक्रे कामोपहतचेतनः ॥
* ततः प्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम् ।
नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः [१] ॥

( म. स्मृ. ९. ६४–६८. )

* ततः किं तत्राह तदेति । प्रमीतपतिकां प्रमीतो हिंसितः पतिर्यस्यास्तां पुत्रवतीमितिशेषः। यो नियोजयत्यपत्यार्थेऽपत्योत्पादनाय तं विगर्हयन्तीत्यन्वयः । अपत्यार्थे विद्यमानपुत्रे सतीति । एषु वेदनश्रुत्यनुरोधेन यस्या म्रियेत इत्युत्तरस्वरसात् सकृत्प्रदीयते कन्या इत्यादिवचनबलात्पुनर्विवाहो निषिद्धो न त्वपत्यार्थे नियोग इति । यत्तु बृहस्पतिः ।

उक्तो नियोगो मनुना निषिद्धः स्वयमेव तु ।
युगह्रासादशक्योयं कर्तुमन्यैर्विधानतः ॥
तपोज्ञानसमायुक्ताः कृतत्रेतायुगे नराः ।
द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्मिता ॥
अनेकधा कृताः पुत्रा ऋषिभिश्च पुरातनैः ।
न शक्यन्तेऽधुना कर्तुं शक्तिहीनैरिदंतनैः ॥

इति । तदन्यथासिद्धं निषेधस्य पुनर्विवाहविषयत्वात्। पुत्रप्रयोजना भार्येति तात्पर्यम्। शास्त्रतात्पर्यादग्नीषोमीयपशोरिव क्वचिदननुष्ठानस्य शास्त्रासंकोचकत्वाद्धोलाकाद्यननुष्ठानवदेकमुत्पादयेत्पुत्रमिति नियोगविधेः प्राधान्येनार्थवादस्य न हिंस्यात्सर्वभूतानीतिवत् । स्तनाद्युपमर्दरागनिवर्तनेनान्यथासिद्धेर्गोविन्दराजव्याख्या गरीयसी । अन्यथा संतानकृतेर्दोषापत्तिः । यत्तु ।

अग्निहोत्रं गवालभं संन्यासं पलपैतृकम् ।
देवरेण सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥

इति । तदमूलम्। समूलत्वे वा लाभाख्यात्यादिरागिनां निवृत्तितात्पर्यकम्। अन्यथा यदहरेव विरजेत्तदहरेव प्रव्रजेत् ॥ यावज्जीवमग्निहोत्रं

१. D. reads तदा for ततः.

इति । नन्वत्र विकल्पोऽस्तु विधिप्रतिषेधयोरुभयोर्दर्शनात् । अतो विनियोगस्य वाग्दत्तादिविषयत्वमनुपपन्नमितिचेत् । न । मनुनैव नियोगस्य तद्विषयत्वप्रतिपादनात् ।

§ 'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ॥
तामनेन विधानेन निजो विन्देत देवरः ॥
† यथाविध्य[1]धिगम्यै[2]नां शुक्लवस्त्रां शुचिव्रताम् ।
मिथो भजेताप्रसवात्सकृत्सकृदृतावृतौ' ॥

(म. स्मृ. ९. ६९–७०.)

इति । दत्तकादीनां न बीजिऋक्थभाक्त्वम् । तथाच मनुः—

तीत्यादिश्रुतिविरोधश्चेति दिक् । अतएव मेधातिथिर्देवराद्वेत्यादिसाधव इत्यन्ते ग्रन्थे षोडशिग्रहणादिवद्विकल्पः नियोगतदभावयोः पित्राद्युद्धरणं फलं गन्तुश्च परमोपकारः तदाप्रभृत्ययं श्लोकोऽर्थवाद एवेति ॥

§ अत्र मेधातिथिः । नियोगरूपत्वात् कन्यागतोऽयं धर्म उच्यते वाचा सत्ये कृते वाग्दाने निवृत्त एकेन दत्ता अपरेण प्रतिगृहीता तामनेन वक्ष्यमाणेन विधानेन निजसोदरो देवरो विन्देत विवाहयेत् । एतेन वाग्दत्तायाः कन्यायाः देवरेण सह विवाहो भवतीति सिद्ध्यते तथापि तेन देवरेण केवल पुत्रोत्पत्त्यर्थमेव तया सह आप्रसवाद्व्यवायः कार्यः पुत्रोत्पत्त्यनन्तरं यथाकामं व्यवायादीनां निषिद्धत्वात् ।

† अत्र मेधातिथिः । यथाविधि यथाशास्त्रं वैवाह्यो विधिस्तथा विवाह्य वाचनिकोऽयं विवाहः । पुनर्भूश्च तथोच्यते नवाप्यूढापि सती [भार्या] भवति केवलं परार्थोऽस्या वाचनिको विवाहः । तथाच दर्शयति न दत्वा कस्यचित्कन्यां पुनरन्यस्य दीयत इति नासौ देवराय दीयत इत्यर्थः । अदत्ता चास्वभूता कथमिव भार्या भवेत् शुक्लवस्त्रां नियमो गमनेऽन्यस्मिन्नपि नियोगे धर्मोऽयमिष्यते ।

---

१. D. reads अभि° for अधि°. २. B. C. and D. read एताम् for एनाम्.

¶ 'गोत्रऋक्थे जनयितुर्न भजेद्दत्रिमः सुतः।
गोत्रऋक्थानुगः पिण्डो व्यपैति ददतः स्वधा'॥

(म. स्मृ. ९. १४२.)

इति। द[1]त्रिमग्रहणं क्रीतोप[2]लक्षणार्थम्। दत्तव्यतिरिक्तानां गौणपुत्राणां ऋ[3]क्थभाक्त्वप्रतिपादकानि वाक्यानि युगान्तरविषयाणि। कलौ युगे तेषां पुत्रत्वेन परिग्रहणस्य स्मृत्यन्तरे निषिद्धत्वात्—

'दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः।
देवरेण सुतोत्पत्तिः वानप्रस्थाश्रमग्रहः।
कलौ युगे त्विमान् धर्मान् वर्ज्यानाहुर्मनीषिणः'॥

इति। शूद्रधनविभागे विशेषमाह याज्ञवल्क्यः—

'जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत्।
मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिक[4]म्॥
अभ्रातृको हरेत्सर्वं दुहितॄणां सुताद्दते'।

(या. स्मृ. २. १३३–१३४.)

---

¶ गोत्ररिक्थे गोत्रं रिक्थं धनं च जनकसंबन्धिनी दत्तको न कदाचित्प्राप्नुयात्। पिण्डश्च गोत्ररिक्थानुगामी यस्य गोत्ररिक्थे भजते तस्यैव स पिण्डो दीयते तस्मात् पुत्रं ददतः जनकस्य स्वधापिण्डश्राद्धादि तत्पुत्रकर्तृकं निवर्तते। अतएव नासौ दत्तको द्व्यामुष्यायणः प्रतिग्रहीतृगोत्रत्वात्। जनकगोत्रसंबन्धाभावाच्चेति दिक्।

---

१. D. reads कृत्रिम° for दत्रिम. २. D. reads वोपलक्षणार्थम् for क्रीतोपलक्षणार्थम्. ३. B. reads दाय° for रिक्थ°. ४. D. reads °भागिनम् for भागिकम्.

इति । कामतः पितुरिच्छया भागं लभते । मृते पितरि यदि परिणीतापुत्रा भ्रातरः सन्ति तदा ते दासीपुत्रं स्वभागादर्धभागिकं कुर्युः । अथ परिणीतापुत्रा दुहितरो वा तत्पुत्रा वा न सन्ति तदा तद्धनं दासीपुत्रो लभते । तत्सद्भावे अर्धमेव । द्विजातीनां दास्यामुत्पन्नस्तु पितुरिच्छयाऽप्यंशं न लभते नाप्यर्धं दूरत एव कृत्स्नं जातोऽपि दास्यां शूद्रेणेति विशेषणात् । किन्त्वनुकूलश्चेज्जीवनमात्रं लभते इत्यभिप्रायः । अपुत्रदायग्रहणक्रममाह याज्ञवल्क्यः—

'पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।
तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः' ॥
'एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ।
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः' ॥

( या. स्मृ. २. १३५–१३६. )

इति । औरसादयो द्वादशविधपुत्रा यस्य न सन्त्यसावपुत्रः । तस्य मृतस्य धनं पत्न्यादीनां पूर्वस्य पूर्वस्याभावे उत्तरोत्तरो गृह्णाति । अयं दायग्रहणक्रमः सर्वेषु मूर्धावसिक्तादिष्वनुलोमजेषु वर्णेषु च ब्राह्मणादिषु वेदितव्य इत्यर्थः । पत्नी विवाहादिसंस्कृता नारी । सा प्रथमं पत्युर्धनं गृह्णाति । तदाह बृहस्पतिः—

'कुल्येषु विद्यमानेषु पितृभ्रातृसनाभिषु ।
असुतस्य प्रमीतस्य पत्नी तद्धनहारिणी' ॥

इति । अत्र विशेषमाह वृद्धमनुः—

१. D. omits दूरत एव कृत्स्नम्. २. D. reads कुलेषु for कुल्येषु.

'अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता।
पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च' ॥

इति। कृत्स्नमंशं जंगमस्थावरात्मकम्। तदयं अपुत्रदायग्रहणक्रमः। द्वादशविधपुत्रशून्यस्य मृतस्य धनं पत्नी गृह्णाति। तथाच प्रजापतिः—

'जङ्गमं स्थावरं हेम कुप्यं धान्यमथाम्बरम्।
आदाय दापयेच्छ्राद्धं माससंवत्सरादिकम्' ॥
'पितृव्यगुरुदौहित्रान् भर्तृश्वशुरमातुलान्।
पूजयेत्कव्यपूर्ताभ्यां वृद्धानप्यतिथींस्तथा' ॥

इति। तदभावे दुहितरः समानजातीया असमानजातीयाश्च यथाभागं गृह्णीयुः। तथाच बृहस्पतिः—

'भर्तुर्धनहरी पत्नी तां विना दुहिता स्मृता।
अङ्गादङ्गात्संभवति पुत्रवद्दुहिता नृणाम्' ॥
'सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता।
तस्मात्पितृधनं त्वन्यः कथं गृह्णीत मानवः' ॥

इति। ऊढानूढदुहितृसमवाये कात्यायन आह—

'पत्नी पत्युर्धनहरी या स्यादव्यभिचारिणी।
तदभावे तु दुहिता यद्यनूढा भवेत्तदा' ॥

---

१. C. and D. omit in their text कृत्स्नमंशं जङ्गमस्थावरात्मकं and the portion from तथाच प्रजापतिः to °स्तत्पुत्राश्चेति about 70 lines, and for this insert only as follows:—तदभावे दुहिता। तदभावे दौहित्रः। तदभावे माता। तदभावे पिता। तदभावे भ्राता। तदभावे तत्पुत्रः। तदभावे पितामही। तदभावे तद्धनं पितामहो गृह्णाति तत्पुत्रास्तत्पुत्राश्च।. २. B. reads तथा for तदा.

इति । ऊढास्वपि प्रतिष्ठिताप्रतिष्ठितदुहितृसमवाये अप्रतिष्ठितैव गृह्णाति । तदाह गौतमः—

'स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च' ।

( गौ. स्मृ. २८. २४. )

इति । न चैतद्गौतमवचनं मातृधनविषयमेवेति मन्तव्यम् । पितृधनेऽप्यस्य समानत्वात् । दुहित्रभावे दौहित्रो धनहारी । तथाच विष्णुः—

'[1]अपुत्रपौत्रसंताने दौहित्रा धनमाप्नुयुः ।
पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रिका मता' ॥

( वि. स्मृ. )

इति । मनुरपि—

† '[2]अकृता वा कृता वापि यं विन्देत्सदृशा[3]त्सुतम् ।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम्' ॥

( म. स्मृ. ९. १३६. )

---

† अकृता वा कृता वेति पुत्रिकाया एव द्वैविध्यम् । तत्र
'यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम्' ।
इत्यभिधाय कन्यादानकाले वरानुमत्या या क्रियते सा कृताभिसंधिमात्रकृता वाग्व्यवहारेण न कृता । तथाच गौतमः—
'अभिसंधिमात्रात्पुत्रिकेत्येकेषाम्' ।
( गौ. स्मृ. २८. १९. )

---

१. This quotation does not appear in the printed edition of Vishṇu Smriti ( See Bibliotheca edition ). २. B. reads this verse as :—

अक्षता वा क्षता वापि यं विन्देत्सदृशात्सुतम् ।
पौत्री पितामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥

३. A. reads सदृशम्.

इति । नच दुहित्रनन्तरं पितरावित्युपादानमनुपपन्नम् । दौहित्रस्य धनहारित्वेन वक्तव्यत्वादिति मन्तव्यम् । दुहितरश्चेति चशब्देन दौहित्रस्य समुच्चयात् दौहित्राभावे पितरौ धनभाजौ । यद्यप्यत्र पित्रोर्धनग्रहणे क्रमो न श्रूयते तथापि पितरावित्यस्य विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातात् प्रत्यासत्त्यतिशयाच्च मातुरेव पूर्वं धनग्रहणं युक्तमिति केचिदाहुः। अपरे त्वपुत्रधनं पत्न्यभिगामि तदभावे दुहितृगामि तदभावे पितृगामि तदभावे मातृगामि । इति । वृद्धविष्णुवचनात्--

'अपुत्रस्याथ कुलजा पत्नी दुहितरोऽपि च ।
तदभावे पिता माता भ्राता पुत्रश्च कीर्तिता' ॥

इति । कात्यायनवचनाच्च ।

'पितैव पूर्वधनहारीत्याहुः' । 'अत्र यद्युक्तं तद्ग्राह्यम्। पित्रोरभावे भ्रातरो धनभाजः' । तथाच मनुः

'पिता हरेदपुत्रस्य रिक्थं भ्रातर एव चेति' ।

( म. स्मृ. ९. १८५. )

---

इति । अतएव पुत्रिकाधर्मशङ्कयेति प्रागविवाह्यत्वमुक्तम्। पुत्रिकेव कृता अकृता वा पुत्रं समानजातीयाद् वोढुरुत्पादयेत् तेन दौहित्रेण पौत्रकार्यकारणात् पौत्रिकेयवान् मातामहः पौत्री। तथा चासौ तस्मै पिण्डं दद्यात्। एतेन पौत्रिकेयविषयमेतद्वचनं इति तात्पर्यम्। गोविन्दराजस्तु अकृता वेत्यपुत्रिकैव दुहिता तत्पुत्रोऽपि मातामहधने पौत्रिकेय इव मातामह्यादिसत्त्वेऽप्यधिकारी भवतीत्याह। तदयुक्तम्। पुत्रिकायाः पुत्रतुल्यत्वात् अपुत्रिकातत्पुत्रयोरतुल्यत्वेन तत्पुत्रयोस्तुल्यत्वायोग्यत्वादित्यलं पल्लवितेन ।

भ्रातृष्वपि सोदर्याः प्रथमं धनभाजः तेषां प्रत्यासन्नत्वात्-अतएव मनुः—

'अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्'[1]

( म. स्मृ. ९. १८७. )

इति। भ्रातॄणामभावे भ्रातृपुत्रा इति पूर्ववदवगन्तव्यम्। भ्रातृभ्रातृपुत्रसमवायेऽपि भ्रातृपुत्राणां धनसंबन्धो नास्ति। भ्रात्रभावे भ्रातृपुत्राणामधिकारश्रवणात्। यदा त्वपुत्रे भ्रातरि मृते तद्भ्रातॄणामविशेषेण धनसंबन्धे प्राप्ते भ्रातृधनविभागात् प्रागेव यदि कश्चिद्भ्राता म्रियेत तत्पुत्राश्च सन्ति तदा तत्पुत्राणां पितृतोऽधिकारे प्राप्ते तेषां भ्रातॄणां च विभागो युक्तः। भ्रातृपुत्राणामभावे गोत्रजा धनं गृह्णन्ति। गोत्रजाश्च पितामही सपिण्डाः समानोदकाश्च अतः प्रथमं पितामही धनं गृह्णाति। यत्तु—

'मातर्यपि च वृत्तायां पितुर्माता धनं हरेत्'।

( म. स्मृ. ९. २१७. )

इति। मात्रनन्तरं पितामह्या धनग्रहणे प्रापकं वचनम्। तदनपत्यस्य[2] स्वर्यातस्य धनं पत्न्यभिगामि तदभावे मातृगामि तदभावे भ्रातृपुत्रगामि तदभावे सकुल्यगामि तदभावे बन्धुगामि सहाध्यायिगामि तदभावे ब्राह्मणधनवर्जं राजगामि ब्राह्मणधनं ब्राह्मण एव गृह्णीयादिति। तथाच।

( वि. स्मृ. १७. ४–१३. )

---

१. B. reads सपिण्डं यः for सपिण्डाद्यः. २. This quotation appears in विष्णुस्मृति but some Sûtras are omitted here.

अपुत्रस्याथ कुलजा पत्नी दुहितरोऽपि वा।
तदभावे पिता माता भ्राता पुत्राश्च कीर्तिता ॥

इत्यादि। क्रमप्रतिपादकबहुवचनविरोधात् पितामह्या धनसंबन्धमात्रप्रापकं न क्रमपरमित्यवगम्यते। पितामह्या अभावे पितामहः पितृव्यास्तत्पुत्राश्च यथाक्रमं धनं गृह्णन्ति। पितामहसन्तानाभावे प्रपितामही प्रपितामहस्तत्पुत्रास्तत्पुत्राश्चेति सप्तमपर्यन्तं गोत्रजा धनं गृह्णन्ति। सपिण्डानामभावे समानोदका धनं गृह्णन्ति। समानोदकाश्च सपिण्डानामुपरि सप्त पुरुषाः जन्मनामज्ञानपर्यन्ता वा। तदुक्तं बृहन्मनुना—

'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते।
समानोदकभावस्तु निवर्तेताचतुर्दशात् ॥
जन्मनामस्मृतेरेके तत्परं गोत्रमुच्यते' ॥

इति। गोत्रजानामभावे बान्धवा धनं गृह्णन्ति बान्धवाश्च त्रिविधा[1] बौधायनेन दर्शिताः—

'आत्मपितृष्वसुः पुत्राः आत्ममातृष्वसुः सुताः।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥
पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥
मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः' ॥

१. C. reads विविधा for त्रिविधा.

इति । बन्धुष्वपि यस्त्वासन्नतरः स एव पूर्वं गृह्णाति । अत एव बृहस्पतिः—

'बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा ।
यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेत' ॥

इति । बन्धूनामभावे आचार्यः । आचार्याभावे शिष्यः । तदाह मनुः—

'यो[1] यो ह्यनन्तरः पिण्डात्तस्य तस्य धनं भवेत् ।
अत ऊर्ध्वं सकुल्यः स्यादाचार्यः शिष्य एव च' ॥
(म. स्मृ. ९. १८७.)

इति । आपस्तम्बोऽपि—

'सपिण्डाभावे आचार्यः आचार्याभावे अन्तेवासी—
(आ. ध. २. ६. १४. ३.)

इति । शिष्याभावे सब्रह्मचारी तस्याभावे यः कश्चिच्छ्रोत्रियो गृह्णाति । तदाह गौतमः—

'श्रोत्रिया ब्राह्मणस्यानपत्यस्य ऋक्थं भजेरन्'—
(गौ. स्मृ. २८. ४१.)

इति । तदभावे ब्राह्मणः । तदाह मनुः—

'सर्वेषामप्यभावे तु ब्राह्मणा ऋक्थभागिनः ।
त्रैविद्याः शुचयो दान्तास्तथा[2] धर्मो न हीयते' ॥
(म. स्मृ. ९. १८८.)

---

१. The text of मनु reads अनन्तरः सपिण्डाद्यः for यो यो ह्यनन्तरः पिण्डा°. २. B. reads तेषु for तथा.

इति । ब्राह्मणधनं न कदाचिदपि राजगामि । क्षत्रियादिधनं तु सब्रह्मचारिपर्यन्तानामभावे राजगामि । तदुक्तं मनुना—

'अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः ।
इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः' ॥

( म. स्मृ. ९. १८९. )

इति । नारदेनापि—

'ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्न कश्चन ।
ब्राह्मणायैव दातव्यमेनस्वी स्यान्नृपोऽन्यथा' ॥

इति । संग्रहकारेणापि—

'पितर्यविद्यमानेऽपि धनं तत्पितृसन्ततेः ।
तस्यामविद्यमानायां तत्पितामहसन्ततेः ॥
असत्यामपि तस्यां तु प्रपितामहसन्ततेः ।
एवमेवोपरितनां सपिण्डा ऋक्थभागिनः ॥
तदभावेऽसपिण्डाः स्युराचार्यः शिष्य एव वा ।
सब्रह्मचारी सद्विप्रः पूर्वाभावे परः परः ॥
शूद्रस्यैकोदकाभावे राजा धनमवाप्नुयात् ।
आचार्यस्याप्यभावे तु तथा क्षत्रियवैश्ययोः' ॥

इति । नन्वनपत्यस्य धनं प्रथममेव पत्नी गृह्णातीत्येतदनुपपन्नम् । पत्नीसद्भावेऽपि भ्रातॄणां धनग्रहणस्य पत्नीनां वा भरणमात्रस्य नारदेनोक्तत्वात्—

१. C. and D. read एवमेवोपपत्तीनां for एवमेवोपरितनाम्.

'भ्रातॄणामप्रजाः प्रेयात् कश्चिच्चेत्प्रव्रजेत वा ।
विभजेरन् धनं तस्य शेषास्ते स्त्रीधनं विना ॥
भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात् ।
रक्षन्ति शय्यां भर्तुश्चेदाछिन्द्युरितरासु तत्' ॥

(ना. स्मृ. १३. २५–२६.)

इति । तत्र—

'संसृष्टानां तु यो भागस्तेषामेव स इष्यते' ।

इति प्रक्रम्य "भ्रातॄणामप्रजाः प्रेयात्" इत्यादिवचनस्य पठितत्वेन संसृष्टभ्रातृभार्याणामनपत्यानां भरणमात्रम् संसृष्टभ्रातॄणां च तद्धनहारित्वम्[1] अनेन वचनेन प्रतिपाद्यत इत्यवगमनात् । अथवा 'भ्रातॄणामप्रजाः प्रेयात्' इत्यादिवचनस्य संसृष्टित्वेन

'संसृष्टानां तु यो भागस्तेषामेव स इष्यते ।
अनपत्यांऽशभाग्योऽपि[2] निर्बीजेष्वितरानियात्' ॥

(ना. स्मृ. १३. २४.)

इत्यनेन पौनरुक्त्यप्रसङ्गात् । अथ वा अविभक्तविषयत्वमस्तु याज्ञवल्क्यवचनं तु विभक्तस्यासंसृष्टिनो भर्तुर्धनं पत्न्येव प्रथमं गृह्णातीत्येवंपरमित्यविरोधः । यत्तु मनुनोक्तम्—

'पिता हरेदपुत्रस्य ऋक्थं भ्रातर एव वा' ।

(म. स्मृ. ९. १८५.)

इति । यदपि कात्यायनेनोक्तम्—

---

१. D. reads धनग्रहणम् for तद्धनहारित्वम् and omits the portion up to इत्यादि वचनस्य संसृष्टित्वेन. २. D. reads अनपत्यांशभागो हि.

'विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत् ।
भ्राता वा जननी वाऽथ माता वा तत्पितुः क्रमात्' ॥

इति । मनुवचनं तावत् न क्रमप्रतिपादनपरम् भ्रातर एव वेति विकल्पश्रवणात् । कात्यायनवचनं तु पत्न्यां व्यभिचारिण्यां पित्रादेरनपत्यधनग्राहित्वप्रतिपादनपरम् ।

'भर्तुर्धनहरी पत्नी या स्यादव्यभिचारिणी ।
अपचारक्रियायुक्ता निर्लज्जा वार्थनाशिका ॥
व्यभिचाररता या च स्त्री धनं सा न चार्हति' ।

इति तेनैवोक्तत्वात् । धनं जीवनायोपक्लृप्तं क्षेत्रांशं नार्हतीत्यर्थः । धारेश्वरस्तु[1] अनपत्यधनं पत्नी गृह्णातीत्येवमादिवचनजातस्य[2] प्रकारान्तरेण विषयव्यवस्थामाह । नियोगार्थिनी पत्नी अनपत्यस्य विभक्तस्य पत्युर्धनं गृह्णाति । तथा च मनुः—

'धनं यो बिभृयाद्भ्रातुर्मृतस्य स्त्रियमेव वा ।
सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम् ।
कनीयाञ्ज्येष्ठभार्यायां पुत्रमुत्पादयेद्यदि ।
समस्तत्र विभागः स्यादिति धर्मो व्यवस्थितः' ॥

(म. स्मृ. ९. १४६, १२०).

इति । विभक्तधने भ्रातरि मृते अपत्यद्वारेणैव पत्न्या धनसंबन्धः । नान्यथा । अविभक्तधनेऽपि तथेत्यभिप्रायः । गौतमोऽपि—

---

१. C. reads वीरेश्वरस्तु for धारेश्वरस्तु. २. C. and D. read °संजातस्य for °जातस्य.

'पिण्डगोत्रर्षिसंबन्धा ऋक्थं भजेरन् स्त्री चानपत्यस्य । बीजं वा लिप्सेत'

(गौ. स्मृ. २८. २१–२२.)

इति । अयमर्थः—अनपत्यस्य ऋक्थं पिण्डगोत्रऋषिसंबन्धा भजेरन् स्त्री वा यदि बीजं लिप्स्यते ॥

इति । संग्रहकारोऽपि—

'भ्रातृषु प्रविभक्तेषु संसृष्टेष्वप्यसत्सु वा ।
गुर्वादेशनियोगस्था पत्नी धनमवाप्नुयात्' ॥

इति । तदनुपपन्नं पत्नी दुहितर इत्यत्र नियोगाश्रवणात् । अश्रुतोऽपि नियोगो गौतमादिवचनबलात्कल्प्यते इति युक्तमिति चेत् । तन्न । गौतमादिवचनानामर्थान्तरपरत्वात्[1] । तथा हि । तत्र यद्गौतमवचनं—

'पिण्डगोत्रर्षिसंबन्धा ऋक्थं भजेरन् स्त्री चानपत्यस्य । बीजं वा लिप्सेत'—

(गौ. स्मृ. २८. २१–२२.)

इति । तस्य नायमर्थः यदि बीजं लिप्सेत तदा पत्नी अनपत्यधनं गृह्णातीति । अपि तर्ह्यनपत्यस्य धनं पिण्डगोत्रर्षिसंबन्धा गृह्णीयुः । स्त्री वा गृह्णीयात्[2] । सा स्त्री बीजं वा लिप्सेत सयंता वा भवेदिति । वाशब्दस्य पक्षान्तरवचनत्वेन यद्यर्थे प्रयोगाभावात् । यदपि धनं यो

१. B. reads °विषयत्वात् for °परत्वात्. २. D. substitutes जाया न for स्त्री वा ह्लायात.

बिभृयादित्यादि मनुवचनं तदपि क्षेत्रजस्यैव धनसंबन्धं वक्ति न पत्न्या इति। संग्रहवचनमपि[1] संयताया एव धनसंबन्धं वक्ति न तु देवरादिनियुक्तायाः।

अन्यथा—

'अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता।
पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च'॥

इति। तथा—

'अपुत्रा शयनं भर्तुः पालयन्ती गुरौ[2] स्थिता।
भुञ्जीतामरणात्क्षान्ता दायादा ऊर्ध्वमाप्नुयुः'॥

इति मनुकात्यायनवचनविरोधप्रसङ्गात्। तस्मादनपत्यस्य विभक्तस्यासंसृष्टिनो मृतस्य धनं पत्नी गृह्णातीत्येषैव व्यवस्था ज्यायसी। यत्तु स्त्रीणां धनसंबन्धाभावप्रतिपादकवचनम्—

'यज्ञार्थं द्रव्यमुत्पन्नं तत्रानधिकृतास्तु ये।
अरिक्थभाजस्ते[3] सर्वे ग्रासाच्छादनभाजनाः॥
यज्ञार्थं विहितं वित्तं तस्मात्तद्विनियोजयेत्।
स्थानेषु धर्मजुष्टेषु[4] न स्त्रीमूर्खविधर्मिषु'॥

इति। तद्यज्ञार्थमेव संपादितधनविषयम्। यदपि कात्यायनेनोक्तम्—

१. C. reads संरब्धवचनम् and D. शंखवचनम् for संग्रहवचनम्. २. D. reads व्रते for गुरौ. ३. D. and C. read तद्रिक्थभाजः for अरिक्थभाजः. ४. D. reads स्वेषु for धर्म.

'अदायिकं राजगामि योषिद्भृत्यौर्ध्वदेहिकम् ।
अपास्य श्रोत्रियद्रव्यं श्रोत्रियेभ्यस्तदर्पयेत्' ॥

इति । अयमर्थः—स्त्रीणामशनाच्छादनोपयुक्तं धनिनः श्राद्धाद्युपयुक्तं च मुक्त्वा अदायिकधनं राजगामि भवति । श्रोत्रियद्रव्यं तु योषिद्भृत्यौर्ध्वदेहिकमपास्य श्रोत्रियस्य न राज्ञ इत्यर्थः । यदपि नारदेनोक्तम्—

'अन्यत्र ब्राह्मणात्किंचिद्राजा धर्मपरायणः ।
तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः' ॥

( ना. स्मृ. १३. ५२. )

इति । तदुभयमप्यवरुद्धस्त्रीविषयं पत्नीशब्दश्रवणात् । यदपि च हारीतेनोक्तम्—

'विधवा यौवनस्था चेत्पत्नी भवति कर्कशा ।
आयुषो रक्षणार्थं तु दातव्यं जीवनं तदा' ॥

इति । तदपि शङ्कितव्यभिचारस्त्रीविषयम् । यदपि प्रजापतिवचनम्—

'आढकं भर्तृहीनायाः दद्यादामरणान्तिकम्' ॥

१. A. reads आदाय for अपास्य. २. A. reads अर्पणम् for अयमर्थः and omits स्त्रीणाम् while B. for the same reads आमयणम् for अयमर्थः omitting the word स्त्रीणाम्. ३. A. reads धनम् for धनिनः. ४. B. reads अदायि वान्यत् for अदायिकमन्यत् and substitutes the word भुक्त्वा for मुक्त्वा. ५. A. reads °बृत्यौर्ध्वदैहिकम् for °भृत्यौर्ध्वदैहिकम्. ६. A. reads °शब्दश्रवणात् while B. reads अविरुद्ध° for अवरुद्ध°. ७. D. omits च. ८. C. and D. read आमरणात् स्त्रियाः for आमरणान्तिकम्.

इति । यदपि स्मृत्यन्तरे[1]—

'अन्नार्थं तण्डुलप्रस्थमपराह्णे तु सेन्धनम्' ।

इति । तदेतद्वचनद्वयं हारीतवचनेन समानार्थम् । या च श्रुतिः ।

'तस्मात्स्त्रियो निरिन्द्रिया अदायादाः[2]' ।

इति । सा पत्नीवत्[3]ग्रहे तत्पत्न्या अंशो नास्तीत्येवंपरा । इन्द्रियशब्दस्य 'इन्द्रियं वै सोमपीथः' इति सोमे प्रयोगदर्शनात् । यत्तु पत्न्याः स्थावरग्रहणनिषेधकं बृहस्पतिवचनम्—

'यद्विभक्ते[4] धने किंचिदाध्यादिविधिसंस्मृतम् ।
तज्जाया स्थावरं मुक्त्वा लभेत गतभर्तृका' ॥

इति । तदितरदायादानुमतिमन्तरेण स्थावरविक्रयनिषेधपरम् । अन्यथा—

'जङ्गमं स्थावरं हेम रूप्यं धान्यंरसाम्बरम्[5] ।
आदाय दापयेच्छ्राद्धं माससंवत्सरादिकम् ।
पितृव्यगुरुदौहित्रान् भर्तृ[6]स्वस्त्रीयमातुलान् ।
पूजयेत्कव्यपूर्ताभ्यां वृद्धानाथातिथींस्तथा[7]' ॥

इति । अनेन विरोधप्रसङ्गात् । संसृष्टिनां विभागप्रकार[8]माह मनुः—

---

१. C. B. and D. read स्मृत्यन्तरम्. २. B. and C. read अदाया-द्दाः and D. अदायादीः. ३. B. C. and D. read सपत्नीव for सा पत्नीव. ४. B. reads विभक्तं धनम् for विभक्ते धने while C. reads संभृतम् for संस्मृतम्. ५. B. and C. read रसान्तरम् for रसाम्बरम्. ६. B. and D. read भर्तुः° for भर्तृ°. ७. A. and B. read वृद्धानभ्यतिथीन् for वृद्धानाथातिथीन्. ८. D. reads संसृष्टिविभाग° for संसृष्टिनां विभाग°.

'विभक्ताः सह जीवन्तो विभजेरन् पुनर्यदि ।
समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते' ।
(म. स्मृ. ९–२१०.)

इति । समानविभागविधानादेव विषमविभागनिराकरणसिद्धेः ज्यैष्ठ्यं तत्र न विद्यते इति पुनर्विषमविभागनिराकरणं विषमधनेन[1] संसृष्टानां धनानुसारेण विषमविभागप्राप्त्यर्थम् । संसर्गः कैरित्यपेक्षिते बृहस्पतिः—

'विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र[2] संस्थितः ।
पितृव्येणाथवा प्रीत्या तत्संसृष्टः स उच्यते' ॥

इति । यः पूर्वं पित्रादिना विभक्तः पुत्रादिः पुनः प्रीत्या तेन सह समापन्नः[3] स संसृष्ट उच्यते । येन[4] केनापि सहवासमापन्न इत्यर्थः । क्वचित्संसृष्टिनां विषमविभागकारणमाह[5] बृहस्पतिः—

'संसृष्टानां तु यः कश्चिद्विद्याशौर्यादिनाधिकम् ।
प्राप्नोति तत्र दातव्यो द्व्यंशः शेषाः समांशिनः' ॥

इति । विद्यादिना प्राप्ते अधिके धने अंशद्वयं दातव्यं न सर्वस्मिन्निति । एतत्संसृष्टद्रव्यानुपरोधेनार्जितेऽपि विभाज्यत्वप्राप्त्यर्थम् । अपुत्रस्य संसृष्टिनः ऋक्थग्राहिणं दर्शयति याज्ञवल्क्यः—

---

१. C. reads अधनेन for विषमधनेन. २. A. in marginal reading substitutes वा for च. ३. B. C. and D. read सहवाससमापन्नः for सह समापन्नः. ४. D. adds न before येन. ५. A. B. and C. omit °कारण° while D. substitutes पुनः for क्वचित् and omits संसृष्टिनाम्.

'संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः।
दद्याच्चापहरेच्चांशं जातस्य च मृतस्य च'॥

(या. स्मृ. २. १३८.)

इति। अयमर्थः। संसृष्टिनो मृतस्यांशं विभागकालेऽविज्ञातगर्भायां भार्यायां पश्चादुत्पन्नस्य पुत्रस्य इतरः संसृष्टी दद्यात् पुत्राभावे संसृष्ट्येवापहरेत्। न पत्न्यादिः। पत्नीनामप्रत्तदुहितॄणां च भरणमात्रम्। तदाह नारदः —

'भरणं चास्य कुर्वीरन् स्त्रीणामा जीवनक्षयात्।
रक्षन्ति शय्यां भर्तुश्चेदाछिन्द्युरितरासु तत्॥
यदा दुहितरस्तस्याः[1] पित्र्योंऽशो भरणे मतः।
आ संस्काराद्धरेद्भागं परतो बिभृयात्पतिः'॥

(ना. स्मृ. १३. २६–२७.)

इति। सोदरस्य तु सोदर इति सोदरस्य संसृष्टिनो मृतस्यांशं[2] सोदरः संसृष्टिपश्चादुत्पन्नस्य पुत्रस्य दद्यात्। तदभावे स्वयमेवापहरेत् न भिन्नोदरः। संसृष्टीति पूर्वोक्तस्यापवादः। संसृष्टिनो भिन्नोदरस्य सोदरस्यासंसृष्टिनः सद्भावे उभयोरपि विभज्य धनग्रहणमित्याह स एव —

'अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत्।
असंसृष्ट्यपि वाददद्यात्संसृष्टो[3] नान्यमातृजः'।

(या. स्मृ. २. १३९.)

इति। सापत्नभ्राता संसृष्टो[4] अन्योदर्यधनं हरेत् न

१. B. C. and D. read तु दुहिता तस्याः for दुहितरस्तस्याः. २ A. reads संसृष्टिनः तस्यांशम् for संसृष्टिनो (S.) मृतस्यांशम्. ३. B. C. and D. read सोदरो for संसृष्टो. ४. B. C. and D. omit संसृष्टो.

त्वसंसृष्टी । असंसृष्ट्यपि सोदरः सोदरस्य धनमाददीत । न पुनरन्योदर्यः संसृष्ट्येव । अतएव मनुः —

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।
म्रियेतान्यतरो[1] वाऽपि तस्य भागो न लुप्यते ।
सोदर्या विभजेयुस्तं समेत्य सहिताः समम् ।
भ्रातरो ये च संसृष्टा भगिन्यश्च[2] सनाभयः' ॥

( म. स्मृ. ९. २११–२१२. )

इति । अयमर्थः । येषां संसृष्टिनां भिन्नोदराणां भ्रातॄणां मध्ये यः[3] कोऽपि ज्येष्ठः कनिष्ठो मध्यमो वा विभागकाले देशान्तरगमनादिना स्वांशाद्धीयेत तस्य भागो न लुप्यते– पृथगुद्धरणीयः । न संसृष्टिन एव गृह्णीयुः । किन्तु तमुद्धृतं भागमसंसृष्टिनः सोदराः संसृष्टिनश्च भिन्नोदराः सनाभयो भगिन्यश्च देशान्तरगता अपि समागम्य संभूय न्यूनाधिकभावमन्तरेण विभजेयुः । अन्ये मन्यन्ते ।

'असंसृष्ट्यपि वा[4] दद्यात्संसृष्टो नान्यमातृजः' ।

( या. स्मृ. २. १३९. )

इत्यस्यायमर्थः । यत्र संसृष्टा भिन्नोदराः असंसृष्टाश्च सोदराः तत्रासंसृष्टा[5] अपि सोदरा एव धनं गृह्णीयुः न तु

---

१. D. originally reads अन्यः परो and corrects अन्यतरो, while C. reads युज्यते for लुप्यते. २. D. reads भगिन्याः for भगिन्यः. ३. A. and D. omit यः while B. reads यः after कोऽपि. ४. B. and C. read चा for वा and substitute सोदरो for संसृष्टो. ५. B. and D. read असंसृष्टाः for संसृष्टाः.

भिन्नोदराः संसृष्टा अपीति। यत्तु 'येषां[1] ज्येष्ठ' इत्यादिमनुवचनं संसृष्टानां भिन्नोदराणामसंसृष्टानामेकोदराणां च सर्वेषां धनग्रहणप्रतिपादकम्। तज्जङ्गमस्थावरात्मकोभयद्रव्यसद्भावविषयम्। अतएव प्रजापतिः—

'अन्तर्धनं तु[2] यद्द्रव्यं संसृष्टानां च तद्भवेत्।
भूमिं गृहं त्वसंसृष्टाः प्रगृह्णीयुर्यथांशतः'॥

इति। अयमर्थः। संसृष्टानां भिन्नोदरभ्रातॄणामन्तर्धनं गूढधनं द्रव्यं वा जङ्गमात्मकं यथांऽशतो भवेत्। सोदराणामसंसृष्टानां गृहक्षेत्रादिकं स्थावररूपं यथांऽशतो भवेत्। इति। याज्ञवल्क्यवचनं तु जङ्गमस्थावरयोरन्यतरसद्भाव[4]विषयमिति। तत्र यद्युक्तं तद्ग्राह्यम्।

यदा तु संसृष्टभिन्नोदराभावः तदा पिता पितृव्यो वा यः संसृष्टः स एव गृह्णीयात्। तथा च गौतमः।

'संसृष्टिनि प्रेते संसृष्टो ऋक्थभाक्'—इति।

(गौ. स्मृ. २८. २८.)

यदा पिता पितृव्यो वा संसृष्टो न विद्यते तदा त्वसंसृष्टभिन्नोदरो भ्राता गृह्णीयात्। तदभावे त्वसंसृष्टपिता। तदभावे माता। तदभावे पत्नी। तदाह शङ्खः—

'स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां तदभावे त्वसंसृष्टः पिता तदभावे माता तदभावे ज्येष्ठा पत्नी'। इति।

---

१. D. reads तेषां for येषाम्. २. B. and D. read च for तु. ३. B. C. D. substitute च for तु. ४. A. reads संभव° for °सद्भाव°.

ज्येष्ठा गुणज्येष्ठा संमता[1] न तु पूर्वोढा । संसृष्टभ्रातृपुत्राणां पत्न्याश्च समवाये धनग्रहणप्रकारमाह नारदः—

‘ मृते पत्यौ तु भार्यास्स्युर्[2]भ्रातृपितृमातृकाः ।
सर्वे सपिण्डाः स्वधनं विभजेयुर्यथांशतः ’ ॥

इति । पत्युः[3] भ्रातृपितृमातृभावविशिष्टा अभ्रातृपितृमातृभार्याः सर्वे सपिण्डाः भ्रातृपुत्रादयः । तत्र भ्रातृपुत्राणां स्वपित्रंशतः भार्याणां भर्त्रंशतः संसृष्टधनस्य विभाग इत्यर्थः । पत्नीनामभावे संसृष्टपुत्रांशं तद्[4]भ्रातृभगिनी गृह्णाति । तथा च बृहस्पतिः—

‘ या तस्य भगिनी सा तु ततोऽंशं लब्धुमर्हति ।
अनपत्यस्य धर्मोऽयमभार्यापितृकस्य च ’ ॥

इति । चशब्दो भ्रातृमातृभावसमुच्चयार्थः । केचित्तु

‘ या तस्य दुहिता ’

इति पठित्वा पत्नीनामभावे दुहिता गृह्णीतेत्याहुः । दुहितृभगिन्योरभावे—

‘ अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत् ’ ।

१. A. omits गुणज्येष्ठा and reads संयता for संमता. २. A. reads °स्तु स्वभ्रातृ° for °स्युरभ्रातृ°. ३. A. and C. read पत्नी for पत्युः. ४. B. C. and D. do not insert the word °भ्रातृ° while A. originally does not add भ्रातृ but it appears in correction.

इति । उक्तप्रत्यासत्तिक्रमेण सर्वे सपिण्डादयो धनं गृह्णीयुः । प्रतिपक्षे[1] दोषाणामभावात् । अत एव बृहस्पतिः—

‘ मृतोऽनपत्योऽभार्यश्चेदभ्रातृपितृमातृकः ।
सर्वे सपिण्डास्तद्दायं विभजेयुर्[2] यथांशतः ’ ॥

इति । वानप्रस्थयतिनैष्ठिकब्रह्मचारिणां धनं को वा[3] गृह्णातीत्यपेक्षिते आह याज्ञवल्क्यः—

‘ वानप्रस्थयतिब्रह्मचारिणां ऋक्थभागिनः ।
क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ’ ॥

( या. स्मृ. २. १३७. )

इति । अत्र प्रातिलोम्यक्रमेण नैष्ठिकब्रह्मचारिणां धनं आचार्यो गृह्णाति न पित्रादिः । उपकुर्वाणक[4]स्य धनं पित्रादय एव[5] गृह्णन्ति । यतेस्तु धनमध्यात्मशास्त्रश्रवणधारणतद[6]-नुष्ठानक्षमः सच्छिष्यो गृह्णाति । दुर्वृत्तस्य भागानर्हत्वात् । वानप्रस्थस्य[7] धनं धर्मभ्रात्रैक[8]तीर्थी गृह्णाति । धर्मभ्राता समाना-चार्यकः । एकतीर्थी एकाश्रमी । धर्मभ्राता चासावेकतीर्थी च धर्मभ्रात्रेकतीर्थी ।

१. D. reads प्रतिपदोक्तानां for प्रतिपक्षे दोषाणाम्. २. B. C. and D. read विभजेरन् for विभजेयुः. ३. B. and C. read के च and D. के वा for को वा. ४. C. and D. also A. drop °क°. ५. B. and C. do not insert एव. ६. D. reads °धारणानुष्ठान° for धारणतदनुष्ठान. ७. A. reads वानप्रस्थ-धनं for वानप्रस्थस्य धनं. ८. C. and D. read °भ्रात्रेक° for भ्रात्रैक.

अथवा । वानप्रस्थयतिब्रह्मचारिणां धनमाचार्यसच्छिष्य-धर्मभ्रात्रेकतीर्थिनः क्रमेणैव गृह्णन्ति । पूर्वपूर्वाभावे[1] उत्तरोत्तरो गृह्णातीत्यर्थः । यत्तु वसिष्ठेनोक्तम्—

'अनंशास्त्वाश्रमान्तरगताः'[2] ।

( व. स्मृ. १७. ५२. )

इति । तदन्याश्रमिणामन्याश्रमिधनग्रहणनिषेधपरम् । न तु समानाश्रमिणां परस्परऋक्थग्रहणनिषेधपरम् ।

नन्वेतेषां धनसंबन्ध एव नास्ति कुतस्तद्विभागः । प्रतिग्रहादेर्धनार्जनोपायस्य निषिद्धत्वात् ।

'अनर्थनिचयो[3] भिक्षुः' ।

( गौ. स्मृ. ३. ११. )

इति गौतमस्मरणाच्च । तत्र—

'अह्नो मासस्य षण्णां वा तथा संवत्सरस्य च ।
अर्थस्य निचयं कुर्यात्कृतमाश्वयुजे त्यजेत्' ॥

इति । वानप्रस्थस्य धनसंयोगोऽस्ति ।

'कौपीनाच्छादनार्थं तु वासोऽपि बिभृयाद्यतिः ।
योगसंभारभेदांश्च गृह्णीयात्पादुके तथा' ॥

इत्येवमादिवचनाद्[4] यतेरपि वस्त्रपुस्तकादिकं विद्यत एव ।—

---

१. B. C. and D. read पूर्वस्य पूर्वस्य. २. D. originally reads अन्यांशाः and in margin reads अनंशाः. ३. B. C. and D. read अनिचयो for अनर्थनिचयो. ४. A. reads इति वचनात् and B. and C. इत्यादिवचनात् for इत्येवमादिवचनात्.

नैष्ठिकस्यापि शरीरयात्रार्थं वस्त्रादि[1]परिग्रहोऽस्त्येवेति तद्विभागो घटत एव । दायानर्हा[2]नाह मनुः—

‘ अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा ।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ’ ॥

( म. स्मृ. ९. २०१. )

इति । निरिन्द्रियाः व्याधिनः विकलेन्द्रियाः । नारदोऽपि—

‘ पितृद्विट् पतितः षण्ढो यश्च स्यादौपपातिकः[3] ।
औरसा अपि नैतेंऽशं लभेरन् क्षेत्रजाः कुतः ’ ॥

( ना. स्मृ. १३. २१. )

इति । वसिष्ठोऽपि—

‘ अनंशास्त्वाश्रमान्तरगताः ’ ।

( व. स्मृ. १७. ५२. )

इति । याज्ञवल्क्यः—

‘ क्लीबोऽथ[4] पतितस्तज्जः पङ्गुरुन्मत्तको जडः ।
अन्धोऽचिकित्स्यरोगाद्या[5] भर्तव्याः स्युर्निरंशकाः ’ ॥

( या. स्मृ. २. १४०. )

इति । तज्जः पतितोत्पन्नः । आदिशब्देन मूकादयो गृह्यन्ते । एते निरंशकाः[6] ऋक्थभाजो न भवन्ति । केवलम-

---

१. A. does not insert °आदि°. २. A. reads दायादानर्हा° for दायानर्हा°. ३. A. reads °पातिकः. ४. B. C. and D. read क्लीबोऽन्धः for क्लीबोऽथ, while B. and C. स्तब्धः for तज्जः. ५. B. and C. read °रोगार्ताः for °रोगाद्याः. ६. C. and D. read निरंशाः for निरंशकाः.

शनाच्छादनदानेन भर्तव्याः पोषणीयाः । अभरणे तु प्रत्यवाय-
माह मनुः—

'सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा ।
ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत्' ॥

(म. स्मृ. ९. २०२.)

इति । अत्यन्तं यावज्जीवमित्यर्थः । पतितस्य भर्तव्यत्वा-
द्यपि नास्तीत्याह देवलः—

'तेषां पतितवर्ज्येभ्यो भक्तं वस्त्रं प्रदीयते' ।

इति । पतितशब्देन तज्जातोऽप्युपलक्ष्यते । 'पतित-
तज्जवर्ज्यं बिभृयुः' इति बौधायनस्मरणात् । आश्रमान्तरगता
अपि ते भर्तव्याः । अतएव वसिष्ठः ।

'अनंशास्त्वाश्रमान्तरगताः ।
क्लीबोन्मत्तपतिताश्च भरणं क्लीबोन्मत्तानाम्' ॥

(व. स्मृ. १७. ५२–५४.)

इति । अंशानर्हाणां पुत्रास्त्वंशभाजः । तदाह देवलः—

तत्पुत्राः पितृदायांशं लभेरन् दोषवर्जिताः ।

इति । निरंशकानां पुत्रा औरसाः क्षेत्रजाश्च क्लैब्यादिदोष-
वर्जिता भागहारिणो न दत्तकादयः । अत एव याज्ञवल्क्यः
परिसंचष्टे—

१. D. substitutes the word अन्न for अशन while A. omits °दानेन and reads अशनाच्छादनेन. २. D. originally reads अकरणे and in margin अभरणे. ३. A. reads मनीषिणः. ४. B. and C. read भर्तव्यमपि and D. भर्तव्यत्वमपि. ५. A. and C. read भुक्तं and B. reads भक्तं but substitutes वस्तु for वस्त्रं. ६. A. omits this quotation and इति बौधायनस्मरणात् ।

'औरसाः क्षेत्रजास्तेषां निर्दोषा भागहारिणः'।

इति। निरंशकानां दुहितरो यावद्विवाहं भर्तव्याः संस्कर्तव्याश्च पत्न्यश्च साधुवृत्तयो यावज्जीवं भर्तव्याः। तथाच स एव—

'सुताश्चैषां च[1] भर्तव्या यावद्वै भर्तृसात्कृताः[2] ॥
अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः[3]।
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च' ॥

(या. स्मृ. २. १४१–१४२.)

इति। अन्यानपि भागानर्हान् दर्शयति कात्यायनः[4]—

'अक्रमोढासुतश्चैव सगोत्राद्यश्च जायते।
प्रव्रज्यावसितश्चैव न ऋक्थं तेषु चार्हति' ॥

इति। मनुरपि—

'अनियुक्तासुतश्चैव पुत्रिण्याप्तश्च देवरात्।
उभौ तौ नार्हतो भागं जारजातककामजौ' ॥

(म. स्मृ. ९. १४३.)

इति। स्त्रीधनविभागमाह याज्ञवल्क्यः—

'पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम्[5]।
आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितम् ॥

१. A. omits च. B. and C. substitute तु for च while D. प्र° for the same. २. B. and C. read °संस्कृताः. ३. B. and C. read सानुवृत्तयः for साधुवृत्तयः. ४. B. reads याज्ञवल्क्यः for कात्यायनः but the following quoted verse does not occur in the texts of याज्ञवल्क्य. ५. A. reads पितृदत्तं भ्रातृमातृदत्तम् for पितृमातृपतिभ्रातृदत्तम्.

बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च ।
अप्रजायामतीतायां बान्धवास्तदवाप्नुयुः' ॥

( या. स्मृ. २. १४३–१४४. )

इति । अध्यग्न्युपागतं विवाहकालेऽग्निसंनिधौ मातुलादिभिर्दत्तम् । तथा च कात्यायनः—

'विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसंनिधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम्' ॥

इति । आधिवेदनिकमधिवेदननिमित्तमधिविन्नस्त्रियै दत्तम् । आद्यशब्देन अध्यावाहनिकक्रयक्रयादिप्राप्तं च । तथाच मनुः—

'अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतिकर्मणि ।
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्' ॥

( म. स्मृ. ९. १९४. )

इति । षड्विधमिति न्यूनसङ्ख्याव्यवच्छेदार्थम् । नाधिकसङ्ख्याव्यवच्छेदाय । अध्यावाहनिकप्रीतिदत्तयोः स्वरूपं कात्यायनेनोक्तम्—

यत्पुनर्लभते नारी नीयमाना पितुर्गृहात् ।

---

७. B. and C. read अतीतायामप्रजसि for अप्रजायामतीतायाम्. ८. B. reads अध्यग्न्युपावहम् for अध्यग्न्युपागतम्. ९. B. C. and D. read अध्यावहानिकम् for अध्यावाहानिकम् and omit च. १०. B. and C. read तु पैतृकात् for पितुर्गृहात्.

अध्यावाहनिकं नाम स्त्रीधनं तदुदाहृतम्[1] ।
प्रीत्या दत्तं तु[2] यत्किंचित् श्वश्र्वा वा श्वशुरेण वा ।
पादवन्दनिकं[3] चैव प्रीतिदत्तं तदुच्यते' ॥

इति । बन्धुदत्तं कन्याया मातृपितृभिर्दत्तम् । शुल्कं यद्गृहीत्वा कन्या दीयते। अन्वाधेयकं[4] परिणयनादनु पश्चाद्दत्तम्। तदुक्तं कात्यायनेनः—

'गृहोपस्करवाह्यानां दोह्याभरणकर्मिणाम्[5] ।
मूल्यं लब्धं तु यत्किंचित् शुल्कं तत्परिकीर्तितम् ॥
विवाहात्परतो यत्तु लब्धं भर्तुः कुलात्स्त्रिया ।
अन्वाधेयं तु तद्द्रव्यं लब्धं पितृकुलात्तथा' ॥

इति। पित्रादिभिः स्त्रीभ्यो धनदाने विशेषमाह कात्यायनः—
'पितृमातृपतिभ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै ।
यथाशक्त्या द्विसाहस्राद्[6] दातव्यं स्थावरादृते' ।

इति । यथाशक्ति स्थावरव्यतिरिक्तं धनं द्विसहस्र-कार्षापणपर्यन्तं दातव्यमित्यर्थः । अयं च नियमः प्रत्यब्दा दाने वेदितव्यः । अनेकाब्देषु तूपजीवनार्थं सकृदेव दाने नायमवधिनियमः । नापि स्थावरपर्युदासः । तथा[7] च बृहस्पतिः—

१. B. reads तत्स्त्रीधनमुदाहृतम्. २. A. substitutes च for तु and reads अन्येन for श्वश्र्वा. ३. A. reads आधिवेदनिकम् for पादवन्दनिकम्. ४. B. C. and D. read °अन्वाधेयिकम् for अन्वाधेयकम्. ५. D. originally reads कर्मिणाम् but corrects °कर्मणाम्. ६. A. reads °साहस्रम् for साहस्राद्. ७. तथाच बृहस्पतिः—'दद्याद्धनं च पर्याप्तं क्षेत्रांशं वा यदिच्छति is omitted by B. C. and D.

'दद्याद्धनं च पर्याप्तं क्षेत्रांशं वा यदिच्छति' ।

इति । अत एव सौदायिके स्थावरेऽपि यथेष्टविनियोगार्हत्वमुक्तं तेनैव—

'ऊढया कन्यया वापि भर्तुः पितृगृहेऽपि वा ।
भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥
सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।
यस्मात्तदानृशंस्यार्थं तैर्दत्तमुपजीवनम् ।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि' ।

इति । पतिदत्तस्थावरे तु विशेषमाह नारदः—

'भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत् ।
सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते' ।

इति । पित्रादिभिरुपाध्यादिना दत्तं स्त्रीधनं न भवतीत्याह कात्यायनः—

'तत्र सोपाधि यद्दत्तं यच्च योगवशेन वा ।
पित्रा भ्रात्राथवा पत्या न तत्स्त्रीधनमिष्यते' ।

इति । उत्सवादौ धारणार्थं दत्तमलंकारादिकं सोपाधिदत्तम् । योगवशेन वञ्चनादिनेत्यर्थः । शिल्पादिप्राप्तमपि स्त्रीधनं न भवतीत्याह स एव—

१. A. reads तदेतत् for तैर्दत्तम्. २. A. reads अपि for तु and C. and D. read °षु for the same. ३. A. substitutes च and B. यत् for तत्. ४. D. reads सोपाधिना दत्तम् for सोपाधिदत्तम्. ५. A. reads वचनादिना for वञ्चनादिना. ६. B. and C. read wrongly शिक्यादि° for शिल्पादि°.

'प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या[1] चैव यदन्यतः।
भर्तुः स्वाम्यं तदा तत्र शेषं तु स्त्रीधनं स्मृतम्'।

इति। अन्यतः सख्यादित इति यावत्। तदेतत्स्त्रीधनं दुहितृदौहित्र[2]तद्दुहितृपुत्ररहितायां स्त्रियामतीतायां बान्धवा भर्त्रादयो गृह्णन्ति। अत्रैवं क्रमः। मातरि वृत्तायां[3] प्रथमं दुहिता गृह्णाति। अत एवोक्तम् याज्ञवल्क्येन[4]—

'मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः'।

(या. स्मृ. २. ११७.)

इति। गौतमोऽपि—

'स्त्रीधनं दुहितॄणां अप्रत्तानां अप्रतिष्ठितानां च'

(गौ. स्मृ. २८. २४.)

इति। दुहितॄणामभावे दुहितुर्दुहितरो गृह्णन्ति। तद्दुहितॄणां प्रसूता चेदिति याज्ञवल्क्यस्मरणात्—

भिन्नमातृकाणां दौहित्राणां विषमाणां समवाये मातृतो भागकल्पना ॥

तथाच गौतमः—

'पितृमातृष्वसृवर्गे भागविशेषः'।

(गौ. स्मृ. २८. १७.)

इति। दुहितृदौहित्रीणां समवाये मनुः—

१. B. and C. read प्राप्तम् for प्रीत्या. २. B. and C. read दुहितृदौहित्रदौहित्रपुत्र° and D. originally दुहितृपुत्र° and in the margin दुहितृदौहित्रतद्दुहित्रपुत्र° for दुहित्रदौहित्रपुत्र°. ३. B. C. and D. read प्रेतायाम् for वृत्तायाम्. ४. B. C. and D. read तेनैव for याज्ञवल्क्येन but it seems incorrect.

'यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः ।
मातामह्या धनात्किंचित्प्रदेयं प्रीतिपूर्वकम्' ॥

( म. स्मृ. ९. १९३. )

इति । दौहित्रीणामप्यभावे दौहित्रो धनहारिणः । तथाच नारदः—

'मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः' ।

( ना. स्मृ. १३. २. )

इति । दुहितृदुहितॄणामभावे तदन्वयो दौहित्रो गृह्णातीत्यर्थः । दौहित्राणामभावे तु—

'विभजेरन् सुताः पित्रोरूर्ध्वं ऋक्थमृणं समम्' ।

( या. स्मृ. २. ११७. )

इत्यादियाज्ञवल्क्यवचनतः मातृऋणापाकरणतोऽवशिष्टं मातृधनं पुत्रा गृह्णन्ति । यत्तु मनुनोक्तम्—

'जनन्यां संस्थितायां तु समं सर्वे सहोदराः ।
भजेरन् मातृकं ऋक्थं भगिन्यश्च सनाभयः' ॥

( म. स्मृ. ९. १९२. )

इति । एतत् पुत्राणां दुहितॄणां च संभूय मातृऋक्थग्राहित्वपरं न भवति । किंतु तेषां धनसंबन्धे प्राप्ते समविभागप्राप्त्यर्थं समशब्दश्रवणात् । यदपि शङ्खलिखिताभ्यामुक्तम्—

'समं सर्वे सहोदरा मातृकं ऋक्थमर्हन्ति कुमार्यश्च' ।

---

१. This portion is omitted in A.

इति। तदपि मनुवचनेन समानार्थम्। अथवा एतद्वचनद्वयं भर्तुः कुललब्धस्त्रीधनविषयम्। अस्मिन्नेव विषये बृहस्पतिः—

‘ स्त्रीधनं तदपत्यानां दुहिता च तदंशिनी।
अप्रत्ता चेत्समूढा तु लभते सा न मातृकम्’।

इति। अपत्यानां पुमपत्यानाम्। यत्तु पारस्करेणोक्तम्।

अप्रत्तायास्तु दुहितुः स्त्रीधनं परिकीर्तितम्।
पुत्रैस्तु[1] नैव लभते प्रत्तायां तु समांशभाक्[2]’।

इति। तदप्रतिष्ठितोढदुहितृविषयम्। अत एव मनुः—

‘ मातुस्तु यौतकं यत्स्यात्कुमारीभाग एव सः’।

(म. स्मृ. ९. १३१.)

इति। यौतकं पितृकुललब्धम्। अनपत्यहीनजातिस्त्रीधनं उत्तमजातीय[3]सपत्नीदुहिता गृह्णाति। तदभावे तदपत्यम्। तदुक्तं मनुना —

‘ स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथंचन।
ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत्’॥

(म. स्मृ. ९. १९८.)

इति। ब्राह्मणी जात्युत्तम[4]जात्युपलक्षणार्थम्। पुत्राणामभावे पौत्रा गृह्णन्ति पौत्राणामपि पितामह्यृणापाकरणे। पुत्रपौत्रै ऋणं देयमिति अधिकारश्रवणात्। अस्तु ऋणापाकरणेऽधिकारः। ऋक्थभाक्त्वं कुत इति चेत्। तन्न।

१. B. C. and D. read पुत्रैस्तु for पुत्रस्तु. २. D. reads समांशता for समांशभाक्. ३. A. B. and C. read °जाति° for °जातीय°. ४. A. reads जात्यधम° for जात्युत्तम°.

'ऋक्थभाजः ऋणं प्रतिकुर्युः'—

इति गौतमवचनेन ऋक्थभाजामेव ऋणापाकरणाधिकारश्रवणात् । पौत्राणामप्यभावे भर्त्रादयोऽपि ऋक्थभाजः । अत्रैव विवाहभेदेन विशेषमाह मनुः—

'ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम्[1] ।
अप्रजायामतीतायां भर्तुरेव तदिष्यते' ॥
[2]यत्त्वस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु ।
अप्रजायामतीतायां मातापित्रोस्तदिष्यते ॥

(म. स्मृ. ९. १९६–१९७.)

इति । ब्राह्मदैवार्षगान्धर्वप्राजापत्यविवाहेषु संस्कृताया भार्याया यद्धनं तद्दुहित्रादिपौत्रान्ततद्[3]धनहारिसन्ततेरभावे सति भर्तृगामि न पुनर्मात्रादिगा[4]मि इत्यर्थः । आसु[5]रराक्षसपैशाचविवाहसंस्कृताया भार्याया धनं मातापित्रोर्भवतीत्यर्थः

यत्तु कात्यायनेनोक्तम्—

'बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत्' ।

इति । तदासुरादिविवाहसंस्कृतस्त्रीध[6]नविषयम् । अतएवोक्तं तेनैव—

१. C. reads वसु for धनम्. २. A. does not insert this whole verse. ३. B. C. and D. omit तत्°. ४. A. reads मात्रादीनाम् for मात्रादिगामि. ५. A. omits this whole portion—आसुरराक्षसपैशाचविवाहसंस्कृताया भार्याया धनं मातापित्रोर्भवतीत्यर्थः. ६. A. omits °धन°.

'आसुरादिषु यल्लब्धं स्त्रीधनं पैतृकं स्त्रियां ।
अभावे तदपत्यानां मातापित्रोस्तदिष्यते' ।

इति । भर्त्रादिभिर्दत्तमपि शुल्काख्यं स्त्रीधनं सोदरा एव गृह्णन्ति तथाच गौतमः—

'भगिनीशुल्कं सोदर्याणामूर्ध्वं मातुः' ।

( गौ. स्मृ. २८. २९. )

इति । सोदर्याणामभावे मातुर्भवतीत्यर्थः । यत्पुनस्तेनैवोक्तम् ।

'स्वं च शुल्कं वोढाऽर्हति' ।

इति । तच्छुल्कग्रहणानन्तरं संस्कारात्प्राक्मृतायां द्रष्टव्यम् । अतएव याज्ञवल्क्यः—

'मृतायां दत्तमादद्यात्परिशोध्योभयव्ययम्' ॥

( या. स्मृ. २. १४६. )

इति । यत्तु कन्यायै मातामहादिभिर्दत्तं भूषणादि तदपि सोदरा एव गृह्णीयुः । तथाच बौधायनः—

'ऋकथं मृताया गृह्णीयुः कन्यायाः सोदराः समम् ।
तदभावे भवेन्मातुस्तदभावे पितुर्भवेत्' ॥

इति । अनपत्यपुत्रिकाधनमपि सोदरो गृह्णाति । तथाच पैठीनसिः—

१. A. reads स्त्रियाः and B. and D. स्त्रियम् for स्त्रिया. २. A. reads सोदर एव गृह्णाति for सोदरा एव गृह्णन्ति. ३. B. and C. read भवत्व्ययम् for उभयव्ययम्. ४. D. reads पितामहादिभिः for मातामहादिभिः

'प्रेतायां पुत्रिकायां तु न भर्ता द्रव्य[1]मर्हति ।
अपुत्रायां कुमार्यां च भ्रात्रा तद्ग्राह्यमित्यपि[2]' ।

इति । पुत्रिकायां[3] पितुः पश्चादौरससद्भावे स एव गृह्णीयान्न भर्ता । यत्तु मनुवचनम्—

'अपुत्रायां मृतायां तु पुत्रिकायां कथंचन ।
धनं तत्[4] पुत्रिकाभर्ता हरेच्चैवाविचारयन्' ॥
(म. स्मृ. ९. १३५.

इति । तत्पश्चादुत्पन्नभ्रात्रभावे वेदितव्यम् । यत्तु क्वचिदनपत्यं स्त्रीधनं स्वस्त्रीयादीनां[5] भवतीत्युक्तं बृहस्पतिना —

'मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा ।
श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः ॥
यदाऽऽसामौरसो न स्यात्सुतो[6] दौहित्र एव वा ।
तत्सुतो वा धनं तासां स्वस्त्रीयाद्याः समाप्नुयुः' ॥

इति । अस्यायमर्थः । ब्राह्मादिविवाहेषु भर्तुरभावे आसुरादिषु मातापित्रोरभावे मातृष्वस्रादीनां धनं यथाक्रमं मातृष्वस्रीयाद्या[7] गृह्णीयुः । क्वचिज्जीवन्त्याः सप्रजाया अपि पत्न्या धनं भर्ता गृह्णीयादित्याह याज्ञवल्क्यः—

'दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधके ।
गृहीतं स्त्रीधनं भर्ता न स्त्रियै दातुमर्हति' ॥
( या. स्मृ. २. १४७. )

---

१. A. reads दायम् for द्रव्यम्. २. B. C. and D. read ग्राह्यमिति for ग्राह्यमित्यपि. ३. B. originally reads तस्य द्रव्यं for पुत्रिकायाम्. ४. A. B. and C. substitute तु for तत्. ५. B. and C. read बन्ध्वादीनां and D. originally स्वस्त्रीयादीनां and in margin बन्ध्वादीनां for स्वस्त्रीयादीनाम्. ६. D. reads पुत्रो for सुतो while A. substitutes च for वा. ७. D. omits °द्या°.

इति । संप्रतिरोधके बन्दिग्रहादौ स्वकीयद्रव्याभावे स्त्रीधनं गृहीत्वा पुनस्तस्यै न दद्यात् । प्रकारान्तरेण गृहीतं पुनर्दद्यादेव । तथाच कात्यायनः—

'न भर्ता नैव च सुतो न पिता भ्रातरो न च ।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः ॥
यदि चैकतरोऽप्येषां स्त्रीधनं भक्षयेद्बलात् ।
सवृद्धिकं प्रदाप्यः स्याद्दण्डं चैव समाप्नुयात् ॥
तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम् ।
मूल्मेव स दाप्यः स्याद्यद्यसौ धनवान् भवेत्'

इति । देवलोऽपि—

वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् ।
भोक्त्री तत्स्वयमेवेदं[2] पतिर्नार्हत्यनापदि ॥
वृथा मोक्षे च[1] भोगे च स्त्रियै दद्यात्सवृद्धिकम्' ।

इति । विभाज्यद्रव्यमाह कात्यायनः—

'पैतामहं च पित्र्यं च यच्चान्यत्स्वयमार्जितम्[3] ।
दायादानां विभागे तु सर्वमेव विभज्यते' ॥

इति । पितृद्रव्योपजीवनेन स्वयमर्जितं यत्तदेव[4] विभजेत् तदनुपजीवनेनार्जितस्याविभाज्यत्वात् । एतत्त्रितयमपि ऋणावशिष्टं विभजेत् । तथा च स एव—

---

१. B. and C. substitute हि and D. तु for च. २. B. and C. read भोक्ता तत्स्त्रीधने चेदम् for भोक्त्री तत्स्वयमेवेदम्. ३. D. reads यच्च स्यात् for यच्चान्यत्. ४. B. C. and D. omit यत्तदेव विभजेत्.

'ऋणं प्रीतिप्रदानं च दत्वा शेषं विभाजयेत्' ॥

इति । ऋणप्रदानार्थं धनाभावे पितृऋणमपि विभजेत् ।
'ऋक्थं ऋणं सममिति वचनात्' ।

ऋक्थं ऋणमितिवचनादिनिवृत्त्यर्थं शोध्यमित्याह स एवः—

'ऋणमेवंविधं शोध्यं विभागे बन्धुभिः सह[1] ।
गृहोपस्करवाह्याश्च दोह्या[2]भरणकर्मिणः ॥
दृश्यमाना विभज्यन्ते कोशं[3] गूढमब्रवीद्भृगुः' ।

इति । अत्र कोशग्रहणमितरदिव्य[4]प्रतिषेधार्थम् । तथा च स एव—

'शङ्काविश्वाससंधाने विभागे ऋक्थिनां सदा ।
क्रियासमूहकर्तृत्वे कोशमेवं[5] प्रदापयेत्' ।

इति । अविभाज्यद्रव्यमाह याज्ञवल्क्यः—

'पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम् ।
मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत् ।
क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च' ॥

(या. स्मृ. २. ११८–११९.)

---

१. A. reads सदा for सह. २. D. reads वोह्या° for दोह्या°. ३. D. originally reads शोकं मूढे and in margin शोकं गूढे for कोशं गूढम्. ४. D. reads °द्रव्य° for °दिव्य°. ५. D. reads originally शोकमोहम् and in the margin कोशमेव, while A. कोशमेवम्.

इति । पितृद्रव्याविनाशेन यत्स्वयं कृष्यादिना उपार्जितं यच्च विद्यादिना लब्धं विवाहाच्च यल्लब्धं तद्भ्रात्रादीनां न भवेत् । यत्तु[1] पित्रादिक्रमायातं चोरादिभिरपहृतं[2] पित्रादिभि[3]-रनुद्धृतं द्रव्यं पुत्राणां मध्ये यः कश्चि[4]दितराभ्यनुज्ञयोद्धरति तत्तस्यैव भवति । क्षेत्रं[5] तु तुरीयांशमेवोद्धर्ता गृह्णाति शेषं तु[6] सर्वेषां सममेव । तथाच शङ्खः—

‘ पूर्व[7]नष्टां तु यो भूमिं यः कश्चिदुद्धरेत् श्र[8]मात् ।
यथा[9]भागं लभन्त्यन्ये दत्वांशं तु तुरीयकम् ’ ।

इति । तथा विद्ययाध्यापनादिना लब्धमपि स्वस्यैव भवति । पितृद्रव्याविरोधेनेति सर्वत्र शेषः । अत एव मनुः—

अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जयेत् ।
(दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ।)
स्वयमीहितलब्धं तन्नाकामो दातुमर्हति ॥

( म. स्मृ. ९. २०८. )

इति । श्रमेण कृष्यादिना । पितृग्रहणमविभक्तोपलक्षणार्थम् । व्यासोऽपि—

---

१. A. and D. omit तु. २ B. and C. read अनुद्धृतम् omitting अपहृतम् पित्रादिभिः. ३. A. reads अन्यैः for पित्रादिभिः. ४. B. C. and D. omit कश्चित्. ५. B. C. and D. read क्षेत्रे for क्षेत्रं. ६. A. omits तु and also च after तथा. ७. A. reads पुनः. B. पूर्वं, and C. पूर्णम् for पूर्व°. ८. B. C. and D. read क्रमात् for श्रमात्. ९. A. and C. read °भागेन लभते for °भागं लभन्ति.

‘ विद्याप्राप्तं शौर्यधनं यच्च सौदायिकं भवेत् ।
विभागकाले तत्तस्य नान्वेष्टव्यं च[1] ऋक्थिभिः ’ ॥

इति । अविभाज्यविद्याधनस्य लक्षणमाह कात्यायनः—

‘ परभक्तोपयोगेन प्राप्ता विद्यान्यतस्तु या ।
तया प्राप्तं धनं यत्तु विद्याप्राप्तं तदुच्यते ।
उपन्यै[2]स्तेषु यल्लब्धं विद्यया पणे[3]पूर्वकम् ।
विद्याधनं तु तद्विद्याद्विभागे न नियोज्यते ।
शिष्यादार्त्विज्यतः प्रश्नात् संदिग्धप्रश्ननिर्णयात् ।
स्वज्ञानशा[4]सनाद्वादात् लब्धं प्राध्यापनाच्च यत् ॥
परं निरस्य यल्लब्धं विद्यातोऽद्भु[5]तपूर्वकम् ।
विद्याधनं तु तद्विद्यान्न विभाज्यं बृहस्पतिः ॥
शि[6]ल्पिश्चापि हि धर्मोऽयं स्वस्थाद्यच्चाधिकं भवेत् ।
विद्याबलकृतं चैव याज्यतः शिष्यै[7]तस्तथा ॥
एतद्विद्याधनं प्राहुः सामान्यं यदतोऽन्यथा ’ ।

इति । अनेन[8] विद्याधनादन्यथाभूतमविभक्तपित्रादिद्रव्योपयोगप्राप्तं तदविभक्तानां सामान्यं साधारणमिति यावत् । क्वचिद्विद्याप्राप्तमपि धनं विभाज्यमित्याह नारदः—

---

१. B. C. and D. read स्वऋक्थिभिः for च ऋक्थिभिः. २. B. and C. read उपायस्तेषु while D. originally reads उपलब्धेषु and in the margin उपन्यस्तेषु for उपन्यस्तेषु. ३. B. read रणपूर्वकम् for पणपूर्वकम्. ४. A. reads °शंसनात् for शासनात् and substitutes वाऽपि for वादात् while B. and C. read सज्ञान° for स्वज्ञान and प्राधान्यतो ब्रुयात् for प्राध्यापनाच्च यत् while A. reads प्राधान्यतश्च यत् for प्राध्यापनाच्च यत्. ५. A. and D. originally read द्यूतपूर्वकम् for °द्भुतपूर्वकम्. ६. A. reads संनिविष्टे for शिल्पिश्चापि. and D. originally reads मूल्याद्यत्राधिकम् for स्वस्थाद्यच्चाधिकम्. ७. A. reads यान्यत्तच्छिष्यतः तथा and B. and C. read यान्यतो मिश्रितस्तथा for याज्यतः शिष्यस्ततथा. ८. A. and D. originally read अतो for अनेन.

'कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः ।
भागं विद्याधनात्तस्मात्स लभेताश्रुतो[1]ऽपि सन्' ॥
(ना. स्मृ. १३. १०.)

इति । कात्यायनोऽपि—

'कुले विनीतविद्यानां[2] भ्रातॄणां पितृतोऽपि वा ।
शौर्यप्राप्तं तु यद्वित्तं विभाज्यं तद्बृहस्पतिः' ॥

इति । अविभक्तस्य कुले पितृव्यादेः पितृतोऽपि वा प्राप्तविद्यानां यद्धनं शौर्यादिनो[3]ऽप्राप्तं विद्ययैव प्राप्तं तद्विद्याधनं विभाज्यमिति । पितृद्रव्या[4]र्जितेनार्जिते विद्याधने भागद्वयमर्जकस्याह[5] वसिष्ठः—

'येन चैषां यदुपार्जितं[6] स्याद्द्व्यंशमेव लभेत' ।
(व. स्मृ. १७. ५१.)

इति । यत्तु—

'सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः' ॥

इति । तद्विद्येतरकृ[7]ष्याद्युपार्जितधनविषयम् । अविभाज्यविद्याधने अर्जकेच्छया अंशमाह[8] गौतमः—

'स्वयमर्जितं चैव वैद्येभ्यो वैद्यः कामं दद्यात्'

इति । इच्छा[9]भावेत्वाह नारदः—

वैद्यो वैद्याय नाकामो दद्यादंशं स्वतो धनात् ।

१. B. and C. read °ऽसुतोऽपि for °श्रुतोऽपि. २. D. originally reads कुलतोवाप्तविद्यानाम् for कुले विनीतविद्यानाम्. ३. D. reads शौर्यादिभिः प्राप्तं तद्विद्याधनम्. ४. D. reads पितृव्याविरोधेन. ५. B. and C. read एकस्य for अर्जकस्य. ६. B. C. and D. read स्वयमुपार्जितम् for यदुपार्जितम्. ७. B. and C. read विद्येतरतया for विद्येतरकृष्यादि. ८. B. reads अंशविभागम् and B. and C. read अंशान् for अंशम्. ९. B. and C. add तत् to इच्छा.

पितृद्रव्यं समाश्रित्य न चेत्तेन तदाहृतम्' ॥

( ना. स्मृ. १३. ११. )

अवैद्याय सकामोऽपि न दद्यात् । तदाह कात्यायनः—

'नाविद्यानां तु वैद्येन देयं विद्याधनं क्वचित् ।

समविद्याधिकानां तु देयं वैद्येन तद्धनम्' ॥

इति । विद्याप्राप्तधनवत् शौर्यादिप्राप्तमपि धनमविभाज्यमित्याह स एव—

'शौर्यप्राप्तं विद्यया च स्त्रीधनं चैव यत्स्मृतम् ।

एतत्सर्वं विभागे तु विभाज्यं नैव ऋक्थिभिः ॥

ध्वजाहृतं भवेद्यत्तु विभाज्यं नैव तत्स्मृतम्' ।

इति । ध्वजाहृतस्य लक्षणं तेनैवोक्तम् —

'संग्रामादाहृतं यत्तु विद्राव्य द्विषतां बलम् ।

स्वाम्यर्थं जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते' ॥

इति । बृहस्पतिरपि—

'पितामहपितृभ्यां च दत्तं मात्रा च यद्भवेत् ।

तस्य तन्नापहर्तव्यं शौर्यभार्याधनं तथा' ॥

इति । शौर्यप्राप्तधनस्वरूपं च कात्यायनेन दर्शितम्—

'आरुह्य संशयं यत्र प्रसभं कर्म कुर्वते ।

तस्मिन् कर्मणि तुष्टेन प्रसादः स्वामिना कृतः ॥

तत्र लब्धं तु यत्किंचित् धनं शौर्येण तद्भवेत्' ।

---

१. A. B. and C. reads तद्धनमा° for तेन तदा°. २. D. reads अविद्याय. . D. originally reads अविद्यायाम् for नाविद्यानाम् while A. substitutes °धनं for °धनात्.

इति । पित्रादिद्रव्योपजीवनेन विद्याप्राप्तधनवत्[1] शौर्य-प्राप्तधनेऽप्यर्जकस्य भागद्वयमाह व्यासः—

'साधारणं समाश्रित्य यत्किंचिद्वाहनायुधम् ।
शौर्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः ॥
तस्य भागद्वयं देयं शेषास्तु समभागिनः[2] ।

इति । अन्यदप्यविभाज्यमाह मनुः-

'वस्त्रं[3] पत्रमलंकारं कृतान्नमुदकं स्त्रियः ।
योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते' ।

( म. स्मृ. ९. २१९. )

इति । वस्त्रं पितृ[4]धृतं वस्त्रम् । पितृधृतं वस्त्रं पितुरूर्ध्वं विभागे श्राद्धभोक्त्रे दातव्यम् । तथाच बृहस्पतिः—

'वस्त्रालंकारशय्यादि पितुर्यद्वाहनादिकम् ।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत्' ॥

इति । अन्यानि तु वस्त्राणि विभाज्यान्येव । पत्र[5]मश्व-शिबिकादिवाहनं तदपि यद्येनारूढं तत्तस्यैव । अनारूढं तु सर्वैर्विभाज्यम् । अलंकारोऽपि यो येन धृतः स तस्यैव । अधृतः साधारणो विभाज्य एव—

'पत्यौ जीवति यत्स्त्रीभिरलंकारो धृतो भवेत् ।
न तं भजेरन् दायादा भजमानाः पतन्ति ते' ॥

( म. स्मृ. ९. २००. )

---

१. B. C. and D. substitute इव for °वत्. २. A. does not insert this line. ३. B. and C. do not insert this whole verse and also इति. ४. A. and D. omit पितृ. ५. A. B. C. and D. originally read पत्रं वाहनं before पत्रमश्वशिबिकादि°.

इति । तेनैव धृत इति विशेषेणोपादानात्[1] । कृतान्नं तण्डुलमोदकादि[2] । तदपि यथासंभवं भोक्तव्यं न विभाज्यम् । उदकं तदाधारः कूपादिः । सोऽपि विषमः[3] पर्यायेण भोक्तव्यो न मूल्यद्वारेण विभाज्यः । स्त्रियश्च दास्यो विषमाः पर्यायेण कर्म कारयितव्याः ।

तथा च बृहस्पतिः—

'एकां स्त्रीं कारयेत्कर्म यथांशेन गृहे गृहे ।
बह्व्यः समांशतो देया दासानामप्ययं विधिः' ॥

इति । पित्रावरुद्धास्तु समा अपि न विभाज्याः । तथाच गौतमः—

'स्त्रीषु संयुतास्वविभागः[4]' ॥

(गौ. स्मृ. २८. ४७.)

इति । योग इति श्रौतस्मार्ताग्निसाध्यमिष्टं कर्म लक्ष्यते । क्षेमः इति लब्धपरीक्षणहेतुभूतं बहिर्वेदिदानतडागाराम-निर्माणादि पूर्तं कर्म लक्ष्यते । तदुभयं पितृद्रव्यविरोधेनार्जितमप्यविभाज्यम्[5] । तदुक्तं लौगाक्षिणा—

'क्षेमं पूर्तं यागमिष्टमित्याहुस्तत्त्वदर्शिनः ।
अविभाज्ये च ते प्रोक्ते शयनासनमेव च' ॥

१. A. reads विशेषणोपादानात् and B. and C. विशेषेणोपादानात् for विशेषेनोपादानात्. २. D. reads मोदकतन्डुलादि and for यथासंभवं originally reads यथासंभूय. ३. D. reads विषमपर्यायेण for विषमः पर्यायेण. ४. B. and C. read युक्तासु for संयुतासु. ५. A. B. and C. read °विरोधार्जितम् for °विरोधेनार्जितम्.

इति। अथवा योगक्षेमशब्देन छत्त्रचामरशस्त्रवाहनादिप्रभृतय उच्यन्ते। प्रचारो गृहारामादिषु प्रवेशनिर्गममार्गः। सोऽप्यविभाज्यः। यत्तु उशनसा क्षेत्रस्याप्यविभाज्यत्वमुक्तम्—

'अविभाज्यं सगोत्राणामासहस्रकुलादपि।
योज्यं क्षेत्रं च पत्रं च कृतान्नमुदकं स्त्रियः' ॥

इति। तत्प्रतिग्रहलब्धक्षेत्रं क्षत्रियासुतेन सार्धं ब्राह्मणीसुतेन अविभाज्यमित्येवं परम्।

'न प्रतिग्रहभूर्देया क्षत्रियादिसुताय च'।

इति स्मरणात्। अन्ये मन्यन्ते। वस्त्रादयोऽपि विभाज्या एव।

तथाच बृहस्पतिः—

'वस्त्रादयोऽविभज्यायैरुक्तं तैर्न विचारितम्।
धनं भवेत्समृद्धानां वस्त्रालङ्कारसंश्रितम् ॥
मध्यस्थितमनाजीव्यं दातुं नैकस्य शक्यते।
युक्त्या विभजनीयं तदन्यथानर्थकं भवेत् ॥
विक्रीय वस्त्राभरणमृणमुद्धाह्य लेखितम्।
कृतान्नं वा कृतान्नेन परिवर्त्य विभज्यते ॥
उद्धृत्य कूपवाप्यम्भस्त्वनुसारेण गृह्यते।

१. A. B. C. and D. read शस्त्रचामरछत्त्रोपानत्प्रभृतयः. २. A. B. and C. read वाप्यम् for याज्यम्. ३. D. reads °संस्थितम्. ४. A. reads तैः कस्य for नैकस्य. ५. D. substitutes च for वा. ६. B. C. and D. read तदनुसारेण for त्वनुसारेण.

एकां स्त्रीं कारयेत्कर्म यथांशेन गृहे गृहे ॥
बह्व्यः समांशतो देया दासानामप्ययं विधिः ।
योगक्षेमवतो लाभः समत्वेन विभज्यते[१] ।
प्रचारश्च यथांशेन कर्तव्यो ऋक्थिभिः सह ' ॥

इति । तेन[२] वस्त्रादीनामेवि[३]भाज्यत्वप्रतिपादकं मनुवचनमुशनोवचनं चाना[४]दरणीयम् । तदनुपपन्नम् । विरोधे हि वचनानां विषयव्यवस्थाश्रयणं युक्तं न चान्यथा[५]करणम् । बृहस्पतिवचनानां तु अधृतवस्त्रादिविषयत्वम् । मन्वादिवचनस्य तु धृतवस्त्रादिविषयत्वं पूर्वमेवोक्तमिति विषयव्यवस्था घटते ।

विभागकाले केनचिद्वञ्चि[६]तं पश्चादुद्भावितं चेत् त[७]त्सर्वं समं विभजेयुः । तथाच याज्ञवल्क्यः—

' अन्योन्यापहृतं द्रव्यं विभ[८]क्ते यत्तु दृश्यते ।
तत्पुनस्ते समैरंशैः विभजेरन्निति स्थितिः ' ॥
( या. स्मृ. २. १२६. )

इति । समशब्दो विषमवि[९]भागनिरासार्थः । विभजेरन्निति बहुवचनेन येन दृष्टं तेनैव न ग्राह्यमिति दर्श[१०]यति ।

१. D corrects विभाज्यते. २. B. and C. read नव° for तेन. ३. B. and C. read °मपि for °मवि. ४. B. and C. substitute only वा° for चाना.° ५. B. C. and D. read बाधाश्रयणम् for चान्यथाकरणम्. ६. D. originally reads अपहृतम् and in the margin वञ्चितम् and adds a word वित्तम् after वञ्चितम्. ७. A. reads सर्वम् for सर्वं. ८. B. and C. read विभक्तम् for विभक्ते. ९. B. reads °भाग° for °विभाग°. १०. B. C. and D. read दर्शयितुम् for दर्शयति.

मनुरपि—

'ऋणे धने च सर्वस्मिन् प्रविभक्ते यथाविधि ।
पश्चाद्दृश्येत यत्किंचित् तत्सर्वं समतां नयेत्' ॥
(म. स्मृ. ९. २१८.)

इति । अपहृतद्रव्यवच्छास्त्रोक्तानतिक्रमेण विषमभागतया विभक्तमपि समतां नयेत् । तथाच कात्यायनः—

'अन्योन्यापहृतं द्रव्यं दुर्विभक्तं च यद्भवेत् ।
पश्चात्प्राप्तं विभज्येत समभागेन तद्भृगुः' ॥

इति । एवं च सति वञ्चितद्रव्यस्य पश्चाद्दृष्टस्यैव विभागविधानात् पूर्वं विभक्तस्य पुन[1]र्विभागो नास्तीत्यवगम्यते । यत्तु मनुनोक्तम्—

'विभागे तु कृते किंचित्सामान्यं यत्र दृश्यते ।
नासौ विभागो विज्ञेयः कर्तव्यः पुनरेव हि' ॥

इति । तद्विभक्तद्रव्येष्वा[2]यव्ययकरणादर्वाग्वेदितव्यम् । अन्योन्यापहृतमित्यादिवचनानां निर्विषयतापत्तेः । अत्रान्योन्यवञ्चने[3] दोषोऽप्यस्ति । तथाच श्रुतिः—

'यो वै भागिनं भागान्नुदते चयते वैनं स यदि
वैनं न चयतेऽथ पुत्रमथ पौत्रं चयते' ।

इति । अयमर्थः । यो भागिनं भागार्हं भागान्नुदते भागादपाकरोति[4] भागं तस्मै न प्रयच्छतीति यावत् । अथ[5] भागाच्च्युतः एनमपहारकं चयते[6] नाशयति पापिनं करोतीति

१. B. and C. read पश्चात् for पुनः. २. A. reads °द्रव्यार्जनव्यय° for °द्रव्येष्वायव्यय°. ३. B. and C. read °वचने for °वञ्चने. ४. B. and C. read अप्रकरोति for अपाकरोति. ५. B. C. and D. do not insert अथ. ६. B. and C. read पर्यते for चयते and substitute याथिकम् for पापिनम्.

यावत् । यदि तं न नाशयति तदा तस्य पुत्रं पौत्रं वा नाशयतीति । यत्तु मनुनोक्तम्[1]—

'यो ज्येष्ठो विनिकुर्वीत लोभाद् भ्रातॄन् यवीयसः ।
सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः' ॥

( म. स्मृ. ९. २१३. )

इति । तत्स्वतन्त्रस्यापि ज्येष्ठस्य समुदायद्रव्यापहारे दोषोऽस्ति[2] किमुतास्वतन्त्राणां यवीयसामित्येवं प्रतिपादनपरम् । न तु ज्येष्ठस्यैव दोषप्रतिपादनपरम् । अन्यथा स्मृत्या श्रुतेः सङ्कोचापत्तेः । विभक्तानां कर्तव्यमाह नारदः—

'यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः ।
पृथक्कर्मगुणोपेता न चेत्कार्येषु संमताः ॥
स्वभोगान्[3]यदि दद्युस्ते विक्रीणीयुरथापि वा ।
कुर्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य च' ॥

( ना. स्मृ. १३. ४२-४३. )

इति । एकस्माज्जाता विभक्ता भ्रातरः परस्परानुमतिमन्तरेण धनसाध्येष्टापूर्तादिधर्मकारिणो भवेयुः । तथा धन[4]साध्यकृष्यादिकर्म[5]कारिणो भवेयुः । तथा विभिन्नोलूखलमुसलादिकर्मोपसर्जनद्रव्योपेताः स्युः । तथा च[6] कार्येषु भ्रातरो यदि न संमताः तदाताननादृत्य कार्यं कुर्युः । तथा विभक्ता

---

१. B. and C. read °वचनम् for मनुनोक्तम्. २. B. and C. read शेष° for दोष°. ३. B. and C. read स्वभावात् for स्वभागान्. ४. B. C. read द्रव्यव्यय° for धन° while D. reads द्रव्य but omits व्यय. ५. A. omits कर्म. ६. B. C. and D. do not insert च while D. reads originally संगताः.

भ्रातरः स्वभागान्यदि दद्युर्विक्रीणीयुर्वा न दद्युर्वा तत्सर्वं यथेष्टं कुर्युः । यस्मात्ते विभक्ताः स्वधनस्येशाः स्वतन्त्राः स्वामिन इत्यर्थः । यत्तु बृहस्पतिवचनम्—

‘ विभक्ता वाऽविभक्ता वा दायादाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये ’ ॥

इति । तदेवं व्याख्येयम् । अविभक्तेषु द्रव्येषु साधारणत्वादेकस्यानीश्वरत्वात् सर्वैरनुज्ञाऽवश्यं कार्या । विभक्तेषु तूत्तरकालं विभक्ताविभक्तसंशयव्युदाससौकर्याय सर्वाभ्यनुज्ञा । न पुनरेकस्यानीश्वरत्वेन । अतो विभक्तानुमतिव्यतिरेकेणापि व्यवहारः सिध्यत्येवेति । यत्तु स्मृत्यन्तरम्—

‘ स्वग्रामज्ञातिसामन्तदायादानुमतेन च ।
हिरण्योदकदानेन षड्भिर्गच्छति मेदिनी ’ ॥

इति । तस्यायमभिप्रायः । तत्र ग्रामानुमतिः ‘ प्रतिग्रहः प्रकाशः स्यात्स्थावरस्य विशेषतः ’ इति स्मरणात् । व्यवहारप्रकाशनार्थमेवापेक्ष्यते । न पुनर्ग्रामानुमतिमन्तरेण व्यवहारो न सिध्यतीति । सामन्तानुमतिरपि सीमाविप्रतिपत्तिनिरासार्थमेव । दायादानुमतिरपि विभक्ताविभक्तसंशयव्युदासेन व्यवहारसौकर्यार्थमेव । हिरण्योदकदानमपि विक्रये कर्तव्ये सहिरण्योदकं दत्वा दानरूपेण स्थावरविक्रयं कुर्यादित्येवमर्थम् ।

---

१. B. C. and D. read स्वभावात् for स्वभागान्. २. B. and C. read विक्रीणीयुः तानादद्यो वा for विक्रीणीयुर्वा न दद्युर्वा. ३. B. C. and D. read तस्मात् for यस्मात् while B. and C. add न before विभक्ताः. ४. B. C. and D. read द्रव्यस्य for द्रव्येषु. ५. B. C. and D. read सर्वाभ्यनुज्ञा अवश्यं कार्या for सर्वैरनुज्ञाऽवश्यं कार्या. ६. A. omits °अविभक्त°.

'स्थावरे विक्रयो नास्ति कुर्यादाधिमनुज्ञया' ।

इति स्थावरविक्रयस्य निषिद्धत्वात् ।

'भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति ।
तावुभौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ' ॥

इति दानप्रतिग्रहयोः प्रशंस्तत्वाच्च[1] । विभागापलापे निर्णयकारणमाह याज्ञवल्क्यः—

'विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः[2] ।
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः' ॥

(या. स्मृ. २. १४९.)

इति । ज्ञातयः पितृबन्धवः । बन्धवस्तु[3] मातुलादयः । लेख्यं विभागपत्रम् । एभिर्विभागनिर्णयो ज्ञातव्यः । यौतकैः[4] पृथक्कृतैर्गृहक्षेत्रैः । अन्यदपि विभागलिङ्गमाह नारदः—

'विभागधर्मसंदेहे दायादानां विनिर्णयः ।
ज्ञातिभिर्भागलेख्येन पृथक्कार्यप्रवर्तनात् ॥
भ्रातृणामविभक्तानामेको धर्मः प्रवर्तते ।
विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक् ॥
साक्षित्वं प्रातिभाव्यं[5] च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम् ॥
दानग्रहणपश्वन्नगृहक्षेत्रप्रतिग्रहाः ।
विभक्तानां पृथक् ज्ञेया[6] दानधर्मागमव्ययाः ॥

---

१. B. and C. read प्राशस्त्यात्. २. B. and C. read बन्धुभिश्च विलेखितैः for बन्धुसाक्ष्यभिलेखितैः. ३. B. and C. read बान्धवेषु for बन्धवस्तु. ४. A. reads यौतके पृथक्कृतैर्गृहक्षेत्रे. ५. A. and D. read प्राति° for प्राति°. ६. B. reads नेया for ज्ञेया.

येषामेताः क्रिया लोके प्रवर्तन्ते स्वरिक्थिषु ।
विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान्' ॥

( ना. स्मृ. १३. ३९–४०. )

इति । बृहस्पतिरपि—

'पृथगायव्ययधनाः कुसीदं च परस्परम् ।
वणिक्पथं च ये कुर्युर्विभक्तास्ते न संशयः' ॥

इति । कुसीदवाणिज्यादिभिर्लिङ्गैर्विभागनिर्णयः साक्ष्याद्यभावे वेदितव्यः । तथा च स एव—

'साहसं स्थावरस्वाम्यं[1] प्राग्विभागश्च रिक्थिनाम् ।
अनुमानेन विज्ञेयं न स्युर्यत्र[2] च साक्षिणः' ॥

इति । साहसादिसाधकलिङ्गान्यपि स एवाह—

'कुलानुबन्धव्याघातहोढं साहससाधकम्[3] ।
स्वस्वभोगस्थावरस्य विभागस्य पृथग्धनम्' ॥

इति । कुलानुबन्धः पूर्वपुरुषवैरानुबन्धः । व्याघातः परस्परस्य होढं बलादपहृतं[4] द्रव्यं तस्य दर्शनं स्वस्यात्मनो भोगः परस्परं पृथग् ग्रहणादेर्विभागलिङ्गत्वमविभक्तेषु निषिद्धत्वेनावगन्तव्यम् । तथाच याज्ञवल्क्यः—

१. B. and C. read स्थावरं स्वाम्यम् for स्थावरस्वाम्यम्. २. D. originally reads यस्य and in the margin यत्र. ३. B. reads साधकौ for साधकम् and also B. and C. read स्वस्य भौमस्थावरस्य for स्वस्वभोगस्थावरस्य. ४. B. and C. read बान्धवत्वादपहृतद्रव्यतोंशदर्शनम् for बलादपहृतं द्रव्यं तस्य दर्शनम्.

'भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्तेन तु स्मृतम्' ॥

( या. स्मृ. २. ५२. )

इति । साक्षिलेख्ययुक्तिभिर्निर्णयस्याशक्यत्वे ।

'युक्तिष्वप्यसमर्थासु शपथैरेवं मर्दयेत्' ।

इति प्राप्तं दिव्यं निषेधति वृद्धयाज्ञवल्क्यः—

'विभागधर्मसंदेहे बन्धुसाक्ष्यभिलेखितैः ।
विभागभावना कार्या न भवेद्दैविकी क्रिया' ॥

( या. स्मृ. २. १४९. )

इति । कथं तर्हि तत्र निर्णय इत्याकाङ्क्षायामाह मनुः—

४

'विभागे यत्र संदेहो दायादानां परस्परम् ।
पुनर्विभागः कर्तव्यः पृथक् स्थानस्थितैरपि' ॥

इति । यत्र संदेहो युक्तिभिरपि नापैति तत्र पुनर्विभागः कर्तव्य इत्यर्थः । यत्तु तेनैवोक्तम्—

'सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददामीति त्रीण्येतानि सकृत्सकृत्' ॥

इति । तद्युक्त्यादिभिर्निर्णेतुं शक्तौ सत्यां वेदितव्यम् ।

---

१. B. and C. read दाप्यम् for साक्ष्यम्. २. B. originally reads एनमर्हयेत् and in the margin एनमर्दयेत्. ३. B. and C. omit तर्हि. ४. This verse does not appear in the several printed editions of the मनु but it has, in a manuscript, been commented upon by मेधातिथि a wellknown commentator. ५. B. reads ददातीति and C. ददानीति.

स्वयं कृतस्य [१]संदिग्धस्य विभागस्य पुनः प्रवर्तको राज्ञा दण्डनीय इत्याह बृहस्पतिः—

‘स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत् ।
स राज्ञां [२]शाक्येते स्थाप्यः शासनीयोऽनुबन्धतः’ ॥

इति । अनुबन्धतो [३]निर्बन्धतः ।

॥ इति दायविभागः ॥

। अथ द्यूतसमाह्वयाख्ये विवादपदे निरूप्येते ।

तयोः स्वरूपमाह मनुः—

‘अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः’ ॥

(म. स्मृ. ९. २२३.)

इति । अप्राणिभिरक्ष[४]वध्रशलाकादिभिः । [५]प्राणिभिः कुक्कुटादिभिः । तथाच नारदः—

‘अक्षवध्रशलाकाद्यैर्देवनं जिह्मकारितम् ।
पणक्रीडा वयोभिश्च पदं [६]द्यूतसमाह्वयम्’ ॥

(ना. स्मृ. १६. १.)

---

१. B. C. and D. read असंदिग्धस्य while B. and C. omit विभागस्य.
२ B. and C. read राज्ञांशे स्वके while D. राज्ञांशे क के. Both seem to be incorrect. ३. A. B. and C. read निबन्धतः. ४. B. and C. read °वध° and D. originally reads वद्ध for वध्र. ५. B. and C. omit प्राणिभिः ६. B. and C. read पदद्यूत°, D. also the same.

स्वयं कृतस्य संदिग्धस्य विभागस्य पुनः प्रवर्तको राज्ञा दण्डनीय इत्याह बृहस्पतिः—

'स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत् ।
स राज्ञां शक्यते स्थाप्यः शासनीयोऽनुबन्धतः' ॥

इति । अनुबन्धतो निर्बन्धतः ।

॥ इति दायविभागः ॥

। अथ द्यूतसमाह्वयाख्ये विवादपदे निरूप्येते ।

तयोः स्वरूपमाह मनुः—

'अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः' ॥

(म. स्मृ. ९. २२३.)

इति । अप्राणिभिरक्षवध्रशलाकादिभिः । प्राणिभिः कुक्कुटादिभिः । तथाच नारदः—

'अक्षवध्रशलाकाद्यैर्देवनं जिह्मकारितम् ।
पणक्रीडा वयोभिश्च पदं द्यूतसमाह्वयम्' ॥

(ना. स्मृ. १६. १.)

---

१. B. C. and D. read असंदिग्धस्य while B. and C. omit विभागस्य. २ B. and C. read राज्ञांशे स्वके while D. राज्ञांशे क के. Both seem to be incorrect. ३. A. B. and C. read निबन्धतः. ४. B. and C. read °वध° and D. originally reads वद्ध for वध्र. ५. B. and C. omit प्राणिभिः. ६. B. and C. read पदद्यूत°, D. also the same.

इति निर्णयपादः ।

## अथाष्टादशपदानुक्रमः ।

विषयाः पृष्ठं



**अथ ऋणग्रहणधर्माः ।**

## अथ संभूयसमुत्थानाख्यं पदम् ।

इति संभूयसमुत्थानपदम् ।

## अथ दत्ताप्रदानिकं व्यवहारपदम् ।



इति दत्ताप्रदानिकम् ।

## अथ वेतनस्यानपाकर्माख्यं विवादपदम् ।

इति वेतनस्यानपाकर्माख्यं विवादपदम् ।

## अथाभ्युपेत्याशुश्रूषाख्यं विवादपदम् ।

इति सत्यभ्युपेत्याशुश्रूषाविवादपदम् ।

## अथ संविद्व्यतिक्रमाख्यं विवादपदम् ।

## अथ क्रीतानुशयः ।



## अथ विक्रीयासंप्रदानम् ।

इति सीमाविवादनिर्णयः।

## अथ दण्डपारुष्यम्।

इति दण्डपारुष्यम् ।

**अथ वाक्पारुष्यम् ।**



इति वाक्पारुष्यम् ।

विषयाः पृष्ठं

इति दायविभागः।

## अथ द्यूतसमाह्वयाख्यं विवादपदम् ।

**इति पराशरधर्मसंहिताया व्यवहारकाण्डस्य विषयानुक्रमणिका ।**

# A list of the names of authors and works etc., occurring in Mâdhavâchârya's Commentary on the Parâśara-Dharma-Saṃhitâ, Vyavahârakâṇḍa.

In the following Indexes the first number refers to the page, the second to the line on that page.

13. 49, 12. 50, 11. 53, 9. 54, 3. 54, 10. 58, 10. 59, 5. 63, 13. 63, 17. 64, 10. 65, 19. 66, 10. 67, 6. 70, 1. 70, 6. 71, 3, 72, 4. 81, 8. 81, 16. 83, 10. 92, 4. 93, 20. 96, 8. 97, 8. 100, 8. 101, 5. 101, 13. 104, 1. 104, 5. 104, 12. 107, 5. 108, 7. 109, 6. 116, 16. 118, 10. 127, 13. 128, 20. 129, 8. 130, 12. 131, 13. 133, 13. 135, 5. 135, 16. 139, 3. 139, 15. 140, 3. 140, 8. 140, 12. 143, 8. 143, 12. 145, 7. 145, 19. 146, 11. 152, 5. 152, 18. 158, 11. 159, 5. 159, 13. 162, 6. 163, 9. 163. 18. 166, 16. 168, 9, 168, 21. 169, 17. 170. 18. 172, 5. 172, 12. 173, 16. 174, 5. 176, 3. 177, 3. 177, 13. 178, 11. 179, 6. 179, 17. 181, 2. 182, 7. 183, 13. 184, 9. 186, 5. 187, 10. 187, 14. 188, 2. 188, 6. 188, 18. 190, 13. 191, 2. 191, 18. 193, 5. 193, 12. 199, 17. 200, 11. 203, 2. 204, 10. 204, 13. 210, 4. 210, 18 (न्या°). 211, 3. 211, 6. 213, 11. 214, 8. 215, 9. 215, 17. 216, 12. 217, 8. 217, 13. 218, 16. 219, 19. 222, 17. 224, 7. 227, 6. 230, 6. 232, 12. 233, 6. 236, 16. 248, 5. 248, 10. 248, 14. 252, 16. 254, 14. 257, 18. 260, 16. 261, 5. 261, 10. 261, 17. 262, 11. 263, 4. 264, 9. 265, 4. 267, 11. 268, 12. 270, 2. 271, 2. 274, 3. 275, 6. 275, 13. 276, 13. 277, 5. 279, 2. 279, 12. 280, 14. 282, 5. 284, 2. 284, 7. 287, 5. 287, 13. 290, 13. 291, 6.

12. 42, 15. 42, 18. 45, 3. 46, 3. 53, 11. 55, 5. 71, 7. 92, 11. 128, 3. 130, 9. 144, 13. 152, 8. 153, 14. 154, 3. 160, 8. 161, 5. 161, 18. 162, 19. 163, 5. 163, 22. 164, 3. 164, 11. 167, 8. 167, 12. 168, 1. 168, 2. 168, 6. 168, 16. 169, 6. 169, 12. 170, 4 & 8. 171, 4. 173, 6. 174, 13. 176, 12 & 14. 180, 4 & 11 & 14. 181, 15. 183, 4 & 16. 184, 20. 185, 19. 186, 8. 189, 8. 190, 8. 190, 17. 191, 13. 192, 3. 192, 8 & 11. 194, 2. 195, 9 & 14. 196, 4. 196, 12 & 18. 197, 13. 210, 24 (व्या°). 211, 9. 252, 3.

१३. पुराण.

37, 13. 110, 15. 157, 5. 333, 16 (मत्स्य).

१४. पैठीनसि.

554, 19.

१५. प्रजापति.

36, 1. 69, 6. 72, 16. 73, 7. 115, 16. 127, 16. 137, 18. 147, 7. 175, 2. 182, 2. 187, 2. 187, 7. 242, 12. 316, 7. 488, 2*. 524, 5. 533, 15. 540, 4.

१६. बृहन्मनु.

[illegible], 9.

१७. बृहस्पति.

4, 9. 5, 8. 7, 8. 16, 6. 16, 11. 17, 20. 20, 16. 21, 1. 21, 10 & 16. 24, 1. 26, 9. 27, 2. 27, 16. 29, 7. 29, 18. 31, 1. 31, 11. 32, 14. 34, 7. 35, 3. 35, 7. 36, 8. 37, 5. 39, 6. 49, 7. 50, 4. 50, 8. 51, 9. 52, 11. 59, 13. 61, 1. 65, 9. 66, 4. 67, 9. 68, 12. 69, 1. 71, 14. 72, 7. 82, 6.

* Also found in Manu.

# Index of Quotations arranged according to the authors and works. Vol. III, Parts I and II.



## १. अनिर्दिष्ट.

## २. आपस्तंब.



## ३. उशनाः.



## ४. कात्यायन.



* Sâyaṇa Mâdhavâchârya does not refer this verse to anybody, but the व्यवहारमयूख refers it to देवल.

## ५. गीता.



## ६. गौतम.

७. दक्ष.



८. देवल.



९. नारद.

* Referred toin the text as कात्यायन's, but is found in नारदस्मृति.

* Referred to in the text as मनु's, but not found in मनुस्मृति. ( Nirṇayasâgar edition ).

† Referred to in the text at हारीत's, but also found in नारदस्मृति.

¶ Referred to in the text as मनु's but not found in मनुस्मृति ( Nirṇayasāgar edition ).

§ Referred to as बृहस्पति's in the text.

* Referred to as a quotation from महाभारत but also found in नारदस्मृति.

* Referred to as a quotation from महाभारत.

* Referred to in the text as being मनु's but not found मनुस्मृति.

† Not found in नारद's दायभागप्रकरण.

* This half only is not found in the Institutes of Nârada edited by Jolly.

† Referred to as being हारीत's but found also in नारद.

* Referred to in the text as कात्यायन's.

† Referred to in the text as हारीत's, but also found in नारद.

* Referred to in the text as occurring in the महाभारत, but found in नारद too.

† Referred to in the text as हारीत's, but also found in नारद.

* Referred to as मनु's in the text, but not found as his in the मनुस्मृति ( Nirṇayasāgar edition ).

* Referred to as बृहस्पति's in the text. Jolly's edition of नारद reads संपश्यमानो for समीक्षमाणो.

१०. पाणिनि.



११. पारस्कर.



१२. पितामह.



† Referred to in the text as हारीत's but also found in नारद.

## १३. पुराण.

### १४. पैठीनसि.



### १५. प्रजापति.



* Referred to as प्रजापति's but not found in his work. The quotation, however, is in मनु IX. 111.

१६. बृहन्मनु.



१७. बृहस्पति.

* Also found in ना. स्मृ. (१·३७.)

## १८. बौधायन.



## १९. भ(भा)रद्वाज.



## २०. भृगु.



## २१. मनु.



† Given as Baudhāyana's but not identified as his.

---

* Cited as Manu's, but not found in the printed editions of Manu.

† Referred to as मनु's, but not found in the printed editions of मनुस्मृति.

---

* Referred to in the text as कात्यायन's but also found in मनु (IX. 233).

* Referred to in the text as कात्यायन's but also found in Manu (IX. 233).

* Referred to as Manu's but not found in the printed editions of Manusmriti.

† Cited as Manu's but not found in the printed editions of Manu.

* Not found in the printed editions of Manu.

† Not found in the printed editions of Manu.

* Not found in the printed editions of Manu.

† Not found in the printed editions of Manu.

* Referred to as Manu's but not found in the Nirnayasāgar edition of the Manusmriti.

## २२. मरीचि.

## २३. महाभारत.



## २४. यम.



## २५. याज्ञवल्क्य.



* Cited in the text as Manu's, but not found in Manusmriti.

---

* Cited in the text as Mauu's, but not found in Manusmriti.

† Cited in the text as Manu's but not found in Manusmriti.

* Cited in the text as Manu's but not found in Manusmriti.

## २६. लौगाक्षि.



## २७. वसिष्ठ.

२८. विपतन्त्र.



२९. विष्णु.

## ३०. वृद्धमनु.



## ३१. वृद्धयाज्ञवल्क्य.



## ३२. वृद्धविष्णु.



† Referred to as विष्णुवचनं (P. 484, L. 18) but not found in the विष्णुस्मृति edited by Jolly.

## ३३. व्याघ्र.



## ३४. व्यास.

## ३९. संवर्त.

## ४०. स्मृतिःस्मृत्यन्तरंस्मरणंवा.

## ४१. हारीत.



* Those marked with an asterisk are given as Hārita's by Mādhavāchārya but they are also found in Nārada.

* Those marked with an asterisk are given as Hārita's by Mādhavāchārya but they are also found in Nārada.



# THE GENERAL INDEX OF QUOTATIONS
## VOL. III, PARTS I AND II.

आ

भ

म

र

ह